

पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर बि, ए,

PANDIT JIBANANDA VIDYASAGARA B. A

*Superintendent Free Sanskrit College, Calcutta.*

# सामवेदसंहितायाः

## छन्द आर्चिकस्य आग्नेयं पर्व



प्रथमप्रपाठकस्य प्रथमार्द्धे प्रथमा दशतिः।

हरिः ओम्।

१ २ १ २ ३ १ २ २ ३ ३ १ २
अग्न आ याहि वीतये गृणानो हव्यदातये।
१ २र ३ १ २
नि होता सत्सि बर्हिषि ॥ १ ॥

प्रथमे खण्डे अग्न आयाहीत्येषा भरद्वाजेन दृष्टा गायत्री आग्नेयी। सैषा प्रथमा। हे 'अग्ने' अङ्गनादिगुणविशिष्ट! त्वम् 'आयाहि' अस्मद्यज्ञं प्रत्यागच्छ। किमर्थम्? 'वीतये' हविषां चरुपुरोडाशादीनां भक्षणाय। कीदृशः सन्? 'गृणानः' अस्माभिः स्तूयमानः (व्यत्ययेन कर्मणि कर्तृप्रत्यय.) पुनश्च किमर्थम्? 'हव्यदातये'। देवेभ्यो हविः प्रदानाय' आगत्य च 'होता' देवानामाह्वाता सन् 'बर्हिषि' आस्तीर्णे दर्भे 'निषत्सि' निषीद(सदेश्छान्दस. शपोलुक्) ॥ १ ॥

१ २ २ ३ २ ३ २ १ २ २ २
त्वमग्ने यज्ञानाꣳ होता विश्वेषाꣳ हितः।
२ २ ३ १ २ २ १ २
भिर्मानुषे जने ॥ २ ॥

त्वमग्ने इत्यस्या ऋष्याद्याः पूर्ववत्। सैषा द्वितीया। हे 'अग्ने' त्वं 'विश्वेषां यज्ञानाम्' अग्निष्टोमात्यग्निष्टोमादीनां सम्बन्धी 'होता' होमनिष्पादनशीलः (जुहोतेस्ताच्छीलिकस्तृन्) यद्वा 'यज्ञानां' यष्टव्यानां 'विश्वेषां' देवानां 'होता' आह्वाता। एवं भूतस्त्वं 'मानुषे' मनोरपत्यभूते यजमानलक्षणे 'देवेभिः' देवैः छान्दसोभिस ऐसभावः) देवनशीलैर्ऋत्विग्भिः 'हितः' निहितः गार्हपत्यादिरूपे संस्थापितो भवसि। यद्वा। देवैरिन्द्रादिभिरुक्तलक्षणः सन् यज्ञानां निष्पादनाय यजमाने नियुक्तोऽसि॥ २॥

१ २ ३१ २ ३ १ २ ३ १ २
अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्।
३ १ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम्॥ ३॥

अग्निं दूतमित्येषा काण्वपुत्रेण मेधातिथिना दृष्टा, छन्दोदैवते पूर्ववत्। सैषा तृतीया। 'दूतम्' देवानां दौत्ये विनियुक्तम् 'अग्निं' देवम्' 'वृणीमहे' स्तुतिभिर्हविर्भिः सम्भजामहे [ अस्य च दूतत्वं तैत्तिरीयके समाम्नातम्—"अग्निर्देवानां दूत आसीदुशनाकाव्योऽसुराणाम्" इति ] कथं भूतम्? 'होतारं' आहुदेवानामाह्वातारं [ ह्वयतेः साधुकारिणि तृन्, 'बहुलं छन्दसि (६,१,३४)' इति सम्प्रसारणम् ] 'विश्ववेदसं' विश्वानि वेत्तीति विश्ववेदाः, तम् [ वेत्तेरसुन् ] यद्वा, वेद इति धननाम विश्वं सर्वं वेदो धनं यस्य, तम् [ बहुव्रीहौ विश्वं संज्ञायाम् (६,२,१०६), इति पूर्वपदान्तोदात्तत्वम् ] 'अस्य' प्रवर्त्तमानस्य यज्ञस्य 'सुक्रतुम्' निष्पादकत्वेन शोभनकर्माणम् अथवा क्रतुरिति प्रज्ञानाम शोभनप्रज्ञं वा। तं त्वां वृणीमहे इति पूर्वेण सम्बन्धः॥ ३॥

१२ ३ १ २ ३ १ २ ३ १ २
अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया।
१ २ ३ १ २र
समिद्धः शुक्र आहुतः ॥ ४ ॥

अग्निर्वृत्राणीत्येषा भरद्वाजेन दृष्टा, छन्दोदेवते पूर्ववत्। सेषा चतुर्थी। 'द्रविणस्युः' द्रविणं धनं स्तोतृणामिच्छन् छन्दसि परेच्छायां क्यच्। प्रातिपदिकेभ्यः इच्छायां क्वचि सुगागमः यद्वा। हविर्लक्षणं धनं तदात्मन इच्छन्नग्निः 'विपन्यया' पनतिः स्तुत्यर्थः अस्माभिः क्रियमाणया स्तुत्या स्तूयमानः सन् 'वृत्राणि' बलेन जगतामावरकाणि रक्षः-प्रभृतीनि, तमांसि वा 'जङ्घनत्' भृशं हन्तु [ हन्तेर्यङ्लुगन्तास्लिङर्थे लेट् (३,४,७) ] कीदृशोऽग्निः ? 'समिद्धः' समिदादिभिर्हविभिः सम्यग्दीपितः। अतएव 'शुक्रः' दीप्यमानः। 'आहुतः' हविर्भिराहुतः ॥ ४ ॥

१ २ ३ २ ३ १ २ ३ १ २ ३ २
प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम्।
३ १ २ ३ १ २र
अग्ने रथं न वेद्यम् ॥ ५ ॥

प्रेष्ठं व इत्येषा उशनसा दृष्टा, छन्दो देवते पूर्ववत्। सेषा पञ्चमी। हे 'अग्ने' 'वः' त्वां पूजार्थं बहुवचनं 'स्तुषे' स्तौमि, अहमुशना इति शेषः। कीदृशम् ? 'प्रेष्ठं' स्तोतृणामस्माकं धनदानेन प्रियतमम्। 'अतिथिं' सर्वैरतिथिवत् पूज्यम्। यद्वा अत सातत्यगमने। अतन्यञ्जीत्यादिना अतेरिथिन् सततं देवानां हविः प्रदातुं गच्छन्तम्। 'मित्रमिव' सखायमिव 'प्रियं' स्तोतुः प्रीणनकरम्। 'रथं न' रथमिव 'वेद्यं' वेदोधनं धनहितं लाभहेतुं, यथा रथेन धनं लभते, तद्वत्, स्तोतारोऽनेन धनं लभन्ते, तादृगधनलाभकारणम्।

"अग्ने" इति छन्दोगानाम्, "अग्निम्" इति वह्वृचानां पाठः॥ ५ ॥

१ २ ३ १ २ ३ १ ३२ ३ १ २
त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः।
३ २ ३ १ ३२
उत द्विषो मर्त्यस्य ॥ ६ ॥

त्वं न इत्येषा सुष्टीति पुरुमीढ़ाभ्यां तयोरन्यतरेण वा दृष्टा, छन्दोदेवते पूर्ववत्। सैषा षष्ठी। हे 'अग्ने' त्वं 'नः' अस्मान् 'महोभिः' पूजाभिः, महद्भिर्धनैर्वा 'पाहि' रक्ष। कस्याः पाहि? 'विश्वस्याः' बहुविधात् 'अरातेः' अदातुः सकाशात् अदानाद्वा पाहि। त्वमेव महद्धनं दत्त्वा अदातुरदानाद्वा सकाशाद्रचेत्यर्थः। यद्वा महोभिः युक्तस्त्वमिति योज्यम्। 'उत' अपि च। 'द्विषः' द्वेष्टुः 'मर्त्यस्य' मर्त्यात् सकाशात् पाहि अस्मभ्यं धनं दत्त्वेति भावः। अथवा मर्त्यस्य द्विषो द्वेषाद्रचेति सम्बन्धः। अरातेरित्यस्य अदानादिति पक्षे, तत्रापि मर्त्यस्यादानादिति सम्बन्धनीयम्॥ ६॥

१ २ १ ३२ ३ १ २ ३ १ ३ २ १ २
एह्यूषु ब्रवाणि तेऽग्न इत्थेतरा गिरः।
३ १ ३ ३ १ २
एभिर्वर्धास इन्दुभिः॥ ७ ॥

एह्यूष्वित्येषा भरद्वाजेन दृष्टा, छन्दो देवते पूर्ववत्। सैषा सप्तमी। हे 'अग्ने' 'एहि' आगच्छ 'ते' तुभ्यं त्वदर्थं 'गिरः' स्तुतीः 'इत्था' इत्यमनेन प्रकारेण 'सु' सुष्टु 'ब्रवाणि' इत्याशास्यते। ताः स्तुतीः शृणु इत्यर्थः। 'उ' इत्येताः 'इतराः' "असुरैः कृताः, स्तुतीः शृणु इति शेषः। [तथाच ब्राह्मणम्— अग्निरित्येतरा गिर इत्यसुर्याह वा इतरा गिर." इति]

अपिच। आगतस्त्वं 'एभिः' एतैः 'इन्दुभिः' सोमैः 'बर्हीस' बर्हिस्व ॥ ७ ॥

१ २ ३ १ २र ३१ २ ३ १ २
आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात्।

२ ३ १ २ ३ २
अग्ने त्वां कामये गिरा ॥ ८ ॥

आ ते वत्स इत्येषा काण्वगोत्रेण वत्सेन दृष्टा, छन्दोदेवते पूर्ववत्। सैषा अष्टमी। 'वत्सः' एतन्नामा ऋषिः 'ते' तव 'मनः' 'परमाच्चित्' उत्कृष्टादपि 'सधस्थात्' सहस्थानात् द्युलोकात् 'आ यमत्' आ यमयति। केन साधनेन? 'गिरा' स्तुत्या। चिरं प्रत्यवस्थातम्। हे 'अग्ने' 'त्वां कामये' त्वदीयं मनो मय्येव नियच्छामीति प्रार्थये।

"त्वाङ् कामये" इति छन्दोगाः। "त्वाम् कामये" इति बह्वृचाः, सुवर्णत्वादवग्रहा पठन्ति ॥ ८ ॥

१ २ ३ १ २ ३ १ २र ३ १ २
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत।

१ १ १२ ३ १ २
मूर्ध्नो विश्वस्य वाघतः ॥ ९ ॥

त्वामग्न इत्येषा भरद्वाजेन दृष्टा, छन्दो देवते पूर्ववत्। सैषा नवमी। हे 'अग्ने' 'अथर्वा' एतत् मन्त्र ऋषिः 'त्वां' 'पुष्करादधि' पुष्करे पुष्करपर्णे 'निरमन्थत' अरण्योः मथनाद-दजनयत्। कीदृशात् पुष्करात्? 'मूर्ध्नः' मूर्धवद्धारकात्। 'विश्वस्य' सर्वस्य जगतः 'वाघतः' वाहकात् [ "पुष्करपर्णे हि प्रजापतिर्भूमिमप्रथयत् तत् पुष्करपर्णं प्रथयत्" इति श्रुतेः। भूमिरिव सर्वजगत आधारभूतेति पुष्करपर्णस्य सर्वजगद्धारकत्वम्। अत्र पुष्कर-शब्देन पुष्करपर्णमभिधीयते, इत्येतच्च

तैत्तिरीयके विस्पष्टमाम्नातम्-"त्वामग्ने पुष्करादध्यथर्वा निरमन्थत" इति, "पुष्करपर्णे ह्येनमुपश्रितमविन्दत्" इति ॥ ९ ॥

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
अग्ने विवस्वदा भरास्मभ्यमूतये महे ।
३ १ २र ३ २
देवो ह्यसि नो दृशे ॥ १० ॥

इति प्रथमप्रपाठकस्य प्रथमार्द्धे प्रथमा दशतिः ।

---

सैषा दशमी। पूर्वोक्तासु ऋक्षु बह्वृचानामनुक्रमणिका-ग्रन्थं पर्य्यालोच्य तदोक्ता ऋषिछन्दोदेवता योजिताः। एवमुत्तरास्वपि योजनीयाः ॥ अग्ने विवस्वदित्येषा ॥ बह्वृचैर्नाम्नाता, तथाप्यस्याः छन्दोदेवते पूर्ववद्विस्पष्टे, ऋषिस्तु वामदेव इति ग्रन्थान्तरादवगतः ॥ हे 'अग्ने' त्वम् 'अस्मभ्यम्' अस्माकं 'महे ऊतये' महते रक्षणाय अव रक्षणे इति धातोः ऊतियूतिजूतीति सूत्रेण निपातितं रूपम् 'विवस्वत्' स्वर्गादि-लोकेषु विशेषेण निवासस्य हेतुभूतमिदं कर्म 'आभर' सम्पादय। [ह्रयवोर्भश्छन्दसीति भत्वम्] 'हि' यस्मात् त्वं 'नः' अस्माकं 'दृशे' दर्शनार्थं 'देवः' द्योतमानः 'असि'। इन्द्रादयो मांसाभिर्ह्न्यन्ते, त्वं तु गार्हपत्यादिदेशेऽतिद्योतमानः प्रत्यक्षेण दृश्यसे तस्मात्त्वां विशेषेण प्रार्थयामहे इत्यभिप्रायः ॥ १० ॥

इति सायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दो व्याख्याने प्रथमस्याध्यायस्य प्रथमः खण्डः ।

---

अथ प्रथमप्रपाठकस्य प्रथमार्द्धे द्वितीया दशतिः।

२ ३ ३ १ २ ३ १ २ ३ १ २
नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः।
१ २ ३ १ २
अमैरमित्रमर्दय ॥ १ ॥

अथ द्वितीय खण्डे। सेयं प्रथमा। आयुङ्क्ष्वाहिर्ऋषिः। हे 'अग्ने! देव'! 'ते', तुभ्यं 'नमो गृणन्ति' नमस्कारशब्दमुच्चारयन्ति'। किमर्थम्? 'ओजसे' बलाय। के? "कृष्टयः" मनुष्याः, यजमानाः, अतोऽहमपि गृणामीत्यर्थः। त्वं च 'अमैः' बलैः। 'अमित्र' शत्रुम्। 'अर्दय' नाशय ॥ १ ॥

३ १ २ ३ १ २ ३ २ ३ १ २
दूतं वो विश्ववेदसꣳ हव्यवाहममर्त्यम्।
१ २ ३ २
यजिष्ठमृञ्जसे गिरा ॥ २ ॥

सैषा द्वितीया। वामदेव ऋषिः। हे अग्ने! 'विश्ववेदस' विश्वं समस्तं वेदो धनं यस्यासौ विश्ववेदाः, तम् सर्वविदं वा। 'हव्यवाहं' देवेभ्यो हविषां वोढारम्। 'अमर्त्यं' अमरणधर्माणम्। 'यजिष्ठम्' अतिशयेन यष्टारम्। 'दूतम्' देवानाम्। 'वः' त्वाम्। 'गिरा' स्तुतिरूपया वाचा। 'ऋञ्जसे' यजमानोऽहं प्रसाधयामि वर्द्धयामीत्यर्थः। 'ऋञ्जतिः प्रसाधनकर्मा' इति यास्कः ॥ २ ॥

१ २ ३ २ ३ ३ ३ १ २ ३ १ २
उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः।
३ १ २२
वायोरनीके अस्थिरन् ॥ ३ ॥

सैषा तृतीया। प्रयोग ऋषिः। हे अग्ने! 'हविष्कृतः' यजमानार्थम्। 'गिरः' स्तुतयः। 'जामयः' स्वसार इव। 'देदि-

मतीः' तव गुणान् दिशन्त्यः। 'त्वा' त्वाम्, उपतिष्ठन्ते। 'वायोः' 'अनीके' समीपे, त्वां समेधयन्त्यः, 'अस्थिरन्' अतिष्ठंश्च ॥ ३॥

१ २ २ १ २ २ १ २ २ २ २ २

उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् ।

२ ३ २ २ ३ १ २

नमो भरन्त एमसि ॥ ४ ॥

सैषा चतुर्थी। मधुच्छन्द ऋषिः। हे 'अग्ने' 'वयम्' अनुष्ठातारः 'दिवे दिवे' प्रतिदिनं 'दोषावस्तः' रात्रावहनि च 'धिया' बुद्ध्या 'नमो भरन्तः' नमस्कारं सम्पादयन्तः 'उप' समीपे 'त्वा एमसि' त्वामागच्छामः॥ उपशब्दस्य निपात-स्वरः। 'त्वामौ द्वितीयायाः [ ८,१,२३ ]' इति युष्मच्छब्दस्यानुदात्तस्त्वादेशः। दोषाशब्दो रात्रिवाची। वस्तः इत्यहर्वाची द्वन्द्वसमासे कार्त्तकौजपादित्वादाद्युदात्तः। सावेकाच इति धियो विभक्तिरुदात्ता। नमः इति निपातः यद्वा, सर्वविषयस्येत्याद्युदात्तः। भरन्त इत्यत्र शपः पित्त्वात् अनुदात्तत्वे सति धातुस्वरः शिष्यते। एमसीति 'इदन्तोमसि' इत्यनेन इकारः, 'तिङः' इति निघातः ॥४॥

१ २ ३ १ २ २ १ २ २ १ २

जराबोध तद्विविड्ढि विशे विशे यज्ञियाय ।

१ २ २ १ २ २ २

स्तोमꣳ रुद्राय दृशीकम् ॥ ५ ॥

अथ पञ्चमी। शुनःशेप ऋषिः। हे 'जराबोध'! जरया स्तुत्या बोध्यमानाग्ने! 'विशेविशे' तत्तद्यजमानरूपप्रजानुग्रहार्थम्। 'यज्ञियाय' यज्ञसम्बन्ध्यनुष्ठानसिद्ध्यर्थम्। 'तद्' देव-यजनम्। 'विविड्ढि' प्रविश। यजमानोऽपि 'रुद्राय' क्रूराय अग्नये तुभ्यम्। 'दृशीकं' दर्शनीयम् समीचीनं, 'स्तोमं' स्तोत्रं करोतीति शेषः। अत्र यास्क एवं व्याख्यातवान्। "जरा

स्तुतिः, जरतेः स्तुतिकर्मणः तद्बोधतया बोधयितरिति वा। तद् विविड्ढि तत् कुरु। मनुष्याय यजमानाय। स्तोमं रुद्राय दृशीकम्" इति। जराबोध! नृप् वयोहानौ अत्र तु स्तुत्यर्थः। 'पिङ्गिदादिभ्योऽङ्' इत्यङ् प्रत्ययः, अतष्टाप्। जरया स्तुत्या बोधो यस्यासौ जराबोधः। यद्वा, जरया बोध्यते इति जराबोधः, कर्मणि आमन्त्रितायुदात्तत्वम्। विविड्ढि विश् प्रवेशने. लोटो हिः, 'बहुलं छन्दसि' इति शपः श्लुः, अभ्यास-हलादिशेषौ, 'हुझल्भ्यो हेर्धिः' इति हेर्धिरादेशः, षत्वष्टुत्वे। यद्वा, विपृष्ट व्याप्ताविव्यस्य लोण्मध्यमैकवचने अभ्यासस्य गुणाभावः। विशेविशे, 'सावेकाचः' इति चतुर्थ्या उदात्तत्वम्, 'अनुदात्तञ्च' इत्याम्रेडितानुदात्तत्वम्। यज्ञियाय, 'यज्ञर्त्विग्भ्यां घखञौ' इति घः। दृशीकम्, 'अनिदृशिभ्याञ्चेति कीकन्' नित्स्वरादाद्युदात्तः॥ ५॥

२ ३ १ २र २ १ २ ३ १ २ १ २
प्रति त्यं चारुमध्वरं गोपीथाय प्रहूयसे।
३ १ २ ३ १ २
मरुद्भिरग्न आ गहि॥ ६॥

अथ षष्ठी। मेधातिथिर्ऋषिः। त्यच्छब्दः सर्वनामस्तच्छब्दपर्यायः। हे 'अग्ने!' यो यज्ञः चारुः अङ्गवैकल्यरहितः। 'त्यं' तथाविधम्, 'चारुम्, अध्वरम् प्रति' लक्ष्य। 'गोपीथाय' सोमपानाय। 'प्रहूयसे' प्रकर्षेण त्वं हूयसे। तस्मादग्निरध्वरे त्वं मरुद्भिर्देवविशेषैः सह, 'आ गहि' आगच्छ। सेयमृग् यास्केनैवं व्याख्याता—'तं प्रति चारुमध्वरं सोमं पानाय प्रहूयसे—सोऽग्निर्मरुद्भिः सहागच्छ' [ १०.२,१२ ] इति॥ ६॥

२ ३ २ २ ३ २० २ ३ २ ३ १ ३र
अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः।
२ ३ २ २ ३ २
सम्राजं तमध्वराणाम्॥ ७॥

अथ सप्तमी। शुनःशेप ऋषिः। अध्वराणां यज्ञानां, 'सम्राजम् तं' सम्राट्स्वरूपं स्वामिनम् अग्निम् त्वां, 'नमोभिः' स्तुतिभिः, 'वन्दध्यै' वन्दितुं प्रवृत्ताः इति शेषः। अग्ने- र्दृष्टान्तः—'वारवन्तं' वालयुक्तम्। 'अश्वं न' अश्वमिव। अश्वो यथा वालैर्दंशकान् मशकमक्षिकादीन् परिहरति, तथा त्वमपि ज्वालाभिरस्मद्विरोधिनः परिहरसीत्यर्थः ॥ ७ ॥

२ १ २र ३ १ २र
और्वभृगुवच्छुचिमप्नवानवदाहुवे ।
३ १ २ ३ १ २
अग्निꣳसमुद्रवाससम् ॥ ८ ॥

अथाष्टमी। प्रयोग ऋषिः। 'समुद्रवाससं' समुद्रमध्यवर्त्तिनं वाडवं 'शुचिं' शुद्धम् अग्निम् 'और्वभृगुवत्' तथा और्वभृगुः 'अप्नवानवत्' यथा अप्नवानः, तथा 'आहुवे' अहमाह्वयामि ॥ ८ ॥

१ २ ३ १ २ ३र ३ १ २ ३ १ २
अग्निमिन्धानो मनसा धियꣳसचेत मर्त्यः ।
१ २ ३ १ २
अग्निमिन्धे विवस्वभिः ॥ ९ ॥

अथ नवमी। प्रयोग ऋषिः। 'मर्त्यः' मनुष्योऽग्निमिन्धानः काष्ठैः प्रज्वलयन् मनसा एव श्रद्धानः 'धियं' कर्म 'सचेत' क्वापि भजेत। 'विवस्वभिः' ऋत्विग्भिश्च 'अग्निम्' एव 'इन्धे' प्रज्वलयति।

बह्वृचानाम् "ईधे" इति पाठः ॥ ९ ॥

३उ १ २ ३ १ २ ३ १ २ ३ १ २
आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम् ।
१ २उ ३ १ २ ३ १
परो यदिध्यते दिवि ॥ १० ॥

इति प्रथमप्रपाठकस्य प्रथमार्द्धे द्वितीया दशतिः।

अथ दशमी। वत्स ऋषिः। 'परोदिवि' दिवः परस्तात् व्यत्ययेन सप्तमी (३,४,८८)। बह्वृचानां दिवेति तृतीयान्तेन व्यत्ययः, दिवि द्युलोकस्योपरि 'यद्' यदा अयं वैश्वानरोऽग्निः सूर्यात्मना 'इध्यते' दीप्यते 'आदित्' अनन्तरमेव 'प्रत्नस्य' चिरन्तनस्य 'रेतसः' गन्तुः 'री' गतिरेषणयोः' अस्मात् 'सुरीभ्यां तुड्वेत्यसुन् तुडागमश्च। यद्वा, रेतस इत्युदकनाम (नि०१,१२,१६) रेतस्विन उदकवतः, सामर्थ्यान्मत्वर्थो लक्ष्यते ईदृशस्येन्द्रस्य सूर्यात्मनः 'वासरं' नियामकं वासरस्य निवासहेतुभूतं वा 'ज्योतिः' द्योतमानं तेजः 'पश्यन्ति' सर्वे जनाः। यद्वा वासरमित्यत्यन्तसंयोगे द्वितीया (२,३,५), क्षत्स्नमहः उदयप्रभृत्यास्तमयात् ज्योतिः पश्यन्तीत्यर्थः 'इसुसोः सामर्थ्ये (८,३,४४) इति विसर्जनीयस्य षत्वम् ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य द्वितीयः खण्डः।

---

अथ प्रथमप्रपाठकस्य प्रथमार्द्धे तृतीया दशतिः।

२ १ २ २ १ २ २ १ २ २ १ २
अग्निं वो वृधन्तमध्वराणां पुरुतमम्।
१ २ २ ३ १ २
अच्छा नप्त्रे सहस्वते ॥ १ ॥

अथ तृतीय खण्डे। सैषा प्रथमा। प्रयोग ऋषिः। 'अध्वराणां' अहिंस्यानां बलिनाम्। 'नप्त्रे' बन्धुम्। 'सहस्वते' बलवन्तम्। विभक्तिव्यत्ययः। 'वृधन्तं' ज्वालाभिर्वर्द्धमानम्। 'पुरुतमम्' अतिशयेन बहुमग्निम्। हे ऋत्विजः! 'वः' यूयम्। 'अच्छा' अभिगच्छत ॥ १ ॥

१ ३ २ ३ १ २ ३ २ ३ २ २ ३ २ ३ २ १ २
अग्निस्तिग्मेन शोचिषा यꣳसद्विश्वं न्याऽ३त्रिणम्।
३ १ २ ३ २
अग्निर्नो वꣳसते रयिम्॥ २॥

अथ द्वितीया। भरद्वाज ऋषिः। 'अयम् अग्निः', 'तिग्मेन' तीक्ष्णेन 'शोचिषा' तेजसा। 'विश्वं' सर्वम्। 'अत्रिणम्' अत्तारम् राक्षसादिकम्। नियंसत् निहन्तु। बह्वृचा अनुस्वारस्थाने आकारं दृष्ट्वा "यासत्" इति पठन्ति] अपिच 'नः', अस्मभ्यमग्निः 'रयिं' धनं 'वंसते, ददातु।

"वंसते" इति छन्दोगाः। "वनते" इति बह्वृचाः॥ २॥

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ ३ २
अग्ने मृड महाꣳ अस्यय आ देवयुं जनम्।
३ १ २ ३ १ २ १ २
इयेथ बर्हिरासदम्॥ ३॥

अथ तृतीया। वामदेव ऋषिः। हे 'अग्ने'! 'मृड' अस्मान् सुखय। स त्वं 'महान् असि' प्रभूतो भवसि। 'यः' त्वम् 'अयः' गन्ता 'देवयुं' देवानां कामयितारं 'जनं' यजमानं 'बर्हिः' दर्भम् 'आसदम्' यत्र आसत्तुम् 'आ इयेथ' आगच्छसि।

"अयः" इति छन्दोगाः। "ययीम्" इति बह्वृचाः॥ ३॥

३ ३ १ २ ३ १ २ ३ १ २ ३ १
अग्ने रक्षा णो अꣳहसः प्रति स्म देव रीषतः।
२ ३ २ १ ३
तपिष्ठैरजरो दह॥ ४॥

अथ चतुर्थी। वसिष्ठ ऋषिः। हे 'अग्ने'! त्वं 'नः' अस्मान् 'अंहसः' पापात् 'रक्षा' पाहि संहितायां दीर्घश्छान्दसः अपिच 'देव' द्योतमानाग्ने! 'अजरः' जरारहितस्त्वं 'रीषतः'

हिंसतः शत्रून् [संहितायां दीर्घश्छान्दसः] 'तपिष्ठैः' अतिशयेन तापकैस्तेजोभिः 'प्रति दह स्म' भस्मीकुरु।

स्मेति सकारस्य संहितायां "प्रति ष्म" इति षत्वं बह्वृचाः कुर्वन्ति ॥ ४ ॥

१ २ ३ १ २र २र १ २ ३ १ २
अग्ने युंक्ष्वा हि ये तवाश्वासो देवसाधवः।
२ ३ १ २ ३ १ २
अरं वहन्त्याशवः ॥ ५ ॥

अथ पञ्चमी। भरद्वाज ऋषिः। हे 'देव' द्योतमान ! 'अग्ने' ! तानश्वान् 'युङ्क्ष्व' आत्मीये रथे योजय [बह्वृचास्तैत्तिरीयाश्च विकरणप्रत्ययस्य लोपं कृत्वा "युक्ष्व" इति पठन्ति] ये 'तव' त्वदीयाः 'साधवः' साधकाः सुशीला वा 'अश्वासः' अश्वाः 'आशवः' क्षिप्रगामिनः 'अरम्' अलं पर्याप्तं त्वदीयं रथं 'वहन्ति'।

"वहन्त्याशवः" इति छन्दोगाः। "वहन्ति मन्यवः" इति बह्वृचाः ॥ ५ ॥

१ २ २ १ २ २ १
नि त्वा नक्ष्य विश्पते द्युमन्तं धीमहे वयम्।
३ १ २
सुवीरमग्न आहुत ॥ ६ ॥

अथ षष्ठी। वसिष्ठ ऋषिः। 'नक्ष्य' ! उपगन्तव्य ! नक्षतिर्व्याप्तिकर्मा 'विश्पते' विशाम्पते ! 'आहुत' सर्वैर्यजमानैरभिहुत ! हे 'अग्ने' ! 'द्युमन्तं' दीप्तिमन्तं 'सुवीरं' कल्याणस्तोतृकं 'त्वा' त्वां वयं 'नि धीमहि' निहितवन्तः।

"धीमहे वयम्" इति छन्दोगाः। "देव धीमहि" इति बह्वृचाः ॥ ६ ॥

१० २ ३ २ ३ १ २ ३ १ ३ १ २ ३ १ २ ३ १ २ ३ १

अग्निर्मूर्ध्वा दिवः ककुत्पतिः पृथिव्या अयम् ।

२ ३ ३२

अपाꣳरेताꣳसि जिन्वति ॥ ७ ॥

अथ सप्तमी। विरूप ऋषिः। 'मूर्द्धा' देवानां श्रेष्ठः 'दिवः' द्युलोकस्य 'ककुत्' उच्छ्रितः 'पृथिव्याः' च 'पतिः' 'अयम्' अग्निः 'अपां रेतांसि' स्थावरजङ्गमात्मकानि भूतानि 'जिन्वति' प्रीणयति ॥ ७ ॥

१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १

इममू षु त्वमस्माकꣳसनिं गायत्रं नव्याꣳसम् ।

२ ३ १ २ ३ १ २

अग्ने देवेषु प्र वोचः ॥ ८ ॥

अथाष्टमी। प्रजः ग्रैप ऋषिः। हे 'अग्ने'। त्वम् 'अस्माकम्' अस्मत्सम्बन्धिनम् ["अस्माभम्" इति तैत्तिरीयाः] 'इममूषु' पुरोदेशेऽनुष्ठीयमानमपि 'सनिं' हविर्दानं 'नव्यांसं' नवतरं ["नवीयांसम्" इति तैत्तिरीयाः] 'गायत्रं' स्तुतिरूपं वचोऽपि 'देवेषु' देवानाम् अग्रे 'प्रवोचः' प्रब्रूहि ॥ ८ ॥

१ २ ३ १ २ ३ १ २ ३ १ २

तं त्वा गोपवनो गिरा जनिष्ठदग्ने अङ्गिरः ।

१ २ ३ १ ३ १ २

स पावक श्रुधी हवम् ॥ ९ ॥

अथ नवमी। गोपवन ऋषिः। हे 'अग्ने'! 'तं' 'त्वा' 'त्वं' 'गोपवनः' ऋषिः 'गिरा'-स्तुत्या 'जनिष्ठत्' जनयति वर्द्धयति स्तूयमाना हि देवता वर्द्धन्ते तादृगाग्ने 'अङ्गिरः' सर्वत्र गन्तः, अङ्गिरसां पुत्रो वा हे 'पावक' शोधक! गोपवनस्य 'हवम्' आह्वानं 'श्रुधि' शृणु ।

"तं त्वा" इति "अजिहत्" इति च छन्दोगाः, "यं त्वा" इति "जनिष्ठत्" इति च बह्वृचाः ॥ ९ ॥

२ ३ १ २ ३ १२ ३१ ३ १ २

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्।

२ ३ १ २ ३ १ २

दधद्रत्नानि दाशुषे ॥ १० ॥

अथ दशमी। वामदेव ऋषिः। 'वाजपतिः' वाजानामन्नानां पतिः पालकः [परि वाजपतिः कविरित्येष हि वाजानां पतिरिति ब्राह्मणम्] 'कविः' क्रान्तदर्शी मेधावी वा। 'दाशुषे' हविर्दत्तवते यजमानाय 'रत्नानि' रमणीयानि धनानि 'दधत्' प्रयच्छन् 'अग्निः' 'हव्यानि' हवींषि 'पर्यक्रमीत्' परिक्रामति व्याप्नोतीत्यर्थः ॥ १० ॥

२३ १ २ १२ ३१ २ ३ १ २

उदु त्यं जातवेदसं देवं वहन्ति केतवः।

३१ ३२ ३ १ २

दृशे विश्वाय सूर्यम् ॥ ११ ॥

इयं सौरी। आग्नेयसमाख्याने ऋत्विजो गच्छन्तीतिवत् प्राणभृत उपदधातीतिवच्च द्रष्टव्यम्।

अथैकादशी। कण्व ऋषिः। 'केतवः' प्रज्ञापकाः सूर्याश्वाः यद्वा, सूर्यरश्मयः 'सूर्यम्' सर्वस्य प्रेरकमादित्यम् 'उद्वहन्ति' ऊर्ध्वं वहन्ति 'उ' इति पादपूरणः। [उक्तञ्च—"मिताक्षरेष्वनर्थकाः कमीमिद्विति"] किमर्थम्? 'विश्वाय' विश्वस्मै सर्वस्मै भुवनाय 'दृशे' द्रष्टुम्। यथा सर्वे जनाः सूर्यं पश्यन्ति तथोर्द्ध्वं वहन्तीत्यर्थः। कीदृशं सूर्यम्? 'त्यं' तं प्रसिद्धम्, 'जातवेदसं' जातानां प्राणिनां वेदितारं, जातप्रज्ञं, जातधनं

वा, 'देव' द्योतमानम् [ अत्र निरुक्तम्—'उदुहन्ति जातवेदसं देवमश्वा केतवो रश्मयो वा सर्वेषां भूतानां सन्दर्शनाय सूर्यम् (१२,२,४) इति ॥ ११ ॥

३ २ ३ १ २र २ ३ २ ३, २
कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे ।

३ १ २ ३ १ २
देवममीवचातनम् ॥ १२ ॥

अथ द्वादशी । मेधातिथिर्ऋषिः । हे स्तोतसङ्घ । 'अध्वरे' क्रतौ 'अग्निम्' 'उपस्तुहि' उपेत्य, स्तुतिं कुरु कीदृशम् ? 'कविं' मेधाविनं 'सत्यधर्माणम्' सत्यवचनरूपेण धर्मेणोपेतं 'देवं' द्योतमानम् 'अमीवचातनम्' अमीवानां हिंसकानां शत्रूणां वा घातकम् ॥ १२ ॥

१ २ ३ १ ३ १ २ २ १ २ ३ १ २
शं नो देवीरभिष्टये शं नो भवन्तु पीतये ।

१उ २ १ २
शं योरभिस्रवन्तु नः ॥ १३ ॥

अथ त्रयोदशी । सिन्धुद्वीपोऽम्बरीषो वा ऋष आसीदा ऋषिः । 'नः' अस्माकं पापापनोदकारिण्यः 'शं' सुखं भवन्तु । 'देवीः' देव्य आपः 'अभिष्टये' अस्मदयज्ञाय भवन्तु, यज्ञाङ्गभावाय च भवन्तु इत्यर्थः । अपिच, 'नः' अस्मत्सम्बन्धिने 'पीतये' पानाय च 'शं' सुखं भवन्तु । तथा, 'शम्' उत्पन्नानां रोगाणां शमनम् 'योः' यापनम् अनुत्पन्नानां पृथक्करणं च कुर्वन्तु । अपिच, 'नः' अस्माकम् 'अभि' उपरि स्रवन्तु, सत्यं सिञ्चन्तु ॥

"शन्नोभवन्तु" इति छन्दोगाः । "आपोभवन्तु" इति यजुषां तैत्तिरीयाणां ॥ १३ ॥

१ २ २ १ २र २ १ २

कस्य नूनं परीणसि धियो जिन्वसि सत्पते ।

१ २ २ १ २ ३ १ २

गोषाता यस्य ते गिरः ॥ १४ ॥

इति प्रथमप्रपाठकस्य प्रथमार्द्धे तृतीया दशतिः ।

अथ चतुर्दशी । उशना ऋषिः । हे 'सत्पते' सतां पते । अग्ने ! 'नूनम्' इदानीं 'कस्य' कीदृशस्य जनस्य 'परीणसि' ब्रह्मणि 'धियः' कर्माणि 'जिन्वसि' प्रीणयसि । 'यस्य' 'ते' तव सम्बन्धिन्यः 'गिरः' स्तुतयः 'गोषाता' गोसातौ गवां लाभे भवन्तु खलु । तस्मात्त्वं कुत्र तिष्ठसि ? अस्माकमिदानीं गवेच्छा प्रवर्त्तते ॥

यद्वा । हे अग्ने ! त्वमिदानीं कस्य कर्माणि प्रीणयसि ? न कस्यापीत्यर्थः । अस्माकमेव कर्माणि प्रीणयेतिभावः ॥

"परीणसि" इति "सत्पते" इति च छन्दोगाः, "परिणस." इति "दम्पते" इति च बह्वृचाः ॥ १४ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य तृतीयः खण्डः ।

---

अथ प्रथमप्रपाठकस्य प्रथमार्द्धे चतुर्थी दशतिः ।

३ १ २ ३ १ २ ३ १ २ ३ १ २

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ १ २र

प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् १

अथ चतुर्थे खण्डे—सेयं प्रथमा । शंयुर्ऋषिः । हे स्तोतारः ! 'वः' यूयं 'यज्ञा यज्ञा' यज्ञे यज्ञे सर्वेषु यागेषु 'दक्षसे' प्रवृद्धाय 'अग्नये' 'गिरा गिरा' स्तुतिरूपया वाचा स्तोत्रं कुरुतेतिशेषः

['श' शब्दोऽभिव्यक्तमोव इत्यस्मात्परोद्रष्टव्यः] यूयं च स्तोत्रं कुरुत, वयमपि तमग्निं 'प्र प्र शंसिषम्' 'प्रसमुपोदः पादपूरणे (८,१,६०)' इति प्रशब्दस्य द्विरुक्तिः पादपूरणार्था। व्यत्ययेनैकवचनं (३,४,९८)। छान्दसोलुट् प्रशंसामः कीदृशम्? 'अमृतं' मरणरहितम्। 'जातवेदसं' जातानां वेदितारं जात-प्रज्ञानं जात-धनं वा। 'मित्रं न' सखिभूतमिव प्रियमनुकूलम्; यद्वा व्यत्ययेन त्वमित्यस्य वसादेशः (३,४,९८)। अन्नय इति च कर्मणि चतुर्थी, क्रियाग्रहणमपिकर्त्तव्यम्, इति कर्मणः सम्प्रदानत्वात्। च शब्दश्च णिति निपातयेदर्थे वर्त्तते। दक्षस इति दक्षेर्वृद्धिकर्मणः अस्त्सर्वाविमत्ययांलटि रूपम्। 'चण्योगान्निपातैर्यद्यदिहन्त' इति निघातप्रतिषेधः। तत्रायमर्थः—हे स्तोतस्त्वं यद्येतमग्निं गिरा स्तुत्या दक्षसे च वर्द्धयसि, चेत् वयमपि अमृतत्वादिगुणकं तं प्रशंसामः ॥ १ ॥

१ २ २ २ १ २ १ २ ३ २ ३ १ २
पाहि नो अग्न एकया पाह्यू३त द्वितीयया।
१ २ २ २ २ १ २ ३ २ ३ २ ३ १ ३ २
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो २।

अथ द्वितीया। भर्गऋषिः। हे 'अग्ने'! 'नः' अस्मान् 'एकया' ऋचा गिरा 'पाहि' रक्ष। 'उत' अपिच। 'द्वितीयया' ऋचा 'पाहि' पालय। 'तिसृभिः' 'गीर्भिः' स्तुतिभिः 'ऊर्जाम्' अन्नानां बलानां वा हे 'पते'! स्वामिन्! तथा 'पाहि'। हे 'वसो'! वासक! अग्ने! 'चतसृभिः' गीर्भिः 'पाहि' ॥ २ ॥

३ १ २ २ ३ २ ३ १ २ ३ १ २
बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा।

२ ३ १ २ ३ १ २ ३ १ २
भरद्वाजे समिधानो यविष्ठ रेवत्पावक दीदिहि ॥३॥

अथ तृतीया। शंयुऋषिः। हे 'देव!' दानादि-गुण-युक्त! 'यविष्ठ' युवतम! 'पावक' शोधक! अग्ने! 'शुक्रेण' निर्मलेन 'शोचिषा' तेजसा 'भरद्वाजे' अस्मद्भ्रातरि 'समिधानः' समिध्यमानस्त्वं 'बृहद्भिः' महद्भिः स्तोत्रैः 'नः' अस्मदर्थं 'रेवत्' धनयुक्तं यथा भवति तथा 'दीदिहि' दीप्यस्व ॥

"रेवत्पावक" इति छन्दोगाः। "रेवन्नः शुक्र दीदिहि द्युमत् पावक" इति बह्वृचाः ॥ ३ ॥

१ २ ३ १ २ ३ १ २
त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ ३ २ ३ १ २
यन्तारो ये मघवानो जनानामूर्वं दयन्त गोनाम् ॥४॥

अथ चतुर्थी। वसिष्ठऋषिः। हे 'अग्ने!' 'स्वाहुत' यजमानैः सुष्ठुभिः हुत! 'त्वे' तव 'सूरयः' प्रेरकाः स्तोतारः 'प्रियासः' प्रियाः 'सन्तु' भवन्तु। किञ्च। 'ये' 'मघवानः' धनवन्तः 'यन्तारः' प्रदातारः जनानाम् अस्मदीयानाम् 'ऊर्वम्' समूहम्। 'गोनां' गवां च ऊर्वं समूहं 'दयन्त' प्रयच्छन्ति, ते च तव प्रियाः सन्तु इति पूर्वेणान्वयः ॥

"ऊर्वम्" इति छन्दोगाः। "ऊर्वान्" इति बह्वृचाः ॥४॥

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अग्ने जरितर्विश्पतिस्तपानो देव रक्षसः। अप्रोषिवान् गृहपते महाँ असि दिवस्पायुर्दुरोणयुः॥५॥

अथ पञ्चमी। भारद्वाजऋषिः। हे 'अग्ने! देव!' 'जरितः' स्तोतः! स्तुत्य इत्यर्थः। 'विश्पतिः' प्रजानां पालकः 'रक्षसः'

राक्षसानां 'तपानः' सन्तापकः असि। हे 'गृहपते' ! यजमानगृहस्य पालकाग्ने ! त्वम् 'अप्रोषिवान्' यजमानस्य गृहमत्यजन् 'महान्' अतिशयेन पूज्योऽसि। 'दिवः' द्युलोकस्य 'पायुः' पाता। 'दुरोणयुः' यजमानगृहस्य मिश्रयित्वा सर्वदा वर्त्तमानः इत्यर्थः। तादृशस्त्वं महानसीत्यर्थः।

"तपान" "तपान" इति पाठौ। "गृहपते" "गृहपतिः" इति च ॥ ५ ॥

१ १  १ १  १ १ १  १ १  १ १
अग्ने विवस्वदुषसश्चित्रᳬ राधो अमर्त्य ।
१  १ १ १  १ १ १ १  १ १  १ १ १ १
आ दाशुषे जातवेदो वहा त्वमद्या देवाᳬउषर्बुधः ६

अथ षष्ठी। प्रस्कण्व ऋषिः। हे 'अग्ने' ! त्वम् 'उषसः' उषोदेवतायाः सकाशात् 'राधः' धनं 'दाशुषे' हविर्दत्तवते यजमानाय 'आवह' आनीय प्रापय। सोऽग्निर्विशिष्यते। 'अमर्त्य' मरणरहित। हे 'जातवेदः' जातानां वेदितः! कीदृशं राधः ? 'विवस्वत्' विशिष्टनिवासोपेतम्। 'चित्रं' नानाविधम्। किञ्च। 'अद्य' अस्मिन् दिने 'उषर्बुधः' उषःकाले प्रबुद्धान् देवानावह ॥ ६ ॥

१ १ १ १ १ १ १  १ १ १ १
त्वं नश्चित्र ऊत्या वसो राधाᳬसि चोदय ।
१ १ १ १  १ १  १ १ १  १ १ १ १ १ १  १ १
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः॥७

अथ सप्तमी। व्रणपाणि ऋषिः। हे 'वसो' वासक ! अग्ने ! 'चित्रः' दर्शनीयस्त्वं 'ऊत्या' रक्षया सह 'राधांसि' धनानि 'नः' अस्मभ्यं 'चोदय' प्रेरय। 'अस्य' लोके परिदृश्यमानस्य 'राधः' धनस्य

त्वं 'रथी:' 'असि' रंहिता नेता भवसि। अतः कारणात् 'अस्मभ्यं' धनानि प्रेरयेत्यर्थः। 'अपिच' 'नः' अस्माकं 'तुचे' [अपत्यनामैतत् (नै०२.२,१) अपत्याय अपतनहेतुभूताय पुत्राय 'गाधं' प्रतिष्ठां 'तु' क्षिप्रं 'विदाः' लभय॥७॥

२३ ३ १ २ ३ १ २ ३ २ ३ १ २ १
त्वमित्सप्रथा असग्ने त्रातर्ऋतः कविः। त्वां
३१ २ ३ २ ३ १ २ ३ २
विप्रासः समिधान दीदिव आ विवासन्ति वेधसः॥८

अथाष्टमी। विरूप ऋषिः। हे 'अग्ने'! 'त्रातः' रक्षक! 'ऋतः' सत्यभूतः 'कविः' क्रान्तप्रज्ञः 'त्वमित्' त्वमेव 'सप्रथाः' सर्वतः पृथुः 'असि' भवसि। हे 'समिधान' समिध्यमान! हे 'दीदिवः' दीप्ताग्ने! 'त्वां' 'विप्रासः' विप्राः मेधाविनः विधातारः स्तोतारः 'आविवासन्ति' विचरन्ति॥८॥

१ २ ३ १ २ ३ १ ३ २ १ २
आ नो अग्ने वयोवृधꣳ रयिं पावक शꣳस्यम्।
१ २ ३ २ ३ ३ २ ३ १ २
रास्वा च न उपमाते पुरुस्पृहꣳ सुनीती सुयशस्तरम्॥९

अथ नवमी। शुनःशेप ऋषिः। हे 'अग्ने'! 'पावक' शोधक! 'वयोवृधम्' अन्नस्य वर्धकं 'शंस्यं' स्तुवन्तं 'रयिं' धनं 'नः' अस्मभ्यम् आभरेति शेषः। आहृत्य च हे 'उपमाते' उपास्मत्समीपे मातिष्ठ तमिस्त्रुपमातिः, हे तादृश अग्ने 'नः' अस्मभ्यं 'सुनीती'! सुनीत्या शोभननयनेन 'पुरुस्पृहं' बहुभिः स्पृहणीयं 'सुयशस्तरम्' अत्यन्तसम्भूतं कीर्ति-धनं 'रास्व' देहि।

"सुयशसारं" "स्वयशस्तरम्" इति पाठौ॥९॥

२३ १ २ १२३ २३ १ २ ३ १ ३२
यो विश्वा दयते वसु होता मन्द्रो जनानाम्।

१ २ १ १ २र २ १ २ ३ १ २र ३ १ २
मघोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्यग्नये ॥१०॥

इति प्रथमप्रपाठकस्य प्रथमार्द्धे चतुर्थी दशतिः।

अथ दशमी। सौभरि ऋषिः। होता देवानामाह्वाता 'मन्द्रः' मोदनः यः अग्निः 'विश्वा' सर्वाणि 'वसु' वसूनि धनानि 'जनानां' जनेभ्यः 'दयते' प्रयच्छति। तस्मै 'अस्मै' अग्नये 'मघोः न' मदकरस्य सोमस्येव 'प्रथमानि' मुख्यानि 'पात्रा' पात्राणि 'स्तोमाः' स्तोत्राणि 'प्रयन्ति' गच्छन्ति ॥१०॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमाध्यायस्य चतुर्थः खण्डः।

अथ प्रथमप्रपाठकस्य प्रथमार्द्धे पञ्चमी दशतिः।

२ १ २ २ १ २र ३ १ २र ३ १ २
एना वो अग्निं नमसोर्जो न पातमा हुवे।
३ १ २र ३ १ २ ३ १ २र ३ २ ३ १ २
प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥१

अथ पञ्चम खण्डे—सेयं प्रथमा। वामदेवऋषिः। 'ऊर्जः' बलस्य 'नपात' पुत्रं 'प्रियम्' अस्माकं, 'चेतिष्ठम्' अतिशयेन ज्ञातारं प्रज्ञातारं प्रज्ञापकं वा। 'अरतिं' गन्तारं स्वामिनं वा 'स्वध्वरं' सुयज्ञं, 'विश्वस्य' सर्वस्य यजमानस्य 'दूतम्' 'अमृतं' नित्यम् 'अग्निम्' 'एना' एनेन 'नमसा' स्तोत्रेण (यद्यप्यत्रान्वादेशो नास्ति तथापि छान्दसत्वादिदं शब्दस्यैनादेशः)। हे स्तोतारः! 'वः' युष्मदर्थम् 'आहुवे' आह्वयामि ॥१॥

२१ १२ २ ३१ २ २ १२
शिवे वनेषु मातृषु सं त्वा मर्तास इन्धते ।

१२ ३१२ २२ २३उ ३१२
अतन्द्रो हव्यं वहसि हविष्कृत आदिद्देवेषु राजसि २

अथ द्वितीया । भर्ग ऋषिः । हे 'अग्ने' । 'वनेषु' 'मातृषु' च 'शयिषि' वर्त्तसे । तथाभूत 'त्वा' त्वां 'मर्त्तास.' मनुष्याः अध्वर्य्यादयः मन्थनेनोत्पाद्य 'समिन्धते' । पश्चात्प्रवृद्धस्त्वं 'अतन्द्र.' अनलसः सन् 'हविष्कृत.' यजमानस्य 'हव्य' हविः 'वहसि' देवान् प्रति । 'आदिद्' अनन्तरमेव 'देवेषु' मध्ये 'राजसि' दीप्यसे । "मातृषु" "मातो." इति पाठौ । "हव्यं" "हव्य." इति च ॥ २ ॥

१२ ३१२३ १२ ३१ २ ३२
अदर्शि गातुवित्तमो यस्मिन् व्रतान्यादधुः ।

१२ २ ३१ ३१ २१२ ३ १ २ ३ १२
उपो षु जातमार्य्यस्य वर्धनमग्निं नक्षन्तु नो गिरः३

अथ तृतीया । सौभरि ऋषि. । 'यस्मिन्' अग्नौ 'व्रतानि' कर्म्माणि 'आदधु.' यजमानाः आहितवन्तः । 'गातुवित्तम.' अतिशयेन मार्गाणा ज्ञाता, सोऽग्निः 'अदर्शि' प्रादुरभूत् । किञ्च । 'सुजात' सम्यक् प्रादुर्भूतम् अस्य 'आर्य्यस्य' उत्तमवर्णस्य 'वर्द्धन' वर्द्धयितार 'अग्नि' 'न.' अस्माक 'गिर.' स्तुतिरूपाः वाचः 'उपो नक्षन्तु' उपगच्छन्तु । नक्ष गताविति धातुः ॥ "नक्षन्तु नोगिर." "नक्षन्त नोगिर." इति बहृचाः ॥३॥

३ २३-२ ३१ २३ १२ ३१२१२
अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे ।

२ १ २, २ ३२ २३ १२
ऋचा यामि मरुतो ब्रह्मणस्पते देवा अवो वरेण्यम्४

अथ चतुर्थी। मनुःप्रार्थयते। 'उक्थे' स्तोत्रशस्त्रात्मके 'अध्वरे' हिंसारहिते अस्मिन् यज्ञे 'अग्निः' 'पुरोहितः' यज्ञात्पुरतः उत्तरवेद्याम् ऋत्विग्भिर्निहितोऽभूत्। यथा 'ग्रावाणः' सोमाभिषवार्थं पुरतो निहिताः। 'बर्हिः' च पुरतो-निहितम् आसादितम्। एवं सामग्र्यां सत्यां हे 'मरुतः' एकोनपञ्चाशन्मरुद्गणाः। हे 'ब्रह्मणस्पते' स्तोत्रस्य पालक! एतन्नामक! देव! हे 'देवाः' द्योतनादि गुणयुक्ता! इन्द्रादयः!! 'वरेण्य'' वरणीयं भजनीयम् 'अवः' रक्षणम् 'ऋचा' सूक्तरूपया स्तुत्वा 'वः' युष्मान् 'यामि' मनुरहं याचामि। याचतेर्लटि रूपम्। वर्णे लोपश्छान्दसः॥ 'मरुतः' 'ब्रह्मणस्पति'-'देवाः' इति वीप्सामन्त्रितत्वेन छन्दोगाः पठन्ति। 'मरुतः' —'ब्रह्मणस्पतिं'-'देवाम्' इति द्वितीयान्तत्वेन बह्वृचाः॥४॥

२ १ २ १ १ २ ३ २ २ २ १ २
अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम्।
१ २ ३ १ २ २ २उ १ १ २ १ १ २ १ २
अग्निꣳ राये पुरुमीढ श्रुतं नरोऽग्निः सुदीतये छर्दिः॥५

अथ पञ्चमी। सुदीतिर्ऋषिः पुरुमीढो वाऽऽङ्गिरसः। हे 'पुरुमीढ' त्वम् 'अग्निम्' 'अवसे' रक्षणाय 'ईडिष्व' स्तुहि 'गाथाभि.' गाथेति वाङ्नाम [१,११,२६] मन्त्ररूपाभिः वाग्भिः। कीदृशम्? 'शीरशोचिष' शयन स्वभाव-रोचिषम्। तथा 'राये' धनाय ईडिष्व। 'श्रुतम्' एनं 'नरः' अन्येऽपि यजमानाः स्तुवन्ति स्वार्थम्। तस्मात् 'सुदीतये' मह्यम् 'अग्निः' त्वयाभिष्टुतः सन् 'छर्दिः' गृहं प्रयच्छत्वित्येवं सुदीतिः पुरुमीढ ब्रूते॥ "अग्निः सुदीतयेछर्दिः" इति छन्दोगाः। "अग्नि' सुदीतये छर्दि. इति बह्वृचाः॥५॥

१ १ २ १ १ २ २ १ २ १ २ २
श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः।
१ २ २ १ २ १ १ २ १ १ २ २ १ २ १ २
आ सीदतु बर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे॥६

अथ षष्ठी। प्रस्कण्व ऋषिः। बृहतीच्छन्दः। अग्निः देवता। हे 'श्रुत्कर्ण'! श्रवणसमर्थाभ्यां कर्णाभ्यां युत। 'अग्ने'! अस्मदीयं वचनं 'श्रुधि' शृणु। यः 'मित्रः' देवः 'अर्यमा' देवश्च 'अन्ये:' 'प्रातर्यावभिः' प्रातःकाले देवयजनं गच्छद्भिः 'देवैः' सर्वैः 'सयावभिः' आहवनीयाग्निना त्वया समानगतिभिः अन्यैः 'वह्निभिः' देवैः सह 'अध्वरे' क्रतुनिमित्तं 'बर्हिषि' 'दर्भे 'आ सीदतु' उप विशतु। "आसीदतुबर्हिषिमित्रो अर्यमा प्रातर्यावभिरध्वरे" इति छन्दोगाः। "आसीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम्" इति बह्वृचाः॥ ६॥

१ २र २ ३ २ ३ उ ३ २ १ १ २
प्र दैवोदासो अग्निर्देव इन्द्रो न मज्मना।
१ २ ३ १ २ ३ १ २र ३ १ २र ३ १ २
अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि॥७

अथ सप्तमी। सौभरि ऋषिः। छ० बृहती। दे० अग्निः। 'देवः' द्योतमानः इन्द्रः परमैश्वर्ययुक्तः 'दैवोदासः' दिवोदासेनाहूयमानः 'अग्निः' 'मातरं' सर्वस्य लोकस्य धारणात् पृथिवी माता, ताम्, पृथिवीम् 'अनु प्र वि वावृते' देवान् प्रति हविर्वोढुं विशेषेण प्रवर्त्तयति। यस्मादेनमग्निं दिवोदासः 'मज्मना' बलेन आजुहाव तस्मादयम् अग्निः 'नाकस्य' स्वर्गस्य शर्मणि गृहे स्वायतने एव 'तस्थौ' अतिष्ठत्। "अग्निर्देव इन्द्रः" इति। "नाकस्य शर्मणः" इति छन्दोगाः। "अग्निर्देवाꣳ अच्छ" इति "नाकस्य सानवि" इति च बह्वृचाः॥ ७॥

२ ३ १ २ ३र ३ १ २३ १ २ ३ १ ३र
अध ज्मो अध वा दिवो बृहतो रोचनादधि ।
३ १ २ ३क २र ३ २उ ३ १ २
अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण॥८

यथाष्टमी । मेधातिथिर्मेध्यातिथिर्वा ऋषी । छ० बृहती ।, देवता इन्द्रः । हे इन्द्र । 'अध' अधुना । 'ज्मः' जमन्ति गच्छन्त्यस्यामिति ज्मा पृथिवी तस्याः सकाशात् । 'अध वा' अपि वा 'दिवः' अन्तरिक्षात् 'बृहत' महतः रोचनात् नक्षत्रैर्दीप्यमानात् स्वर्गाद्वा आगत्य । 'अधि' पञ्चम्यर्थानुवादी । 'अया' अनया 'तन्वा' तथा विस्तृतया 'ममा' मदीयया 'गिरा' स्तुत्या 'वर्धस्व' वृद्धोभव । हे 'सुक्रतो' ! शोभनकर्मवन्निन्द्र ! 'जाता' जातान् अस्मदीयान् जनान् अभिलषितैः फलैः आपूरय ॥ ८ ॥

१ २ ३ २उ ३ १ ३र ३ २
कायमानो वना त्वं यन्मातृरजगन्नपः ।
१ ३र ३ १ २ ३ १ २ ३ २ ३ २उ ३ १ २
न तत्ते अग्ने प्रमृषे निवर्त्तनं यद्दूरे सन्निहाभुवः॥९

अथ नवमी । विश्वामित्र ऋषिः । छ० बृहती । दे० अग्निः । हे 'अग्ने' ! 'वना' वनानि काननानि भक्षितुं 'कायमानः' कामयमानः त्वं 'यत्' यस्मात् कारणात् तानि विहाय 'मातृः' मातृभूताः 'अपः' 'अजगन्' अगमः गतवानसि । अप्सु प्रविष्टत्वाच्छान्तो वर्त्तसे । 'तत्' तस्मात् 'ते' तव निवर्त्तनं नितरां तत्रैव वर्त्तनं, तेन च विनाशो लक्ष्यते । सः 'न प्रमृषे' (कृत्यार्थे केन् प्रत्ययः) न प्रमृष्यते न सह्यते । कुतः ? इत्यत आह 'यत्' यस्मात्कारणात् 'दूरे सन्' दूरे अदृश्यतया वर्त्तमानस्त्वं 'इह' अस्मत्सम्बन्धिष्वरणीरूपेषु काष्ठेषु 'आ

भुवः' समन्तात् भवेः । मन्थनात् क्षणमात्रेणास्माकं समीपे भवसि, तस्मात् तव दूरतो वर्त्तनम् अस्मभ्यं न रोचते । "इहाभुवः" इति "इहाभवः" इति च पाठौ ॥ ९ ॥

१ २र ३ १ २ ३ २ ३ १ २ ३ १ २
नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते ।
३ १२ ३ १ २ ३ १ २ ३ १ ३२ ३ १ २ ३ १ २
दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः॥१०॥

इति प्रथमप्रपाठकस्य प्रथमार्द्धे पञ्चमी दशतिः ।

इति प्रथमप्रपाठकस्य प्रथमार्द्धं समाप्तम् ।

---

अथ दशमी । कण्व ऋषिः । छ०बृहती । दे० अग्निः । हे 'अग्ने' 'ज्योतिः' प्रकाशरूपं 'शश्वते' बहुविधाय यजमानाय 'मनुः' प्रजापतिः 'निदधे' देवयजनदेशे स्थापितवान् । हे 'अग्ने' ! त्वम् 'ऋतजातः' ऋतेन यज्ञेन निमित्तभूतेनोत्पन्नः 'उक्षितः' हविर्भिः तर्पितः सन् 'कण्वे' एतन्नामके मद्रूपे मयि 'दीदेथ' दीप्तवानसि । 'यम्' अग्निं 'कृष्टयः' मनुष्याः 'नमस्यन्ति' नमस्कुर्वन्ति स त्वमिति पूर्वत्रान्वयः॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य पञ्चमः खण्डः ।

---

अथ प्रथमप्रपाठकस्य द्वितीयार्द्धे प्रथमा दशतिः ।

३ १ २ ३ २ ३ १ २ ३ १ २
देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम् ।
१ २ ३ २ ३ १ २ ३ १ २र ३ १ २
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥१

अथ षष्ठे खण्डे—सेयं प्रथमा। वसिष्ठ ऋषिः। छ०बृ०। दे० अग्निः। 'द्रविणोदाः' धनानां दाता 'देवः अग्निः' 'वः' युष्मदीयां 'पूर्णाम्' हविषा 'आसिचम्' आसिक्तां च स्रुचं 'विवष्टु' कामयताम्। अतः 'उत्सिञ्चध्वं वा' सोमेन पात्रम्। 'उपपृणध्वं वा' सोमं याचध्वं समुच्चयार्थौ। भुवपदेन स्तोत्रचमसं पूरयत च, अग्नये सोमं प्रयच्छत चेत्यर्थः 'आदित्' अनन्तरमेव 'देवः' अग्निः 'वः' युष्मान् 'ओहते' वहति।

"विवष्टु" "विवष्टो इति पाठो॥ १॥

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ २ ३ १ २
प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता।
१ २ ३१ २२ ३ १ २ ३ १ ३ २ २
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः॥२

अथ द्वितीया। अस्याः उत्तरस्याश्च कण्व ऋषिः। छ० बृहती। दे०अग्निः। 'ब्रह्मणस्पतिः' देवः 'प्रैतु' अस्मान् प्राप्नोतु। 'सूनृता' देवी प्रियसत्यभूता वाग्देवता प्रैतु अस्मान् प्राप्नोतु। 'देवाः' ब्रह्मणोऽस्मदादयो देवताः 'वीरं' शत्रुं निःशेषेण 'दूरे' प्रेरयन्तु। तं 'नर्यं' मनुष्येभ्यो हितम्। 'पङ्क्तिराधसं' ब्राह्मणोक्तहविषा पङ्क्त्यादिभिः समृद्धं यज्ञं प्रति नः अस्मान् 'अच्छ' आभिमुख्येन 'नयन्तु' प्रापयन्तु॥ २॥

२ १ २ १ २ ३१ २ १ २ ३१ ३१ २ २
ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता।
२ १ ३१ ३ १ २ ३ ३१ १ २ ३ १ २ ३ १ २
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे॥३

अथ तृतीया। ऋषिः स एव। हे यूप! यद्वा, यूपात्मकदारुनिष्ठाग्ने! 'नः' अस्माकम् 'ऊतये' रक्षणाय 'ऊर्ध्वः'

उन्नतः 'तिष्ठ' तिष्ठ। 'सविता' देवः 'न' यथा सूर्यो दिव उन्नतस्तिष्ठति, तद्वत् ऊर्ध्वः उन्नतः सन् 'वाजस्य' अन्नस्य 'सनिता' दाता भविष्यसि। 'यद्' यस्मात् कारणात् 'अञ्जिभिः' यज्ञेन यूपमञ्जद्भिः 'वाघद्भिः' यज्ञं वहद्भिः ऋत्विग्भिः सह 'विह्वयामहे'। अन्नस्य दानाय त्वां विशेषेणाह्वयामः तस्मादन्नस्य दाता भवेति पूर्वेणान्वयः॥ ३॥

२७ १ २ २१ २ २ ३ १ २ १ २ २ २

प्र यो राये निनीषति मर्त्तो यस्ते वसो दाशत्। स

१ २ २ १ २ १ २ १ २ १ २

वीरं धत्ते अग्न उक्थशꣳसिनं त्मना सहस्रपोषिणम्॥४॥

अथ चतुर्थी। सौभरिर्ऋषिः। छ० बृहती। दे० अग्निः। हे 'वसो' वासकाग्ने! त्वां 'यः' तव स्तोता 'राये' धनार्थं 'प्र निनीषति' प्रणेतुमिच्छति। 'यः' 'मर्त्तः' मनुष्यः 'ते' तुभ्यं 'दाशत्' हवींषि प्रयच्छति। 'सः' मनुष्यः 'उक्थशंसिनम्' उक्थानां शस्त्राणां शंसितारम् 'त्मना' आत्मनैव 'सहस्रपोषिणं' बहुधनम् 'वीरं' पुत्रं 'धत्ते' धारयति।

"प्र योराये निनीषति" "मर्य राये निनीषसति" इति पाठौ॥ ४॥

१ १ २ १ १ २ २ २ १ १ २ १ २ २ २

प्र वो यह्वं पुरूणां विशां देवयतीनाम्। अग्निꣳ

३ १ २ १ २ १ २ ३ २ २ ३ १ २

सूक्तेभिर्वचोभिर्वृणीमहे यꣳ समिदन्य इन्धते॥५॥

अथ पञ्चमी। कण्व ऋषिः। छ० बृ०। दे० अग्निः। हे ऋत्विग्यजमानाः! 'देवयतीनां' देवान् कामयमानानां 'पुरूणां' बहूनां 'विशां' प्रजारूपाणां 'वः' युष्माकमनुग्रहाय 'यह्वं' महान्तम् 'अग्निं' 'सूक्तेभिः' सूक्तरूपैः 'वचोभिः' वाक्यैः 'प्र

वृणीमहे'। 'अन्धे इत्' अन्येऽप्यृषयः 'यम्' एनमग्निं 'समिन्धते' सम्यग्दीपयन्ति तमग्निमिति पूर्वत्रान्वयः।

"वचोभिर्वृणीमहे" इति। "अन्य इन्धतम्" इति च छन्दोगाः। "वचोभिरीमहे" इति "अन्यदच्छते" इति च बह्वृचाः॥ ५॥

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २र

अयमग्निः सुवीर्य्यस्येशे हि सौभगस्य।

१ २ १ २ ३ २ ३ १ २ ३ १२ ३ १ २

राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम्॥६॥

अथ षष्ठी। अनेनोक्तोऽस्तः स्तौति। छ० बृहती। दे० अग्निः। 'अयम्' यजनीयत्वेनाकृत्या निर्दिश्यमानोऽग्निः 'सुवीर्य्यस्य' शोभनसामर्थ्योपेतस्य 'सौभगस्य', त्वम् 'ईशे हि' ईष्टे खलु। ईश्वरो भवसि सर्वस्य बलारोग्यहेतुतया सौभाग्यकारित्वात् तथा 'गोमतः' गवादिपशुयुक्तस्य 'स्वपत्यस्य' शोभनापत्यस्य 'रायः' धनस्य 'ईशे' ईष्टे, पुत्रपश्वाद्युद्देशेन क्रियमाणकर्मफलसम्पादकत्वेन तत्स्वामित्वात्। तथा एवम्भूतोऽग्निः 'वृत्रहथानां' हनन इव, शत्रुभूतपापविनाशानामपि 'ईशे' त्वयि समर्पितकर्मणामस्यावा त्वत्प्रसादात् पापक्षयो भवतीति तस्यापि स्वामी।

"ईशेषि" इति "ईशेमहे" इति च पाठौ॥ ६॥

१ २ ३ १ २ ३ १ २र ३ २

त्वमग्ने गृहपतिस्त्वᳪ होता नो अध्वरे।

१ ३र २ ३ १ २ ३ २ ३ १ २ ३ १ २

त्वं पोता विश्ववार प्रचेता यक्षि यासि च वार्य्यम्॥७

अथ सप्तमी। वशिष्ठ ऋषिः। छ० बृहती। दे० अग्निः।

हे 'अग्ने'! 'नः' अस्माकम् 'अध्वरे' यज्ञे 'त्वं' 'गृहपतिः' यजमानोऽसि। 'त्वं' 'होता' देवानामाह्वातासि। हे 'विश्ववार'! सर्वैर्वरणीयाग्ने! 'त्वं' 'पोता' एतन्नामक ऋत्विगसि। अतः 'प्रचेताः' प्रकृष्टमतिस्त्वं 'वार्यं' वरणीयं हविः 'यक्षि' यज। 'यासि च' अस्माकं धनं प्रापय।

"यक्षि यासि च" इति छन्दोगाः। "यक्षि वेषि च" इति बह्वृचाः ॥ ७ ॥

१ २ ३ १ २र ३ १ २ ३ १
सखायस्त्वा ववृमहे देवं मर्त्तास ऊतये। अपां
२र ३ १ २ ३ १ २ ३ १ २ ३ १ २
नपातꣳ सुभगꣳ सुदꣳससꣳ सुप्रतूर्त्तिमनेहसम् ८

इति प्रथमप्रपाठकस्य द्वितीयार्द्धे प्रथमा दशतिः।

---

अथाष्टमी। विश्वामित्रः स्तौति। हे अग्ने! 'सखायः' सोमाज्यादिहविः प्रदानेनोपकारकत्वात् मित्राणि 'मर्त्तासः' मनुष्याः ऋत्विजो वयम् 'अपां नपातम्' अपां नप्तारं 'सुभगं' शोभनधनयुक्तम्। 'सुदंससं' सुकर्माणं 'सुप्रतूर्त्तिं' शोभनमतरं कर्मानुष्ठातृभिः सुखेन गन्तव्यम् 'अनेहसम्' उपद्रवरहितम्। एतादृशन्त्वाम् 'ऊतये' रक्षणाय 'ववृमहे' वृणीमहे ॥ ८ ॥

इति सायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य षष्ठः खण्डः।

---

प्रथमप्रपाठकस्य द्वितीयार्द्धे द्वितीया दशतिः।

१ २ १ १ २ १
आ जुहोता हविषा मर्जयध्वं
१ २र ३ १ २
नि होतारं गृहपतिं दधिध्वम्।
१ २ ३ १ २र ३ १ २
इडस्पदे नमसा रातहव्यं
३ १ २ ३ २ ३क २र
सपर्यता यजतं पस्त्यानाम्॥ १॥

अथ सप्तमखण्डे। सेयं प्रथमा। श्यावाश्वऋषि वामदेवो वा। छ० त्रिष्टुप्। अग्नि देवता। हे ऋत्विजः! 'आ जुहोता' अग्निमाह्वयत। किञ्च 'हविषा मर्जयध्व' मृडयध्वं सुखयध्वम्। डकारस्य जकारश्छान्दसः। अपिच, 'इड' इडायाः पदे उत्तरवेद्यामित्यर्थः। 'होतारं' देवानामाह्वातारम्। 'गृहपतिं' गृहपालकं अग्निम्। 'निदधिध्वं' नि ग्रेपेण धारयध्वम्। किञ्च 'नमसा' नमस्कारेण हविषा वा युक्तम्। अतएव 'रातहव्यं' दत्तहविष्कम्। 'पस्त्यानां' यज्ञगृहाणां मध्ये। 'यजतं' यजनीयं पूजनीयमग्निम्। 'सपर्यत' परिचरत॥ १॥

३ २उ ३ १ २ ३ १ २
चित्र इच्छिशोस्तरुणस्य वक्षथो
२उ ३ १ २ ३ २ ३ १ २
न यो मातरावन्वेति धातवे।
१ १ २र ३ १ २ ३ २
अनूधा यदजीजनदधा चिदा
३ १ २ ३ १ २र ३ २ १ २
ववक्षत्सद्यो महि दूत्यं चरन्॥ २॥

अथ द्वितीया। वार्ष्टिहव्यो वा वार्षहव्योर्वेति ऋषिः। जगतीछन्दः। अग्निः देवता। 'शिशोः' शिशुभूतस्य। अतएव 'तरुणस्य' अग्नेः। 'वक्षथः' वचेरौणादिकोऽयम् प्रत्ययः। हविर्वहनं 'चित्रदृत्' आश्चर्यभूतमेव। 'यः' जातोऽग्निः। 'मातरौ' सर्वस्य निर्मात्री, सर्वस्य मातृभूते द्यावापृथिव्यावरणी वा। 'धातवे', धेट् पाने तुमर्थे इति (३,४,९) तवेन् प्रत्ययः। स्तनपानाय 'न अन्वेति' न गच्छति। इण् गतौ लटि उपसर्गेण समासः। तिङि चोदात्तवतीति (८,१,७१): गतेर्निघातः। 'अनूधाः' नञा बहुव्रीहिसमासः, तस्मिन् अनुङ्स्त्रियामिष्टत्वात् अत्रानङ्‌भावः, प्रत्येकविवक्षया एकवचनम्, ऊधोरहितः सन् अयं लोकोऽसौ लोकश्च। 'यत्' यदि। एनमग्निम्। 'अजीजनत्' जनयेत्, तर्हि स्तनपानाय न गच्छतीति युक्तम्, तथा न भवति, किन्तु द्यावापृथिव्यौ हि सर्वेषां कामदुघे खलु। तथापि न याति। तस्मादस्य हविर्वहनं विचित्रम्। 'अध चित्' उत्पत्त्यनन्तरमेव। 'सद्यः' सदानीमेव। शीघ्रं, 'महि' महत्तमम्। 'दूत्यं' "दूतस्य भागकर्मणी (४,४,१२०)" इति कर्मणि यत् प्रत्ययः, दूतकर्म 'चरन्' आचरन्। 'आववचत्' देवान् प्रति हवींष्यावहति ॥२॥

१ २ १ १ २ ३१ २ ३ २ ३१
इदं त एकं पर ऊ त एकं

२१ १२ १ २ २ ३ १ २
तृतीयेन ज्योतिषा सं विशस्व।

२११ २ २ १ २
संवेशनस्तन्वे३चारुरेधि

२ २ ३१ २ ३१ ३ १२
प्रियो देवानां परमे जनित्रे॥ ३ ॥

अथ तृतीया। बृहदुक्थऋषिः। त्रिष्टुप्छन्दः। दे० अग्निः। एतया बृहदुक्थो वाजिनं नाम स्वपुत्रं मृतं वदति। हे मृतपुत्र! 'ते' तव। 'इदम्' उपरि ज्योतिषेति वक्ष्यमाणत्वात् अत्रेदं शब्देन ज्योतिरभिधीयते इदं ज्योतिरग्न्याख्यम्, 'एकम्' एकोऽंशः' अतः 'ते' तव देहगताग्न्यंशेन बाह्यमग्निं 'संविशस्व' सङ्गच्छस्व। तथापरः 'उ' अन्योऽपि 'ते' तव 'एकं' वाय्वाख्योऽंशः, तेन च प्राणवाय्वाख्येनांशेन बाह्यं वायुं संविशस्व शरीराग्निप्राणवाय्वोः बाह्याग्निवाय्वोरैकात्वादंशत्वमिति भावः तथा, 'तृतीयेन ज्योतिषा' आदित्याख्येन तेजसा तवात्मना संविशस्व सूर्य्यगतात्मचैतन्ययोरभेदादंशत्वम्, "योऽहं सोऽसौ" "योऽसौ सोऽहं" सूर्य्य आत्मा जगतः" इत्यादिश्रुतेः आत्मनः सूर्य्यप्रवेशो युक्तः 'तन्वे' तनवे पुनः शरीरग्रहणाय 'चारुः' कल्याणो भूत्वा तस्मिन् सूर्य्यं 'संवेशनः' सम्यक् प्रवेष्टा। 'एधि' भव। कीदृशस्त्वम्? 'प्रियः' तेन सह प्रीयमाणः। कीदृशि तस्मिन्? 'देवानां परमे' उत्तमे। 'जनित्रे' जनके। "देवानां ह्येतत् परमं जनित्रं यत् सूर्य्यः" इति हि श्रुतिः॥३॥

१ २उ ३ १ २ ३ १ २ ३
इमᳪं स्तोममर्हते जातवेदसे
१२ ३१२ ३ २ ३ १ २
रथमिव सं महेमा मनीषया।
१ २उ ३ २ ३१ २ ३ १
भद्रा हि नः प्रमतिरस्य सᳪंसद्-
३२ ३ १ ३२ ३ १ २ ३२
यग्ने सख्ये मा रिषाम वयं तव॥४॥

अथ चतुर्थी। कुत्स ऋषिः। जगतीछन्दः। अग्निः देवता। 'अर्हते' पूज्याय। 'जातवेदसे' जातानामुत्पन्नानां वेदित्रे जात-

प्रज्ञाय जातधनाय वा अग्नये। 'मनीषया' निश्चितया बुद्धया। 'इमं स्तोमम्' एतत् स्तोत्रम्। 'रथमिव', यथा तक्षा रथं संस्करोति तथा। 'सम्महेमा' सम्यक् पूजितं कुर्मः। 'अस्य' अग्नेः 'संसदि' सभाजने। 'नः' अस्माकम्। 'प्रमतिः' प्रकृष्टा बुद्धिः। 'भद्रा हि' कल्याणी समर्था खलु। अतस्तया बुद्धया कुर्म इत्यर्थः। हे 'अग्ने'! 'तव सख्ये', अस्माकं त्वया सह सखित्वे सति। वयं 'मा रिषाम' हिंसिता न भवाम। अस्मान् रक्षेत्यर्थः॥ ४॥

१ २ २ ३ १ २ ३ १ २ ३ १
मूर्द्धानं दिवो अरतिं पृथिव्या
२ २ २ २ २र २ २.३ २
वैश्वानरमृत आ जातमग्निम्।
३ २ ३ २ ३ १ २ ३ १ २
कविᳪ सम्राजमतिथिं जनाना-
३ २ ३ १ २ ३२
मासन्नः पात्रं जनयन्त देवाः॥ ५॥

अथ पञ्चमी। इयोर्भारद्वाज ऋषिः त्रिष्टुप् छन्दः। अग्निः देवता। 'मूर्द्धानं' शिरोभूतम्। कस्य? 'दिवः' द्युलोकस्य। 'पृथिव्याः' प्रथिताया भूमेः। 'अरतिं' गन्तारम्। यद्वा गन्तव्यं स्वामिनम्। 'वैश्वानरं' विश्वेषां सर्वेषां नराणां सम्बन्धिनम्। 'ऋते' ऋतमिति सत्यस्य यज्ञस्य वा नाम। निमित्तसप्तम्येषा ऋतनिमित्तम्। 'आ' आभिमुख्येन जातम् उत्पादयुत्पन्नम्। 'कविं' क्रान्तदर्शिनम्। 'सम्राजं' सम्यग्राजमानम्। यजमानानाम् 'अतिथिं' हविर्वहनाय सततं गन्तारम्। यद्वा, अतिथिवत्पूज्यम्। 'आसन्' आसनि आस्यं, द्वितीयार्थे सप्तमी, आस्यभूतम्। "अग्निलक्षणेना-

स्येन हि देवा हवींषि भुञ्जते" । 'पावं' पातारं रचकम् । यद्वा, आस्येन प्रारकम् । एवं गुणविशिष्टं वैश्वानराग्निम् । 'नः' अस्माकं सम्बन्धिनि यज्ञे । 'देवाः' स्तोतार ऋत्विजः, देवा एव वा । 'आ जनयन्त' आभिमुख्येनाजनयन् । अरण्योः सकाशाद् उदपादयन् ॥ ५ ॥

२उ १ १ १२ १ २
वि त्वदापो न पर्वतस्य पृष्ठा-
१ १ २ १ २
दुक्थेभिरग्ने जनयन्त देवाः ।
१ १ १ २ १ १ २
तं त्वा गिरः सुष्टुतयो वाजय-
१ १ १२ १ १ २ १ १ २
न्त्याजिं न गिर्ववाहो जिग्युरश्वाः ॥ ६ ॥

अथ षष्ठी । भरद्वाज ऋषिः । त्रिष्टुप्छन्दः । अग्निः देवता । हे 'अग्ने' । 'त्वत्' त्वत्सकाशात् । 'उक्थेभिः' उक्थैः स्तोत्रैः यज्ञैर्हविर्भिश्च । 'देवाः' स्तोतारः । कामान् आत्मनः 'व्यजनयन्त' विविधं जनयन्ति । तत्र दृष्टान्तः । 'पर्वतस्य' मेघस्य 'पृष्ठात्' उपरिभागात् 'आपो न' आपः उदकानि यथा तद्वत् ।-अपिच, हे 'गिर्ववाहः !' गीर्भिः स्तुतिरूपाभिः वाग्भिर्वहनीयाग्ने ! भरद्वाजाः स्तोतारः । 'तं' प्रसिद्धम् । 'त्वा' त्वाम् । 'वाजयन्ति' बलिनं कुर्वन्ति । यद्वा । वाजमन्नमिच्छन्ति । अपिच । त्वां 'सुष्टुतयः' शोभनस्तुतिरूपाः । 'गिरः' वाचः । 'जिग्युः' जयन्ति वशीकुर्वन्ति । तत्र दृष्टान्तः । अश्वाः वाहाः 'आजिम्' संग्रामं यथा शीघ्रं जयन्ति तद्वदित्यर्थः ॥ ६ ॥

२ ३ १ २ ३ १ २ ३ १
आ वो राजानमध्वरस्य रुद्रं

२र ३ २ ३ २ ३ १ २
होतारं सत्ययजं रोदस्योः ।

३ २ ३१ २ ३ २ ३ २
अग्निं पुरा तनयित्नोरचित्ता-

१ २ ३ १ २
द्धिरण्यरूपमवसे कृणुध्वम् ॥ ७ ॥

अथ सप्तमी। वामदेवो ऋषिः। छ० त्रिष्टुप्। दे० अग्निः। हे ऋत्विग्यजमानाः! 'अध्वरस्य' यज्ञस्य। 'राजानम्' अधिपतिम्। 'होतारं' देवानामाह्वातारम्। 'रुद्रं' रोदयमाणं द्रवन्तम्, शत्रून् रोदयन्तं वा। यद्वा, 'एषा वा घोरा तनूर्यद्रुद्रः' इति रुद्रात्मकम्। 'रोदस्योः' द्यावापृथिव्योः 'सत्ययजं' सत्यस्यान्नस्य दातारम्। यद्वा सत्ययजं सत्येन हविषा देवान् यजन्तम्। यद्वा, सत्यस्यानन्द-लक्षणस्य सङ्गमयितारं रोदस्योर्व्याप्य वर्त्तमानम्। 'हिरण्य-रूपं' सुवर्ण-प्रभम्। एवं विधम् 'अग्निं' 'वः' युष्माकम् 'अवसे' रक्षणाय 'तनयित्नोः' तनयित्नुरशनिः सज्ञात्मकः, तत् सदृशाद् 'अचित्तात्' न विद्यते चित्तं यस्मिन् तदचित्तम्, चित्तोपलक्षित-सर्वेन्द्रियोपसंहारी मरणमिति यावत् तस्मान्मरणात् 'पुरा' प्रागेव, 'आ कृणुध्व' यूयं समन्ताद्धविर्भिरग्निं भजध्वम् ॥ ७ ॥

२ ३उ १ २ ३ १ २र २
इन्धे राजा समर्यो नमोभिः

३ १ १ २ ३ १ २ ३ १ २
यस्य प्रतीकमाहुतं घृतेन ।

१२ २ १ २ २ २ २
नरो हव्येभिरीडते सबाध

१ २२ १ १ २
अग्निरग्रमुषसामशोचि ॥ ८ ॥

अथ अष्टमी। वसिष्ठ ऋषिः। छं० त्रिष्टुप्। दे० अग्निः। 'राजा' दीप्तः 'अर्य्यः' स्वामी हविषां प्रेरको वा 'अग्निः' 'नमोभिः' स्तुतिभिः सह 'समिन्धे' समिध्यते। 'यस्य' अग्नेः 'प्रतीक' रूप 'घृतेन आहुतं' भवति। ये च 'नरः' अस्मदीयाः 'सबाधः' सश्लिष्टाः सञ्जातबाधाः 'हव्येभिः' हव्यैः सार्द्धम् 'ईडते' स्तुवन्ति। 'सः' अग्निः 'उषसाम्' 'अग्रम्' 'आ अशोचि' आ दीप्यते॥ ८॥

२ १ १२ २ १ २ १ १
प्र केतुना बृहता यात्यग्नि-

२२ १ १ २
रा रोदसी वृषभो रोरवीति।

१ २ २ १ २ १ १ २२
दिवश्चिदन्तादुपमामुदान-

१ २ २ १ २ १ १ २
ड्पामुपस्थे महिषो ववर्द्ध ॥ ९ ॥

अथ नवमी। त्रिशिरास्त्वाष्ट्रऋषिः। छं० त्रिष्टुप्। दे० अग्निः। 'अग्निः' 'बृहता' 'केतुना' प्रज्ञानेन युक्तः सन् 'आ' इदानीं 'रोदसी' द्यावापृथिव्यौ 'प्रयाति' प्रकर्षेण गच्छति। किञ्च, देवानामाह्वानकाले 'वृषभः' इव 'रोरवीति' अत्यर्थं शब्दं करोति। 'दिवश्चित्' अन्तरिक्षलोकस्यापि 'अन्तात्' पर्यन्तात् 'उपमाम्' (उपमेत्यन्तिकनाम) अन्तिकं समीपम् 'उदानट्' उदगमत् आगमनादित्या-

त्मनावस्थितः सन् ऊर्द्ध्वं व्याप्नोति। अश्नोतेर्व्यत्ययेन परस्मैपदम्। तिपोहल्ङ्यादिलोपः। 'अपां' वृष्टिलक्षणानामुदकानाम् 'उपस्थे' उपस्थाने अन्तरिक्षे वैद्युतात्मना 'महिषः' महान् 'ववर्द्ध' वर्द्धते ॥ ८ ॥

२ ३उ ३ १ २ ३ १ २ २
अग्निं नरो दीधितिभिररण्यो-
१ २ ३ २
र्हस्तच्युतं जनयत प्रशस्तम्।
३ १२ ३१२ ३ २
दूरेदृशं गृहपतिमथव्युम् ॥ १० ॥

इति प्रथमप्रपाठकस्य द्वितीयार्द्धे द्वितीया दशतिः।

---

अथ दशमी। वसिष्ठऋषिः। छ० त्रिष्टुप्। दे० अग्निः। 'नरः' नेतारऋत्विजः 'प्रशस्तं' प्रकर्षेण स्तुतं 'दूरे दृशं' दूरे दृश्यमानं दूरे पश्यन्तं वा 'गृहपतिं' गृहाणां पालकम् 'अथव्युं' अथर्वतिर्गत्यर्थः अगत्यम् अतनवन्तं वा 'हस्तच्युतं' हस्तेन जातम्, अरण्योः विद्यमानम् अग्निः 'दीधितिभिः' अङ्गुलिभिः 'जनयत' जनयन्ति। [अत्र यास्कः—"दीधितयोऽङ्गुलयो भवन्ति, धीयन्ते कर्मसु, अरणी प्रत्यृत एने अग्निः समरणाज्जायत इति वा, हस्तच्युतो हस्तप्रच्युत्या जनयन्त प्रशस्तं दूरे दर्शनं गृहपतिमतनवन्तम् (५,२,११)]" इति ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य सप्तमखण्डः।

---

अथ प्रथमप्रपाठकस्य द्वितीयार्द्धे तृतीया दशतिः ।

१ २ ३ २ १ २ ३ १ २ ३
अबोध्यग्निः स　धा जनानां
१ २ ३ १ २ ३१ ३ १ २
प्रति धेनुमिवायतीमुषासम् ।
३ १ २ ३ २ ३१ ३ १ २ ३
यह्वा इव प्र वयामुज्जिहानाः
२ ३ १ २ ३ २ ३ १ २
प्र भानवः सस्रते नाकमच्छ ॥ १ ॥

अथ अष्टमखण्डे । प्रथमा । बुधस्य गविष्ठिरस्य चार्षम् । त्रिष्टुप्छन्दः । दे० अग्निः । अयम् 'अग्निः' जनानाम् अध्वर्य्वादीनां 'समिधा' समिद्भिः 'अबोधि' प्रबुद्धोऽभूत् । 'धेनुमिव' अग्निहोत्रार्थं धेनुं प्रति यथा प्रातर्बुध्यते तद्वद् 'आयतीम्' आगच्छन्तीम् 'उषासम्' प्रति उषः काले इत्यर्थः । अथ प्रबुद्धस्याग्नेः 'भानवः' रश्मयो ज्वालाः 'यह्वाः' महान्तः 'वयां' शाखां 'प्रोज्जिहानाः' प्रोद्गमयन्तो वृक्षा इव । यह्वा महान्तः प्रोज्जिहानाः स्वाधिष्ठानं त्यजन्तो भानवः 'नाकम्' अन्तरिक्षम् 'अच्छ' आभिमुख्येन 'प्र सस्रते' प्रसरन्ति ।
"सस्रते" "मिसते" इति पाठौ ॥ १ ॥

२ ३१ २ ३१ २ ३ १
प्र भूर्जयन्तं महां विपोधां
१ २ ३१ ३ १ ३ १ २
मूरैरमुरं पुरां दर्माणम् ।
१ २ २ १ ३ १ २१ २
नयन्तं गीर्भिर्वना धियं धा

१ २ १२ १ २र ३ २

हरिश्मशुं न वर्मणा धनर्चिम् ॥ २ ॥

अथ द्वितीया। वत्सप्रिऋषिः। त्रिष्टुप्छन्दः। अग्निः देवता। हे स्तोतः! त्वम् 'जयन्तम्' असुरसेनानां जेतारं 'महां' महान्तं 'विपोधां' मेधाविनः धर्त्तारं 'मूरैः' मूढैरधिष्ठितानां 'पुरां' शरीराणां 'दर्माणम्' आदरेण रचकम् 'अमूरम्' अमूढमग्नि 'प्रभूः' स्तोतुं प्रभव समर्थो भव 'गीर्भिः' स्तुतिभिः 'वना' वननीयं सम्भजनीयं 'नयन्तं' धनानि प्रापयन्तं 'वर्मणा' कवचस्थानीयज्वालयोपेतं 'हरिश्मश्रुं न' हरितवर्णकेशमयमिव 'धनर्चिं' धार्य्यमाणं क्रियमाणं स्तोत्रं यस्य तम्, प्रीणनकरस्तोत्रं वा अग्निमुद्दिश्य 'धियं' परिचरणरूपं कर्म 'धाः' विधेहि।

"मूरैः" मूराः" इति च पाठौ। "नयन्तं गीर्भिर्वना धियन्धा हरिश्मश्रुं न वर्मणा धनर्चिम्" इति छन्दोगाः। "नयन्तो गर्भं वनां धियं धुर्हरिश्मश्रुं नार्वाणं धनर्चम्" इति बह्वृचाः ॥ २ ॥

२ १ २ २ १ २ ३ १ २ ३ १

शुक्रं ते अन्यद्यजतं ते अन्यद्

२र ३ १ २ ३ १ २

विषुरूपे अहनी द्यौरिवासि।

२ ३ २ ३ १ २र

विश्वा हि माया अवसि स्वधावन्

३ १ २ २ ३ २ २

भद्रा ते पूषन्निह रातिरस्तु ॥ ३ ॥

अथ तृतीया। भरद्वाज ऋषिः। त्रिष्टुप्छन्दः। पूषा देवता। हे 'पूषन्'! 'ते' तव 'शुक्रं' शुक्लवर्णम् 'अन्यत्' एकमहर्भवति

वासरात्मकम्, तथा 'ते' तव सम्बन्धि 'यजतं' यजिरत्र सङ्गतिकरणे वर्त्तते यजनीयं प्रकाशेन सङ्गमनीयं स्वतः कृष्णवर्णम् 'अन्यत्' एकमहर्भवति रात्र्याख्यम्। इत्थं 'विषुरूपे' शुक्लकृष्णतया नानारूपे 'अहनी' तव महिम्ना निष्पद्येते। यद्वा, हे पूषन्! त्वदीयमन्यद्रूपं 'शुक्रं' निर्मलं दिवसस्योत्पादकम्, त्वदीयमन्यदेकं रूपं 'यजतं' केवलं यजनीयं न प्रकाशकं रात्र्युत्पादकम्। अतएव 'विषुरूपे' विषमरूपे 'अहनी' अहश्च रात्रिश्च भवतः। अहोरात्रयोर्निर्माणे सूर्य्य एव कर्त्ता। कथमस्य प्रसक्तिरिति? तत्राह, 'द्यौरिवासि' यथा द्यौरादित्यः प्रकाशयिता तथा त्वं प्रकाशकोऽसि। कुतः? इत्यत आह, हे स्वधावन्! अन्नवन्! पूषन्! 'विश्वाः' सर्व्वाः मायाः प्रज्ञाः 'हि' यस्मात् कारणात् 'अवसि' रक्षसि, अतः कारणात् त्वं सूर्य्य इव भवसीत्यर्थः। तादृशस्य 'ते' तव 'भद्रा' कल्याणी 'रातिः' दानम् 'इह' अस्मासु 'अस्तु' भवतु। यास्कस्त्वाह—"शुक्रं तेऽन्यल्लोहितं तेऽन्यद्यजतं तेऽन्यद्यज्ञियं तेऽन्यद्विषमरूपे ते अहनी कर्मणा द्यौरिव चासि सर्वाणि च प्रज्ञानान्यवस्यन्नवन् (१२,२,६)" इति।

"स्वधावन्" "स्वधावः" इति च पाठौ ॥ ३ ॥

१ २   १ २   २   १ २
इडामग्ने पुरुदꣳसꣳ सनिं गोः
३२   १ २   ३२
शश्वत्तमꣳ हवमानाय साध।
१ २   २ १ २२   १ २३
स्यान्नः सूनुस्तनयो विजावा-
१   २ २   १ २ २ २ २
ग्ने सा ते सुमतिर्भूत्वस्मे ॥ ४ ॥

अथ चतुर्थी। विश्वामित्र ऋषिः। छ० त्रिष्टुप्। दे० अग्निः। हे 'अग्ने'। 'पुरुदंसस' 'दंसः वेयः' इति (नि० १२,१,२) कर्म-नामसु पठितत्वाद्दंसः-शब्दः कर्मवाची पुरूणि बहूनि दंसांसि कर्माणि यस्याः सा, तां बहुकर्माणं 'गोः सनिं' गवादिपशूनां सम्पादयित्रीम् 'इडाम्' एतन्नामिकां गोरूपां देवतां 'शश्वत्तमं' निरन्तरं 'हवमानाय' यजमानाय मह्यं 'साध' साधय। किञ्च, 'नः' अस्माकं 'सूनुः' पुत्रः 'तनयः' पौत्रः 'स्यात्' भवतु, इति 'ते' तव या 'सुमतिः' शोभना बुद्धिः सा 'विजावा' अवन्ध्या सती 'अस्मे' अस्माकं 'भूतु' भवतु ॥ ४ ॥

१ २र १ २ ३ १ २ ३ २
प्र होता जातो महान्नभोविन्

३ १ २ ३ १ २ ३ ३ २
नृषद्मा सीददपां विवर्ते।

२ ३ २ ३ २ ३ १ २र
दधयो धायी सुते वयाᳬसि

३ १ २र ३ १ २ ३ २
यन्ता वसूनि विधते तनूपाः ॥ ५ ॥

अथ पञ्चमी। वत्सप्रिऋषिः। छ० त्रिष्टुप्। दे० अग्निः। 'यः' 'नृषद्मा' अग्निः 'अपाम्' अन्तरीचनामैतत् (नि०१,३,८) अन्तरिचस्य 'विवर्त्ते' विवर्त्तने उत्सङ्गे वैद्युतरूपेण निषस्सो-ऽभूत्, स इदानीं 'होता' यजमानानां होमनिष्पादको जातः प्रादुर्भूतः 'महान्' गुणैः पूज्यः। 'नभोवित्' अन्त-रिचस्य ज्ञाता यतस्तत्रोत्पन्नः अतस्तस्य ज्ञाता 'नृषद्मा' नृषु सीदन् सदेर्मनिन्, नित्स्वरः (६,१,१९७) ] 'प्रसीदत्' येयां प्रसीदति। "अपासुधस्थे महिषा अंगृभ्णत" इति

हि निगमः। यद्वा, अपां पयसाम् इत्यर्थः, 'कर्मणासुपस्थे' उपस्थाने समीपे वेद्यामुत्तलक्षणः सन्। अथवा, अपाम् उदकानां विवर्त्ते मध्ये योऽग्निर्हविर्वोढुमसहमानो निगूढः सन् स देवैः पुनः प्रार्थितः उक्तविधः सन् वेद्यां प्रसीदति, सोऽग्निः 'दधत्' हवींषि धारयन् 'सुधायी' वेद्यां निहितोऽभूत्। हे स्तोतः! सोऽग्निः 'विधर्त्ते' परिचरते 'ते' तुभ्यं 'वयांसि' अन्नानि 'वसूनि' धनानि च 'यन्ता' नियमयिता भवतु। किञ्च, तनूपा', 'तन्वः' पाता च भवत्विति शेषः।

"नूपद्मा" नूपहा" इति च पाठौ। "दधयो धायी सुते" इति छन्दोगाः "दधिर्यो धायी सते" इति बह्वृचा ॥ ५ ॥

१ २ १ २ १ २ १ २
प्र सम्राजमसुरस्य प्रशस्तं

१ २ ३ १ २ ३ २ १ २
पुꣳसः कृष्टीनामनुमाद्यस्य।

१ २ ३ २ ३१२ ३ १ २
इन्द्रस्येव प्र तवसस्कृतानि

३ १२ १ १ २
वन्दद्वारा वन्दमाना विवष्टु ॥ ६ ॥

अथ षष्ठी। अथिष्ठ ऋषिः। छ० त्रिष्टुप्। दे० अग्निः। 'असुरस्य' बलवतः 'पुंसः' वीरस्य पौंस्यमिति वीर्यमुच्यते तथाच यास्कः, 'पुमान् पुंसमना भवति पुंसतेर्वेति 'कृष्टीनां' जनानाम् 'अनु माद्यस्य' स्तुत्यस्य 'तवसः' बलवतः 'इन्द्रस्येव तस्याग्नेः प्रशस्तम् उत्कृष्टं 'सम्राजं' सम्यग्राजमानं स्वरूपं प्रस्तौतु। मया 'वन्दद्वारा' वन्दते वन्दः स्तुतिः, तद्द्वाराणि स्तुतिप्रसृतानि 'वन्दमाना' मेव. स्तूयमानानि 'कृतानि' कर्माणि 'प्र विवष्टु' प्रकर्षेण कामयताम्।

२ १ २र २ १ २ २ १ २
बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
२ ३ २ ३ १ २ ३ १ २ ३२ ३२ ३ १ २
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥६॥

अथ षष्ठी। हे 'मरुतः'! ऋत्विजः, मित रुवन्तीति मरुतः, हे मितभाषिणः स्तोतारः! 'वृत्रहन्तमम्' अतिशयेन पापविनाशनं 'बृहत्' साम 'इन्द्राय' इन्द्रार्थं 'गायत' अस्मदीये यज्ञे गानं कुरुत। 'ऋतावृधः' ऋतस्य सत्यस्य वा वर्धका विश्वे देवाः अङ्गिरसो वा ऋषयः। 'देवाय' द्योतमानायेन्द्राय 'देवं' देवनशीलं 'जागृवि' सर्वेषां जागरणशीलं 'ज्योतिः' सूर्यं 'येन' साम्ना 'अजनयन्' इन्द्रार्थमुदपादयन् तत्साम गायतेति ॥ ६ ॥

२ १ ३ १ २ २ १ २ १ २ ३ २ ३ १ २ १ २
इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा। शिक्षा
३ १ २ ३ १ २ ३ १ ३२
णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि॥७

अथ सप्तमी। वशिष्ठ ऋषिः। हे 'इन्द्र'! 'नः' अस्मभ्यं 'क्रतुं' कर्म वा प्रज्ञानं वा 'आभर' आहर। अपिच, 'यथा पिता पुत्रेभ्यः' धनं प्रयच्छति तथा 'नः' अस्मभ्यं 'शिक्ष' धनं देहि। हे 'पुरुहूत'! बहुभिराहूतेन्द्र! 'यामनि' यज्ञे 'जीवा' वयं 'ज्योतिः' सूर्यम् 'अशीमहि' प्रतिदिनं प्राप्नुयामः। यद्वा, हे इन्द्र! भूतानि प्रकाशयितरिन्द्र! तथाच यास्कः, 'इन्द्र इरां दृणातीति वेरां ददातीति, वेरां दधातीति, वेरां दारयत इति, वेरां धारयत इति वेन्दवे द्रवतीति, वेन्दौ रमत इति, वेन्धे भूतानीति वा तद्यदेनं प्राणैः समैन्धंस्तदिन्द्र-

स्येन्द्रत्वमिति विज्ञायते (१०,८) इति। एवं गुणविशिष्ट! परमात्मन्! त्वं क्रतुं कर्म स्वविषयज्ञानं वा नः अस्मभ्यम् आभर आहर प्रयच्छेत्यर्थः। तत्र दृष्टान्तः, पिता पुत्रेभ्यो यथा लोके विद्यां धनं वा प्रयच्छति तथा नोऽस्मभ्यं विद्यां धनं वा प्रयच्छ। हे पुरुहूत! बहुभिराहूतेन्द्र! यामनि सर्वैः प्राप्तव्ये अस्मिन् प्रकृते मार्गे जीवा वयं ज्योतिः परं ज्योतिरशीमहि सेवेमहि ॥ ७ ॥

१ २ २ १ २ २ १ २ २ १ २
मा न इन्द्र परा वृणग्भवा नः सधमाद्ये ।
१ २ ३ २उ १ २ ३ १ २ ३ १ २
त्वं न ऊती त्वमिन्न आप्यं मा न इन्द्र परा वृणक् ॥८॥

अथ अष्टमी। रेभ ऋषिः। हे 'इन्द्र'! 'नः' हविषां प्रदातॄन् अस्मान् 'मा पराहर्णक्' मा परित्याक्षीः वृजी वर्जने रौधादिकः। लङि रूपं तदेवाह त्वं नोऽस्माकं 'सधमाद्ये' मद मादनहेतुभूते यज्ञे सोमपानाय भव। किञ्च, हे 'इन्द्र'! नोऽस्मान् त्वमेव 'ऊती' ऊत्यां स्थापय। यद्वा, ऊती। व्यत्ययेन कर्त्तरि क्तिचा निपातितः त्वमेवास्माकं रक्षिता भव। तथा 'त्वमित्' इदवधारणे त्वमेव नोऽस्माकम् 'आप्य' आप्तव्यम्। त्वमेव बन्धुरित्यर्थः। अतएव मा न इन्द्रः पराहणगिति गतार्थः।

"सधमाद्ये" "सधमाद्यः" इति च पाठौ ॥ ८ ॥

३१ ४ १ १२ ३ २ ३ १ ३१२
वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।
१ १ २ ३ १२ ३ १ २ ३ १ २
पवित्रस्य प्रस्रवणेषु वृत्रहन् परि स्तोतार आसते ॥९॥

अथ नवमी। मेधातिथिर्ऋषिः। हे 'ब्रह्मन्' 'त्वा' त्वां वयं 'घ' खलु 'सुतावन्तः' सोममभिषुतवन्तः 'आपोन' आप इव प्रवण मभिगच्छामः। 'पवित्रस्य' सोमस्य प्रस्रवणेषु 'प्रवृक्तबर्हिषः' स्तीर्णबर्हिषः स्तोतारश्च त्वां पर्युपासते ॥ ९ ॥

१ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २ ३ १
यदिन्द्र नाहुषीष्वा ओजो नृम्णं च कृष्टिषु। यद्वा
१ २ ३ २ ३ १ २र ३ १ २र ३ १ २
पञ्च क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या १०

इति तृतीयप्रपाठकस्य द्वितीयार्द्धे द्वितीय दशतिः।

---

अथ दशमी। भरद्वाज ऋषिः। हे 'इन्द्र!' नाहुषीषु नहुष इति मनुष्यनाम (नि० २,३,८) तत्सम्बन्धिनीषु 'कृष्टिषु' प्रजासु आकारः मनुष्येषु यत्र 'ओजो' बलं 'नृम्णं' धनं च विद्यते। 'यद्वा' यच्च 'पञ्च' पञ्चानां 'क्षितीनाम्'। निषादपञ्चमाश्चत्वारो वर्णाः पञ्च क्षितयः तेषां स्वभूतम्। 'द्युम्नं' द्योतमानमन्नं तत्सर्वं मत्सभ्यम् 'आभर' आहर प्रयच्छ। तथा 'सत्रा' महान्ति 'विश्वानि' सर्वाणि 'पौंस्या' पौंस्यानि बलानि चास्मभ्य माहर ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य तृतीय. खण्ड.।

---

अथ तृतीयप्रपाठकस्य द्वितीयार्द्धे तृतीय दशति ।

१ २ ३ १ २र ३ १ २ ३ २
सत्यमित्था वृषेदसि वृषजूतिर्नोऽविता ।
२ ३क २र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥१॥

अथ चतुर्थे खण्डे—सैषा प्रथमा । मेधातिथिर्ऋषिः । हे 'उग्र' ! उद्गूर्णेन्द्र ! त्वं 'सत्यम्' 'इत्था' इत्थ' 'वृषेत्' कामानां वर्षक एवासि । 'वृषजूतिः' वृषभिः सेक्तृभिः सोमरसस्य सोतृभिराहूतो 'नः' अस्मान् 'अविता' रक्षिता भवसि । 'वृषाहि' सेचक एव 'शृण्विषे' श्रूयसे । 'परावति' दूरेऽपि 'वृषेव' कामानां सेचक एवासि । 'अर्वावति' समीपेऽपि 'वृषा' सेचक एव 'श्रुतः' अश्रूयत ॥

"अविथा" "अहुतः" 'इति' च पाठौ ॥ १ ॥

२ ३ १ २ ३ २ ३ १ २ ३ १ २ १ २
यच्छक्रासि परावति यदर्वावति वृत्रहन् । अतस्त्वा
१ २ ३ १ २ ३ १ २ ३ १ ३ १ २
गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाꣳ या विवासति २

अथ द्वितीया । रेभ ऋषिः । हे 'शक्र' ! शत्रुहननसमर्थेन्द्र ! 'यद्' यदा 'परावति' विप्रकृष्टे दूरे द्युलोकदेशे 'असि' विद्यसे । हे 'वृत्रहन्' ! वृत्रस्य हन्तरिन्द्र ! 'यद्' यदा वा 'अर्वावति' अर्वाचीने तस्मादधस्तात् स्थिते तदपेक्षया समीपे देशेऽन्तरिक्षे भवसि तस्मादपि । 'अतः' अस्माद्द्युलोकाद्वा हे 'इन्द्र !' 'द्युगत्' गम्लृ, सृप्लृ, गतौ । क्विपि 'गमः क्वौ' इति अनुनासिकलोपः । तुक् । 'सुपां सुलुगिति' भिसो

लुक्। द्युलोकं प्रति गच्छद्भिः स्वभासा सर्वतो गच्छद्भिः 'केशिभिः' केशवद्भिः हरिभिरिव स्थिताभिः 'गीर्भिः' स्तुतिभिः 'त्वा' त्वां 'सुतवान्' अभिषुतसोमवान् यजमानः 'आविवासति' आत्मीयं यज्ञं प्रति आगमयति। त्वामेतैः स्तोत्रैः परिचरति वा ॥ २ ॥

२ १ २ ३१ २२३ १ २ ३ २ ३१ २२
अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम्
२३ २ ३ १२ ३ २३ २३ १२
इन्द्रं नाम श्रुत्यꣳ शाकिनं वचो यथा ॥ ३ ॥

अथ तृतीया। सत्य ऋषिः। इयं पिपीलिकमध्या बृहतीति बह्वृचाः आद्यन्त्यौ पादौ त्रयोदशाक्षरौ, मध्यमोऽष्टाक्षर इति त्रिपदा। हे उद्गात्रादयः! 'वः' यूयम् अथवा हे यजमानाः! वो युष्माकं 'हिताय' 'अन्धसः' सोमस्य 'मदेषु' उत्पाद्यमानेषु सत्सु 'वीरं' शत्रूणाम् ईरयितारम्। 'नाम' शत्रूणां नामकम्। 'विचेतसं' विशिष्टप्रज्ञं 'श्रुत्यं' सर्वत्र श्रोतव्यं स्तुत्यम्। 'शाकिनं' शक्तिमन्तम् ईदृशम् 'इन्द्रम्' 'महा' महत्या 'गिरा' स्तुत्या 'वचो' वाचो युष्मदीया 'यथा' येन प्रकारेण प्रवर्त्तते गायत्र्या त्रिष्टुभा वा तया 'गाय' गायत स्तुतिं कुरुत ॥ ३ ॥

१ २ ३ १ २ ३१ ३ १२ ३ १ २
इन्द्र त्रिधातु शरणं त्रिवरूथꣳ स्वस्तये।
३ १२ ३ १२ ३ १ २ ३ १२ ३ १ २
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः॥४॥

अथ चतुर्थी। शंयुः ऋषिः। हे 'इन्द्र!' 'त्रिधातु' त्रिप्रकारं त्रिभूमिकम्। 'त्रिवरूथं' त्रयाणां शीतातपवर्षाणां

वारकम् । 'स्वस्तये' अविनाशाय 'छर्दिः' छर्दिष्मत् आच्छादनयुक्तम् । एवं गुणविशिष्टं 'शरणं' गृहम् । 'मघवद्भ्यश्च' मघं हविर्लक्षणं धनं तद्वद्भ्यश्चास्मदीयेभ्यो यजमानेभ्यः 'मह्यं' भरद्वाजाय 'च' 'प्रयच्छ' देहि । अपिच । 'एभ्यः' सकाशात् 'दिद्युं' शत्रुप्रेरितं द्योतमान मायुधं 'यवय' पृथक्कुरु ॥ ४ ॥

१ २   ३ १ २ १   २र   १ २<br>
श्रायन्त इव सूर्य्यं विश्वेदिन्द्रस्य भक्षत । वसू-<br>
३ १   २र ३ १ २ ३   १ २ ३ १   २र<br>
नि जातो जनिमान्योजसा प्रति भागं न दीधिमः॥५

अथ पञ्चमी । नृमेध ऋषिः । हे अस्मदीया जनाः । 'श्रायन्त इव सूर्य्यं' यथा समाश्रिता रश्मयः 'सूर्य्यं' भजन्ते तथा 'इन्द्रस्य' विश्वेत्' विश्वान्येव धनानि 'भक्षत' भजत । स च यानि 'वसूनि' धनानि 'जाते' उत्पन्ने 'जनिमानि' जायमाने जनिष्यमाणे च 'ओजसा' बलेन करोति अतो 'भागं न' पित्र्यं भागमिव तानि धनानि 'प्रतिदीधिमः' प्रतिधारयेमेति यद्वा । 'श्रायन्त इव सूर्य्यं' यथा समाश्रिता रश्मयः सूर्य्यमुपतिष्ठन्ते तथा 'इन्द्रस्य' 'विश्वा' विश्वानि धनानि विभक्तुमिच्छन्तः समाश्रिता मरुतः इन्द्रमुपतिष्ठत इति शेषः । उपस्थाय च मरुतो 'वसूनि' उदकलक्षणानि धनानि 'जाते' जायमानाय 'जनिमानि' जनिष्यमाणाय मनुष्याय 'ओजसा' बलेन 'भक्षत' विभजन्ते । तत्र चास्माकं यो भागः तं 'भाग' नेति सम्प्रत्यर्थे प्रतीत्येपः अनु इत्येतस्य स्थाने । 'अनुदीधिमः' वयमनुध्यायाम । तथाच यास्कः (नै०६,८) 'समाश्रिताः सूर्य्यमुपतिष्ठन्तेऽपि वोपमार्थे स्यात्

सूर्यमिवेन्द्र सुपतिष्ठन्त इति सर्वाणीन्द्रस्य धनानि विभज्यमाणाः स यथा धनानि विभजति जाते जनिष्यमाणे च तं वयं भागमनुध्यायामौजसा बलेनेति ॥

"जनिमानि" "जनिमानः" इति च पाठौ ॥ ५ ॥

२ ३ १२ ३ १ २र ३ १२
न सीमदेव आप तदिषं दीर्घायो मर्त्यः ।
१२ ३ २३ २र ३१२३१२ १२ ३१ २
एतग्वा चिद्य एतशो युयोजत इन्द्रो हरी युयोजते॥६

अथ षष्ठी। पुरुहन्मा ऋषिः। हे 'दीर्घायो !' नित्येन्द्र! सः 'अदेवः' इन्द्राख्यदेवरहितः 'मर्त्यः' मरणधर्मा मनुष्यः 'सीं' सर्वं 'इषम्' तत्प्रसिद्धम् अन्नं 'नाप' न प्राप्नोति। 'यो मर्त्यः' अस्येन्द्रस्य 'एतग्वाचित्' एतवर्णावेवाश्वौ भवतोऽभिमतदेशगमनाय 'एतशः' एतशौ अश्वौ 'युयोजते' योजयति रथे, यज्ञं गन्तुम्। यथेन्द्रो हरी युजोजते न स्तौति स न प्राप्नोतीति समन्वयः।

"आप तत्" "आयत्" इति च पाठौ। "एतशः" "एतशा" इति पाठौ ॥ ६ ॥

१ २ १२ ३ २ ३ १ २ ३ १ २
आ नो विश्वासु हव्यमिन्द्रꣳ समत्सु भूषत ।
२३ १ २ ३ १ २ ३ १ २
उप ब्रह्माणि सवनानि वृत्रहन् परमज्या ऋचीषम ७

अथ सप्तमी। नृमेधपुरुमेधावृषी। हे स्तोतारः! 'विश्वासु' सर्वासु समत्सु असुरयुद्धेषु 'हव्य' सर्वैर्देवैरात्मरक्षार्थमाह्वातव्यम्। एतादृशम् 'इन्द्रम्' उद्दिश्य 'नः' अस्माकं यज्ञे 'ब्रह्माणि' स्तोत्राणि हवींष्युपाश्यमानि वा 'उपभूषत' अलङ्कुरुत प्रेरयत।

हे 'हवहन्'! हवस्यासुरस्य प्रापस्य वा हन्तः। परमज्याः' युद्धेषु शत्रुहननार्थं परमा अविनश्वरी ज्यां मौर्वी यस्य तथोक्तः। यद्वा, परमान् बलेन प्रकृष्टान् शत्रून् जीनाति हिनस्तीति परमज्याः हे 'ऋचीषम'। स्तुतिभिरभिमुखीकरणीयेन्द्र! एताहृशस्त्व' सवनानि प्रातःसवनादीनि त्रीणि 'ब्रह्माणि' स्तोत्राणि च 'उपभूषत' अलङ्कुरुत।

"भूषतः" "भूषतु" इति पाठौ। "हवहन्" "हवहा" इति च॥ ७॥

१ १२ १२उ २ १ २ २ १
तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम्।
२ २ १२ ३१२ ३१२३११
सत्रा विश्वस्य परमस्य राजसि न किष्ट्वा गोषु वृखते॥८

अथ अष्टमी। वसिष्ठ ऋषिः। हे 'इन्द्र'! 'अवमम्' अधमं वपु सीसादिकं 'वसु' धनम्। यद्वा। भौमं वसु अवमं 'तवेत्' तवैव। 'त्वं' त्वमेव 'मध्यमं वसु रजतहिरण्यादिकम् आन्तरिक्षं वा 'पुष्यसि'। 'विश्वस्य' सर्वस्य परमस्योत्तमस्यापि रत्नादे र्दिव्यस्य वा वसुनो 'राजसि' ईशिषे 'सत्रा' सत्यमेव। अपिच। 'त्वा' त्वां 'गोषु' निमित्तेषु 'न किर्वृखते' केऽपि न वारयन्ति॥ ८॥

१ १२ ३ १ २ ३ २ १ २ ३ १ २
क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः।
१ २ ३ १ २ ३ १ २
अलर्षि युध्म खजकृत्पुरन्दर प्र गायत्रा अगासिषुः॥९॥

अथ नवमी। मेधातिथिर्मेध्यातिथिश्च ऋषिः। हे 'इन्द्र!' 'क्व' कुत्र देशे 'इयथ' गतवानसि पुरा? 'क्वेत्' कुत्र वा 'असि' भवसि इदानीं वर्त्तसे 'पुरुत्राचिद्धि' बहुषु हि 'ते'

त्वदीयं 'मनः' सञ्चरति। हे 'युध्म' युद्धकुशल!। 'खजकृत्' युद्धस्य कर्त्तः! हे 'पुरन्दर!' असुराणां पुरां दारयितः! हे इन्द्र! 'अलर्षि' आगच्छ। 'गायत्रा' गानकुशला अस्मदीयाः स्तोतारः 'प्रगासिषुः' प्रगायन्ति स्तुवन्ति। अलर्षीत्येतत् दाधर्त्यादौ निपात्यते ॥ ९ ॥

१ १ २   ३ १   २र ३ १ २ ३ १ २
वयमेनमिदा ह्योऽपीपेमेह वज्रिणम्।
१ २   ३ १   २र ३ १ ३ २ ३ १ २   ३ २
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥१०॥

इति तृतीयप्रपाठकस्य द्वितीयार्द्धे तृतीय दशतिः।

---

अथ दशमी। कलिर्ऋषिः। 'वयं' यजमानाः 'एनं' वज्रिणं वज्रयुक्तमिन्द्रं 'इदा' इदानीम्। 'ह्यः' श्वः अतीतेऽह्नि। 'इह' अत्रार्हणे 'अपीपेम' आप्याययाम सोमेन। 'तस्माउ' तस्मादेव 'अद्य' अद्य 'सवने' 'सुतम्' अभिषुतं सोमं 'भर' हर हे अध्वर्यो!। 'नूनम्' इदानीं श्रुते' सति 'आभूषत' अलङ्कुरुत ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य चतुर्थः खण्डः।

---

अथ तृतीयप्रपाठकस्य द्वितीयार्द्धे चतुर्थ दशतिः।

१   २र   ३ २उ   ३ १ २ ३ १ २
यो राजा चर्षणीनां याता रथेभिरध्रिगुः।
१ २   ३ १   २र ३   ३ २ ३ १ ३ २ ३ १ २
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥१

अथ पञ्चमे खण्डे—सैषा प्रथमा। पुरुहन्मा ऋषिः। यः इन्द्रः चर्षणीनां मनुष्याणां राजा स्वामी रथैर्याता गन्ता। 'च अध्रिगुः' अप्रतगमनोऽन्यैः। 'विश्वासां' सर्वासां 'पृतनानां' सेनानां 'तरुता' तारकः। यश्च 'ज्येष्ठः' गुणैर्गरीयान्। 'यः' च 'वृत्रहा' वृत्रं हतवान्। तं 'ज्येष्ठं' सर्वबलित्वयेन प्रशस्यम् अधिकं वृद्धं वा महाभागमिन्द्रं 'गृणे' स्तौमि॥ १॥

१ २ ३ १ २ ३ १ २ ३ १२
यत इन्द्र भयामहे ततो नो अभयं कृधि।
१२ ३ १उ २ ३ १ २ ३ १ २उ ३ २ ३२
मघवं छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि॥२

अथ द्वितीया। भर्गऋषिः। हे 'इन्द्र!' 'यतः' हिंसकात् 'भयामहे' वयं 'ततः' 'नः' अस्मभ्यम् 'अभयं' 'कृधि' कुरु। हे 'मघवन्!' 'शग्धि' शक्तो भवसि 'नः' अस्मभ्यमभयं कर्त्तुम्। 'तव' 'ऊतये' रक्षणाय 'विजहि' 'द्विषः' अस्मद्द्वेष्टॄन्। 'मृधः' अस्मद्धिंसकान् 'वि जहि'॥ २॥

१ २ ३१ ३२ ३ १ २
वास्तोष्पते ध्रुवा स्थूणाꣳसत्रꣳ सोम्यानाम्।
१ २ ३ १ २ ३ १ ३२ ३ १ २ ३ १ २ ३ ३ १ २
द्रप्सः पुरां भेत्ता शश्वतीनामिन्द्रो मुनीनाꣳ सखा॥३

अथ तृतीया। इरिमिठिऋर्षिः। हे 'वास्तोष्पते'! गृहपते! 'स्थूणा' गृहाधारभूतस्तम्भः 'ध्रुवा' स्थिरा भवतु। 'सोम्याना' सोमार्हाणां सोमसम्पादिनां वास्माकम् 'अंसत्रम्' असत्राणम् अमोपलक्षितस्य कवचस्य शरीरस्य त्रायकं बलं भवतु। अपिच, 'द्रप्सः' द्रवणशीलः सोमः तद्वान् अर्श आदित्वादच्प्रत्ययः। 'शश्वतीनां' बह्वीनां 'पुराम्' असुरपुरीणां

'भेत्ता' विदारयिता एवम्भूतः 'इन्द्रः'-'मुनीनाम्' ऋषीणाम-स्माकं 'सखा' मित्रभूतो भवतु ॥ ३ ॥

२ ३ १ २ ३ १ २ ३ १ २
बण्महाँ असि सूर्य्य बडादित्य महाँ असि ।
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि४

अथ चतुर्थी। जमदग्निर्ऋषिः। अत्र शौनकः, बण्महा-मिति दृष्ट्वार्कमुपतिष्ठेदृचौ जपन्। यदत्यन्यकृतां वार्थीं नाश्नं तेन स लिप्यते' इति। हे 'सूर्य्य' ! प्रेरकेन्द्र। त्वं 'महान्' तेजसाधिकः 'असि'। 'बट्' सत्यम्। नेतन्मिथ्येत्यर्थः। हे 'आदित्य !' अदितेः पुत्र ! त्वं 'महान्' बलेनाप्यधिकः 'असि' 'बट्' सत्यमेव। 'महो' महतः 'सतो' भवतः 'ते' तव 'महिमा' महत्वं 'पनिष्टम' पनस्यते स्तोतृभिः स्तूयते। हे 'देव !' द्योतनादिगुणयुक्त ! सूर्य्य ! त्वं 'मह्ना' महत्वेन वीर्य्ये-णाप्यधिक 'असि' भवसि न संशय इत्यर्थः।

"पनिष्टम" "पनस्यते" इति "मह्ना" "श्रद्धा" इति च पाठौ ॥

१ २ ३ २ १ २ ३ १ ३ २ ३ १ २ ३ १ २
अश्वी रथी सुरूप इद्गोमाँ यदिन्द्र ते सखा ।
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
श्वात्रभाजा वयसा सचते सदा चन्द्रैर्याति सभामुप ५

अथ पञ्चमी। देवातिथिर्ऋषिः। हे 'इन्द्र' ! 'ते' तव 'सखा' मित्रभूतः पुरुषः अश्वादिगुणविशिष्ट एव भवति इच्छब्दः प्रत्येकमभिसम्बध्यते 'अश्वी इत्' बहुभिरश्वैरुपेत एव भवति न कदाचिदश्वैर्वियुज्यते। 'रथी' रथवान् एव स भवति। 'सुरूपः' शोभनरूपः शोभनावयव एव स भवति। 'गोमा-

नित्' बह्वीभिर्गोभिर्युक्त एव स भवति न कदाचिदेतैर्वियुज्यत इत्यर्थः । अपिच, 'खावभाजा' खावमिति धननाम आख्तनीयं गीर्ज ग्रासव्य शोभनं धन सम्भजते ईदृग्धनसयुक्तेन 'वयसा' अन्ननामैतत् । अन्नेन स सदा सर्वदा 'सचते' समवैति सङ्गच्छते । अतएव 'चन्द्रैः' सर्वेषामाह्लादकैः स्तोत्रैर्युक्तः सन् 'सभा' जनसंसदम् 'उपयाति' उपगच्छति ॥ ५ ॥

१ २र ३ १ २ १ २र३ २ १ १
यद्याव इन्द्र ते शतं शतं भूमीरुत स्युः । न त्वा
२ १ २ . ३ २ २ २ २ ३ १ २ ३ १ २
वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥६॥

अथ षष्ठी । पुरुहन्मा ऋषिः । हे 'इन्द्र' ! 'ते' तव प्रतिमानार्थं 'यद्' यदि 'द्याव.' द्युलोकाः 'शत' शतसंख्याकाः स्युः तथापि नाभुवन्ति । 'उत' अपिच 'भूमी' भूम्यः ते तव मूर्त्तिप्रतिविम्बाय शतं स्यु तथापि नाभुवन्ति । हे 'वज्रिन्' । 'त्वा' त्वा 'सहस्रम्' अगणिता अपि सूर्याः नानुभवन्ति न प्रकाशयन्तीत्यर्थः न तव सूर्यो भातीति श्रुतेः किं बहुना 'जातम्' पूर्वमुत्पन्न किञ्चिदपि 'न अष्ट' नाश्नुते । तथा 'रोदसी' 'द्यावापृथिव्यौ' नाश्नुवाते त्व सर्वेभ्योऽतिरिच्यस इत्यर्थ 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य.' इति श्रुतेः ॥ ६ ॥

१ २ २ २उ ३ २३क २र २ २ ३ १ २
यदिन्द्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः ।

१ २ ३१ ३र २ २ ३ १ २ २ १ २
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥७॥

अथ सप्तमी। देवातिथिऋषिः। हे 'इन्द्र'! 'यद्' यदि 'प्राक्' प्राच्यां दिशि वर्त्तमानैः सप्तम्यन्ताद्दिक्शब्दाद्विहितस्य अस्तातिरच्छेलुगिति लुक्। यदि वा 'अपाक्' प्रतीच्यां दिशि वर्त्तमानैः यदि वा 'उदक्' उदीच्यां दिशि वर्त्तमानैः। यद्वा 'न्यक्' नीच्यां दिशि अधस्ताद्वर्त्तमानैः न्यधीचेति नैः प्रकृतिस्वरत्वम्। उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वम्। एवंभूतैः 'नृभिः' स्तोतृभिस्त्वं 'ह्वयसे' स्वस्वकार्याथाह्वयसे हे सिम! श्रेष्ठेन्द्र! 'सिम इति वै श्रेष्ठमाचक्षत' इति वाजसनेयकम्। यद्यप्येवं बहुभिराह्वयसे तथापि 'आनवे' अनुर्नाम राजा तस्य पुत्रे राजर्षौ 'पुरु' बहुलं 'नृपूतः' नृभिस्त्वदीयैः स्तोतृभिः प्रेरितः 'असि' भवसि। राज्ञे हितकरणे त्वां स्तोतारः प्रेरयन्तीत्यर्थः पू प्रेरणे। अस्मात्कर्मणि निष्ठा। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वम्। अपि च हे 'प्रशर्द्ध'! प्रकर्षेण शर्द्धयितरभिभवितरिन्द्र! 'तुर्वशे' एतत्सञ्ज्ञे च राजनि 'नृपूतः' नृभिः प्रेरितो भवसि ॥ ७ ॥

१ २र ३ १ २र ३१
कस्तमिन्द्र त्वा वसवा मर्त्यो दधर्षति। श्रद्धा हि

१र २ ३ १ २ ३ १ २ ३ १ २र
ते मघवन् पार्य्ये दिवि वाजी वाजꣳ सिषासति॥८॥

अथ अष्टमी। वशिष्ठ ऋषिः। हे 'वसो'! वासक! व्यापक! वा, हे 'इन्द्र'! तं प्रसिद्धं 'त्वा' त्वां 'कः' मर्त्यः 'आदधर्षति' आधर्षयेत्। हे 'मघवन्'! 'ते' त्वदर्थं यः 'श्रद्धा' श्रद्धया युक्तः सन् 'वाजी' हविष्मान् यजमानो भवेत्। 'पार्य्ये दिवि' मोत्येऽहनि सः 'वाजं' हविर्लक्षणमन्नं 'सिषासति' दातुमिच्छति ॥ ८ ॥

१ २ ३ २ ३ १ २र ३ १ २ २ १
इन्द्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः। हित्वा
२र ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
शिरो जिह्वया रारपच्चरत्त्रिंशत्पदा न्यक्रमीत् ॥९

अथ नवमी। भरद्वाज ऋषिः। हे 'इन्द्राग्नी!' 'अपात्' पादरहिता 'इयम्' उषाः 'पद्वतीभ्यः' पादयुक्ताभ्यः 'सुप्ताभ्यः' प्रजाभ्यः 'पूर्वा' प्रथमभाविनी सती 'आगात्' आगच्छति। तथा प्राणिनां 'शिरो' 'हित्वा' त्यक्त्वा स्वयमशिरस्कापि 'जिह्वया' प्राणिस्थया तदीयेन वागिन्द्रियेण 'रारपत्' भृशं शब्दं कुर्वती 'चरत्' एवं चरन्ती उषाः त्रिंशत्पदानि' अवयवभूतान् त्रिंशन्मुहूर्त्तान् 'न्यक्रमीत्' एकेन दिवसेनातिक्रामति एतच्च युवयोः कर्मेति स्तुतिः,

"हित्वा शिरो" "हित्वी शिरो" इति पाठौ। "रारपत्" "वावदद्" इति च ॥ ९ ॥

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १
इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः। आ
२ ३ १ २ ३ १ २ ३ १ ३ १ २
शन्तम शन्तमाभिरभिष्टिभिरा स्वापे स्वापिभिः १०

*इति तृतीयप्रपाठकस्य द्वितीयार्द्धे चतुर्थं दशतिः।

---

अथ दशमी। वालखिल्या ऋषयः। हे 'इन्द्र!' 'नेदीयः' अन्तिकतममस्माकं यज्ञस्थानम् 'एदिहि' आगच्छैव। काभिः साकमिति? उच्यते। 'मितमेधाभिः' परिमितप्रज्ञाभिः 'ऊतिभिः' रक्षाभिः। यद्वा। निर्मितयज्ञाभिर्मरुद्भिः सह।

हे 'शन्तम !' सुखतम ! 'शन्तमाभिः' सुखतमाभिः 'अभिष्टिभिः' प्राप्तिभिः अभिमताभिर्वा आगच्छेति शेषः उपसर्गश्रुतेर्योग्यक्रियाध्याहारः तथा हे 'स्वापे' ! अस्माकं बन्धुभूत ! सुखस्य आपयितर्वा । 'स्वापिभिः' बन्धुभूताभिः सुखस्य प्रापयित्रीभिः 'अभिष्टिभिः' आगच्छेति शेषः ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्य पञ्चमः खण्डः ।

---

अथ तृतीयप्रपाठकस्य द्वितीयार्द्धे षष्ठम् दशति ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २
दूत ऊती वो अजरं प्रहेतारमप्रहितम् । आशु
१२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
जेतारꣳ हेतारꣳ रथीतममतूर्तं तुग्रियावृधम् ॥ १ ॥

अथ षष्ठे खण्डे—सैषा प्रथमा । नृमेध ऋषिः । हे अस्मदीया जनाः । 'वो' यूयम् 'अजरं' जरारहितं 'प्रहेतारं' शत्रूणां प्रेरकम् 'अप्रहितं' केनाप्यप्रेषितम् 'आशुं' वेगवन्तं 'जेतारं' शत्रूणाम् । 'हेतारं' गन्तारम् । 'रथीतमं' रथिना श्रेष्ठम् 'अतूर्तं' केनाप्यहिंसितम् । 'तुग्रियावृधं' उदकस्य वर्धयितारमिन्द्रम् 'ऊती' ऊत्यै रक्षणाय 'दूतः' कुरुत पुरस्कुरुतेति यावत् ॥ १ ॥

१ २र ३ १ २ ३ २उ ३ १ २र
मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन् ।
३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २र
आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि ॥ २

अथ द्वितीया । वसिष्ठ ऋषिः । हे इन्द्र ! 'त्वा' त्वां 'वाघतश्चन' यजमाना अपि 'अस्मद्' अस्मत्तः 'आरे' दूरे 'मो निरीरमन्' नितरां मा रमयन्तु । अतस्त्वम् 'आरात्ताद्दा' दूरेऽपि वर्त्तमानः 'नः' अस्मदीयं 'सधमाद' यज्ञम् 'आगहि' आगच्छ । 'इह वा' अत्रापि वा 'सन्' विद्यमानः 'उपश्रुधि' अस्मदीयं स्तोत्रम् उपशृणु ।

"आरात्ताद्दा" "आरात्ताच्चित्" इति च पाठौ ॥ २ ॥

१ १' २   ३ २ ३ २ ३ १ २   ३ १ २
सुनोत सोमपाव्ने सोममिन्द्राय वज्रिणे ।
१ २   ३ १ २र   ३ २उ ३ १   २र ३ १ २र
पचता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः ॥३

अथ तृतीया । वसिष्ठ ऋषिः । हे मदीयाः पुरुषाः ! 'वज्रिणे' वज्रवते 'सोमपाव्ने' सोमस्य पात्रे 'इन्द्राय' 'सोमं' 'सुनोत' अभिषुणुत । 'अवसे' इन्द्रस्तर्पयितुं 'पक्तीः' पक्तव्यान् पुरोडाशादीन् पचति च । 'कृणुध्वमित्' इन्द्रप्रियकराणि कर्माणि च कुरुतैव । इन्द्रो हि 'मयः' सुखं 'पृणन्नित्' यजमानाय प्रयच्छन्नेव 'पृणते' ह्वीपौति शेषः ॥ ३ ॥

१ २ ३ १   २र ३ १ २ १   २   ३ २
यः सत्राहा विचर्षणिरिन्द्रं तं हूमहे वयम् ।
१ २   ३ १ २ ३ १ २   ३ २
सहस्रमन्यो तुविनृम्ण सत्पते भवा समत्सु नो वृधे ॥४

अथ चतुर्थी । शयुः ऋषिः । यः इन्द्रः 'सत्राहा' महता शत्रूणां हन्ता । 'विचर्षणिः' विशेषेण सर्वस्य द्रष्टा तमिन्द्रं वय 'हूमहे' स्तुतिपदेराह्वयामः उत्तरार्द्धः प्रत्यक्षकृतः

हे 'सहस्रमन्यो!' बहुविधं शत्रुनाशार्थं सहस्रसङ्ख्यककोप-युक्त! यद्वा। मन्युः क्रतुः, सहस्रसङ्ख्याकैः क्रतुभिः पूज्येन्द्र! हे 'तुविनृम्ण!' बहुधन! 'सत्पते'! सतां पालयितरिन्द्र! 'समत्सु' सङ्ग्रामेषु 'नः' अस्माकं 'वृधे' वर्द्धनाय 'भव'।

"सहस्रमन्यो" "सहस्रमुष्क" इति च पाठौ॥ ४॥

१ २ २ २ १ १ २ १ २
शचीभिर्नः शचीवसू दिवा नक्तं दिशस्यतम्। मा
२ १ १ २र १ २ १ २उ २ २ १ २ १ २
वां रातिरुप दसत्कदा चनास्मद्रातिः कदा चन॥५

अथ पञ्चमी। पङ्क्तिः ऋषिः। अश्विद्वयदेवता। हे 'शचीवसू'! शचीति कर्मनाम अस्मदनुष्ठितज्योतिष्टोमादिकर्मधनौ! युवां 'शचीभिः' अस्मदीयैः कर्मभिर्यागादिभिर्निमित्तभूतैः 'दिवानक्तम्' अहनि रात्रौ च 'दिशस्यतं' विसृजतम् अभिमतं दत्तमित्यर्थः। दाश दाने इत्यस्येदं छान्दसं रूपम्। यद्वा दशस्यतिर्दानार्थः कण्ड्वादिषु द्रष्टव्यः। 'वां' युवयोः 'रातिः' दानं 'कदाचन' सर्वदा यागकालेऽपि अयागकालेऽपि 'मोपदसत्' मोपक्षीणं भूत् दसु उपक्षये। लुडि पुषादि-द्युताद्रीति च्लेरङ्। न केवलं युष्मदीयम्, अपितु 'अस्मद्' अस्माकमपि 'रातिः' दानं हविरादिप्रदानं सर्वविषयं दानं वा, अर्थिभ्यः 'कदाचन' सर्वावस्थायामपि 'मोपदसत्' उपक्षीणं माभूत् सर्वदा वर्त्तताम्। अहमपि सर्वदा युष्मानुद्दिश्य दद्याम्। युवामपि मदभिमतं सर्वदा दत्तमित्यर्थः।

"दिशस्यतं" "दशस्यतम्" इति च पाठौ॥ ५॥

१ २ १ १ २ १ १२ २ १ २ ३ १ २
यदा कदा च मीढुषे स्तोता जरेत मर्त्यः।

१ २र २ १ २ २ १ ३ २ ३ २ ३ १ २
आदिद्वन्देत वरुणं विपा गिरा धर्त्तारं विव्रतानाम्॥६

अथ षष्ठी। वामदेव ऋषिः। 'यदा कदा च' यस्मिन् काले 'मीढुषे' सेक्त्रे हविःप्रदात्रे यजमानाय तस्य यागार्थं 'मर्त्तो' मरणधर्मा 'स्तोता' स्तुतिकर्त्तोद्गाता 'जरेत' स्तूयात्। 'आदित्' अनन्तरमेव तस्मिन्काले इत्यर्थः। 'वरुणं' पापस्य वारकं 'विव्रतानां' विविधानां कर्मणां 'धर्त्तारं' धारकं वरुण-नामानं देवं 'विपा' विशेषेण रचितया 'गिरा' स्तुत्या 'वन्देत' स्तूयात्। यदा यजमानार्थमुद्गाता स्तौति तदा वरुणमेव स्तौतीत्यर्थः। अथवा 'मीढुषे' अभिमतवर्षिणे वरुणाय तत्-प्रीतये 'यदा कदा च' यस्मिन् कस्मिंश्चित् काले स्तुत्यर्हं 'मर्त्यः' स्तोतोद्गाता 'जरेत' स्तूयात्। 'आदिदनन्तरमेव' यजमानोऽपि उक्तलक्षणं स्वयमपि 'विपा गिरा' 'वन्देत' नमस्कुर्य्यात् स्तूयाद्वा॥ ६॥

१ १. २र २ २ २ १ २ १
पाहि गा अन्धसो मद इन्द्राय मेध्यातिथे। यः

१र २ २ १ १ १२ २ २ १ २ ३ १ २३ १ १
संमिश्लो हर्य्योर्यो हिरण्यय इन्द्रो वज्री हिरण्ययः॥७

अथ सप्तमी। मेध्यातिथि ऋषि.। इन्द्रायेति चतुर्थ्येक-वचनमिदं सम्बुद्ध्येकवचनस्य स्थाने द्रष्टव्यम्। हे 'इन्द्र'! 'मेध्यातिथे'! मेधो यज्ञं तस्मिन् भवो मेध्यः मेध्यायो अतिथियेति मेध्यातिथिः, तस्य सम्बोधनं हे मेध्यातिथे! यज्ञे भव अतिथिभूत इन्द्र। 'अन्धसः' पीतस्य सोमस्य 'मदे' सति त्वमस्मदीयाः 'प्रजाः' 'पाहि' रक्ष। 'यः' इन्द्रः 'हर्य्योः'

अश्वयोः 'संमिश्लः' स्वरथे संमिश्रयिता यश 'इन्द्रो वज्री हिरण्ययः' हितरमणीयः यस्य रथो हिरण्ययो हिरण्मयः।

"हर्य्योः यो हिरण्यय इन्द्रो वज्री हिरण्ययः" इति छन्दोगाः। "हर्योर्यः सुते सचा वज्री रथो हिरण्ययः" इति बह्वृचाः॥ ७॥

१ २ २ २ १ २ २ १ २ २ २ १ २ ३२ ३ १
उभयꣳ शृणवच्च न इन्द्रो अर्वागिदं वचः। सत्रा-
१ १ २ २ १ २ ३ १ ३२ ३ १ २
च्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत्॥८

अथ अष्टमी। भर्गऋषिः। 'उभय' स्तोत्रात्मकं शस्त्रात्मकं चोभयविधम् 'इदं वचो' 'अर्वाग्' अस्मदभिमुखं 'इन्द्रः' 'शृणवत्' शृणोतु। श्रुत्वा च 'सत्राच्या' अस्माकं यज्ञं पूजयन्त्या 'धिया' युक्तः सन् 'मघवान्' धनवानिन्द्रः 'शविष्ठः' अतिशयेन बलवान् 'सोमपीतये' सोमपानाय 'आगमत्' आगच्छतु।

"मघवान्" "मघवा" इति च पाठौ॥ ८॥

३ १ २ १ २ २ १२ ३ १ २
महे च न त्वाद्रिवः परा शुल्काय दीयसे।
१ १ १ २ १ २ २र १ २ ३१ २
न सहस्राय नायुताय वज्रिवो न शताय शतामघ॥९

अथ नवमी। अस्याः परस्याश्च मेधातिथिमेध्यातिथी ऋषी। हे 'अद्रिवः' वज्रवन्निन्द्र। च नेति निपातद्वयसमुदायो विभज्य योजनीयः 'महे च' महतेऽपि 'शुल्काय' मूल्याय नाहं त्वां 'परादीयसे' न विक्रीणामि ददातेरुत्तमपुरुषस्य कर्मण्येव व्यत्ययेन रूपम्।

"परा शुल्काय देयाम्" इति बह्वृचा आमनन्ति ।

हे 'वज्रिवः !' वज्रहस्तेन्द्र ! 'सहस्राय' सहस्रसङ्ख्याकाय धनाय 'च न' 'परादीयसे' 'अयुताय' दशसहस्राय शुल्काय न परादीयसे । हे 'शतामघ !' बहुधनेन्द्र ! 'शताय' बहुनामैतत् अपरिमिताय धनाय च न परादीयसे न विक्रीणामि । उक्तसंख्याकाद्धनादपि त्वां न परित्यजामि । किन्तु बहुभिर्हविभिः परिचरामीत्यर्थः ॥ ९ ॥

१ २    ३ १ २ ३ २उ   ३ १ २    ३ १

वस्याᳬ इन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः । माता

२    ३ १ २   ३ १ २ ३ १ २

च मे छदयथः समा वसो वसुत्वनाय राधसे ॥१०॥

इति तृतीयप्रपाठकस्य द्वितीयार्द्धे षष्ठम दशतिः ।

---

अथ दशमी । हे 'इन्द्र' ! त्वं 'मे' मदीयात् 'पितुः' जनकादपि 'वस्याᳬ' वसीयान् वसुमत्तरोऽसि । 'उत' अपिच 'अभुञ्जतः' अपालयतो मम 'भ्रातुः' अपि त्वं वसीयानधिकोऽसि । हे 'वसो' ! वासकेन्द्र ! 'मे' मदीया 'माता च' त्वं च 'समासमा' समानौ सन्तौ पुमान् स्त्रियेति पुंसः शेषः 'छदयथः' अर्चतिकर्माय मां पूजितं कुरुथः । किमर्थम् ? 'वसुत्वनाय' व्यापनाय 'राधसे' धनाय च उभयोर्लाभायेत्यर्थः ॥१०॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य षष्ठः खण्डः ।

इति तृतीयः प्रपाठकः समाप्तः ।

[ अथ चतुर्थप्रपाठकस्य प्रथमार्द्धे प्रथम दशति ।

२१ २र २ १ २ ३ १ २ १
इम इन्द्राय सुन्विरे सोमासो दध्याशिरः । ताꣳ

२र १ २ ३ २ १ २ २ २ २ १
आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ ॥१॥

अथ सप्तमे खण्डे—सैषा प्रथमा । वसिष्ठ ऋषिः । हे 'वज्रहस्त !' 'दध्याशिरः' दधिमिश्रणाः 'इमे' 'सोमासः' सोमाः 'इन्द्राय' तुभ्यं 'सुन्विरे' सुता बभूवुः । 'तान्' सोमान् 'मदाय' मदार्थं 'पीतये' पानाय 'ओकः' यज्ञसदनम् 'आ' अभि 'हरिभ्याम्' अश्वाभ्याम् 'आयाहि' आगच्छ ॥ १ ॥

३१ २३ १२ ३ १२ २ १ २
इम इन्द्र मदाय ते सोमाश्चिकित्र उक्थिनः ।

१२ ३१ २र ३ १२ २ १२ ३ १ २
मधोः पपान उप नो गिरः शृणु रास्व स्तोत्राय गिर्वणः २

अथ द्वितीया । वामदेव ऋषिः । हे 'इन्द्र !' 'ते' तव मदाय 'मदार्थम्' 'उक्थिनः' स्तोत्रयुक्ताः 'इमे' सोमाः 'चिकित्रे' ज्ञायन्ते इष्यन्ते कित ज्ञाने । कर्मणि लिट् । इरयोरे इति रे इत्यादेशः किञ्च । 'मधोः' मदकरस्य कर्मणि षष्ठी मदकरसोमं 'पपानः' चल्वर्थं पिबन् अस्माकं 'गिरः' स्तोत्ररूपा वाचः 'उपशृणु' सम्यक् शृणु । 'गिर्वणो' गोर्भिर्वननीय ! हे 'इन्द्र !' स्तोत्राय स्तोत्रकर्त्रे मह्यं 'रास्व' अभीष्टं देहि ॥ २ ॥

२ २ १ २ ३ १ २ ३१ २ ३ १ २
आ त्वा३द्य सवर्दुघाꣳ हुवे गायत्रवेपसम् ।

१ २ ३ २ ३ २ ३ २ ३ २ ३ २ ३ ३ १ २ ३ १ २
इन्द्र धेनुꣳ सुदुघामन्यामिषमुरुधारामरं कृतम्॥३

अथ तृतीया। मेधातिथिमेध्यातिथी ऋषी। एके विश्वामित्र इत्याहुः। अनयेन्द्रं धेनुरूपेण हस्तिरूपेण च निरूपयन् स्तौति। 'अथ' इदानीं 'धेनुं' धेनुरूपमिन्द्रं 'तु' चिप्रं 'आहुये' आह्वये। कीदृशीं धेनुम्? 'सवर्दुघां पयसोदोग्ध्रीं' 'गायत्रवेपसं प्रशस्यवेगाम्। 'सुदुघां' सुखेन दोग्धुं शक्याम्। 'अन्यां' उक्तविलक्षणाम् 'उरुधारां' बहुदकधाराम् 'इषम्' एषणीयां हस्तिं लिङ्गव्यत्ययः एतद्रूपेण वर्त्तमानम्। 'अरङ्कृतं' अलङ्कर्त्तारं पर्याप्तकारिणं वेन्द्रं चाह्वये॥ ३॥

१ २ ३ १ २ १ २ २ १ २ ३ १ २ १
न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीड़वः। यच्छिक्षसि स्तुवते मावते वसु न किष्टदा मिनाति ते ॥४॥

अथ चतुर्थी। नोधा ऋषिः। हे इन्द्र! 'बृहन्तो' बलेन महान्तः अतएव 'वीड़वः'। 'यच्छिक्षसि' 'स्तुवते' 'मावते' सर्वतो दृढ़ा अपि 'अद्रयः' पर्वताः 'त्वा' त्वां 'न वरन्ते' बलेन न निवारयन्ति। अनिवारणमेवोत्तरार्द्धेन विवृणोति—'स्तुवते' त्वद्विषयं, स्तोत्रं कुर्वते 'मावते' मत्सदृशाय माहशाय स्तोत्रे यद् 'वसु' धनं 'शिक्षसि' ददासि। ते तव तदेतद्धनं 'नकि' न कश्चित् 'आ मिनाति' आभिमुख्येन हिनस्ति। मीञ्‌हिंसायाम्। मीनातेर्निगमे (७,३,८१) इति ह्रस्वः। मावते। युष्मदस्मदोः सादृश्ये मतुब्वाच्य (५,१,६१) इति मतुप्।

"शिक्षसि" "दित्ससि" इति च पाठौ॥ ४॥

१ २ २ ३उ १ १ २ ३ १ २र
क ईं वेद सुते सचा पिबन्तं कद्वयो दधे।

२१ २र ३१ २र, ३२ ३१२
घायं यः पुरो विभिनत्योजसा मन्दानः शिप्र्यन्धसः ॥५॥

अथ पञ्चमी। मेधातिथिर्ऋषिः। 'सुते' अभिषुते सोमे 'सचा' ऋत्विग्भिः सह सोमं 'पिबन्तम्' एनमिन्द्रं 'कोवेद' वेत्ति न कोऽपि वेत्तीत्यर्थः। 'कः' किवा 'वयः' अन्नं 'दधे' धारयति। 'योऽयम्' इन्द्रः 'शिप्री' हनुमान् 'अन्धसः' सोमेन 'मन्दानः' मन्दमानः 'ओजसा' बलेन 'पुरो विभिनत्ति' ॥ ५ ॥

१२ ३ १२ ३२ ३ १२ १२३१ २
यदिन्द्र शासो अव्रतं च्यावया सदसस्परि।
३१ २३ १२ ३१२३२३ १२
अस्माकमꣳशुं मघवन् पुरुस्पृहं वसव्ये अधि बर्हय ६

अथ षष्ठी। अस्याः परस्याश्च वामदेव ऋषिः। हे 'इन्द्र'। 'यद्' यस्मात् कारणात् 'शासः' शिक्षणीयानां यज्ञविरोधिनां शिक्षकस्त्वं तस्मात् कारणात् 'सदसः' अस्मद् यागगृहस्य 'परि' परितो वर्त्तमानम् 'अव्रतम्' अकर्माणं यागविरोधिनमित्यर्थः। 'च्यावय' दूरं निःसारय। अपिच— हे 'मघवन्!' धनवन्निन्द्र! 'पुरुस्पृहं' बहुभिः स्पृहणीयम् 'अस्माकम्' अस्मदीयम् 'अंशुं' सोमं 'वसव्ये' वस्तव्ये निवासयोग्ये स्थाने 'अधि बर्हय' अधिकं वर्द्धय। यज्ञगृहे यागविरोधिनो राक्षसादीन्निःसार्य्य सोमं प्रवर्द्धयेत्यर्थः ॥ ६ ॥

१२ ३ २३ १२ ३१२ १२३१ २
त्वष्टा नो दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः।
२१ २र३१२ ३१ २ ३२३१ २३ १२
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रामणं वचः ॥७

अथ सप्तमी। 'त्वष्टा' एतत्सञ्ज्ञको रूपाभिमानी देवः 'नः' अस्मदीयं 'वचः' पातु। 'ब्रह्मणस्पतिः' एतत्सञ्ज्ञको मन्त्राभिमानी देवः अस्मदीयं वचः पातु। किञ्च। 'अदितिर्' अखण्डनीया अदीना वा एतन्नाम्नी देवमाता च 'पुत्रेभिः' स्वकीयैः सहिता 'नः' अस्माकं सम्बन्धि 'दुस्तरं' वर्म विरोधिभिस्तरीतुमशक्यं 'त्रामणं' रक्षणीयं 'वचः' पातु ॥ ७ ॥

१२ ३१ २ ३१२ ३ १२ ३ १२
कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे।
२३ १ २२ १२ ३७ ३ १ २ ३ १२
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ॥८॥

अथ अष्टमी। वालखिल्या ऋषयः। हे 'इन्द्र!' त्वं 'कदाचन' कदाचिदपि 'स्तरीः' हिंसको 'नासि'। यद्वा। स्तरीर्निवृत्तप्रसवा गौः तथाविधो न भवसि। सा यथा वत्साभावात् गृहं प्रति नागच्छति न तथा करोषीत्यर्थः। किन्तु, "दाशुषे" हविर्दाते यजमानाय 'सश्चसि' सङ्गच्छसे अस्मान्। हे 'मघवन्!' धनवन्निन्द्र! 'देवस्य' द्योतनादिगुणकस्य तव भूयः प्रभूतं दानम् 'उपोपेत् पृच्यते' अपर उपशब्दः पूरणः उपपृच्यत एव अस्माभिः सम्पृच्यत इत्यर्थः ॥ ८ ॥

३ १ २२ ३ १ २ ३ १ २
युंक्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः।
३ १ २ ३,१ २ ३२ ३ २ ३ १ २
अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि९

अथ नवमी। मेध्यातिथिर्मेध्यातिथिर्वा ऋषिः। हे 'वृत्रह-

-न्तम!' वृत्रं हतवान् वृत्रहा अतिशयेन वृत्रं हतवान् वृत्रहन्तमः यथा पुनर्नोत्तिष्ठति तथा हतवानित्यर्थः अनो नुट् (पा०८,२,१६) इति तमपो नुट्। हे तादृशेन्द्र! 'हरी' त्वदीयावश्वौ 'युङ्क्ष्व' हिरवधारणे आत्मीये रथे योजयैव। हे 'मघवन्!' धनवन्! 'उग्रः' उद्गूर्णबलस्त्वं 'सोमपीतये' सोमस्य पानार्थं दासी-भारादित्वात्पूर्वपदप्रकृतिस्वर॰ म् 'अर्वाचीनो' ऽस्मदभिमुखः 'ऋष्वेभिः' ऋष्वैर्दर्शनीयैः 'मरुद्भिः' सार्द्धं 'परावतः' दूरनामैतत् दूरे वर्त्तमानात् द्युलोकात् 'आगहि' आगच्छ ॥ ९ ॥

२ ३ १ ३१ २ ३ १ २
त्वामिदा ह्यो नरोऽपीप्यन् वज्रिन् भूर्णयः।
१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि॥१०॥

इति चतुर्थप्रपाठकस्य प्रथमार्द्धे प्रथम दशतिः।

---

अथ दशमी। नृमेध ऋषिः। हे 'वज्रिन्!' इन्द्र! यं त्वां 'भूर्णयो' हविर्भरणशीला 'नरः' कर्मणां नेतारो यजमानाः 'इदा' अद्य 'ह्यः' पूर्वेद्युश्च 'अपीप्यन्' सोममपाययन्। हे इन्द्र! स त्वं 'स्तोमवाहसः' षष्ठ्यर्थे प्रथमा स्तोमवाहसां स्तोत्रवाहकानामस्माकं स्तोत्रम् 'इह' यज्ञे 'श्रुधि' शृणु 'स्वसरं' गृहं च। दुर्याः स्वसराणीति (नै० ३,४,१०) गृहनामसु पाठात् 'उपागहि' उपागच्छ ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य सप्तमः खण्डः।

---

अथ चतुर्थप्रपाठकस्य प्रथमार्द्धे द्वितीय दशति ।

२ २　१　१ २　१ १　३ २　३ २　१ २
प्रत्यु अदर्श्यायत्यू३च्छन्ती दुहिता दिवः । अपो

२ ३ २ ३ १ २ ३ २३ १ २　३ १ १
मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी॥१॥

अथ अष्टमे खण्डे—सैषा प्रथमा । इयोर्वसिष्ठ ऋषिः । 'आयती' आगच्छन्ती 'उच्छन्ती' तमांसि विवासयन्ती वर्जयन्ती 'दिवो' द्युलोकस्य सूर्य्यस्य वा 'दुहिता' पुत्री एवम्भूता उषाः 'मत्यदर्शि' सर्व्वैः प्रतिदृश्यते 'उ' इति पूरणः सैषा 'मही' महती । यद्वा मही महत्तमो नैश तमोऽन्धकारं अप उ इति निपातद्वयसमुदायः । अपेतस्यार्थे 'अपोवृणुते' अपवृणोति । कथं ? 'चक्षुषा' दर्शनेन । एवं कृत्वा 'सूनरी' । जनानां सुष्ठु नेत्री 'उषा' 'ज्योतिः' प्रकाशं 'कृणोति' करोति ।

"अपो मही वृणुते चक्षुषा" इति छन्दोगाः । "अपो महि व्ययति चक्षसे" इति बह्वृचाः ॥ १ ॥

३ १ १　२ २　१ २　२ १ २
इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।

३ १ २ ३ १ २　२ १ २　३ १ २र
अयं वामह्वेऽवसे शचीवसू विशंविशꣳ हि गच्छथः॥२

अथ द्वितीया । 'इमा' 'दिविष्टय' दिवमिच्छन्त्य' प्रजाः ऋत्विजोऽपि उ इति चार्थे । हे 'अश्विना' अश्विनौ ! उस्रौ । वासकौ । 'वां' युवां 'हवन्ते' आह्वयन्ति । अयमप्य वसिष्ठोऽपि हे 'शचीवसू' कर्म्मधनौ । 'वां' युवां 'अवसे' ऽस्मद्रक्षणाय युवयोस्तर्पणाय वा 'अह्वे' आह्वयामि । किमर्थमेव प्रजामध्यहमपीत्यादरोक्तिरिति तत्राह । 'विशंविशं हि

गच्छथः' हि यस्मात् सर्वाः स्तुतिकर्त्रीः प्रजाः प्रति युवां गच्छथः खलु, तस्मादेवमुच्यत इति ॥ २ ॥

२ ३ १ २ ३ १ २ ३ १ २
कु ष्ठः को वामश्विना तपानो देवा मर्त्यः ।
३ १ २ ३ १ ३२ ३ २ ३ २३ २ ३ ३१
घ्नता वामश्रया चपमाणोऽꣳशुनेत्थमु आद्वन् यथा॥३

अथ तृतीया। अश्विनौ वैवस्वताहयौ। 'अश्विना'। अश्विनौ! हे देवा! देवौ द्योतमानौ! 'वां' युवां 'कुष्ठः' कौ पृथिव्यां वर्त्तमानः 'को' मर्त्यः मरणधर्मा मनुष्यः स्तोता 'तपान.' तापनः प्रकाशको भवति इति शेषः। न कश्चिच्छ क्नुयादित्यर्थः। 'वां' युवयोरर्थाय 'अश्रया' अश्मशब्दाद्विसो यादेशः व्यासैरभिषवसाधनैरश्मभिः 'घ्नता' हन्यमानेन अभि-षूयमाणेन 'अंशुना' सोमेन। यदा। अस्माभिरभिषुतेन 'घ्नता' युवामभिगच्छता 'अंशुना' सोमेन 'चयमाणः' श्रीय-माणो यजमान. 'इत्थम्' इत्थमेव भवति अत्यन्त समृद्धो भवतीत्यर्थः। 'आद्वन्' यथा अभिमतान्नरसादिभक्षवान् राजादिरिव। स यथा प्रहृष्टो दृष्टान्तविषयो भवति तद्वद-मपि भवतीत्यर्थः॥ ३ ॥

३२ ३ १ २ ३ २७ ३ १ २
अयं वां मधुमत्तमः सुतः सोमो दिविष्टिषु ।
३ १ ३ १ २ ३ १ ३२ ३ १ २
तमश्विना पिवतं तिरोअह्न्यं धत्तꣳ रत्नानि दाशुषे४

अथ चतुर्थी। प्रस्कण्व ऋषिः। हे 'अश्विना!' अश्विनौ! 'वां' युवयोः 'दिविष्टिषु' दिवमयणेषु यज्ञेषु 'अयं' पुरोवर्त्ती

सोमः 'सुतो' अभिषुतः। कीदृशः? 'मधुमत्तमः।' अतिशयेन माधुर्य्यवान्। 'तिरो अह्नं' तिरोभूते पूर्वस्मिन्दिनेऽभिषुतं तं सोमं 'पिबन्तं'। 'दाशुषे' हविर्दत्तवते यजमानाय 'रत्नानि रमणीयानि धनानि 'धत्त' प्रयच्छतम्।

"दिविष्टिषु" "अरतावृधे" इति च पाठौ ॥ ४ ॥

१ २ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
आ त्वा सोमस्य गल्दया सदा याचन्नहं ज्या।

१ २ ३ १ २र ३ १ २र ३ १ २
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥५

अथ पञ्चमी। मेधातिथिमेध्यातिथ्योरार्षम्। हे 'इन्द्र!' 'त्वा' त्वां 'सवनेषु' यज्ञेषु 'सोमस्य' 'गल्दया' गालनेन आस्रावणेन। 'ज्या' जयशीलया स्तुत्या च अतएव गिरेति बह्वृचाः पठन्ति तया युक्तः 'अहं' 'सदा' सर्वदा 'याचन्' याचमानः सन् 'आचुक्रुध' मा चुक्रुधं क्रुधमपनयामि आ इति प्रतिषेधार्थः, निपातानामनेकार्थत्वात्। अतएव बह्वृचाः माल्वेत्यामनन्ति बहुशो याच्यमाने त्वयि क्रोधो जायते तं सोमगालनेन स्तुत्या चापनयामीत्यर्थः। कीदृशं त्वां 'भूर्णिं' भर्त्तारं 'मृगं न' सिंहमिव भीमं स्वामिनः इन्द्रस्य याचने लौकिकं न्यायं दर्शयति लोके को वा पुरुषः 'ईशानम्' ईश्वरं स्वामिनं न 'याचिषत्' न याचेत सर्व एव हि याचते। अतोऽहमपि त्वां स्वामिनं याचे इति भावः ॥ ५ ॥

१ २ ३ २ ३ २उ ३ १ २
अध्वर्यो द्रावया त्वꣳ सोममिन्द्रः पिपासति।

१२ ३१ २ ३ १२२ ३१ १ २ ३ २
उपो नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ॥६

अथ षष्ठी। देवातिथिर्ऋषिः। हे 'अध्वर्यो!' अध्वरस्य नेतस्त्वं 'सोमं' द्रावय उत्तरवेदिलक्षणं स्थानं प्रापय। यद्वा। रसात्मना द्रवणशीलं कुरु। अभिषुणिवत्यर्थः। किं कारणमिति चेत् 'इन्द्रः' 'पिपासति' सोमं पातुमिच्छति त्वयैतत् कथमवगतमिति चेत्तत्राह 'वृषणा' वर्षितारौ युवानौ वा। 'हरी' अश्वौ 'नूनं' अद्य 'उपो युयुजे' उपगम्यैव सारथिर्योजितवान् रथे। 'वृत्रहा' वृत्रस्य हन्ता इन्द्रः 'आ जगाम' आगतवान्॥

"उपोनून" "उपनूनम्" इति पाठौ॥६॥

२१ ३१२ २३१ २३ १२
अभी षतस्तदा भरेन्द्र ज्यायः कनीयसः।
३ १२३१२ ३१ २३ १२ ३ १२
पुरूवसुर्हि मघवन् बभूविथ भरेभरे च हव्यः॥७॥

अथ सप्तमी। श्यावेमिठ ऋषिः। हे 'ज्याय!' ज्यायन्निन्द्र। 'आमन्त्रितं' पूर्वमविद्यमानवदितीन्द्रपदस्य विद्यमानवद्भावात् ज्याय इत्यस्य सर्वानुदात्तत्वाभावः। नकारस्य रुत्वं व्यत्ययेन नुमभावो वा 'कनीयसः' मत्तः सम 'तत्' प्रसिद्धं धनम्। 'अभ्याभर' अभ्याहर। हे 'मघवन्!' धनवन्निन्द्र! 'पुरूवसुः' बहुभिर्जननीयो 'बभूविथ' असि। 'भरे भरे' संग्रामे 'च' 'हव्यो' होतव्यश्च बभूविथ॥

"मघवन् बभूविथ" इति छन्दोगाः। "मघवत्सनादसि" इति यजुर्वचाः॥७॥

१ २ ३ १ २३ २ ३१ ३ २ १ ३१
यदिन्द्र यावतस्त्वमेतावदहमीशीय।

१ २ ३ १ २   ३ १ २ ३ १ २
स्तोतारमिद्दधिषे रदावसो न पापत्वाय रंसिषम्॥८

अथ अष्टमी। हे 'इन्द्र!' 'यद्' यतो 'यावतो' धनस्य ईशिषे' 'एतावत्' यछ्रालुक् एतावतो धनस्य 'अहमीशीय' ईश्वरो भवेयम्। हे 'रदावसो!' रदति ददाति वसूनीति रदवसुः तादृश हे इन्द्र! ततोऽहमस्मदीयं 'स्तोतारम्' 'इत् दधिषे' धनप्रदानेन धारयेयमेव। 'पापत्वाय' चौणत्वाय 'न रंसिषं न दद्याम्।

"स्तोतारमिद्दधिषेरदावसोनपापत्वायरंसिषम्" इति छन्दोगाः। "दिधिषेयरदावसोनपापत्वायरासीय" इति बह्वृचाः॥ ८॥

१ २ ३ १२ ३ १   २र   ३ १ २
त्वमिन्द्र प्रतूर्त्तिष्वभि विश्वा असि स्पृधः।

३   १ २ ३ १ २ ३१ २ ३ १ २   ३ २
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य्य तरुष्यतः॥९॥

अथ नवमी। नृमेध ऋषिः। हे 'इन्द्र!' 'त्वं' 'प्रतूर्त्तिषु' सङ्ग्रामेषु 'विश्वाः' सर्वाः 'स्पृधो' युद्धकारिणीः शत्रुसेनाः 'अभ्यसि' अभिभवसि किञ्च। हे 'तूर्य्य!' शत्रूणां बाधक इन्द्र! त्वम् 'अशस्तिहा' देवानामशस्तीनां हन्तासि। 'जनिता' असुरेभ्यः अशस्तीनां जनयिता चासि। 'वृत्रतूः' सर्वस्य शत्रुवर्गस्य हिंसिता चासि। 'तरुष्यतः' बाधकांश्च बाधमानोऽसि॥ ९॥

१ ३र २ ३ १   २र   ३ १   ३र ३ १ २
प्र यो रिरिक्ष ओजसा दिवः सदोभ्यस्परि।   न

२ ३ १ २ ३ १ २ ३ २ ३ १ २
त्वा विव्याच रज इन्द्र पार्थिवमति विश्वं ववक्षिथ १०

इति चतुर्थप्रपाठकस्य प्रथमार्द्धे द्वितीय दशतिः।

---

अथ दशमी। नोधा ऋषिः। हे 'इन्द्र!' यस्त्वं 'दिवो' द्युलोकस्य 'सदोभ्यः' स्थानेभ्यः परिपर्यन्तेभ्यः 'ओजसा' बलेनैव 'प्र रिरिचे' प्रकर्षेणातिरिक्तो भवसि रिचेर्लिटि बहुलच्छन्दसीति श्नुः। प्रत्ययस्वरः चित्त्व। हे इन्द्र! 'पार्थिव' पृथिव्यां भवं 'रजो' लोकः 'त्वा' त्वां महता स्व शरीरेण 'न विव्याच' न व्याप्नोति द्यावापृथिवीभ्यामपि स्वतः स त्वं बलेन समर्थो ऽसीत्यर्थः एवम्भूतः सन् त्वम् अस्मात् 'विश्वम्' 'अति' अतिक्रम्य 'ववक्षिथ'। वोढुमिच्छ वहेः सनन्तस्य छान्दसेलिटि रूपं मन्त्वत्वादाममभावः॥ १०॥

असाविदेवमेकोनत्रिंशत्तासु प्रवोमहे।
त्रिपदोत्तविराडन्यास्त्रिष्टुभोऽष्टोर्ध्वं विंशतिः।
ऐन्द्रीषु तासु तार्क्ष्यस्य स्तुतिरेका त्यमुष्विति।
पर्वतेन सहेन्द्रस्य गौरिन्द्रापर्वतेत्यपि॥

इति सायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य अष्टम खण्डः।

इति बार्हतमैन्द्रम्।

---

अथ चतुर्थप्रपाठकस्य प्रथमार्द्धे तृतीय दशति ।

१ २　　२ १　　२र　　२ २ ३क
असावि देवं गोऋजीकमन्धो

२र　२　१　२　　२ १ २
न्यस्मिन्निन्द्रो जनुषेमुवोच ।

१ २　　　　　　　　　　२ १
बोधामसि त्वा हर्य्यश्व यज्ञै-

२र　२　१　२ १ २　३　१ २
र्बोधा न स्तोममन्धसो मदेषु ॥ १ ॥

तत्र नवमखण्डे—सैषा प्रथमा। द्वयोर्वसिष्ठ ऋषिः। 'देवं' दीप्तं 'गो ऋजीकं' गोभिः सस्क्रतं गव्येन मिश्रित मित्यर्थः। 'अन्धः' सोमरूपमन्नम् 'असावि' अभिषुतम्। 'ईम्' अयम् 'इन्द्रः' 'अस्मिन्' अभिषुते सोमरूपेऽन्धसि 'जनुषा' स्वभावत एव 'न्युवोच' नितरा सङ्गतो भवति उच समवाये अथ प्रत्यक्षस्तुतिः हे 'हर्य्यश्व!' 'त्वा' त्वां 'यज्ञैः' स्तोत्रैः हविर्भिर्वा 'बोधामसि' बोधयामः। 'अन्धसः' सोमस्य 'मदेषु' 'नो' ऽस्माकं 'स्तोमं' स्तोत्रं 'बोध' बुध्यस्व च ॥ १ ॥

१　२　　　२ १ १　　　　　२
योनिष्ट इन्द्र सदने अकारि

१　　　२र　　　　२　१　२
तमा नृभिः पुरुहूत प्र याहि ।

२ २　१ २　　　२ १　२ २ २
असो यथा नोऽविता वृधश्चिद्

२१ १२ २१२२ १२
ददो वसूनि ममदश्च सोमैः ॥ २ ॥

अथ द्वितीया। हे 'इन्द्र!' 'ते' तव 'मदने' मदनार्थं 'योनिः' स्थानम् 'अकारि'। हे पुरुहूत। बहुभिराहूतेन्द्र। 'नृभिः' नेतृभिर्मरुद्भिः सार्द्धं 'तं' योनिम् 'आ प्रयाहि'। 'नो'ऽस्माकं 'यथा' अविता रक्षिता 'असः' भवसि। नोऽस्माकं 'वृधयित्' वृधे वर्द्धनाय चास। "वृधे च" इति बह्वृचा.। तथा 'वसूनि' 'ददः' ऽस्मभ्यं देहि। अस्मदीयैः 'सोमैः' 'ममदो' मादय त्वं च ॥ २ ॥

१२३१२१२२ २उ २
अदर्दरुत्समसृजो वि खानि
१२३१ २ ३१ २
त्वमर्णवान् बद्बधानाᳬ अरम्णाः।
३१ २ २ १२१ २उ
महान्तमिन्द्र पर्वतं वि यद्वः
२२उ २ ३२ ३२ ३२
सृजद्धारा अव यद्दानवान् हन् ॥ ३ ॥

अथ तृतीया। गातुरृषिः। हे 'इन्द्र!' 'त्वम्' 'उत्सम्' उत्स्यन्दमानं मेघं 'अदर्दः' विदारितवानसि। तदनन्तरं 'खानि' मेघस्योदकनिर्गमनद्वाराणि 'व्यसृजः' विशेषेण सृष्टवानसि। किञ्च। 'बद्बधानान्' बाधमानान् 'अर्णवान्' उदकवतो मेघान् 'अरम्णाः' विसर्जयसि चारयसीत्यर्थः अत्र रम्णातिर्विसर्जनकर्मा हे इन्द्र! 'यत्' यस्त्वं यदिति लिङ्गव्यत्ययः 'महान्तं' प्रभूतं 'पर्वतं' मेघं विहतवानसि। 'धाराः' अपां 'वि सृजत्' व्यसृजः विसर्जितवानसि। 'यद्' यदा

'दानवान्' दनोः पुत्रान्। यद्वा। उदकस्य दातॄन् मेघान् 'अवहन्' अभिहतवानसि। अत्र निरुक्तम् 'अद्रणा उत्सुत्स उत्सरणादोत्सदनादोत्स्यन्दनाद्दोनत्तेर्वास्यात्व्यसृजोऽस्य खानि त्वमर्णवानर्णस्वत एतान् इत्यादि।

"वियद्वः सृजद्वारा अवयद्दानवान्" "वियद्वः स्वजोविधारा अवदानवं हन् इति च पाठौ ॥ ३ ॥

सुष्वाणास इन्द्र स्तुमसि त्वा
सनिष्यन्तश्चित्तुविनृम्ण वाजम् ।
आ नो भर सुवितं यस्य को-
ना तना त्मना सह्याम त्वोताः ॥ ४ ॥

अथ चतुर्थी। पृथुर्वैनऋषिः। हे 'इन्द्र !' सुष्वाणासः' सोममभिषुतवन्तो वयं 'त्वा' त्वां 'स्तुमसि' स्तुमः। हे 'तुविनृम्ण !' बहुबल बहुधन वा इन्द्र ! 'वाजं' चरुपुरोडाशादिलक्षणमन्नं 'सनिष्यन्तः' दत्तवन्तः सम्भक्तवन्तो वा वयं त्वां स्तुमः। यत एवम् अतो हेतोः 'नो' ऽस्मभ्यं 'सुवितं' सुष्ठु प्राप्तव्यं शोभनं धनम् 'आभर' आहर प्रयच्छ। यद्वा 'यस्य' यद्धनमतिप्रियत्वेन 'कोना' कनीः कान्तिकर्मण इदं रूपम्। पचाद्यच्। अकारस्य व्यत्ययेन ओकारः। प्रथमैकवचनस्याकारः कामयमानो भवसि तद्धनमाभरेत्यर्थः। वयं च 'त्वोताः' त्वया रक्षिताः सन्तः। 'तना' धननामैतत् विस्तृतानि धनानि 'त्मना' आत्मना स्वयमेव अन्यैरपेक्षयैव 'सह्याम' सह

अभिभवे। धातूनामनेकार्थत्वात् लभ्रसादाद्मभिमद्दि।

"सनिष्यन्तश्चित्तुविनृमृणवाजम्" इति छन्दोगाः। "ससवांसश्चतुविनृमृणवाजम्" इति बह्वृचाः।

"कोनातनाकनासद्याम" "चाकनृतसगातनासनुयाम" इति पाठौ ॥ ४ ॥

२　२　३　१　२　　　३　१२
जगृह्मा ते दक्षिणमिन्द्र हस्तं

२ १ २　　　　३ १ २
वसूयवो वसुपते वसूनाम्।

३　२उ　　　३　१ २　　　　२　१　२
विद्मा हि त्वा गोपतिं शूर गोना-

३ १ २ ३ १　३र　　　३ १ २
मस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ५ ॥

अथ पञ्चमी। सप्तगुऋषिः। हे 'वसुपते!' वसूनां धनानां स्वामिन्! इन्द्र! 'ते' तव 'दक्षिणं' हस्तं 'वसूयवो' धनकामा वयं 'जगृह्म' गृह्णीमः। यथा बहुप्रदस्यार्थिनोऽप्रदत्वा न गन्तव्यमिति हस्तं गृह्णन्ति तद्वत् हे 'शूर'! विक्रान्तेन्द्र! 'त्वा' त्वां 'गोपतिम्' अत्र हस्तग्रहणेभ्यः स्वामित्वं बहुलं च प्रतिपाद्यते बह्वीनां गवां गोपतिं 'विद्म' जानीमः। अतोऽस्मभ्यं चित्रं' चायनीयं 'वृषणं' वर्षकं 'रयिं' धनं 'दाः' देहि ॥ ५ ॥

२ ३　१२ ३१ २　　　　३
इन्द्रं नरो नेमधिता हवन्ते

१　　३र ३१२३　२३२
यत्पार्य्या युनजते धियस्ताः।

२१ १२ २ १२ २ १ २
शूरो नृपाता श्रवसश्च काम

१ २र २ १ २ १ १ २
आ गोमति व्रजे भजा त्वं नः ॥ ६ ॥

अथ षष्ठी। वसिष्ठ ऋषिः। 'यद्' यदा 'पार्य्याः' युद्धे भरणनिमित्तभूतास्ताः प्रसिद्धाः 'धियः' कर्माणि 'युनजते' प्रयुज्यन्ते। तदा 'नरो' नेतारो 'यज्ञानां' संग्रामाणां वा 'नेमधिता' नेमधितौ यज्ञे सङ्ग्रामे वा यमिन्द्रं 'हवन्ते' ह्वयन्ति। हे 'इन्द्र!' स त्वं 'शूरः' 'नृपाता' नृणां सम्भक्ता च। 'श्रवसो' बलस्य अन्नस्य वा चकाने 'चकामे' काम्यमाने सति 'गोमति' गोयुते 'व्रजे' गोष्ठे 'नः' अस्मान् 'भज' भागिनः कुरु।

"श्रवसश्चकामे" "श्रवसश्चकाने" इति पाठौ ॥ ६ ॥

१ २ २ १ २र २ १ २
वयः सुपर्णा उप सेदुरिन्द्रं

२ १ २ २ १ २ २ १ २
प्रियमेधा ऋषयो नाधमानाः।

१ २ २ १ २ ३ २ २ १ २र
अप ध्वान्तमूर्णुहि पूर्धि चक्षु-

२ २ २ २ १ २ २ २
र्मुमुग्ध्या३स्मान्निधयेव बद्धान् ॥ ७ ॥

अथ सप्तमी। गौरिवीति ऋषिः। 'वयो' गन्तारः 'सुपर्णाः' सुपतनाः आदित्यरश्मयः 'इन्द्रम्' 'उपसेदुः' उपसन्ना अभवन्। कीदृशाः 'प्रियमेधाः' प्रिययज्ञाः 'ऋषयो' द्रष्टारः 'नाधमानाः' मन्त्रं याचमानाः याचनप्रकार उच्यते हे इन्द्र!

'ध्वान्तम्' अन्धकारम् 'अपोर्णु हि' परिहर 'अपध्वान्तमूर्णु' हीति येन तमसा प्रावृतो मन्येत तन्मनसा गच्छेदपहैवा-स्मात्तमुण्यते' इत्यैतरेयब्राह्मणमत्रानुसन्धेयम् 'पूर्धि' पूरय च 'चक्षुः' तेजय। 'मुमुग्धि' मोचय च 'अस्मान् निधयेव बद्धान्'। 'निधा पाश्या भवति' पाश्या पाशसमूहः। पाश-समूहेन बद्धान् यथा मुञ्चन्ति तद्वत्। अत्र 'वयो वेर्बहुवचनम्' इत्यादि निरुक्तं (४,३) द्रष्टव्यम् ॥ ७ ॥

१ २ १ २उ ३ १ २र
नाके सुपर्णमुप यत्पतन्तᳬ
१ २ २र ३ १ २
हृदा वेनन्तो अभ्यचक्षत त्वा।
१ २ ३ १ २ ३ २
हिरण्यपक्षं वरुणस्य दूतं
३ २ ३ १ २ ३ १ २ ३ २
यमस्य योनौ शकुनं भुरण्युम् ॥ ८ ॥

अथ अष्टमी। वेनोभार्गवऋषिः। दे० वेनः। हे 'वेन!' 'त्वा' त्वां 'हृदा' हृदयेन मनसा 'वेनन्तः' कामयमानाः स्तोतारः 'नाके' अन्तरिक्षे 'अभ्यचक्षत' अभि पश्यन्ति तदानीं त्वम् उपगच्छतीति शेषः। कथम्भूतं? 'सुपर्णं' शोभनपतनं 'पतन्तं' अन्तरिक्षे गच्छन्तम्। 'हिरण्यपक्षं' हिरण्मयाभ्यां पक्षाभ्यां युतम्। 'वरुणस्य' जलाभिमानिनो देवस्य 'दूतं' चारम्। 'यमस्य' नियामकस्य वैद्युताग्नेः 'योनौ' स्थाने अन्तरिक्षे 'शकुनं' पक्षिरूपेण वर्त्तमानम्। 'भुरण्युं' भर्त्तारं वृष्टिदाना-दिना सर्वस्य जगतः पोषकं भुरण् धारणपोषणयोः कण्ड्वादिः। मृगय्वादौणादिक उ प्रत्ययः ॥ ८ ॥

१२ २ १ २३१२३२ १
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि
२ ३ २ ३१ २ ३१ २
सीमतः सुरुचो वेन आवः ।
२ ३क २र ३१ २ ३२
स बुध्न्या उपमा अस्य विष्ठाः
३१२, २ ३१२ ३ १२
सतश्च योनिमसतश्च विवः ॥ ८ ॥

अथ नवमी। बृहस्पतिर्नकुलो वा ऋषिः। वेनो नाम कश्चित् कमनीयो गन्धर्वः। तथाच शाखान्तरे "वेनस्तत्पश्य-दित्यारभ्य गन्धर्वो नाम" इत्याम्नातम्।

स च "वेनः" "पुरस्तात्" पूर्वस्मिन् काले "जज्ञानम्" उत्पन्नम् 'अभिन्नं' वा 'ब्रह्म' ब्राह्मण-जातिरूपं 'प्रथमम्' आद्य-शरीरम्। अतोऽस्याः सर्वेहं श्यमानायाः 'सुरुचः' शोभनायाः कान्तेः 'आवः' रक्षितवान् वसुमित्यनुग्रहसूचकः कश्चिदनुकरणशब्दः तथाविधं शब्दं सुखेनाभिव्यञ्जयन्। ब्राह्मणशरीरं मत्वा कान्त्या योजितवानित्यर्थः। स वेनः 'बुध्न्या' मूलं अन्तरिक्षं वा बुध्नः, तत्र भवाः, अस्योपमाः एतदीयशरीरकान्तिसदृशाः, आदित्यप्रकाशादिरूपाः कान्तीः 'विष्ठाः' विशेषेण स्थापितवान् तथा 'सतश्च' इदानीं विद्य-मानस्य च 'असतश्च' भविष्यद्रूपस्येदानीमविद्यमानस्य च 'योनिम्' उत्पत्तिकारणं निवासस्थानं वा 'विवः' विवृतवान् निष्पादितवानित्यर्थः ॥ ८ ॥

१२ ३१२ ३१
अपूर्व्या पुरुतमान् यस्मै महे

२ १ २ ३ १ २ ३ १ २
वीराय तवसे तुराय ।
२ १ २ ३ २ ३ १ २ ३
विरप्शिने वज्रिणे शन्तमानि
१ २ ३ १ २
वचाᳬस्यस्मै स्थविराय तक्षुः ॥ १० ॥

इति चतुर्थप्रपाठकस्य प्रथमार्द्धे तृतीय दशतिः ।

---

अथ दशमी। सुहोत्रऋषिः। दे० इन्द्रः। 'अपूर्व्या' अपूर्व्याणि पूर्वैरसतानि नूतनानि 'पुरुतमानि' बहुतमानि 'शन्तमानि' सुखतमानि 'वचांसि' स्तुतिरूपाणि वाक्यानि 'अस्मै' इन्द्राय 'तक्षुः' तक्षु तक्षति करोतीत्यर्थः। कुर्वन्ति स्तोतार इति शेषः। कीदृशाय ? 'महे' महते। 'वीराय' विविधशत्रूणां मारयित्रे। 'तवसे' तवस्विने बलवते। 'तुराय' त्वरमाणाय। 'विरप्शिने' विशेषेण स्तुत्याय 'वज्रिणे' वज्रवते। 'स्थविराय' प्रवृद्धाय ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्य नवम खण्डः ।

---

अथ चतुर्थप्रपाठकस्य प्रथमार्द्धे चतुर्थ दशतिः ।

१ २ ३ १ २ ३ १ २
अव द्रप्सो अᳬशुमतीमतिष्ठ-
३ २ ३ २ ३ १ २ ३ १ २
दीयानः कृष्णो दशभिः सहस्रैः ।

२ १ २उ १ २ २ १ २ ३ १ २ ३ १ ३
आवत्तमिन्द्रः शच्या धमन्तमप—

१ २ २ १ २ ३ २
स्नीहितिं नृमणा अधद्राः ॥ १ ॥

अथ दशमे खण्डे—सैषा प्रथमा। अस्याः परस्याश्च द्युतानऋषिः। अत्रेतिहासमाचक्षते, पुरा किल कृष्णो नामासुरः दशसहस्रसंख्याकैरसुरैः परिवृतः सन् अंशुमतीनामधेयाया नद्यास्तीरे अतिष्ठत्। तत्र तं कृष्ण मुदकमध्ये स्थितम् इन्द्रो बृहस्पतिना सहागच्छत्। आगत्य त कृष्ण तस्यानुचरांश्च बृहस्पति सहायो जघानेति केचिदन्यथा वदन्ति। तेषां कथाहेतु', द्रप्स इत्युदककणोऽभिधीयते। स तु सोमः द्रप्सश्चस्कन्देत्यादिषु सोमपरत्वेनोक्तत्वात्। एतत्पदमाश्रित्याहु',—

"अपक्रम्य तु देवेभ्यः सोमो वृत्रभयार्दितः।
नदीमंशुमतीं नाम अभ्यतिष्ठत् कुरु' प्रति।
तं बृहस्पतिनैकेन सोऽभ्ययात्तत्र वृत्रहा।
योत्स्यमानः सुसंहृष्टैर्मरुद्भिर्विविधायुधैः।
दृष्ट्वा तानागतान् सोमः स्वबलेन व्यवस्थितः।
मन्वानो वृत्रमायान्त जिघांसुमरिसेनया।
व्यवस्थितं धनुष्मन्त त मुवाच बृहस्पति ।
मरुत्पतिरयं सोम प्रेहि देवान् पुनर्विभो ।।
सोऽब्रवीन्नेति तं शक्रः स्वङ्ग एव बलाद्बली।
इन्द्राय देवमादाय त पुनर्दिविवत्पुरा।
जघ्नः पीत्वा च दैत्यानां समरे नवतीर्नव।
तदवद्रप्स इत्यस्मिन्नृचेषंत्र निगद्यते। एतदनार्षत्वेऽनादर·

थीयं भवति। एषोऽर्थः क्रमेण ऋचि वक्ष्यते। तथाचास्य ऋचोऽयमर्थः—

द्रप्सो द्रुतं सरति गच्छतीति 'द्रप्सः' पृषोदरादिः द्रुतं गच्छन् 'दशभिः सहस्रैः' दशसहस्रसङ्ख्याकैरसुरैः 'इयानः' इयमानः 'कृष्णः' एतन्नामकोऽसुरः अंशुमतीं नाम नदीम्। 'अवातिष्ठत्' अवतिष्ठते। ततः 'शच्या' स्वकर्मणा प्रज्ञानेन वा 'धमन्तम्' उदकस्यान्तश्चरन्तम्। यद्वा। जगद्गीतिकरं शब्दं कुर्वन्तं 'तं' कृष्णासुरम् 'इन्द्रो' मरुद्भिः सह 'आवत्' प्राप्नोत्। 'अध' अनन्तरं पर्यात् 'तं' कृष्णासुरं तस्यानुचरांश्च हतवान् इति वदति। 'नृमणाः' नृषु मनो यस्य सः। यद्वा। कर्मनेतृषु ऋत्विक्षु एकविधं मनो यस्य स तथोक्तः। तादृशो भूत्वा 'स्नीहितिं' स्नीहितिर्वधकर्मसु पठितः (नि० नै० २, १८) सर्वस्य हिंसित्रीं तस्य सेनाम् 'अपद्राः' द्रातिः कुत्सितगतिकर्मा। स इन्द्रः 'अपगमयत्' अवधीदित्यर्थः। तस्यानुचरान् हत्वा तम् द्रुतं गच्छन्तम् असुरं हतवानित्यभिप्रायः॥ १॥

२ १ २     २ १ २ १ २   ३<br>
वृत्रस्य त्वा श्वसथादीषमाणा<br>
१ २ ३ १   २   ३ १    ३२<br>
विश्वे देवा अजहुर्ये सखायः।<br>
३ १ २     ३ १ २ ३ २ ३ २उ<br>
मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा<br>
२   १ २<br>
विश्वाः पृतना जयासि॥ २॥

अथ द्वितीया। हे इन्द्र। तव ये 'विश्वेदेवाः' प्राक् सखायः संग्रामे मध्यित्वं कुर्यामिति मित्राण्यभवन्। ते सर्वे देवाः

'वृत्रस्य' वृत्रासुरस्य 'श्वसथात्' श्वसेरौणादिकोऽथप्रत्ययः। सर्वान् आगच्छतो दृष्ट्वा तेषां भीत्युत्पादनाय वृत्रासुरः श्वासमकार्षीत् श्वासाङ्गीताः सन्तः अतएव 'ईषमाणाः' सर्वतः पलायमानाः 'त्वा' त्वाम् 'अजहुः' संग्रामे त्यक्तवन्तः। एवं सति हे इन्द्र! 'मरुद्भिः' सह 'सख्यं' सखिभावः 'ते' तवास्तु। ये मरुतस्त्वां न परित्यजन्ति तैः सहेति। 'अथ' अनन्तरम् 'इमाः' विश्वाः सर्वाः 'पृतनाः' शत्रुसेनाः 'जयासि' स्वबलेनाभिभवसि अनेन वृत्रघ्नं तमिन्द्रमाह अत्र मन्त्रे 'इन्द्रो वै वृत्रं हनिष्यन्' इत्यादि (३,२,८) ऐतरेयब्राह्मणमनुसन्धेयम् ॥२॥

२ ३ १ २ ३ १     ३२     ३ १<br>
विधुं दद्राणं समने बहूनां

१९२   ३ २   ३ १   २<br>
युवानं सन्तं पलितो जगार।

२ ३ २   २   ३ २   ३ २उ<br>
देवस्य पश्य काव्यं महित्वाद्या

३ २ ३ १     ३२<br>
ममार स ह्यः समान ॥ ३ ॥

अथ तृतीया। बृहदुक्थऋषिः। अनया कालात्मक इन्द्रः स्तूयते, 'विधुं' विधातारं सर्वस्य युद्धादेः कर्त्तारं विपूर्वो दधातिः करोत्यर्थे तथा 'समने' अनन मनः प्राणन सम्यगननोपेते संग्रामे 'बहूनां' शत्रूणां 'दद्राणं' द्रावकम्। ईदृक्सामर्थ्योपेतमपि 'युवानं' सन्तं युवयम्। 'पलितोजगार' निगिरतीन्द्ररूपया। एवमुक्तलक्षणं वक्ष्यमाणलक्षणं च। 'देवस्य' कालात्मकस्येन्द्रस्य 'महित्वा' महत्वेनोपेतं 'काव्यं' सामर्थ्यं पश्य हे बृहदुक्थ! ऋषिः स्वात्मानमामन्त्र्य वदति,—तथा यो जरां

प्राप्तोऽद्य 'ममार' म्रियते 'स' 'ह्यः' परेद्युः 'समान' सम्यग् जीवसि पुनर्जन्मान्तरे प्रादुर्भवतीत्यर्थः ॥ ३ ॥

२ ३ २ ३ २ ३ १ २
त्वꣳ ह त्यत्सप्तभ्यो जायमानो-
३ १ २ ३ १ २
ऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।
३ १ २र ३ १ २र
गूढे द्यावापृथिवी अन्वविन्दो
२ ३ १ १ २ ३ १ २
विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥ ४ ॥

अथ चतुर्थी। द्युतानऋषिः। हे 'इन्द्र!' 'त्वं ह' त्वं खलु 'त्यत्' तदेतत् कर्म कृतवानसि। किं तदुच्यते? 'जायमानः' त्वं प्रादुर्भवन्नेव 'अशत्रुभ्यः' शत्रुरहितेभ्यः 'सप्तभ्यः' कृष्णादि नमुचि शम्बरादिभ्यः सप्तभ्यो बलवद्भ्यः प्राणिभ्यः 'शत्रुः' 'अभवः' यद्वा सप्तभ्यः पूर्व्यः शत्रुः शासयिता दारयिता अभवः सप्त यत्पुरः शर्म शारदीर्दर्त् (ऋ०म०२,४,१६,२) इति हि निगमः अथवा सप्तभ्य.सप्त होत्रप्रभृतयो होत्रकाः, तदर्थं यज्ञेषु प्रादुर्भवन्नेव कर्मविघ्नकारिभ्यः शत्रुरभवः। किञ्च, हे इन्द्र! त्वं 'गूढे' संवृते द्यावापृथिव्यौ सूर्य्यात्मना प्रकाश्य अनुक्रमेण ते 'अविन्दः' अलभथाः तथा 'विभुमद्भ्यो' महत्त्वयुक्तेभ्यः 'भुवनेभ्यो' लोकेभ्यः 'रणं' रमणं 'धाः' धारयसि विदधासीत्यर्थः ॥ ४ ॥

३ १ २र ३ १ २ ३ १ २
मेडिं न त्वा वज्रिणं भृष्टिमन्तं
३ १ २ ३ २ ३ १ २
पुरुधस्मानं वृषभꣳ स्थिरप्स्नुम् ।

३ २उ १ २ १ २ ३ १ २र
करोष्यर्य्यस्तरुषीर्दुवस्युरिन्द्र
३ १ २ ३ १ २
द्युक्षं वृत्रहणं गृणीषे ॥ ५ ॥

अथ पञ्चमी। वामदेव ऋषिः। हे 'इन्द्र'! 'दुवस्युः' दुवः परिचरणं स्तुत्यादिलक्षणं तदिच्छुस्त्वं यतः 'अर्य्यः' अरीन् त्वद्विरोधिनः 'तरुषीः' तारकान् जेतॄनस्मान् करोषि यद्वा। तरुषीः तरणस्वभावान्। पक्षद्वयेऽपि लिङ्गव्यत्ययः। अर्य्यः अरीनस्माकं शत्रून् करोषि उपजीव्यानिति शेषः। अतः 'मेळिं न' मेळिरिति वाङ्नाम (नि०१,११,१९) माध्यमिकीं वृष्टिप्रदां वाचमिव तां यथा वृष्ट्यर्थं स्तुवन्ति तद्वत् 'त्वा' त्वां 'गृणीषे' स्तोत्रमुच्चारयामि स्तौमि कीदृशं त्वां? 'वृत्रहणं' वृत्रस्यासुरस्य मेघस्य वा हन्तारम्। 'द्युक्षं' द्युलोके वर्त्तमानम्। 'पुरुक्षाणं' बहूनामुदकानां धारकं यद्वा। वर्णव्यत्ययः। पुरूणां बहूनां दासयितारं शत्रूणां क्षपयितारं 'वृषभं' कामानां वर्षकम्। 'स्थिरप्सुम्' स्थिररूपम्। न हीन्द्रस्य रूपं कदाचिदपि प्रच्युतं भवति यद्वा। स्थिराणां शत्रूणां भक्षकं विनाशिनमित्यर्थः। 'वज्रिणं' वज्रवन्तम्, 'शुष्मिन्तं' शत्रूणां भर्जनवन्तम् ॥ ५ ॥

१ २, ३१ २ ३१२ २
प्र वो महे महिवृधे भरध्वं
१२ ३ १ २ ३ १ २
प्रचेतसे प्र सुमतिं कृणुध्वम्।
१ २ ३ १ २र १ २
विशः पूर्वीः प्र चर चर्षणिप्राः ॥ ६ ॥

अथ षष्ठी। वसिष्ठ ऋषिः। छ० विराट्। हे अस्मदीयाः पुरुषाः! 'वो' यूयं 'महेद्धये' महतां धनानां वर्द्धयित्रे 'महे' महते इन्द्राय 'प्रभरध्वं' सोमान् प्रणयत। 'प्रचेतसे' प्रकृष्टज्ञानाय इन्द्राय 'सुमतिं' सुष्टुतिं च 'प्रकृणुध्वं' प्रकुरुत।

अथ प्रत्यक्षस्तुतिः। हे इन्द्र! 'चर्षणिप्राः' कामैः प्रजानां पूरयिता त्वं 'पूर्वीः' हविषां पूरयित्रीः 'विशः' प्रजाः 'प्रचर' अभिगच्छ ॥ ६ ॥

शुनꣳ हुवेम मघवानमिन्द्र-

मस्मिन् भरे नृतमं वाजसातौ।

शृण्वन्तमुग्रमूतये समत्सु-

घ्नन्तं वृत्राणि सञ्जितं धनानि ॥ ७ ॥

अथ सप्तमी। विश्वामित्र ऋषिः। छ० त्रिष्टुप्। हे 'इन्द्र'! 'वाजसातौ' वाजस्यान्नस्य सातिर्लाभो यस्मिन् सोऽयं वाजसातिः तस्मिन् 'भरे' बिभ्रति जयलक्ष्मीममेन योद्धार इति भरः संग्रामः तस्मिन् संग्रामे 'शुनं' शुनम् उत्साहेन प्रवृद्धं 'मघवानं' धनवन्तम् अतएव 'इन्द्रं' निरतिशयैश्वर्यसम्पन्नं 'नृतमं' सर्वस्य जगतोऽतिशयेन नेतारं त्वां 'हुवेम', कुशिकायवं यज्ञार्थमाह्वयेम। तथा 'शृण्वन्तम्' अस्माभिः क्रियमाणां स्तुतिं शृण्वन्तम्। 'उग्रं' शत्रूणामुद्गूर्णम्। 'समत्सु' संग्रामेषु 'वृत्राणि' वृत्रोपलक्षितानि सर्वाणि रक्षांसि 'घ्नन्तं' हिंसन्तम्। 'धनानि' शत्रुसम्बन्धीनि सञ्जितं सम्यग्जेतारं त्वाम् 'ऊतये' रक्षणाय वयमाह्वयेम ॥ ७ ॥

२ २ १ २ २ १ २
उदु ब्रह्माण्यैरत श्रवस्येन्द्रꣳ
२ १ २
समर्य्ये महया वशिष्ठ ।
१ २र २ १ २ २ १ २
आ यो विश्वानि श्रवसा ततानो-
३ २ १ १ २ ३ १ २
पश्रोता म ईवतो वचाꣳसि ॥ ८ ॥

अथ अष्टमी। वशिष्ठ ऋषिः। 'श्रवस्या' अन्नेच्छया 'ब्रह्माणि' स्तोत्राणि कर्म्माणि च इन्द्रार्थम् 'उदैरत' सर्वे ऋषय इति शेषः। उ इति पूरणः हे वसिष्ठ! त्वमपि 'समर्य्ये' यज्ञे 'इन्द्रं' 'महय' स्तोत्रेण हविषा च पूजय। अपिच 'य इन्द्रो' 'विश्वानि' भुवनानि 'श्रवसा' अन्नेन कीर्त्त्या वा 'आततान'। सः 'ईवतः' उपगमनवतो 'मे' मम 'वचांसि' स्तुतिरूपाणि वाक्यानि 'उपश्रोता' भवतु ॥ ८ ॥

३ १ २र ३ १ २र
चक्रं यदस्याप्स्वा निषत्त-
३ १ २र ३ १ २र
मुतो तदस्मै मध्विच्छद्यात् ।
२ १ २र १ २उ ३
पृथिव्यामतिषितं यदूधः
२ ३ १ २र ३ १ २
पयो गोष्वदधा ओषधीषु ॥ ९ ॥

इति चतुर्थप्रपाठकस्य प्रथमार्द्धे चतुर्थे दशतिः।

अथ नवमी । गौरिवीतिरृषिः । 'अस्य' इन्द्रस्य 'चक्रम्' आयुधम् 'अप्सु' अन्तरिक्षे 'आ' सर्वतो 'नियत्तं' नियम्यमानीन्मेघहननार्थम् । 'उतो' तत् अपिच 'अस्मै' इन्द्राय 'मध्वित्' उदकमपि 'चच्छद्यात्' वशं नयति । 'पृथिव्याम्' अतिषितं विसृष्टं 'यदूधः' उदकमस्ति तत् 'पयोगोष्वोषधीषु च 'आदधा' आदधाति ॥ ८ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य दशमः खण्डः ।

---

अथ चतुर्थप्रपाठकस्य प्रथमार्धे प्रथमं दर्शति ।

१ २ ३ २ १ २ ३ १ २
त्यमू षु वाजिनं देवजूतꣳ
३ १ २ ३ १ २ १ २
सहोवानं तरुतारꣳ रथानाम् ।
१ २ ३ १ २ ३ २
अरिष्टनेमिं पृतनाजमाशुꣳ
१ २ ३ १ २ ३ १ २
स्वस्तये तार्क्ष्यमिहा हुवेम ॥ १ ॥

अथैकादशे खण्डे—सैषा प्रथमा । तार्क्ष्यपुत्रोऽरिष्टनेमिऋषिः । 'त्यम्' तं प्रसिद्धमेव 'तार्क्ष्यं' तृक्षपुत्रं 'सुपर्णं' तृक्षशब्दो गर्गादिः 'स्वस्तये' क्षेमाय 'इह' अस्मिन् कर्मणि 'हुवेम' आह्वयेमहि 'बहुलं छन्दसीति (६,१,३४) ह्वयतेः सम्प्रसारणम् । 'लिङ्याशिष्यङ् (३,१,८६)' । यद्वा, प्रार्थनायां लिङि व्यत्ययेन शः (३,१,८५) । कीदृशम् ? 'वाजिनम्' अन्नवन्तं बलवन्तं वा

'देवजूतं' देवैः सोमाहरणाय प्रेरितं नु इति गत्यर्थः; सौत्रो धातुः, अस्मात् कर्मणि क्तः पूर्वपदप्रकृतिस्वरत्वम्। यद्वा, देवैः प्रीयमाणं तर्प्यमाणम्। यदाह यास्कः, 'जूतिर्गतिः प्रीतिर्वा देवजूतं देवप्रीतं वेति 'सहोवानं' सहस्वन्तं सहश्शब्दाद्वनिप् मत्वर्थीयः बलवन्तं वा। अतएव 'रथानाम्' अन्यदीयानां 'तहतारं' सङ्ग्रामे तारकम्। यद्वा, रहरणशीला अमी इमे लोका रथाः तान् सोमाहरणसमये शीघ्रं तरीतार श्रूयते हि, 'एष' हीमान् लोकान् सद्यस्तरतीति'। तरतेस्तृचि 'ग्रसितस्कभितेत्यादौ (७,२,३४) इडागमो निपात्यते 'अरिष्टनेमि' अहिंसितरथं यद्वा। नेमिर्नमनशीलमायुधम् अहिंसितायुधम्। अथवा उपचाराज्जनके जन्यशब्दः। अरिष्टनेमेर्मम जनकं 'पृतनाजं' पृतनानां शत्रुसेनानां प्राजितारं प्रगमयितारं जेतारं वा अजगतिक्षेपणयोः। अस्मात् क्विप्। 'वलादावार्द्धधातुके विकल्प इष्यते' (२,४,५६ वा०) इति वचनात् वीभावाभावः। यजतेर्वा डिप्रत्ययः 'आशु' शीघ्रगामिनम् ॥१॥

३ १ २ ३ १ २ ३ १ ३ २ ३
त्रातारमिन्द्रमवितारमिन्द्रꣳ
३ २ ३ २ ३ २ ३ १ २
हवेहवे सुहवꣳ शूरमिन्द्रम्।
३ २उ ३ १ २ ३ १ ३२
हुवे नु शक्रं पुरुहूतमिन्द्र-
१ २ ३ २ ३ १२ ३ १ २
मिदꣳ हविर्मघवा वेत्विन्द्रः ॥ २ ॥

अथ द्वितीया। भरद्वाज ऋषिः। 'त्रातारं' शत्रुभ्यः पालयितारम् 'इन्द्रं' 'हुवे' आह्वयामि। तथा 'अवितारं'

कामैस्तर्पयितारमिन्द्रमाह्वयामि। 'हवे हवे' सर्वेष्वाह्वनेषु 'सुहवं' सुखेनाह्वातुं शक्यम्। 'शूरं' शौर्य्यवन्तं 'शक्रं' सर्वकार्य्येषु शक्तं 'पुरुहूतं' पुरुभिर्बहुभिः पालनार्थमाहूतम्। एवंविधमिन्द्रम् 'आहुवे' आह्वयामि। एवमाहूतो 'मघवा' धनवान् स 'इन्द्रः' 'इदं' पुरोवर्त्ति हविः 'वेतु' भक्षयतु॥ २॥

१२ ३ १ २ ३ १२ ३
यजामह इन्द्रं वज्रदक्षिणं

१२ ३१ २ १२
हरीणाꣳ रथ्या३ं विव्रतानाम्।

१ २२ ३ १ २ ३ १ २ ३ १
प्र श्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्वि

२२ ३ १२, ३ १ २२
सेनाभिर्भयमानो वि राधसा॥ ३॥

अथ तृतीया। वसुक्रो विमदो वा ऋषिः। वयं 'इन्द्र' 'यजामहे' सोमलक्षणैर्हविर्भिः पूजयामः। कीदृशं? 'वज्रदक्षिणं' शत्रुवधाय सततं 'वज्रो दक्षिणे हस्ते यस्य तम्। 'विव्रतानां रथवाहनादिविविधकर्म्मणां 'हरीणाम्' एतत्संज्ञकानामश्वानां 'रथ्यम्' आनेतारम्। स इन्द्रः सोमपानानन्तरं 'श्मश्रुभिः' स्वकीयैः 'दोधुवत्' पुनः पुनः धुन्वानः सन् 'ऊर्ध्वधाः' ऊर्द्ध्वं 'विभुवत्' विशेषेण प्रादुर्भवति। किञ्च। 'सेनाभिः' मरुदादिभिः स्वकीयैः सैन्यैः 'भयमानः' शत्रून् कम्पयन् 'राधसा' द्वितीयार्थे तृतीया (३, १, ८५) राधो धनं वीत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः विविधं स्तोतृभ्यो ददाति॥ ३॥

१ २ २ १ २ २ २ २ १ २
सत्राहणं दाधृषिं तुम्रमिन्द्रं

३१ २३ १ २३२ ३१२
महामपारं वृषभं सुवज्रम्।

२ ३ २ ३१ ३२ ३१ ३ २
हन्ता यो वृत्रं सनितोत वाजं

१ २ ३१ २ ३१२ ३१२
दाता मघानि मघवा सुराधाः ॥ ४ ॥

अथ चतुर्थी। एतदादितिसृणां वामदेव ऋषिः। 'सत्राहणं' सत्रा शत्रूणां हन्तारं 'दाधृषिम्' अतिशयेन धर्षकम्। 'तुम्रं' तुमिः प्रेरणकर्मा शत्रूणां प्रेरकम्। 'महां' महान्तम्। 'अपारम्' अपरिमाणं विनाशरहितमित्यर्थः। 'वृषभं' कामानां वर्षितारम्। 'सुवज्रं' शोभनेन वज्रेणोपेतमिन्द्रं वयं स्तोतारः स्तुम इति शेषः। 'यः' इन्द्रो 'वृत्रं' वृत्रनामानमसुरं 'हन्ता' हिंसिता भवति। उतापि च। यः इन्द्रो 'वाजम्' अन्नं 'सनिता' दाता भवति। 'सुराधाः' शोभनधनयुक्तो यो मघवेन्द्रः 'मघानि' धनानि दाता भवति तमिन्द्रं स्तुम इति पूर्वेण सम्बन्धः। अत्र सर्वत्र तृन्नन्तत्वात् 'न' लोकाव्ययेत्यादिना (२, ३, ६८) षष्ठीप्रतिषेधे सति द्वितीयैव भवति ॥ ४ ॥

१ २ ३१ २ ३१ २ ३१
यो नो वनुष्यन्नभिदाति मर्त्त

३१ २ १ २ ३१ २
उगणा वा मन्यमानस्तुरो वा।

२ ३ २ १ ३१ २ १ २
क्षिधी युधा शवसा वा तमि-

२ १ २ २ १ २
न्द्राभी ष्याम वृषमणस्त्वोताः ॥ ५ ॥

अथ पञ्चमी। हे इन्द्र! 'यो' 'मर्त्तो' मनुष्यः 'नः' अस्मान् 'वनुष्यन्' हन्तुमिच्छन् 'अभि दाति' आभिमुख्येनागच्छति। यो वा 'मन्यमानः' आत्मानं बहु मन्यमानो मर्त्तः 'उगणा वा' उत्कृष्टगणाः उद्गूर्णगणाः 'तुरो' हिंसिखो रक्षदीयाः प्रजाः अभिगच्छति। केन साधनेन हिंसिष्यन्? 'चिधी' लिः चयो धीयते क्रियते अनेनेति चिधिः तृतीयैकवचनस्य पूर्वसवर्णः चयकरणेन 'युधा' आयुधेन 'शवसा' वेगेन बलेन वा आयाति। 'त्वोताः' त्वया रक्षिताः 'वृषमणः' वृषा इवाचरन्तो वयं 'तम्' 'अभिष्याम' अभिभवेम ॥ ५ ॥

२ ३ १ २ ३ १ २ १ २ १
यं वृत्रेषु चितय स्पर्धमाना

३ ३ १ २ ३ १ २ ३ १२
यं युक्तेषु तुरयन्तो हवन्ते।

१ २र ३ ३ १ १ २र ३ १
यᳬ शूरसातौ यमपामुपज्मन्यं

२र ३ १ २ ३ १ २र
विप्रासो वाजयन्ते स इन्द्रः ॥ ६ ॥

अथ षष्ठी। 'वृत्रेषु' आवरकेषु युद्धेषु 'स्पर्धमानाः' क्रोधयुक्ताः 'चितयो' मनुष्याः चयन्ति निवसन्त्यत्रेति चितयो मनुष्याः 'यम्' इन्द्रं 'हवन्ते' आह्वयन्ति 'युक्तेषु' सन्नद्धेषु आयुधैर्युक्तेषु संग्रामेषु 'तुरयन्तः' परस्परं हिंसन्तो जनाः यमाह्वयन्ति। 'शूरसातौ' शूराणां सम्भजने यमाह्वयन्ति। युद्धजयार्थमिति शेषः। किञ्च। 'अपाम्' उदकानां 'सातौ' लाभे 'यम्'

'उपज्मन्' हविःप्रदानार्थं यमुपगच्छन्ति आह्वयन्तीत्यर्थः विप्रासो विप्रा मेधाविनो यजमाना यमिन्द्रं 'वाजयन्ते' वाजिनं कुर्वन्ति हविर्भिर्बलिनं कुर्वन्ति स तादृश इन्द्र ॥६॥

१ २ २ १ २र
इन्द्रापर्वता बृहता रथेन

१ २उ १ १ २ २ १ २
वामीरिष आ वहतं सुवीराः।

२ १ १ १ ३ १ १ २ १
वीतं हव्यान्यध्वरेषु देवा

१ २ १ १ २र १ १ २
वर्द्धेथां गीर्भिरिडया मदन्ता ॥ ७ ॥

अथ सप्तमी। विश्वामित्र स्तौति। 'इन्द्रापर्वता' इन्द्रश्च पर्वतश्च हे इन्द्रापर्वतौ। 'बृहता' महता रथेनागत्य 'वामी' वननीया 'सुवीरा' शोभनपुत्रोपेता 'इष' अन्नानि 'आवहतम्' अस्मदर्थं धारयत प्रयच्छतमित्यर्थः। किञ्च। हे 'देवा' देवौ द्योतमानौ। हे इन्द्रापर्वतौ। 'अध्वरेषु' अस्मत् सम्बन्धि यज्ञेषु 'हव्यानि' हवनयोग्यानि पुरोडाशादीनि हवींषि 'वीतं' भक्षयतम्। तथा 'इडया' अस्माभिर्दत्तेनान्नेन 'मदन्ता' हृष्यन्तौ युवां 'गीर्भिः' स्तुतिलक्षणाभिरस्मदीयाभिर्वाग्भिः 'वर्द्धेथां' प्रवृद्धौ भवतं ॥ ७॥

१ २ २ २ २ १ २
इन्द्राय गिरो अनिशितसर्गा

२ १ २र२ १ २ २ १ २
अपः प्रैरयत्सगरस्य बुध्नात्।

१ २र ३ २ ३ १ २ ३
यो अक्षेणेव चक्रियौ शचीभि-
१ २ ३ १ २ ३ २ ३ २
र्विष्वक्तस्तम्भ पृथिवीमुत द्याम् ॥ ८ ॥

अथ अष्टमी। रेणुऋषिः। 'इन्द्राय' इन्द्रार्थम् 'अनिशित-सर्गाः' अतनूकृतविसर्गाः उपर्युपरि वर्तमानाः याः 'गिरः' स्तुतयः ताभिर्गीर्भिः 'सगरस्य' अन्तरिक्षस्य 'बुध्नात्' प्रदेशात् 'अपः' उदकानि 'प्रैरयत्' प्रेरयति। यः इन्द्रः 'शचीभिः' कर्मभिः 'पृथिवीम्' 'उत' अपिच। 'द्यां' दिवं च 'चक्रियौ' रथचक्राणि 'अक्षेणेव' यथा रथाक्षेण तद्वत् 'विष्वक्' सर्वतः 'तस्तम्भ' अस्तम्भात् ॥ ८ ॥

२ ३ १ २ ३ १ २
आ त्वा सखायः सख्या ववृत्यु-
३ २ ३१ २ ३ १ २
स्तिरः पुरू चिदर्णवां जगम्याः।
३ १ ३२ ३ २ २ ३ १
पितुर्नपातमा दधीत वेधा
३ १ ३२ ३ १ ३२
अस्मिन् क्षये प्रतरां दीद्यानः ॥ ९ ॥

अथ नवमी। वामदेव ऋषिः। हे इन्द्र। 'त्वा' त्वां 'सखायः' स्तोतारः 'सख्या' सख्येन स्तुतिभिरित्यर्थः। ताभिः 'आ ववृत्युः' अभिमुखं कुर्वन्ति। यतस्त्वं 'तिरः' तिर्यग्भूत्वा 'पुरु' विस्तीर्णम् 'अर्णवम्' अन्तरिक्षं 'जगम्याः' अगच्छः। चिच्छब्दः कारणपरः अथ परोक्षकृतः 'वेधा' विधाता इन्द्रः 'पितुः' मदीयस्य 'नपातं' पौत्रं मम पुत्रमित्यर्थः। त माद-

धीत प्रयच्छतु। कीदृशः? अस्मिन् 'क्षये' निवासभूते यज्ञे 'प्रतरां' प्रकृष्टं 'दीद्यानः' तेजसा दीप्यमान इन्द्रः पुत्रं ददातु॥ ८॥

२ ३ १ २ २ ३क ३ २ ३
को अद्य युंक्ते धुरि गा ऋतस्य
१ २ २ १ २ ३ २
शिमीवतो भामिनो-दुर्हणायून्।
३ १ २ ३ १ २ ३ १
आसन्नेषामप्सुवाहो मयोभून्य
३२ ३ २ ३ २ ३ १ २
एषां भृत्यामृणधत्स जीवात्॥ १०॥

इति चतुर्थप्रपाठकस्य प्रथमार्द्धे पञ्चमदशतिः।

---

अथ दशमी। गोतम ऋषिः। 'अद्य' अस्मिन् कर्मणि 'ऋतस्य' यज्ञस्य गच्छत इन्द्रसम्बन्धिनो रथस्य 'धुरि' अश्ववहनप्रदेशे 'गाः' गतिमतोऽश्वान् एषामश्वानां सम्बन्धिनः प्रयन्तान्वा 'आसन्' आस्येन तत्कानितेन स्तोत्रेण 'को युङ्क्ते' को नाम नियोक्तुं शक्नोति न कोऽपीत्यर्थः। कीदृशानश्वान्?। 'शिमीवतः' वीर्य्यकर्मोपेतान्। 'भामिनः' तेजसा युक्तान् 'दुर्हणायून्' परैर्दुःसहेन क्रोधेन युक्तान् हृणीयतिः क्रुध्यतिकर्मा (नै०२,१३)। 'अप्सुवाहः' आपः कर्माणि तेषु इन्द्रं वहन्तीति तान् 'मयोभून्' मयसः सुखस्य भावयितॄन्। स्वकीयानां सुखप्रदानित्यर्थः। 'यो' यजमानः 'एषाम्' ईदृशानामश्वानां 'भृत्यां' भरणक्रियां रथवहनक्रियाम् 'ऋणधत्' समर्धयति स्तौतीति यावत् 'स' इ यजमानो 'जीवात्' जीवनवान् भवेत्॥

यद्वा। 'कः' इति प्रजापतिरुच्यते 'कोह वै नाम प्रजापतिः' इति श्रुतेः 'ऋतस्य' यज्ञस्य 'धुरि' निर्वाहे 'गाः' वेदरूपान् वाग्विशेषान् 'अद्य' इदानीं 'युङ्क्ते' संयोजयति कीदृशान्? 'शिमीवतः' प्रतिपाद्यैः कर्मभिर्युक्तान् 'भामिनः' उज्ज्वलान् 'दुहृणायून्' क्षयीयतिर्दानिकर्मा। दातुमशक्यान् वेदाध्ययनस्य नित्यत्वात् एषां शब्दानाम् आत्मप्रतिपादकानाम् 'आसन्' आस्यानि सुखवदाकारभूतानित्यर्थः। 'अप्सुवाहः' अप्सु अन्तरिक्षे तदुपलक्षिते स्वर्गे वहन्ति यजमानं प्रापयन्ति तान्। 'मयोभून्' मयसः अध्ययनप्रभवस्य सुखसाधनस्यादृष्टस्य भावयितॄन्। 'यो' यजमानः 'एषां' वचसां 'भृत्यां' भरणक्रियाम् 'ऋणधत्' ऋद्धिमतीं करोति 'स जीवात्' स एव जीवति। अन्ये जीवन्मृता इत्यर्थः॥

"आसन्नेषामप्सुवाहः" इति, "आसन्निषून् हृत्स्वसः" इति पाठौ॥ १०॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य एकादशः खण्डः।

इति त्रैष्टुभमैन्द्रम्।

इति चतुर्थप्रपाठकस्य प्रथमार्द्धः समाप्तः।

---

इहाष्टाविंशतिरृचो गायन्तित्यनुष्टुभः।
यदीवहन्तीत्यनया स्तूयन्ते मरुतोऽत्र हि।
ईडितोऽग्निर्दधिक्रावा दधिक्रावृणो इति छृचा।
यद्यदिद्यत्यस्येषं वैश्वदेवीत्यमी इति।
ऋक्सामयोः स्तुतिरृचं सामेत्यैन्द्र्योऽपरा ऋचः।
समाप्त्या प्राथम्यायादिति पूर्वमुदीरितम्।

अथ चतुर्थप्रपाठकस्य द्वितीयार्द्धे प्रथम दशतिः।

१ २   २ १   २र ३ २ ३ १ २
गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः।
३ १ २   ३ २३ १ २
ब्रह्माणस्त्वा शतक्रत उद्वᳪंशमिव येमिरे ॥ १ ॥

अथ द्वादशे खण्डे—सैषा प्रथमा। मधुच्छन्दा ऋषिः। हे 'शतक्रतो' बहुकर्मन् बहुप्रज्ञ वेन्द्र! 'त्वा' त्वां 'गायत्रिणः' उद्गातारः 'गायन्ति' स्तुवन्ति। 'अर्किणो'ऽर्चनहेतुमन्त्रयुक्ता होतारः 'अर्कम्' अर्चनीयमिन्द्रं 'अर्चन्ति' शस्त्रगतैर्मन्त्रैः प्रशंसन्ति। 'ब्रह्माणो' ब्रह्मप्रभृतयः इतरे ब्राह्मणाः। 'त्वा' त्वाम् 'उद्येमिरे' उन्नतिं प्रापयन्ति। तत्र दृष्टान्तः, 'वंश मिव' यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशम् उन्नतं कुर्वन्ति। यथा वा सन्मार्गवर्त्तिनः पुत्राः स्वकीयं कुलम् उन्नतं कुर्वन्ति तद्वत् ॥

एतामृचं यास्क एवं व्याचष्टे, "गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्रह्माणस्त्वा शतक्रत उद्येमिरे वंशमिव वंशो वनशयो भवति वननाच्छ्रूयत इति वा (५, ४, ) इति ॥ १ ॥

१ २ १ २   ३ १ २ ३ १ २
इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः।
३ १ २   ३ २ ३ १ २ ३   १ २ ३ १ २
रथीतमᳪं रथीनां वाजानाᳪं सत्पतिं पतिम् ॥२॥

अथ द्वितीया। जेता माधुच्छन्दसऋषिः। 'विश्वाः' सर्वाः 'गिरः' अस्मदीयाः स्तुतयः 'इन्द्रम्' 'अवीवृधन्' वर्द्धितवत्यः।

कीदृशमिन्द्रं ? 'समुद्रव्यचसं' समुद्रव्याप्तवन्तम् । 'रथीनां' रथयुक्तानां योद्धॄणां मध्ये 'रथीतमम्' अतिशयेन रथयुक्तं 'वाजानाम्' अन्नानां 'पतिं' स्वामिनम्, सत्पतिं सतां सन्मार्गवर्त्तिनां पालकम् ॥ २ ॥

१ १ २ १ १ २१ २ ३१२३ १ २
इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
१ १ २ ३क २२ ३ १ २ ३ २३ १ २
शुक्रस्य त्वाभ्यक्षरन् धारा ऋतस्य सादने ॥ ३ ॥

अथ तृतीया । गोतमऋषिः । हे 'इन्द्र' ! 'सुतम्' अभिषुतम् 'इमं' सोमं 'पिब' । कीदृशम् ? 'ज्येष्ठम्' अतिशयेन प्रशस्यं 'मदं' मदकरम् 'अमर्त्यम्' अमारकं सोमपानजन्यो, मदो मद्यान्तरवन्मारको न भवतीत्यर्थः तथा 'ऋतस्य' यज्ञस्य सम्बन्धिनि 'सदने' गृहे वर्त्तमानस्य 'शुक्रस्य' दीप्तस्यास्य सोमस्य 'धाराः' 'त्वा' 'अभ्यक्षरन्' आभिमुख्येन सञ्चलन्ति त्वां प्राप्तुं स्वयमेवागच्छन्तीत्यर्थः ॥ ३ ॥

१ २ ३ २३ ३ १ २
यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः ।
२ १ १ २ ३ १ २
राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ ४ ॥

अथ चतुर्थी । अविर्ऋषिः । हे 'अद्रिवो !' वज्रवन् ! 'चित्र !' चायनीयेन्द्र ! 'यद्' इदं 'त्वादातं' त्वया दातव्यं यद् 'राधः' धनम् 'इह' अस्मिन् लोके 'मे' मम नास्ति तद्धनं हे 'विदद्वसो' ! लब्धधनेन्द्र ! 'नः' अस्मभ्यम् 'उभया हस्त्या' उभाभ्यां हस्ताभ्याम् 'आभर' आहर ।

अत्र निरुक्तं, 'यदिन्द्र चित्रं चायनीयं मंहनीयं धनमस्ति-यन्म इह नास्तीति वेति [४,४] द्रष्टव्यम् ॥ ४ ॥

२ १ १र २र उ २ १ २ ३ १ २
श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्य्यति ।
१ १ २ २ १ २ ३ १ २ ३ १ २
सुवीर्य्यस्य गोमतो रायस्पूर्धि महाꣳ असि ॥५॥

अथ पञ्चमी । तिरश्ची आङ्गिरस ऋषिः । हे इन्द्र । यः 'त्वा' त्वा 'सपर्य्यति' सपरमन्त्रः कण्ड्वादिः हविर्भिः परिचरति तादृशस्य 'तिरश्च्याः' एतन्नामकस्य ऋषेर्मम 'हवं' स्तुतिं 'श्रुधि' शृणु । श्रुत्वा च हे इन्द्र । त्वं 'सुवीर्य्यस्य' शोभनवीर्य्योपेतस्य । यद्वा, वीरं पुत्रे सर्वं वीर्य्यं सुपुत्रवतः । 'गोमतः' गवादिपशुमतः । 'रायो' धनस्य दानेन 'पूर्धि' अस्मान् पूरय । एतत्सामर्थ्यं कुत इत्यत आह, त्वं 'महान्' गुणाधिकः देवानां ज्येष्ठश्च 'असि' भवसि खलु ॥ ५ ॥

१ २ ३ १ २ ३ १ २ ३ १ २
असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
१ २ १ २उ १ २ ३ १ २ १ २
आ त्वा पृणक्त्विन्द्रियꣳ रजः सूर्य्यो न रश्मिभिः ॥६॥

अथ षष्ठी । गोतम ऋषिः । हे 'इन्द्र' ! 'ते' त्वदर्थं 'सोमः' 'असावि' अभिषुतोऽभूत् । हे 'शविष्ठ' ! अतिशयेन बलवन् । अतएव 'धृष्णो' शत्रूणां धर्षयितरिन्द्र ! 'आ गहि' देवयजनदेशमागच्छ । आगतश्च 'त्वा' त्वाम् 'इन्द्रियं' सोमपानेनोत्पन्नं प्रभूत सामर्थ्यम् 'आ पृणक्तु' आ पूरयतु । 'रजः' अन्तरिक्षं 'रश्मिभिः' किरणैः 'सूर्य्यो न' यथा सूर्यः पूरयति तद्वत् ॥ ६ ॥

१ २ २ १ २ ३ २ ३ १ २ ३ १
एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥७॥

अथ सप्तमी । काण्वो निपातिथिर्ऋषिः । हे 'इन्द्र' ! 'कण्वस्य' एतन्नामकस्य ऋषेः 'सुष्टुतिं' शोभनां स्तुतिं प्रति 'हरिभिः' अश्वैः 'उपायाहि' आगच्छ । 'दिवो' द्युलोकं द्वितीयार्थे षष्ठी (२,१,८५) 'अमुष्य' अमुमिमिन्द्रं 'शासतः' शासति 'विभक्तिव्यत्ययः (२,१,८५) तत्र वयं सुखमास्महे । हे 'दिवावसो !' द्योतनविभ्येन्द्र ! 'दिवं' स्वर्गं 'यय' यूयं गच्छत बहुवचनं पूजार्थम् ।

यद्वा, हे 'दिवावसो' दिवो द्युनामकम् 'अमुष्य' अमुं लोकं 'शासतः' शासनं कुर्वन्तो यूयं 'दिवं' स्वर्गं 'यय' गच्छत अत्र बहुवचनं पूजार्थमित्यर्थः ॥ ७ ॥

२ ३ १ २ ३ २ ३ १ २ ३ १ २
आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।
३ २ ३ १ २ ३ १ २ ३ २उ ३ १ २
अभि त्वा समनूषत गावो वत्सं न धेनवः ॥ ८ ॥

अथ अष्टमी । अस्याः परस्याश्च तिरश्री ऋषिः । 'गिर्वणः' गीर्भिर्वननीय हे इन्द्र ! 'सुतेषु' सोमेषु अभिषुतेषु सत्सु 'गिरः' अस्माकं स्तुतिलक्षणा वाचः 'त्वा' त्वाम् 'आ स्थुः' आभिमुख्येन शीघ्र गच्छन्ति तिष्ठन्तीत्यर्थः तत्र दृष्टान्तः, 'रथीरिव' यथा रथवान् रथेन गच्छन् वीरः प्राप्यं देशं क्षिप्रं गच्छति तद्वत् । किञ्च । हे इन्द्र ! अस्मदीया गिरः 'त्वा' त्वाम् 'अभि' लक्ष्य

'समनूषत' सम्यक् शब्दायन्ते स्तुवन्तीत्यर्थः नु स्तवने। कुटादिः। तस्य लुङि रूपं तत्र दृष्टान्तः, 'वत्सम्' धेनवः यथा 'धेनवः' प्रीतियुक्ता गमनशीला वा 'गावः' वत्स मभिलक्ष्य हम्भारवादिशब्दं कुर्वन्ति तद्वत् ॥ ८ ॥

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
एतो न्विन्द्रꣳ स्तवाम शुद्धꣳ शुद्धेन साम्ना।
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
शुद्धैरुक्थैर्वावृध्वाꣳसꣳ शुद्धैराशीर्वान्ममत्तु ॥ ९ ॥

अथ नवमी। विश्वामित्र ऋषिः। अत्रेतिहासमाचक्षते, पुरा किलेन्द्रो वृत्रादिकानसुरान् हत्वा ब्रह्महत्यादिदोषेणात्मानमपरिशुद्धमित्यमन्यत। तद्दोषपरिहाराय इन्द्र ऋषीनवोचत्—यूयम् अपूतं मां शुद्धदीयेन साम्ना शुद्धं कुरुतेति। ततस्ते च शुद्धत्वापादकेन साम्ना शस्तैव परिशुद्धमकार्षुः। पश्चात् पूतायेन्द्राय यागादिकर्मणि सोमादीनि हवींषि च प्रादुरिति। एषोऽर्थः शाट्यायनकब्राह्मणे प्रतिपादितः, 'इन्द्रो वा असुरान् हत्वा पूत इवामेध्यो ऽमन्यत असौ अकामयत शुद्धमेव मा सन्तं शुद्धेन साम्ना स्तुयुरिति। स ऋषीनब्रवीत् स्तुत मेति। तत ऋषयः सामापश्यन् तेनास्तुवन् एतोन्विन्द्रमिति ततो वा इन्द्रः पूतः शुद्धो मेध्योऽभवत् इति।

तथाच अस्या ऋचोऽयमर्थः—

ऋषयः परस्परं ब्रुवन्ति। 'नु' क्षिप्रम् 'एत' उ आगच्छतैव। आगत्य च 'शुद्धेन' शुद्धत्वापादकेन साम्ना। तथा शुद्धैः शुद्धिहेतुभिः 'उक्थैः' शस्त्रैश्च इन्द्रं 'शुद्धम्' अपापिनं कृत्वा 'स्तवाम' स्तुयाम। ततः 'साम्ना' शस्त्रैः 'वावृध्वांसं' पापराहित्येन

वर्द्धमानं तमिममिन्द्रम् 'ग्रुद्धैः' शुद्धत्पादकैः स्तोत्रैः क्रियाविशेषैः वा 'आशीर्वान्' आश्रयणवान् गव्यादिभिः संस्कृतः सोमः 'ममत्तु' इन्द्रं मादयतु माद्यतेश्छान्दसः शुः ॥

"शुद्धैराशीर्वान्" "शुद्धआशीर्वान्"—इति पाठौ ॥ ९ ॥

१ २ १ २ ३१ २ ३ २ २ ३२ ३ १२

यो रयिं वो रयिन्तमो यो द्युम्नैर्द्युम्नवत्तमः ।

१ २ ३१ २१२ १ २ ३ २२

सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥१०॥

इति चतुर्थप्रपाठकस्य द्वितीयार्द्धे प्रथम दशतिः ।

---

अथ दशमी । शंयुर्बार्हस्पत्य ऋषिः । हे इन्द्र ! 'यः' सोमः 'वः' वचनव्यत्ययः—(३, १, ८,) तव परिचारकेभ्यः स्तोतृभ्यः 'रयिं' धनं प्रयच्छतीति शेषः । कीदृशः 'रयिन्तमः' अतिशयेन रयिमान् । यश्च 'द्युम्नैः' द्योतमानैर्यशोभिः 'द्युम्नत्तमः' अतिशयेन यशस्वी । हे 'स्वधापते' ! स्वधाया अन्नस्य सोमलक्षणस्य पालकेन्द्र ! स 'सोमः' अभिषुतः सन् 'ते' तव 'मदः' मदकरः 'अस्ति' भवति ॥ १० ॥

इति सायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्य द्वादश खण्डः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराज परमेश्वर वैदिक मार्ग प्रवर्त्तक श्रीवीर बुक्क भूपाल साम्राज्य धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने ऐन्द्रकाण्डे तृतीयोऽध्यायः ।

---

## अथ चतुर्थाध्याय आरभ्यते।

अस्मिन्नध्यायेऽपि इन्द्रः स्तूयते।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥

अथ चतुर्थप्रपाठकस्य द्वितीयार्द्धे द्वितीय दशति।

१ १ १ १२ १ १ २ ३ १ २
प्रत्यस्मै पिपीषते विश्वानि विदुषे भर।
२ २ १ २ ३ १ २ २ १ २
अरङ्गमाय जग्मयेऽपश्चादघ्वने नरः॥ १॥

तत्र प्रथमखण्डे—सैषा प्रथमा। भरद्वाज ऋषिः। हे अध्वर्यो! 'नरः' कर्मणि नेतस्त्वं 'अस्मै' इन्द्राय 'प्रतिभर' प्रतिहर सोमं प्रयच्छेत्यर्थः। कीदृशायेन्द्राय? 'पिपीषते' पातुमिच्छते। 'विश्वानि' सर्वाणि वेद्यानि 'विदुषे' जानते। 'अरङ्गमाय' पर्याप्तगमनाय। 'जग्मये' यज्ञेषु गमनशीलाय। 'अपश्चादघ्वने' दघ्निर्गतिकर्मा अपश्चाद्गमनाय सर्वेषामग्रगामिने नरः नृशब्दाच्चतुर्थ्यर्थे षष्ठी छन्दसि ऋतो गुणश्छान्दसः। नरे कर्मणां नेत्रे। अतएव बह्वृचा 'अपश्चादघ्वने नरे' इति चतुर्थ्यन्तत्वेनामनन्ति॥ १॥

१ २ १ २ ३ १ २
आ नो वयोवयःशयं महान्तं
१ २ ३ १ २ ३ २
गह्वरेष्ठां महान्तं पूर्विनेष्ठाम्।
२ ३ उ ३ १ २
उग्रं वचो अपावधीः॥ २॥

अथ द्वितीया। वामदेवः शाकपूतो वा ऋषिः। हे 'वयस्य!' मित्रभूतेन्द्र! 'अयम्' ईदृशस्त्व' 'महान्त' महत्प्रभूतं 'गह्वरेष्ठां' गिरिगुहादौ वर्त्तमानं 'नः' अस्मदीयं 'वयः' सोमलक्षणमन्नम् 'आ' हर उपसर्गश्रुतेर्योग्यक्रियाध्याहारः आहृत्य 'महान्तं' महत्प्रभूतं 'पूर्विनेष्ठां' पूर्वस्मादौ संसारे प्रवर्त्तमानम्। 'उग्रं' क्षुत्पिपासानिमित्तेन भयङ्करम्। 'वचः' अस्मदीयं वचनम् 'अशनायापिपासे ह वा उग्रं वचः' इति श्रुतेः। 'अपावधीः' अपजहि, देवत्वं प्रापयेत्यर्थः 'तत् प्राप्नोत्यनायापिपासे निवर्त्तेते। न वै देवा अश्नन्ति न पिबन्ति' इति श्रुतेः॥ २॥

२ १ १२१२१२१ २ १ २
आ त्वा रथं यथोतये सुम्नाय वर्त्तयामसि।
१ १ २ १ २ १ १ २ १ १ २
तुविकूर्मिमृतीषहमिन्द्रꣳ शविष्ठ सत्पतिम्॥३॥

अथ तृतीया। प्रियमेधऋषिः। हे इन्द्र! 'त्वा' त्वाम् 'आवर्त्तयामसि' आवर्त्तयामः। किमर्थम्? 'ऊतये' अस्माकं रक्षणाय 'सुम्नाय' सुखाय च। किमिव? 'रथं यथा' ऊतये सुखाय चावर्त्तयन्ति तद्वत्। हे 'शविष्ठ!' बलवत्तमेन्द्र! 'तुविकूर्मिं' बहुकर्माणम् 'ऋतीषहम्' हिंसकानामभिभवितारम्। 'सत्पतिं' सतां पालकमिन्द्रं त्वामिति समन्वयः॥ ३॥

२ ३ २ ३ १ २ ३१ २र
स पूर्व्यो महोनां वेनः क्रतुभिरानजे।
१ २ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
यस्य द्वारा मनुः पिता देवेषु धिय आनजे॥४॥

अथ चतुर्थी। प्रगाथ ऋषिः। 'स' इन्द्रः 'पूर्व्यो' मुख्यः

'मघोनां' पूज्यानां यजमानानां 'क्रतुभिः' यज्ञैर्निमित्तभूतैः 'वेनः' कान्तः तेषां हविः कामयमानः 'आनजे' आगच्छति । 'यस्य' इन्द्रस्य 'द्वारा' द्वाराणि प्राप्त्युपायानि 'धियः' कर्म्माणि देवेषु' एतेषु मध्ये 'पिता' सर्वेषां पालकः 'मनुः' 'आनजे' प्रापयति नजिः प्राप्तिकर्मा ।

"मघोनां" "मघानाम्" इति पाठौ ॥ ४ ॥

२ ३ १ २ ३ २ ३ १ २ ३ २३ २
यदी वहन्त्याशवो भ्राजमाना रथेष्वा ।

१ २ ३ १२र ३ २ ३ १ २
पिबन्तो मदिरं मधु तत्र श्रवाꣳसि कृण्वते ॥५॥

अथ पञ्चमी । श्यावाश्व आत्रेय ऋषिः । हे इन्द्र ! 'यदि' यत्र यस्मिन् यज्ञे 'रथेषु' भ्राजमानाः' दीप्यमानाः 'आशवः' क्षिप्रगामिनस्त्वदीया मरुतः 'आवहन्ति' । यत्र आभिमुख्येन त्वां प्रापयन्ति 'तत्र' तस्मिन् यज्ञे 'मदिरं' मदकरं 'मधु' उदकादिरसविशेषितं सोमलक्षणमन्नं वा 'पिबन्तः' 'श्रवांसि' अन्नानि 'कृण्वते' वृष्टिद्वारा कुर्वन्ति । यद्वा, अस्मिन् यज्ञे 'भ्राजमानाः' दीप्यमानाः 'आशवः' शीघ्रगामिनः 'मदिरं' मदकरं 'मधु' सोमं 'पिबन्तः' पाययन्त ऋत्विग्यजमानाः 'रथेषु' सोममावहन्ति 'तत्र' तस्मिन् यज्ञे 'श्रवांसि' अभिप्रवादिकर्मभिः प्रशस्तान्यन्नानि 'कृण्वते' कुर्वन्ति ॥ ५ ॥

१ २ ३ २ ३ २ १ २र ३ १ २
त्यमु वो अप्रहणं गृणीषे शवसस्पतिम् ।

१ २ ३ २ ३ २३ १ २ ३ १२
इन्द्रं विश्वासाहं नरꣳ शचिष्ठं विश्ववेदसम् ॥६॥

अथ षष्ठी । शंयुर्ऋषिः । हे ऋत्विग्यजमानाः ! 'वो'

युष्मदर्थं 'त्यत्' तमेवेन्द्रं 'गृणीषे' स्तौमि। यद्वा, 'यो' यूयं 'गृणीत' स्तुत। वचनव्यत्ययः। कीदृशमिन्द्रम्? 'अप्रहणम्' अप्रहर्त्तारं भक्तानामनुग्राहकम्। 'शवसो' बलस्य 'पतिं' पालकम्। 'विश्वासाहं' विश्वस्य शत्रोरभिभवितारं 'नरं' नेतारं 'शचिष्ठं' यज्ञादिकर्मस्थितम्। 'विश्ववेदसं' विश्वं वेदो धनं यस्यासौ विश्ववेदाः तम्॥६॥

३ १ २ ३ १ ३२ ३ १ २
दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।
३ २ ३ १ २ ३ ३१ २ १ २
सुरभि नो मुखा करत्प्र न आयूꣳषि तारिषत्॥७

अथ सप्तमी। वामदेव ऋषिः। दधिक्रावाऽग्निविशेषः। स चाश्वरूपः 'अग्निर्देवेभ्योनिलीयत अश्वो रूपं कृत्वा यदश्वत्थतिष्ठत्' इत्यादि अध्वर्युब्राह्मणमनुसन्धेयम्।

'दधिक्राव्णो' देवस्य स्तुतिम् 'अकारिषं' करवाणि। 'जिष्णोः' जयशीलस्य 'अश्वस्य' तद्रूपस्य 'वाजिनो' वेगवतः। स देवो 'नो' ऽस्माकं 'मुखा' मुखानि चक्षुरादीनीन्द्रियाणि 'सुरभि' सुरभीणि 'करत्' करोतु। 'नो'ऽस्माकम् 'आयूꣳषि' 'प्रतारिषत्' प्रवर्द्धयन्तु प्रपूर्वस्तिरतिर्वर्द्धनार्थः॥७॥

३२ ३ १ ३२ ३ १ ३२
पुरां भिन्दुर्युवा कविरमितौजा अजायत।
२ ३ १ ३ २ १ २ ३२ ३१ २ ३२
इन्द्रो विश्वस्य कर्मणो धर्त्ता वज्री पुरुष्टुतः॥८॥

इति चतुर्थप्रपाठकस्य द्वितीयार्द्धे द्वितीय दशतिः।

---

अथ अष्टमी। जेता माधुच्छन्दस ऋषिः। अयम् 'इन्द्रः' उच्यमानगुणयुक्तः 'अजायत' सम्पन्नः। कीदृग्गुणक इति तदुच्यते 'पुरां' पुराणां भिन्दुः' भेत्ता 'युवा' कदाचिदपि वलीपलितादिवार्द्धक्यरहितः। 'कविः' मेधावी 'अमितौजाः' प्रभूतबलः 'विश्वकर्मणः' क्रतुजस्य ज्योतिष्टोमादेः 'धर्त्ता' पोषकः 'वज्री' यजमानरक्षणार्थं सर्वदा वज्रयुक्तः 'पुरुष्टुतः' बहुभिर्होत्रादिभि स्तत्तत् कर्मणि स्तुतः॥ ८॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य प्रथमः खण्डः।

---

अथ चतुर्थप्रपाठकस्य द्वितीयार्द्धे ऋतीय दशति।

१२ २ ३ १ २ ३ १ २ ३ १ २

प्रप्र वस्त्रिष्टुभमिषं वन्द्दीरायेन्दवे।

३ १ २ ३ १ २ ३ २ ३ १ २

धिया वो मेधसातये पुरन्ध्या विवासति॥ १॥

अथ द्वितीयखण्डे—सैषा प्रथमा। प्रियमेधा ऋषिः। हे अध्वर्य्वादयः! 'वो' यूय प्रथमार्थे द्वितीया 'त्रिष्टुभं' स्तोभत्रयोपेतम् 'इषम्' अन्न 'प्र प्र' अपरः प्र शब्दः पूरणः। भरतेति शेषः। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। कस्मै 'वन्द्दीराय' यो वीरान् स्तौति स वन्द्दीरः तस्मै 'इन्दवे' इन्द्राय। इन्दतेरैश्वर्य्यकर्मणः इदं रूपम्। अथवा फलैर्दृष्टिभिर्वा उनत्तीतीन्दुरिन्द्रः तस्मै। स चेन्द्रो 'वो' युष्मान् 'मेधसातये' यज्ञसम्भजनाय 'पुरन्ध्या' बहुप्रज्ञया 'धिया' कर्मणा 'आ विवासति' परिचरति। अभिमतफलयोजनेन सत्करोतीत्यर्थः॥ १॥

२ १२ २ ३ ३ २ ३२ ३२३ १२
काश्यपस्य स्वर्विदो यावाहुः सयुजाविति ।
२ ३ २३१ २ ३ २ ३ १ ३२ ३ १ २
ययोर्विश्वमपि व्रतं यज्ञं धीरा निचाय्य ॥ २ ॥

अथ द्वितीया । वामदेव ऋषिः । पश्यतीति काश्यपः । 'काश्यपः पश्यको भवति' इति श्रुत्यन्तरम् । तस्य 'काश्यपस्य' सर्वद्रष्टुरिन्द्रस्य सम्बन्धिनौ 'यौ' अश्वौ । 'ययोः' च 'विश्वं' सर्वम् 'अपि' 'व्रतं' कर्म 'यज्ञं' प्रति यजनीयदेशं प्रतीत्येवं 'निचाय्य' निचित्य 'सयुजौ' सहैव युज्याते इति 'स्वर्विदः' स्वर्गं लब्धवन्तो 'धीराः' जनाः आहुः ।

अथवा 'काश्यपः' प्रजापतिः 'काश्यपोऽष्टमः स महामेरुं न जहातीति' श्रुत्यन्तरात् तस्य 'स्वर्विदः' सर्वं पश्यतः 'यौ' देवौ 'सयुजौ' सहचरौ जना आहुः वेदविदस्तौ मित्रावरुणौ । 'अहर्वै मित्रो रात्रिर्वरुणः' इत्यैतरेयब्राह्मणम् । सर्वस्य कार्यस्य तयोरेवाल्लभावात् इन्द्राग्नी वा देवौ तयोरेव सर्वनिर्वाहकत्वात् तदभिप्रायेणेयमृक् मैत्रावरुणी ऐन्द्राग्नी वेति पूर्वमभिहितम् ॥ २ ॥

१ ३ २ १ २ ३ १२ ३ १२
अर्चत प्रार्चत नरः प्रियमेधासो अर्चत ।
२ ३ ३ २ ३२उ ३ २३क २र
अर्चन्तु पुत्रका उत पुरमिद्धृष्ण्वर्चत ॥ ३ ॥

अथ तृतीया । प्रियमेधा ऋषिः । हे 'नरः' कर्मणां नेतारोऽध्वर्य्वादयः ! यूयम् इन्द्रम् 'अर्चत' पूजयत स्तुत्वा 'प्रार्चत' प्रकर्षेणार्चतेन्द्रमेव । हे 'प्रियमेधासः !' प्रियमेधसम्बन्धिन-

स्तद्रोत्रा यूयम् अर्चतेन्द्रम् । 'पुत्रकाः' पुत्रा अभ्यर्चन्त्विन्द्रम् । 'उत' अपिच 'पुरमित्' पुरमेव स्तोतॄणामभिमतस्य पूरकम् । 'धृष्णुं' धर्षणशीलं तादृशमिन्द्रम् 'अर्चत' ॥ ३ ॥

३ २ २र ३ २ ३ १ २ ३ १ २
उक्थमिन्द्राय शꣳस्यं वर्द्धनं पुरुनिःषिधे ।

३ १ २र ३ १ २ ३ १ २ ३ १ २
शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥ ४ ॥

अथ चतुर्थी । मधुच्छन्दा ऋषिः । 'इन्द्राय' इन्द्रार्थं 'वर्द्धनं' वृद्धिसाधनम् 'उक्थं' शस्त्रं 'शस्यम्' अस्माभिः शंसनीयम् । कीदृशायेन्द्राय ? 'पुरु निःषिधे' पुरूणां बहूनां शत्रूणां निषेधकारिणे । 'शक्रः' इन्द्रो 'णो' ऽस्मदीयेषु 'सुतेषु' पुत्रेषु 'सख्येषु च' सखित्वेष्वपि 'यथा' येन प्रकारेण 'रारणत्' अतिशयेन शब्दं कुर्य्यात् तथा शंस्यमिति पूर्वत्रान्वयः । अस्मदीयेन शस्त्रेण परितुष्ट इन्द्रः नोऽस्माकं पुत्रान् अस्मत्सख्यानि च बहुधा प्रशंसन्त्वित्यर्थः ॥ ४ ॥

३ १ २ ३ २ ३ १ २ ३ २३
विश्वानरस्य वस्पतिमनानतस्य शवसः ।

३ २ ३२ ३ १ २ ३ १ २
एवैश्च चर्षणीनामूती हुवे रथानाम् ॥ ५ ॥

अथ पञ्चमी । प्रियमेध ऋषिः । 'विश्वानरस्य' विश्वान् मनून् प्रत्नतस्य 'अनानतस्य' शत्रूणामप्रह्वस्य 'शवसो' बलस्य 'पतिं' स्वामिन मिन्द्रं वा अत्र इन्द्रसम्बन्धिनो मरुतोऽपि सङ्कीर्त्यन्ते हे मरुत । 'वो' युष्माक मित्यर्थः यद्यपि मरुत्संशब्दनं नास्ति तथापि व इति सामर्थ्या दभ्यर्त्ते युष्माकं 'चर्षणीनाम्' सैनिकानाम् 'एवैः' गमनै सह

यद्वा। चर्षणीनामिन्द्रस्य सेनारूपाणां यो युष्माकं गमनै-रिति सामानाधिकरण्यम् युष्माकं 'रथानां' च 'ऊती' ऊतिभिर्गमनैश्च सह 'हुवे' आह्वयामि। गन्तृभी रथैर्गन्तृभि-र्मरुद्भिश्च सहेन्द्रं हुवे इत्यर्थः॥

यद्वा। हे यजमानाः! युष्मदीयसैनिकानां रथा यदा प्रविशन्ति युद्धाय स्वसङ्ग्रामं, तदानीं तेषां साहाय्यायेन्द्रं हुवे इत्यर्थः॥ ५॥

१ २ ३ १ २ ३ १ ३१ २ ३ १ ३१ ३ १ २
स घा यस्ते दिवो नरो धिया मर्त्तस्य शमतः।
२ १ ३१ २ ३ २ ३ २ ३ २उ २ ३ २
ऊती स बृहतो दिवो द्विषो अꣳहो न तरति॥६॥

अथ षष्ठी। भरद्वाज ऋषिः। 'शमतः' कर्मानुष्ठानेन शान्तस्य हृतस्य निजमार्गवर्त्तिन इत्यर्थः। 'मर्त्तस्य' मनुष्यस्य मध्ये जात्येकवचनं 'दिवो' द्योतनादिगुणकस्य 'ते' तव 'धिया' कर्मणा स्तुत्या 'नरः' मनुष्यः 'सखा' स्तोता भवति 'सः' नरः। 'यः' 'बृहतो' महतो 'दिवो' दीप्तस्य तव सम्ब-न्धिन्या 'ऊती' ऊत्या रक्षया 'द्विषो' द्वेष्टॄन् 'अंहो न' आह-ननमोर्ल पापमिव 'तरति' अतिक्रामति॥ ६॥

२ ३ २ ३ २ ३ २ ३१ २ ३ १ २
विभोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो।
३ २ ३-१ २
अधा नो विश्वचर्षणे द्युम्नꣳ सुदत्र मꣳहय॥७॥

अथ सप्तमी। अत्रिर्ऋषिः। हे 'शतक्रतो'। बहुकर्म-त्रिन्द्र! 'विभोः' प्रभूतस्य 'राधसो' धनस्य 'ते' तव 'रातिः'

दानं 'विभ्वी' महती 'अथ' अतः कारणात् हे 'विश्वचर्षणे'! सर्वस्य द्रष्टः 'सुदत्र' कल्याणदानेन्द्र! 'नो' ऽस्मभ्यं 'द्युम्न' धनं 'मंहय' प्रयच्छ ॥ ७ ॥

१ २   २ १ २ २ १   २र
वयश्चित्ते पतत्रिणो द्विपाच्चतुष्पादर्जुनि।
२१   १ २ २ १   २र   ३ १   २र ३ १ २
उषः प्रारन्नृतूꣳरनु दिवो अन्तेभ्यस्परि ॥ ८ ॥

अथ अष्टमी। प्रस्कण्व ऋषिः। हे 'अर्जुनि!' शुभ्रवर्णे! 'उषः' उषोदेवते! 'ते' तव 'ऋतूनतु' गमनमाश्रमुलक्ष्य 'द्विपात्' मनुष्यादिकं 'चतुष्पाद्' गवादिकं तथा 'पतत्रिणः' पतत्रवन्तः पक्षोपेताः 'वयश्चित्' पक्षिणश्च 'दिवो अन्तेभ्यः' आकाशप्रान्तेभ्यः 'परि' उपरि 'प्रारन्' प्रकर्षेण गच्छन्ति। रात्र्यान्धकारेणाभिभूताः सर्वे प्राणिनस्त्वदागमनानन्तरञ्चेष्टावन्तो भवन्तीत्यर्थः ॥ ८ ॥

२ १   २र २   २ ३   २ ३   १   १ २ २   ३ २
अमी ये देवा स्थन मध्य आ रोचने दिवः।
१ २   ३ २उ   ३ २ ३ २   २   ३ २ ३ १ २
कद्व ऋतं कदमृतं का प्रत्ना व आहुतिः ॥ ९ ॥

अथ नवमी। आप्त्यस्त्रित ऋषिः। हे 'देवाः'! इन्द्रादयः 'ये'ऽमी यूयं 'दिवो' द्योतमानस्य सूर्यस्य 'आरोचने' दीप्तिविषये 'मध्ये' अन्तरिक्षलोके 'स्थ' भवथ सूर्यप्रकाशस्थाने इत्यर्थः। तेषां 'वो' युष्माकं सम्बन्धि स्तोत्रविषयम् 'ऋतं' सत्यं 'कत्' कस्मिन् देशे वर्त्तते? 'अमृतं' नकारस्य स्थाने मकारः। अनृतं 'कत्' कुत्रास्ति? 'वो' युष्मदीया 'प्रत्ना' पुराणी 'आहुतिः'

'का' कीदृशी ? युष्मदीयं दानं किमभूदित्यर्थः दैहृग्भूतदुःखानुभवेन मया पूर्वमनुष्ठितो यागसमूहो युष्मान् न प्राप्नोदित्यनुमिमे ॥ ८ ॥

२ २ १ २ २ २ २ १ २ ३ १ २
ऋचण् साम यजामहे याभ्यां कर्माणि कृण्वते ।
१ २र २ २ ३ १ २
वि ते सदसि राजतो यज्ञं देवेषु वक्षतः ॥ १० ॥

इति चतुर्थप्रपाठकस्य द्वितीयार्द्धे द्वतीय दशति ।

---

अथ दशमी । वामदेव ऋषिः । 'याभ्याम्' ऋक्सामाभ्यां 'कर्माणि' यज्ञस्तोत्रमसुखानि 'कृण्वते' होतार उद्गातारः कुर्वन्ति । ताम् 'ऋच' तत् साम' च 'यजामहे' वय पूजयामः 'ते' ऋक्सामे 'सदसि' ऋत्विक्समूहे सदोमण्डपे 'विराजत.' स्तोत्रशस्त्ररूपेण विशेषेण प्रकाशयतः । ते च ऋक्सामे देवते 'देवेषु' इन्द्रादिषु 'यज्ञ' 'वक्षत.' प्रापयतः ॥ १० ॥

इति सायणाचार्यविरचित माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थाध्यायस्य द्वितीय खण्ड ।

इत्यानुष्टुभमैन्द्रम् ।

---

मन्त्यं कादश या विद्याः पृतना इति सम्मताः ।
जगत्य ऐन्द्रो रोदस्योः स्तुतिष्टे तवतो इति ।
उभे यदिन्द्ररोदसी महापङ्क्तिरितीरिता ॥

२ १ २र ३ १ २
य एक इद्धृतिथिर्जनानाम्।
२ ३ १ २र ३ १ २ ३ १
स पूर्व्यो नूतनमाजिगोषं तं
३ १ १ २र ३ २३ २
वर्त्तनीरनु वाहत एक इत्॥ ३॥

अथ तृतीया। वामदेव ऋषिः। हे 'विश्वाः' सर्वाः प्रजाः! 'दिवः' स्वर्गस्य 'ओजसा' बलेन 'पतिं' स्वामिनमिन्द्रं 'समेत' स्तोत्रेण हविषा वा सम्यक् प्राप्नुत। इन्द्रः 'एक इत्' एक एव सन् 'जनानां' यजमानानाम् 'अतिथिः' अतिथिवत् प्रियो 'भूः' भवति। 'पूर्व्यः' पुरातनः 'स' इन्द्रः 'आजिगीषन्तं' स्वमनून् जेतुमिच्छन्तं 'नूतनम्' अद्यतनं स्तोतारं प्रति 'एक इत्' एक एव वर्त्तनिमार्गः सन् 'अनुवाहते' अनुवर्त्तयति॥ ३॥

३ १ २ ३ २ ३ १ २ २
इमे त इन्द्र ते वयं पुरुष्टुत
२ ३ १ ३ १ २
ये त्वारभ्य चरामसि प्रभूवसो।
२उ ३ १ २ ३ २३ १ २
न हि त्वदन्यो गिर्वणो गिरः सघत्-
३ १ २३ १ २ १ २ ३ १२
क्षोणीरिव प्रति तद्धर्य्य नो वचः॥ ४॥

अथ चतुर्थी। सव्यआङ्गिरसऋषिः। 'प्रभूवसो' प्रभूतधन! हे इन्द्र! अतएव 'पुरुष्टुत' पुरुभिर्बहुभिर्यजमानैः स्तुत! 'ये' वयं 'त्वा' त्वाम् 'आरभ्य' आश्रयतयावलम्ब्य 'चरामसि' चरामः यागे वर्त्तामहे। 'ते' इमे वयन्ते तव

१ २ २ १ २ २ २ २ २ २
परि ष्वजन्त जनयो यथा पतिं

२ २ २ १ २ २ २ २ १ १ २
मर्य्यं न शुन्ध्युं मघवानमूतये ॥ ६ ॥

अथ षष्ठी। कृष्ण आङ्गिरस ऋषिः। 'स्वर्युवः' स्वर्गेच्छ्याभिमुख्येन प्राप्ता 'सध्रीचीः' सङ्गताः विश्वा व्याप्ताः 'उशतीः' कामयमानाः 'मतयः' स्तुतयः 'इन्द्रम्' ईश्वरम् 'अच्छानूषत' अभिष्टुवन्ति। किञ्च। 'जनयो' जायाः यथा 'पतिं' भर्त्तारं 'मर्य्यं न' यथा च 'शुन्ध्युं' शुद्ध दोषरहितं 'मघवानं' धनवन्तम् ऊतये' रक्षणाय 'परिष्वजन्त' आलिङ्गन्ति छान्दसो लोट्। तद्वदिन्द्र मे स्तुतयः परिष्वजते।

"परिष्वजन्त"-"परिष्वजते"-इति च पाठौ ॥ ६ ॥

१ २उ २ १ १ २ १ २ २ २
अभि त्यं मेषं पुरुहूतमृग्मिय-

१ २ २ १ २ २ १ २ २ २
मिन्द्रं गीर्भिर्मदता वस्वो अर्णवम्।

२ २ २ २ २ २ १ २ २ १ २
यस्य द्यावो न विचरन्ति मानुषं

२ १ २८ २ १ २८
भुजे मꣳहिष्ठमभि विप्रमर्चत ॥ ७ ॥

अथ सप्तमी। सव्य ऋषिः। 'त्यं' तं प्रसिद्धं 'मेषं' शत्रुभिः स्पर्द्धमानम्। यद्वा। कण्वपुत्र मेधातिथिं यजमानमिन्द्रो मेषरूपेणागत्य तदीयं सोमं पपौ। स ऋषिस्तं मेष इत्यवोचत् अत इदानीमपि मेष इन्द्रोऽभिधीयते। मेधातिथेर्मेषेति सुब्रह्मण्यमन्त्रैकदेशस्य व्याख्यानरूप

तुत्यां' प्रति आवर्त्तयामि। कीदृशम्? 'रथं' 'हवनस्यदं' हवनमाह्वाने यागं वा प्रति वेगेन गच्छन्तम्। गमने दृष्टान्तः, 'अत्यन्नवाजं' गमनसाधनमश्वमिव 'मह्य' पूजय ॥ ८ ॥

२ १ १ २ २   १ २   २ २ २
घृतवती भुवनानामभिश्रियो-
२ २ १ २ २ १ २ २ २ २
र्वी पृथ्वी मधुदुघे सुपेशसा।
१ २ २ १ २ २ २ १ २ २
द्यावापृथिवी वरुणस्य धर्मणा
१ २ २ २ २ १ २
विष्कभिते अजरे भूरिरेतसा ॥ ९ ॥

अथ नवमी। भरद्वाज ऋषिः। 'द्यावापृथिवी' द्यावापृथिव्यौ 'घृतवती' दीप्तिमत्यौ उदकवत्यौ वा भवत इति शेषः 'भुवनानां' भूतानाम् 'अभिश्रियौ' अभिश्रयणीये भवत इति सर्वत्रानुसन्धेयम्, 'उर्वी' विस्तीर्णे 'पृथ्वी' बहुकार्य्यरूपेण प्रथिते च, 'मधुदुघे' मधुन उदकस्य दोग्ध्र्यौ 'सुपेशसा' सुरूपे, 'वरुणस्य' सर्वनियामकस्य 'धर्मणा' धारणे 'विष्कभिते' पृथक् धारिते 'अजरे' नित्ये 'भूरिरेतसा' बहुरेतस्के बहुकार्य्ये वा भवतः अत्र साक्षात् द्यावापृथिव्योः स्तुतिः प्रसङ्गाद् वरुणस्येति द्रष्टव्यम् ॥ ९ ॥

२ १   २२ २   १ २   २ २ २ १ २
उभे यदिन्द्र रोदसी आपप्राथोषा इव।
२ १   २   २ १ २   २ १ २   १ २
महान्तं त्वा महीनाᳫं सम्राजं चर्षणीनाम्।

'तुभ्यं' प्रति आवर्त्तयामि। कीदृशम्? 'रथ' 'हवनस्यदं' हवनसान्नाने याग वा प्रति वेगेन गच्छन्तम्। गमने दृष्टान्तः, 'अत्यन्नवाजं' गमनसाधनमश्वमिव 'मह्य' पूजय॥ ८॥

१ २ ३ ३ १ २ १ २ ३
घृतवती भुवनानामभिश्रियो-
२ ३ १ २ ३ १ २ ३ १ २
र्वी पृथ्वी मधुदुघे सुपेशसा।
१ २ ३ १ ३२ ३ १ २ ३
द्यावापृथिवी वरुणस्य धर्मणा
१ २ ३ २ ३ १ २
विष्कभिते अजरे भूरिरेतसा॥ ६॥

अथ नवमी। भरद्वाज ऋषिः। 'द्यावापृथिवी' द्यावापृथिव्यौ 'घृतवती' दीप्तिमत्यौ उदकवत्यौ वा भवत इति शेषः 'भुवनानां' भूतानाम् 'अभिश्रियौ' अभिश्रयणीये भवत इति सर्वत्रानुसन्धेयम्, 'उर्वी' विस्तीर्णे 'पृथ्वी' बहुकार्यरूपेण प्रथिते च, 'मधुदुघे' मधुन उदकस्य दोग्ध्र्यौ 'सुपेशसा' सुरूपे, 'वरुणस्य' सर्वनियामकस्य 'धर्मणा' धारणे 'विष्कभिते' पृथक् धारिते 'अजरे' नित्ये 'भूरिरेतसा' बहुरेतस्के बहुकार्य्ये वा भवत. अत्र साक्षात् द्यावापृथिव्योः स्तुतिः प्रसङ्गाद् वरुणस्येति द्रष्टव्यम्॥ ६॥

३ १ ३२ ३ १ २ २ ३ २ १ २
उभे यदिन्द्र रोदसी आपप्राथोषा इव।
३ १ २ ३ १ २ ३ १ २ ३ २
महान्तं त्वा महीनाᳬ सम्राजं चर्षणीनाम्।

ब्राह्मणमेवमाम्नायते, 'मेधातिथिं ह काण्वं मेषो भूत्वा जहारेति।' आगत्य सोमं अपहृतवानित्यर्थः। 'पुरुहूत' बहुभिर्यजमानैराहूतम् 'ऋग्मियम्' ऋग्भिर्विक्रियमाणं स्तूयमानमित्यर्थः। स्तुत्वा हि देवता विक्रियते यद्वा ऋग्भिर्मीयते ऋग्मीः तं 'वस्वो अर्णवं' धनानामावासभूमिम्। एवं यद्वात् इति गुणविशिष्टमिन्द्रं हे स्तोतारः। 'गीर्भिः' स्तुतिभिः 'अभिमदत' आभिमुख्येन हर्षं प्रापयत। 'यस्य' इन्द्रस्य 'कर्माणि' मानुषं जात्येकवचन 'मानुषाणि' मनुष्याणां हितानि 'विचरन्ति' विशेषेण वर्त्तन्ते। अत्र दृष्टान्त', 'द्यावो न' यथा सूर्यस्य रश्मयः सर्वेषां हितकराः 'भुजे' भोगाय 'मंहिष्ठम्' अतिशयेन महत्वं 'विप्र' मेधाविनम्। तथाविधमिन्द्रम् 'अभ्यर्चत' अभिपूजयत॥ ७॥

१उ २ १ २ २ १ २
त्वꣳ सु मेषं महया स्वर्विदꣳ
१ १ २र १ १ २ १ १ २र
शतं यस्य सुभुवः साकमीरते।
२ २ १ २र २ २ १ २ १
अत्यं न वाजꣳ हवनस्यदꣳ रथ-
१ १ १ १ २र १ १ २
मेन्द्रं ववृत्यामवसे सुवृक्तिभिः॥ ८॥

अथ अष्टमी। सव्यऋषिः। 'त्वं' स प्रसिद्ध 'मेषं', मेषत्वभि. मह स्पर्धमानं 'स्वर्विदं' स्वरादित्यो द्योर्वा तस्य 'वेदितारं' लब्धारं वा। यद्वा। स्वः सुष्ठु अरणीयं धनं तस्य लम्भयितारम्। एव गुणविशिष्टमिन्द्रं हे अध्वर्यो। 'सुमहय' सम्यक् पूजय। 'यस्य' इन्द्रस्य 'शत' शतसंख्याकाः 'भाव·

तुत्या' प्रति आवर्त्तयामि। कीदृशम्? 'रथं' 'हवनस्यद' हवनमाह्वाने यागं वा प्रति वेगेन गच्छन्तम्। गमने दृष्टान्त', 'अत्यवाजं' गमनसाधनमश्वमिव 'मह्य' पूजय॥ ८॥

१ १ २ ३ १ २ ३ २ ३
घृतवती भुवनानामभिश्रियो-
२ ३ १ २ ३ १ २ ३ १ २
र्वी पृथ्वी मधुदुघे सुपेशसा।
१ २ ३ १ ३ २ ३ १ २ ३
द्यावापृथिवी वरुणस्य धर्मणा
१ २ ३ ३ १ १ २
विष्कभिते अजरे भूरिरेतसा॥ ९॥

अथ नवमी। भरद्वाज ऋषि। 'द्यावापृथिवी' द्यावा पृथिव्यौ 'घृतवती' दीप्तिमत्यौ उदकवत्यौ वा भवत इति शेष 'भुवनाना' भूतानाम् 'अभिश्रियै' अभिश्रयणीये भवत इति सर्वत्रानुसन्धेयम्, 'उर्वी' विस्तीर्णे 'पृथ्वी' बहुकार्य्यरूपेण प्रथिते च, 'मधुदुघे' मधुन उदकस्य दोग्ध्र्यौ 'सुपेशसा' सुरूपे, 'वरुणस्य' सर्वनियामकस्य 'धर्मणा' धारणे 'विष्कभिते' पृथक् धारिते 'अजरे' नित्ये 'भूरिरेतसा' बहुरेतस्कौ बहुकार्य्ये वा भवत अत्र साक्षात् द्यावापृथिव्यो स्तुति प्रसङ्गाद् वरुणस्येति द्रष्टव्यम्॥ ९॥

२ १ २८ ३ १ २ १ २ ३ १ २
उभे यदिन्द्र रोदसी आपप्राथोषा इव।
३ १ २ ३ १ २ ३ १ २ ३ २
महान्तं त्वा महीना सम्राज चर्षणीनाम्।

२ १ २र १ १ २र
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनम् ॥१०॥

अथ दशमी। मेधातिथि ऋषिः। महापङ्क्तिश्छन्दः। षडष्टाष्टाक्षराः पादाः, द्वौ चार्धर्चावधीमहे हे 'इन्द्र।' 'उभे' 'रोदसी' द्यावापृथिव्यौ 'यत्' यस्त्वम् 'आ पप्राथ' स्वतेजसा आ पूरयसि प्रा पूरणे आदादिकः (प०)। छान्दसो लिट्। 'उषा इव' यथा उषाः स्वभासा सर्वं जगदा पूरयति तद्वत्। 'तं' 'महीनां' महतां देवानामपि 'महान्तम्' नायकम्। "चर्षणीनां' मनुष्याणामपि 'सम्राजम्' ईश्वरम् 'इन्द्रम्' 'त्वा' त्वा 'देवी' देवनशीला 'जनित्री' साधुजनयित्री अदितिः 'अजीजनत्' अजनयत् जनेर्ण्यन्तात् लुङि चङि रूपमेतत्। यस्मादेषा जनयित्री ईदृश पुत्रमजीजनत् अतः कारणात् सा 'भद्रा' कल्याणी प्रशस्ता जाता जनेर्ण्यन्तात् साधुकारिणि तृन् (३,२,१३५) 'जनिता मन्त्रे (६,४,५३') इति इडादौ णि लोपो निपात्यते। ऋन्नेभ्य (४,१,५) इति ङीप्॥ १० ॥

१ २ १ २ २ १ २ ३ १२
प्र मन्दिने पितुमदर्चता वचो

२ ३ १२ ३ १२१ १ २
यः कृष्णगर्भा निरहन्नृजिश्वना।

१ २१ १२१ १ २
अवस्यवो वृषणं वज्रदक्षिणं

२१ २ १ २ २
मरुत्वन्तं सख्याय हुवेमहि ॥ ११ ॥

इति चतुर्थप्रपाठकस्य द्वितीयार्धे चतुर्थं दशतिः।

---

अथैकादशी। एषा गर्भस्राविण्युपनिषत्। हे ऋत्विजः! 'मन्दिने' स्तुतिमते स्तोतव्यायेन्द्राय 'पितुमत्' हविर्लक्षणेनान्नेनोपेतं 'वचः' स्तुतिलक्षणं वचनं 'प्रार्चत' प्रकर्षेणोच्चारयत। 'यः' इन्द्रः 'ऋजिश्विना' एतत् संज्ञकेन राजर्षिणा सख्या सहितः सन् 'कृष्णगर्भाः' कृष्णोनाम कश्चिदसुरः, तेन निषिक्तगर्भाः तदीया भार्य्याः 'निरहन्' नितरामवधीत् कृष्णासुरस्य तत्पुत्राणामनुत्पत्त्यर्थं गर्भिणीस्तस्य भार्य्या अपि अवधीदित्यर्थः। 'अवस्यवः' रक्षणेच्छवो वयं 'वृषणं' कामानां वर्षितारं 'वज्रदक्षिणं' वज्रयुक्तेन दक्षिणहस्तेन उपेतं 'मरुत्वन्तम्' इन्द्रं 'सख्याय' सख्युः कर्मणे 'हुवेमहि' आह्वयामः।

"हुवेमहि" "हवामहे" इति च पाठौ ॥ ११ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थाध्यायस्य तृतीयः खण्डः।

इति जागतम्।

---

अष्टाविंशतिरिन्द्रेति मुख्याः सप्तदशोष्णिहः।
आद्या दशान्त्या ककुभः पिबेत्यष्टादशी विराट्॥
तु चे वैश्या इमामीवामित्यादिव्यपरिष्टुतिः।
आगन्त गाव इत्येते मरुतामिन्द्रदेवताः।
अन्या ऋचोऽभिधीयन्ते ऋषयस्तत्र तत्र हि॥

अथ चतुर्थप्रपाठकस्य द्वितीयार्द्धे प्रथम दशतिः।

१ २ २ २ २ १ २ २ १ २ २उ २क
इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम्।
३ १ ३ १ २ १ २ २ २
विदे वृधस्य दक्षस्य महाᳬ हि षः ॥ १ ॥

तत्र चतुर्थे खण्डे—सैषा प्रथमा। नारद ऋषिः। हे 'इन्द्र'! सोमेषु सुतेष्वभिषुतेषु सत्सु तान् पीत्वा 'क्रतुं' कर्मकर्त्तारम् 'उक्थ्यं' स्तोतारं च 'पुनीषे' शोधयसि। यद्वा सोमेष्वभिषुतेषु उक्थ्यं क्रतुं यागं तैः सोमैः पुनीषे यजमानैः पूतं कारयसि किमर्थम्? 'दधस्य' वर्द्धकस्य 'दक्षस्य' बलस्य 'विदे' लाभाय। स तादृश 'इन्द्रः' 'महान् हि' महान् खलु अतएवं कर्त्तुं शक्नोतीति भावः॥ १॥

१२ ३ १ ३२ ३ १ ३ ३ ३
तमु अभि प्र गायत पुरुहूतं पुरुष्टुतम्।
१२ ३ १ ३ ३ १ ३२
इन्द्रं गीर्भिस्तविषमा विवासत॥ २॥

अथ द्वितीया। द्वयोर्गौषूक्त्यश्वसूक्तिनावृषी। 'पुरुहूत' बहुभिराहूतं 'पुरुष्टुत' बहुभिः स्तुत 'तमु' तमेव इन्द्रं हे स्तोतारः! 'अभिप्रगायत' अभिमुखं प्रकर्षेण स्तुध्वम्। एतदेव स्पष्टयति, 'तविषं' महान्तम् इन्द्रं 'गीर्भिः' वाग्भिः 'आविवासत' परिचरत॥ २॥

३ १ ३ २ ३ १ २ ३ १ ३ ३ ३
तं ते मदं गृणीमसि वृषणं पृत्सु सासहिम्।
३ १२ ३ १ २
उ लोककृत्नुमद्रिवो हरिश्रियम्॥ ३॥

अथ तृतीया। हे 'अद्रिवः'! वज्रवन्निन्द्र! 'ते' त्वदीयं 'तं' 'मदं' सोमपानजनितं हर्षं 'गृणीमसि' गृणीमः प्रशंसामः। गृ शब्दे क्र्यादिः 'प्वादीनां ह्रस्वः (७,४,८०)।' इदन्तो मसि (७,१, ४६) इति मस इकारागमः।' कीदृशम्?

'वृषणं' वर्षितारं कामानाम्। 'पृत्सु' वैरिसम्पर्कजनितेषु संग्रामेषु। अतएव बह्वृचाः पृत्सिति पठन्ति। पृत्सु समत्सिति संग्रामनामसु ( नि० २,१७,२१,२२ ) पठितम्। 'सासहिं' शत्रूणामभिभवितारं 'लोककृत्नुं' लोकस्य स्थानस्य कर्त्तारं 'हरिश्रियं' हरिभ्यामश्वाभ्यां श्रयणीयं सेव्यम्। 'उ' शब्दः सर्वेषां समुच्चये पादपूरणे वा ॥ ३ ॥

१ २र ३ १ २ ३ १ २ १ २ १ २
यत्सोममिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये।

१ १ ३ १ २ १ २ ३ १ २र
यद्वा मरुत्सु मन्दसे समिन्दुभिः ॥ ४ ॥

अथ चतुर्थी। पर्वत ऋषिः। हे 'इन्द्र !' 'विष्णवि' विष्णौ सोमपानार्थमागते सति अन्यदीये यागे सोमं 'यद्' यदि तेन विष्णुना सार्द्धं पिबसि। 'यद्वा' यदि वा 'आप्त्ये' अपाम्पुत्रे 'त्रिते' एतत्संज्ञके राजर्षौ यजमाने सोमं पिबसि घेति पूरणं 'यद्वा' यदि च 'मरुत्सु' च सोमपानायागतेषु अन्यदीये यज्ञे 'मन्दसे' माद्यसि तथाप्यस्मदीयैरेव 'इन्दुभिः' सोमैः सम्यक् माद्य ॥ ४ ॥

१ १ १ २ ३ १ २ २ १ २ २ १ २
एदु मधोर्मदिन्तरꣳ सिञ्चाध्वर्यो अन्धसः।

१ २उ ३ १ २र ३ १ २
एवा हि वीर स्तवते सदावृधः ॥ ५ ॥

अथ पञ्चमी। एतदादितिसृणां विश्वमना वैयश्व ऋषिः। हे 'अध्वर्यो !' अध्वरस्य नेतः ऋत्विक्! 'मधोः' मदकरस्य 'अन्धसः' सोमलक्षणस्यान्नस्य 'मदिन्तरम्' अत्यर्थं मादयितृतमं सोमरसमेव 'आसिञ्च' इन्द्रार्थमभिचर। इदु इत्यवधारणे

'वीर.' समर्थ 'सदावृध.' सर्वदा हविर्भिर्वर्द्धनीय'। यद्वा। सर्वदा स्वबलस्य वर्द्धकोऽयमेवेन्द्रः 'स्तवतेहि' स्तोत्रशस्त्रादिभिः स्तूयते खलु सुतायेन्द्राय सोमो दातव्यः तस्मादासिञ्चेति समन्वयः ॥ ५ ॥

१ २ १ २ २ १ २ १ १ २र
एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु।
१ २र ३ २
प्र राधाᳬसि चोदयते महित्वना ॥ ६ ॥

अथ षष्ठी। हे ऋत्विजः। 'इन्दु' स्यन्दनशील सोमम् 'इन्द्राय' इन्द्रार्थम् 'आसिञ्चत' आभिमुख्येन प्रत्याचारयत आधवनीयद्रव्येण सेचनं कुरुत तमभिषुणुतेत्यर्थं ततः 'सोम्य' सोममयं 'मधु' मदकरं सोमरस 'पिबाति' पिबतु। पीत्वा च स इन्द्रः 'महित्वना' स्वमहत्त्वेनैव 'राधांसि' धनानि स्तोतृभ्यः 'प्रचोदयते' प्रकर्षेण चोदयतु ॥ ६ ॥

२ १ २ २ १ २ ३ १ २ ३ २ ३ १ २
एतो न्विन्द्रᳬ स्तवाम सखायः स्तोम्यं नरम्।
२ १ २र ३ १२ ३ २
कृष्टीर्यो विश्वा अभ्यस्त्येक इत् ॥ ७ ॥

अथ सप्तमी। हे 'सखायः'। समानख्याना मित्रभूता ऋत्विजः। 'नु' क्षिप्रम् 'एतो' आगच्छतैव। किमर्थं तदाह 'स्तोम्य' स्तोमार्हं 'नरं' सर्वस्य नेतारं 'तम्' इन्द्रं 'स्तवाम' स्तोत्रं करवाम। य इन्द्रः 'एक इत्' एकाकी असहाय एव सन् 'विश्वाः' सर्वाः 'कृष्टीः' मनुष्याः 'अभ्यस्ति' अभिभवति तं स्तवामेति शेषः ॥ ७ ॥

१ २ ३ १ २ ३ १ २ ३ २ ३ २
इन्द्राय साम गायत विप्राय बृहते बृहत्।
२ १ २ ३ २ २ ३ १ २
ब्रह्मकृते विपश्चिते पनस्यवे ॥ ८ ॥

अथ अष्टमी। नृमेध ऋषिः। हे उद्गातारः! 'विप्राय' मेधाविने 'बृहते' महते 'ब्रह्मकृते' ब्रह्मणः अन्नस्य कर्त्रे 'विपश्चिते' विदुषे 'पनस्यवे' स्तुतिमिच्छते 'इन्द्राय' 'बृहत्' बृहन्नामकं साम 'गायत' पठत ॥ ८ ॥

२उ ३ २ ३ १ २ ३ ३ १ ३ १ २ ३ १ २
य एक इद्विदयते वसु मर्त्ताय दाशुषे।
१ २ ३ १ २ ३ १ २ ३ २
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ ९ ॥

अथ नवमी। गोतम ऋषिः। 'यः' इन्द्रः 'एक इत्' एक एव 'दाशुषे' हविर्दत्तवते 'मर्त्ताय' मनुष्याय यजमानाय 'वसु' धनं 'विदयते' विशेषेण ददाति। अङ्गेति क्षिप्रनाम 'अप्रतिष्कुतः' परैरप्रतिशब्दितः प्रतिकूलशब्दरहित इत्यर्थः एवम्भूतः स 'इन्द्रः' क्षिप्रम् 'ईशानः' सर्वस्य जगतः स्वामी भवति ॥ ९ ॥

१ २ १ १ २ ३ १ ३२ ३ १ २
सखाय आ शिषामहे ब्रह्मेन्द्राय वज्रिणे।
२ २ ३ २ ३ १ २ ३ १ २
स्तुष ऊ षु वो नृतमाय धृष्णवे ॥ १० ॥

इति चतुर्थप्रपाठकस्य द्वितीयार्द्धे पञ्चम दशतिः।

---

अथ दशमी। विश्वमना ऋषिः। 'सखायः' मित्रभूता हे ऋत्विजः! 'वज्रिणे' वज्रहस्तायेन्द्राय 'ब्रह्म' स्तोत्रम् 'आशिषामहे' वयमाशास्महे च यद्वा। ब्रह्म अस्माभिर्दीयमानं हवीरूपमन्नम् आशास्महे। शासु अनुशिष्टौ (अदा०प०)। व्यत्ययेनात्मनेपदम् (३,१,८५)। अतएव "आशिषामहि" इति बह्वृचा आमनन्ति तत्र "वः" सर्वेषामेव युष्माकमर्थाय 'नृतमाय' सर्वेषां नेतृतमाय। यद्वा समरेषु आयुधानां नेतृतमाय 'धृष्णवे' शत्रूणां धर्षणशीलाय तस्मै इन्द्राय अहमेव "सुस्तुषे" सुष्ठु स्तौमि ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य चतुर्थः खण्डः।

इति चतुर्थः प्रपाठकः समाप्तः।

---

अथ पञ्चमप्रपाठकस्य प्रथमार्धे प्रथम दशतिः।

२ १ २र १ १२ २१ २ १ २
गृणे तदिन्द्र ते शव उपमां देवतातये।
१ २र ३ १ २र
यद्धꣳसि वृत्रमोजसा शचीपते ॥ १ ॥

अथ पञ्चमे खण्डे—सैषा प्रथमा। प्रगाथ ऋषिः। हे 'इन्द्र!' 'ते' तव 'तच्छवो' बलम् 'उपमाम्' अन्तिकं 'देवतातये' यजमानाय यज्ञार्थं वा 'गृणे' स्तुवे। 'यद्' यस्मात् हे 'शचीपते!' 'वृत्रम्' 'ओजसा' बलेन 'हंसि' तस्मात् ते शवो गृणे इति सम्बन्धः ॥ १ ॥

२ ३ १ २र१ २२ १२ ३१२
यस्य त्यच्छम्बरं मदे दिवोदासाय रन्धयन्।
३ १ , २र ३ १ २र
अयꣳ स सोम इन्द्र ते सुतः पिब ॥ २ ॥

अथ द्वितीया। भरद्वाज ऋषिः। हे इन्द्र!' 'त्वं' 'यस्य' सोमस्य 'मदे' पानेन जनिते हर्षे सति 'शम्बरम्' असुरं 'दिवोदासाय' राज्ञे 'रन्धयन्' रध हिंसासराद्धयो.(दि० प०) हन्ता भवसि त्यदिति क्रियाविशेषणं तत् प्रसिद्धं यथा भवति तथा हे 'इन्द्र!' 'स.' 'अयं' 'सोम.' 'ते' त्वदर्थं 'सुत.' अभिसुतः। अतएव त्वं पिब ॥ २ ॥

१ २ २ १२
एन्द्र नो गधि प्रिय सत्राजिदगोह्य।
३ २उ १ १२ ३ १ २र ३१
गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥ ३ ॥

अथ तृतीया। नृमेध ऋषिः। हे 'प्रिय!' सर्वेषां प्रियतम! हे 'सत्राजित्'! महता शत्रुणा जेत'। हे 'अगोह्य'! केनापि तिरस्कर्त्तुमशक्य इन्द्र। 'गिरिर्न' पर्वत इव 'विश्वत' सर्वत. 'पृथु.' पृथुतम 'दिव.' स्वर्गस्य 'पति.' ईश्वरस्त्वं 'नो' ऽस्मान् 'आगधि' आगच्छ ॥ ३ ॥

१ २ ३१ २ ३ १ २ ३ १ २
य इन्द्र सोमपातमो मदः शविष्ठ चेतति।
२ ३ ३ ३ ३ २३ १२
येना हꣳसि न्या३त्रिणं तमीमहे ॥ ४ ॥

अथ चतुर्थी। पर्वत ऋषिः। हे 'इन्द्र!' 'य.' त्वं 'सोम-

पातमः' अतिशयेन सोमस्य पाता हे 'शविष्ठ'! बलवत्तम! शव इति बलनाम (नि० २,९,३) तस्मादिष्ठन्ता दातिशयनिक इष्ठन् (५,३,५५) विन्मतोर्लुक् टिलोपः (६,४,१५५) हे ईष्ट-श्रेन्द्र! तस्य तव सोमपानजनितो यो 'मदः' 'चेतति' सम्यग् जानाति वृत्रवधादीनि कार्य्याणि कर्त्तुम्। य इत्यस्य चेततीत्यनेनापि सम्बन्धाद् यद्वृत्तान्नित्यम् (८,१,६६)' इति न निहन्यते। अथवैतदेकमेव वाक्यम् हे बलवत्तमेन्द्र! सोमपातमः सोमस्य पातृतमो यस्त्वं मदः सोमैर्मादयितव्यस्तर्पयितव्यः सन् चेतति। पुरुषव्यत्ययः (३,१,८५) चेतसि सम्यग् जानासि। 'मदोऽनुपसर्गे (३,३,६७)' इति मदेः कर्मण्यप् प्रत्ययः। 'येन' सोमपानजनितेन मदेन 'अत्रिणम्' अत्तारं राक्षसादिकं 'निहंसि' निहिनस्सि निकृष्टां हिंसां प्रापयसि 'तं' मद तादृङ्मदोपेतं त्वां वा 'ईमहे' याच्ञाकर्माय (नि० ३,१९,१) याचामहे यद्वा। ई गतौ दैवादिकः (प०)। छान्दसो विकरणस्य लुक् (२,४,७३)। ईयामहे उपगच्छामः स्तुतिभिः सम्भजामहे इत्यर्थः ॥ ४ ॥

३ १ २र ३ २उ ३ १ २ ३ १ २ ३ १ २
तुचे तुनाय तत्सु नो द्राघीय आयुर्जीवसे ।
१ २ ३ १ २
आदित्यासः सुमहसः कृणोतन ॥ ५ ॥

अथ पञ्चमी। इरिम्बिठि ऋषिः। हे 'सुमहसः'! शोभनतेजस्काः! हे 'आदित्यासः'! अदितेः पुत्राः! 'नो' ऽस्माकं 'तुचे' पुत्राय 'तुनाय' तनोतेर्लुक्। तनोति कुलमिति तुनः पौत्रः। उकारोपजनश्छान्दसः। अतएव बह्वृचाः "तनाय" इति पठन्ति। तस्मै तुनाय पौत्राय च 'जीवसे' जीवनाय 'द्राघीयो'

दीर्घतमं तत् प्रसिद्धम् 'आयुः' जीवितं 'सु' सुष्ठु 'कर्त्तन' कुरुत ॥ ५ ॥

२ २ १ २र १ १२ १२२
वेत्था हि निर्ऋतीनां वज्रहस्त परिवृजम्।
१२ १ १ २ २१२
अहरहः शुन्ध्युः परिपदामिव ॥ ६ ॥

अथ षष्ठी। विश्वमना ऋषिः। इदानीं गृषिरिन्द्रं सम्बोध्याह। हे 'वज्रहस्त' वज्रयुक्तहस्तेन्द्र। 'निर्ऋतीनाम्' उपद्रवकारिणां रक्षसां 'परिवृजं' परिवर्जनं चिरवधारणं त्वमेव 'वेत्थ' जानीषे। तत्र दृष्टान्तः अहरहरित्यादिः। 'शुन्ध्युः' अग्निरुदिते सति ब्राह्मणा आत्मीयं कर्म कृत्वा शुद्धा भवन्तीति शोधनहेतुत्वाच्छुन्ध्युरादित्यः। आदित्यः 'परिपदामिव' परितः पद्यमानानां यजमानानां यद्वा। परिपदां सामानाधिकरण्यः परितः पततां पक्षिणां वर्जनं स्वस्थानत्यागम् 'अहरहः' प्रतिदिनं यथा वेत्ति। उदिते सूर्ये पक्षिणः स्वस्थानं परित्यज्य सर्वतो गच्छन्ति खलु। एवं त्वयीन्द्रे स्वबलेन प्रकाशमाने सति शत्रवः स्वपुराणि त्यक्त्वा पलायन्त इत्यर्थः ॥ ६ ॥

१ २र२ २ २ २ २१२ १ २
अपामीवामप स्रिधमप सेधत दुर्मतिम्।
१ २ २१२ २ १ २
आदित्यासो युयोतना नो अंहसः ॥ ७ ॥

अथ सप्तमी। इरिमिठि ऋषिः। छं० उष्णिक्। हे 'आदित्यासः'। आदित्याः। 'अमीवां' रोगम् 'अपसेधत' अस्मत्तोऽपगमयत। 'स्रिधं' बाधकं शत्रुं च अपसेधत। 'दुर्मतिम्'

अस्माकं दुःखस्य मन्तारश्च अपसेधत। अपिच हे आदित्याः! 'नो' ऽस्मान् 'अंहसः' पापात् 'युयोतन' पृथक्कुरुत ॥ ७ ॥

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
पिवा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्य्यश्वाद्रिः।
३ १२ ३ १२ ३ २ ३ १ २
सोतुर्बाहुभ्याꣳ सुयतो नार्वा ॥ ८ ॥

इति पञ्चमप्रपाठकस्य प्रथमार्द्धे प्रथम दशतिः।

---

अथ अष्टमी। वसिष्ठ ऋषिः। छ० विराट्। हे 'इन्द्र!' 'सोम' 'पिब'। स सोमः त्वा 'मन्दतु' मादयतु हे 'हर्य्यश्व!' 'ते' त्वदर्थं 'सोतुः' अभिषवकर्त्तुः 'बाहुभ्याम् अर्वा न' रश्मिभ्यामश्व इव 'सुयतः' सुष्ठु परिगृहीतः 'अद्रिः' ग्रावाऽयं 'सोमं' 'सुषाव' ॥ ८ ॥

इति सायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य षष्ठः खण्डः ।

---

अथ पञ्चमप्रपाठकस्य प्रथमार्द्धे द्वितीय दशतिः।

१ २ ३ १ ३२ ३ १ २ ३ १ २
अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि।
३ १२ ३ १ २
युधेदापित्वमिच्छसे ॥ १ ॥

अथ षष्ठे खण्डे—सैषा प्रथमा। सौभरिर्ऋषिः। छ० ककुप्। हे 'इन्द्र!' त्वं 'जनुषा' जन्मनैव 'अभ्रातृव्यः' 'व्यन् सपत्न

(४,१,१४५)' इति ष्यन्प्रत्ययः। सपत्नरहितः 'अना' अनेतकः 'ऋतश्छन्दसि (५,४,१५८)' इति कपः प्रतिषेधः। अनियन्तृक इत्यर्थः 'अनापिः' बन्धुवर्जितश्च 'सनादसि' चिरादेव भ्रातृ-आदिवर्जितोऽसि। यत्र त्वम् 'आपित्वं' बान्धवम् 'इच्छसे' इच्छसि तत्र 'युधेत्' युधेनैव युद्ध कुर्वन्नेव स्तोतॄणामर्थाय सखा भवसीति ॥ १ ॥

१ २ ३१ २ ३१ २ ३२ ३ २ ३ ३१ २
यो न इदमिदं पुरा प्र वस्य आनिनाय तमु व स्तुषे।
१ २ ३ १ २३१ २
सखाय इन्द्रमूतये ॥ २ ॥

अथ द्वितीया। सौभरिऋर्षिः। 'सखायः' समानख्याना हे ऋत्विग्यजमानाः। 'यः' इन्द्रः 'पुरा' पूर्वम् 'इदम् इदम्' दर्शनीयतया विद्यमानं 'वस्यः' वसीयः वसोरीयसुनो-कारलोपश्छान्दसः प्रशस्तं वसुनोऽस्मान् 'आनिनाय' प्रकर्षेणानीतवान्। 'तमु' तमेव धनानामानेतारम् इन्द्रं 'वो' युष्माकं धनलाभार्थम् 'ऊतये' रक्षणाय च 'स्तुषे' सौभरिरहं स्तौमि ॥ २ ॥

१ २३ १ २ ३ १ २
आ गन्ता मा रिषण्यत प्रस्था-
२ ३ २
वानो माप स्थात समन्यवः।
३१ २
दृढ़ा चिद्यमयिष्णवः ॥ ३ ॥

अथ तृतीया। सौभरिऋर्षिः। हे 'प्रस्थावानः' प्रस्थातारः प्रगन्तारो 'मरुतः!' 'आगन्त' अस्मानागच्छत।

'मारिषण्यत' अनागमनेन नोऽस्मान्मा हिंसिषत। हे 'समन्यवः' समानतेजस्काः! समानक्रोधाः! वा 'दृढ़ाचित्' दृढ़ान्यपि पर्वतादीनि हे 'यमयिष्णवः'! नियमयितृत्वशीलाः! नियमयितारः! 'मापस्थात' अस्मत्तोऽन्यत्र मा तिष्ठत अस्मास्वेवावतिष्ठध्वमित्यर्थः॥ ३॥

१ २ ३१२३ १ १ २ १ १ २ १ .१ २
आ याह्ययमिन्दवेऽश्वपते गोपत उर्वरापते।

१ २
सोमꣳ सोमपते पिब॥ ४॥

अथ चतुर्थी। सौभरिर्ऋषिः। 'अश्वपते' अश्वानां स्वामिन्! 'गोपते' गवां पालयितः 'उर्वरापते' सर्वसस्याढ्या भूमिरुर्वरा तस्याः पते! हे इन्द्र! 'इन्दवे' दीप्ताय तुभ्यम् अयं सोमोऽभिषुत इति शेषः। तस्माद् 'आयाहि' सोमं प्रत्यागच्छ, आगत्य 'सोमपते!' हे इन्द्र! 'सोमं' 'पिब'॥ ४॥

१ २ १ २ ३ १ २र
त्वया ह स्विद्युजा वयं प्रति

१ २ २
श्वसन्तं वृषभ ब्रुवीमहि।

१ १ २र ३ १ २
सꣳस्थे जनस्य गोमतः॥ ५॥

अथ पञ्चमी। सौभरिर्ऋषिः। 'वृषभ'! वर्षितः! हे इन्द्र! 'गोमतः' गवादियुक्तस्य जनस्य 'संस्थे' स्थाने युद्धे 'श्वसन्तम्' अस्मान् प्रति क्रोधातिशयेन श्वासकारिणं शत्रुं 'युजा' सहायेन 'त्वया ह स्वित्' त्वयैव खलु वयं 'प्रति ब्रुवीमहि' प्रतिवचनं कुर्मः निराकरिष्याम इत्यर्थः॥ ५॥

१ २ ३क २र ३ २ ३ १ २
गावश्चिद्घा समन्यवः सजात्येन मरुतः सबन्धवः।
३ १ २ ३ १ २ १ २
रिहते ककुभो मिथः॥ ६॥

अथ षष्ठी। सौभरिर्ऋषिः। 'समन्यवः' समानतेजस्काः समानक्रोधा वा हे मरुतः! 'गावश्चित्' गावश्च युष्मत्सम्भूताः 'सजात्येन' समानजातित्वेन एकस्माद्व्रजत इति एवं 'सबन्धवः' समानबन्धुकाः सत्यः 'ककुभो' दिशः प्राच्यादिदिग्भागान् प्राप्य 'मिथः' परस्परं 'रिहते' लिहन्ति घेति पूरकः॥ ६॥

१ २ १ २ ३ १ १ २
त्वं न इन्द्रा भर ओजो
३ १ २
नृम्णꣳ शतक्रतो विचर्षणे।
१ ३ २ १ ३ १ २
आ वीरं पृतनासहम्॥ ७॥

अथ सप्तमी। इयोर्न्तमेधऋषिः। हे 'शतक्रतो'! बहुकर्मन्! 'विचर्षणे'! विविधद्रष्टरिन्द्र! 'त्वं' 'नो' ऽस्मभ्यम् 'ओजो' बलं 'नृम्णं' धनञ्च 'आ भर' आहर। 'वीरं' वीर्योपेतं 'पृतनासहं' सेनानामभिभवितारं त्वाम् 'आ' ह्वयामहे इति शेषः॥ ७॥

२ ३क २र ३ १ २०
अधा हीन्द्र गिर्वण उप
३ १ २ ३ १ २ ३ १ २
त्वा काम ईमहे ससृग्महे।
३ २ ३ १ २ ३ १ २
उदेव ग्मन्त उदभिः॥ ८॥

अथ अष्टमी। छ० ककुप्। हे 'गीर्वणः'। गीर्भिर्वननीयेन्द्र! 'अधा हि' सम्प्रति 'त्वा' त्वां 'कामो' काम्ये निमित्ते। यद्वा। काम इति सुपां सुः (७,१,३९) कामान् 'ईमहे' याचामहे। किञ्च। याचमानाः सन्तः 'उपसस्रग्महे' उप सृजामः स्तुतिभि स्त्वां संयोजयाम इत्यर्थः। तत्र दृष्टान्तमाह 'उदेव' यथोदकेन 'ग्मन्तो' गच्छन्तः पुरुषाः 'उदभिः' अञ्जलिना उत्क्षिप्योदकैः समीपस्थान् क्रीड़ार्थं संसृजन्ति तद्वदित्यर्थः।

"ससृज्महे" इति बह्वृचाः पठन्ति ॥ ८ ॥

१ २ ३ २ ३ २ ३ १ २
सीदन्तस्ते वयो यथा गोश्री-
३ १ २ ३ २ ३ १ २
ते मधौ मदिरे विवक्षणे।
३ १ २र
अभि त्वामिन्द्र नोनुमः ॥ ९ ॥

अथ नवमी। ऋषिः सौभरिः। हे 'इन्द्र!' 'गोश्रीते' श्रीञ् पाके। गोर्विकारो दधि पयश्च गोशब्देनोच्यते। तेन दध्ना पयसा च श्रीते मिश्रिते 'मदिरे' मदकरे 'विवक्षणे' स्वर्गप्रापणशीले त्वदीये 'मधौ' सोमे 'सीदन्तो' निवसन्तः। तत्र दृष्टान्तः 'वयो यथा' पक्षिणो यथा एकत्र सङ्घीभूय तिष्ठन्ति तद्वत् सीदन्तो वय 'त्वाम्' 'अभि' आभिमुख्येन 'नोनुमः' पुनः पुनः भृशं वा स्तुमः ॥ ९ ॥

३ २३ १ २ ३ २उ ३ १ २ ३ १ २
वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः।
२ २ ३ १ २
वज्रिं चित्रꣳ हवामहे ॥ १० ॥

इति पञ्चमप्रपाठकस्य प्रथमार्द्धे द्वितीय दशतिः।

अथ दशमी। हे 'वज्रिन्' वज्रयुक्त! 'अपूर्व्यं' त्रिषु सवनेषु प्रादुर्भूतत्वादभिनव! 'भरन्त' सोमलक्षणे रन्नैस्त्वां पोषयन्तो वयं 'चित्र' चायनीयं विविधरूपं वा 'त्वासु' त्वामेव 'अवस्यव:' अवो रक्षणमात्मन इच्छन्त: सन्त: 'हवामहे' त्वामाह्वयाम: तत्र दृष्टान्त: 'स्थूरं न' यथा भरन्तो व्रीह्यादिभिरिदं पूरयन्तो जना: 'स्थूरं' स्थूलं गुणाधिकं 'कञ्चित्' कञ्चिन्मानवं यथा ह्वयन्ति तद्वत्॥ १०॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य षष्ठ: खण्ड:।

इत्यौष्णिहं काकुभम्।

---

अथ पञ्चमप्रपाठकस्य प्रथमार्द्धे प्रथमां ऋचमाह।

२ ३ २ १  २३१ १ ३ २  ३क २र
स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्य्यः।
३ २र ३ १ २३१ २ ३ २
या इन्द्रेण सयावरीर्वृष्णा मदन्ति
३ २ ३ २ ३ ३ २ ३ १ २
शोभथा वस्वीरनु स्वराज्यम्॥ १॥

स्वादोरष्टादशस्वृक्षु चरमा नतमित्यसौ।
उपरिष्टाद्बृहत्याख्याता: सप्तदशपङ्क्तय:॥
चन्द्रमानतमित्येते वैश्वदेव्यौ प्रतीत्यसौ।
आश्विनी तिस्र आग्नेय्य आते अग्न इधीमहि॥
आर्म्यौ नाम्नीस्ततमित्येता मञ्चेनो अथ चौषसी।
सौमी भद्रन्न इत्येषा शिष्टा ऐन्द्रा उदीरिता:॥
आदितो गौतमो नाम ऋषि: सम्परिकीर्त्तित:।

सप्तमे खण्डे—सैषा प्रथमा। 'स्वादोः' स्वादुभूतस्य रसयुक्तस्य 'इत्था विषूवत.' इत्यमनेन प्रकारेण सर्वेषु यज्ञेषु व्याप्तियुक्तस्य 'मधोः' मधुररसस्य सोमस्य 'क्रियाग्रहण कर्त्तव्यमिति' कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी एवं विधं सोमं 'गौर्यो' गौरवर्णा गावः 'पिबन्ति'। या गावः 'वृष्णा' कामाभिवर्षकेणेन्द्रेण 'सयावरीः' सह गच्छन्त्यः सत्यः 'मदन्ति' हृष्टा भवन्ति। ताः 'इन्द्रपीतस्य' सोमस्यावशेषं पिबन्तीत्यर्थः। 'शोभथाः' वचनव्यत्ययः (३,१,८५) इन्द्रेण सह शोभन्ते। 'वस्वीः' पयःप्रदानेन निवासकारिण्यः ता गावः 'स्वराज्य' स्वस्य स्वकीयस्येन्द्रस्य यद्राज्यं राजत्वन्तद् 'अनु' लक्ष्य अवस्थिता इत्यर्थः ॥ १ ॥

२ ३उ    ३ २उ ३ १ २ ३ २ ३ १ २
इत्था हि सोम इन्मदो ब्रह्म चकार वर्द्धनम्।
१ २    ३ १ २    ३ १
शविष्ठ वज्रिन्नोजसा पृथिव्या
१र १   २ ३१२३१२ ३ १ २
निः शशा अहिमर्चन्ननु स्वराज्यम् ॥ २ ॥

अथ द्वितीया। हे 'शविष्ठ'! अतिशयेन बलवन्! 'वज्रिन्!' वज्रवन्निन्द्र! 'इत्था हि' इत्थम् एव अनेन प्रास्तोमप्रकारेणैव 'सोमे' त्वया गृहीते सति 'मदः' मदेः स्तुतिकर्मणः स्तोता 'वर्द्धनं' तव वृद्धिकर 'ब्रह्म' स्तोत्रं 'चकार'। अनेन कृतवान् इदित्येतत् पदपूरणम् अतस्त्वम् 'ओजसा' बलेन 'पृथिव्याः सकाशात् आगत्य 'अहिम्' हन्तारं वृत्रं 'निःशशाः' निःशेषेण शशाः मा वधस्वेति शासनं कृत्वा पृथिव्याः सकाशान्निरगमय इत्यर्थः। किं कुर्वन्? 'स्वराज्य' स्वस्य राज्य'

राजत्वम् 'अनु' लक्ष्य 'अर्चन्' पूजयन् स्वसामित्वं प्रकटयन्नित्यर्थः॥ २॥

२ १ १२ २ १२ २१ २र
इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभि
२उ ३१ २ २ ३ १ २र
स्तमिन्महत्स्वाजिषूतिमर्भे हवा-
१ १ २र३ १ २
महे स वाजेषु प्र नोऽविषत्॥ ३॥

अथ तृतीया। 'वृत्रहा' वृत्रस्यावरकस्य वृष्टिनिरोधकस्य मेघस्यासुरस्य वा हन्ता यद्वा। आवरकाणां शत्रूणां हन्ता इन्द्रः 'मदाय' हर्षार्थं 'शवसे' बलार्थञ्च 'नृभिः' यज्ञस्य नेतृभिः ऋत्विग्भिः 'वावृधे' स्तोत्रशस्त्ररूपाभिः स्तुतिभिः प्रवर्धितो बभूव स्तुत्या हि देवता प्रासन्ना सती प्रवर्धते। 'तमित्' तमेव इन्द्रं 'महत्सु' प्रभूतेषु 'आजिषु' सङ्ग्रामेषु 'ऊतीम्' अस्माकं रक्षकम् 'हवामहे' आह्वयामहे। तथा 'तम्' इन्द्रम् 'अर्भे' अल्पे सङ्ग्रामे 'हवामहे'। अस्माभिराहुतः 'स' चेन्द्रः 'वाजेषु' सङ्ग्रामेषु 'नो' ऽस्मान् 'प्राविषत्' प्रावतु प्रकर्षेण रक्षतु॥ ३॥

२ १ २३ १२ ३१ १ ३क २र
इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन् वीर्य्यम्।
२३ २ ३ १ २ ३२उ ३ २ १
यद्ध त्यं मायिनं मृगं तव त्यन्मा-
१ २र२ ३३ १२ ३१२
ययावधीरर्चन्ननु स्वराज्यम्॥ ४॥

अथ चतुर्थी। अद्रिरिति मेघनाम (नै०१,१०,१) हे 'अद्रिवन्!' वाहनरूपमेघयुक्त! 'वज्रिन्!' वज्रवन्निन्द्र! 'तुभ्यमित्' तवैव षष्ठ्यर्थे चतुर्थी। तवैव 'वीर्य्यं' सामर्थ्यम् 'अनुत्तं' शत्रुभिरतिरस्कृतम्। 'यद्ध' येन वीर्य्येण खलु 'मायिनं' मायाविनं 'मृगं' मृगरूपमापन्नं 'त्यं' तं 'वृत्रम्' असुरं त्वमपि माययैव 'अवधीः' हतवानसि। अतः कारणात् तव वीर्य्यं 'यत्' तत् प्रसिद्धं भवति। 'अर्चन्ननु स्वराज्यमिति' पादो व्याख्यातः ॥ ४ ॥

२ ३ १ २ २ ३उ २ ३ १ २ ३ १ २
प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यꣳसते ।
१ २ ३ २उ १ २१ २ ३ २
इन्द्र नृम्णꣳ हि ते शवो हनो
३ १ २र ३ २ ३ १ २ ३ १ २
वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ॥ ५ ॥

अथ पञ्चमी। हे 'इन्द्र!' 'प्रेहि' प्रकर्षेण गच्छ। 'अभीहि' इतस्ततः शत्रून् आभिमुख्येन प्राप्नुहि। प्राप्य च 'धृष्णुहि' तान् शत्रून् अभिभवति तव 'वज्रो' 'न नियंसते' शत्रुभिः न नियम्यते अप्रतिहतगतिरित्यर्थः। तथा 'ते' तव 'शवः' त्वदीयं बलं 'नृम्णं' नृणां पुरुषाणां नामकम् अभिभावकम्। 'हि' यस्मादेवं तस्मात् 'वृत्रम्' असुरं मेघं वा 'हनः' जहि। तदनन्तरं तेन निरुद्धा 'अपः' उदकानि 'जयाः' जय, वृत्रं हत्वा तेनावृतमुदकं लभस्वेत्यर्थः। शिष्टं स्पष्टम् ॥ ५ ॥

३ १ ३ २ ३ १ २ ३ १ २ २ ३ २
यदुदीरत आजयो धृष्णवे धीयते धनम् ।

२ १ २ २ २ २ २ २ ३उ २
युंक्ष्वा मदच्युता हरी कंᳪ हनः

१ २र १ १ २ ३ १ २
कं वसौ दधोऽस्माᳪ इन्द्र वसौ दधः ॥ ६ ॥

अथ षष्ठी। अवेदमाख्यानम्। रहूगणपुत्रो गौतमः कुरु-सृञ्जयानां राज्ञां पुरोहित आसीत्। तेषां राजाम्परैः सह युद्धे सति स ऋषिरनेन सूक्तेन इन्द्रं स्तुत्वा स्वकीयानां जयं प्रार्थयामासेति। तस्य च तत् पुरोहितत्वं वाजसनेयिभिराम्नातम् 'गौतमो ह वै राहूगणः उभयेषां कुरुसृञ्जयानां पुरोहित आसीत्' इति।

'यद्' यदा 'आजयः' सङ्ग्रामाः 'उदीरते' उद्गच्छन्ति उत्पद्यन्ते तदानीं 'धनं' 'धृष्णवे' यो धृष्णुः धर्षयिता शत्रूणां जेता भवति तस्मै धीयते निधीयते। जयती धनं भवतीत्यर्थः। हे 'इन्द्र!' त्वं तादृशेषु युद्धेषु प्रवृत्तेषु 'मदच्युता' शत्रूणां 'मदस्य' गर्वस्य च्यावयितारौ 'हरी' त्वदीयावश्वौ 'युंक्ष्व' रथे त्वदीये योजय। योजयित्वा च 'कं' चिद्राजानं तव परिचरणमकुर्वन्तं 'हनः' हन्याः। 'कं' चन त्वा परिचरन्तं 'वसौ' धने 'दधः' स्थापयसि अतो जयाजयौ त्वमेव कारयितासि। तस्मात् हे इन्द्र! अस्मान् अस्मदीयान् राज्ञः वसौ धने 'दधः' स्थापय ॥ ६ ॥

२ ३ १ २ २ १ २ ३ १ २
अक्षन्नमीमदन्त ह्यव प्रिया अधूषत।

१ २ ३ १ २ ३ २ ३ १ २
अस्तोषत स्वभानवो विप्रा नवि-

३ २उ ३क २र ३ १ २
ष्ठया मती योजा न्विन्द्र ते हरी ॥ ७ ॥

अथ सप्तमी। हे 'इन्द्र!' त्वया दत्तान्यन्नानि 'अचन्' यजमाना भुक्तवन्तः भुक्ता च 'अमीमदन्त हि' हृप्ता आसन् खलु। 'प्रियाः' स्वकीयाः तनूः 'अवाधूषत' अकम्पयन् अतिशयितरसास्वादेन वक्तुमशक्नुवन्तः शरीराण्यकम्पयन्। तदनन्तरं 'स्वभानवः' स्वायत्तदीप्तयः 'विप्राः' मेधाविनः ऋत्विजः 'नविष्ठया' अतिशयेन नूतनया 'मती' मत्या स्तुत्या 'अस्तोषत' अस्तुवन्। अतः हे 'इन्द्र!' ते त्वदीयौ 'हरी' एतत्संज्ञावश्वौ 'नु' क्षिप्रं 'योज' रथे योजय॥ ७॥

२ १ १ १ २ ३उ २ १ २ ३ १ २
उपो षु शृणुही गिरो मघवन्मातथा इव।
३ १ २ ३ १ २ ३ २ ३ १ २
कदा नः सूनृतावतः कर इद-
१ २ ३ १उ ३क २र ३ १ २
र्थयास इद्योजा न्विन्द्र ते हरी॥ ८॥

अथ अष्टमी। हे 'मघवन्!' धनवन्निन्द्र! 'गिरः' अस्मदीयाः स्तुतीः 'उपो' उपैव 'सुशृणुहि' उपगम्य सम्यक् शृणु। 'अतथाइव' पूर्वं यथाविधस्त्वं तद्विपरीतो माभूः अस्मासु पूर्वं यथा अनुग्रहबुद्धियुक्तः तथाविधएव भवेत्यर्थः अपिच 'नो' ऽस्मान् 'सूनृतावतः' प्रियसत्यात्मिकावाक् सूनृता तया स्तुतिरूपया वाचा युक्तान् 'कदाकारः' करोषि। त्वमपि 'अर्थयासइत्' अर्थयसे एव न तदाभ्यो। अस्माभिः प्रयुक्ताः स्तुतीस्त्वमपि स्वीकरोषीत्यर्थः। अतो हे 'इन्द्र'। 'ते' 'हरी' त्वदीयावश्वौ 'नु' क्षिप्रं 'योज' रथे योजय। 'कदा' यदेति।

"करइदर्थ" इति, "कर आदर्थ" इति च पाठाः॥ ८॥

१ १२ २ २ १ २२२१ २ ३ २
चन्द्रमा अप्स्वाऽन्तरा सुपर्णो धावते दिवि।

१ २ ३१ २
न वो हिरण्यनेमयः पदं विन्दन्ति

२ १ २ ३ १ २
विद्युतो वित्तं मे अस्य रोदसी ॥ ९ ॥

अथ नवमी। वित ऋषिः। "अप्सु" आन्तरिक्ष्यासु उदकमये मण्डले "अन्त." मध्ये वर्त्तमानः "सुपर्णः" शोभनपतनः यद्वा। सुपर्णइति रश्मिनाम (नै०१,५,१५) सुषुम्णाख्येन सूर्यरश्मिना युक्तः "चन्द्रमा." "दिवि" द्युलोके "आधावते" आश्चर्योदायाम्। एकेनैव प्रकारेण धावते शीघ्रं गच्छति। तादृशस्य चन्द्रमसः संबधिनः। हे "हिरण्यनेमय." सुवर्णसदृशपर्यन्ताः। यद्वा। हितरमणीयप्रान्ताः "विद्युतो", विद्योतमानाः रश्मयः "वो" युष्माकं "पदं" पदस्थानीयम् "अग्र" न "विन्दन्ति" मदीयानीन्द्रियाणि कूपेनावृतत्वात् न लभन्ते। अत इद नोचित तस्मात् कूपात् मामुत्तारयतेत्यर्थः। अपिच हे "रोदसी" द्यावापृथिव्यौ। "मे" मदीयं "अस्य" इद स्तोत्रं "वित्त" जानीतम् ॥ ९ ॥

१ २ ३ १ २ ३ २३ १ २ ३ १ २
प्रति प्रियतमꣳ रथं वृषणं वसुवाहनम्।

२ १ २ ३ २ ३ १ २
स्तोता वामश्विनावृषि स्तोमेभि-

३ २ ३ २ ३ १ २ ३ १ २
र्भूषति प्रति माध्वी मम श्रुतꣳ हवम् ॥ १० ॥

इति पञ्चमप्रपाठकस्य प्रथमार्द्धे द्वितीय दशति।

अथ दशमी। अवस्युर्ऋषिः। हे "अश्विनौ!" एकः प्रतिशब्दोऽनुवादः "वां" युवयोः "प्रियतमं" "रथं" "स्तोता" "ऋषिः" "स्तोमभिः" स्तोमैः "प्रतिभूषति" अलङ्करोति। कीदृशं रथं? "वृषणं" फलानां वर्षितारम् "वसुवाहनं" धनानां वाहकं ईदृशं रथमागमनाय स्तौतीत्यर्थः तस्मात् हे "माध्वी"! मधुविद्यावेदितारौ "श्रुतं" शृणुतम्॥ १०॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोग्रन्थे चतुर्थाध्यायस्य सप्तमः खण्डः।

---

अथ पञ्चमप्रपाठकस्य प्रथमार्द्धे चतुर्थे दशति।

१ २ ३ १ २ ३ १ २
आ ते अग्न इधीमहि द्युमन्तं देवाजरम्।
२१ २ ३ १२ ३ २ ३
यद्ध स्या ते पनीयसी समिद्दी-
१२ ३ १ २र ३ २ ३ १ २
दयति द्यवीषं स्तोतृभ्य आ भर॥ १॥

अथ अष्टमे खण्डे—सैषा प्रथमा। वसुश्रुत ऋषिः। हे 'अग्ने! देव! 'द्युमन्तम्' दीप्तिमन्तम् 'अजरम्' अजीर्णम् 'ते' 'आ' सर्वतः 'इधीमहि' दीपयामः। 'यद्' खलु 'ते' त्वदीया 'स्या' सा "पनीयसी" स्तुत्यर्हा "समिद्" दीप्तिः "दीदयति" दीप्यते "द्यवि" द्युलोके। किञ्च। "स्तोतृभ्यो" ऽस्मभ्यम् "इषम्" अन्नम् "आभर" आहर॥ १॥

१ २र ३ १ २
अग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे।

२ १ २ ३ १ २ ३ २ ३ १ २
शोरं पावकशोचिषं वि वो मदे

३ १ २ ३ १ २ ३ १ २
यज्ञेषु स्तीर्णबर्हिषं विवक्षसे ॥ २ ॥

अथ द्वितीया। विमद ऋषिः। हे अग्ने! तव सम्भूते 'विमदे' एतदाख्ये ऋषौ मयि 'इव' स्तुतिः महत्त्वाद्धि नेति सम्प्रत्यर्थे न यतो वयमिदानीं 'स्वहस्तिभिः' स्वयङ्कृताभिः दोषवर्जिताभिः स्तुतिभिः 'होतारं' देवानामाह्वातारं होमनिष्पादकं वा 'अग्निं' 'त्वा' त्वाम् 'आहुणीमहे' आभिमुख्येन सभजामहे। कीदृशं 'यज्ञेषु' यागेषु 'स्तीर्णबर्हिषम्' आसादितबर्हिष्कम्। 'शोरम्' ओषध्यादिषु सर्वत्रानुशायिनम्। 'पावकशोचिषं' शोधकदीप्तिम्। 'विवक्षसे' महत्त्वामेतत् हे अग्ने! त्वमपि महान् भवसि। यद्वा। 'विमदे' यज्ञस्य सम्बन्धिनः सोमस्य पानजन्यविविधमदार्थं 'त्वामाहुणीमहे' इति योज्यम्॥

"शोरम्पावकशोचिषं विवोमदे यज्ञेषु स्तीर्णबर्हिषं विवक्षसे" इति छन्दोगाः। "यज्ञार्थं स्तीर्णबर्हिषो विवोमदे शोरम्पावकशोचिषं विवक्षसे" इति बहृचाः॥ २॥

३ १ २ १ १ २ ३ १ २ ३ २ ३ १ २
महे नो अद्य बोधयोषो राये दिवित्मती।

१ २ ३ १ २ ३ १ २
यथा चिन्नो अबोधयः सत्यश्रवसि

३ १ १२ ३ १ २
वाय्ये सुजाते अश्वसूनृते ॥ ३ ॥

अथ तृतीया। सत्यश्रवा ऋषिः। 'अद्य' अस्मिन्याग-

दिने हे 'उषः' उषोदेवि ! 'दिवित्मती' दीप्तिमती त्वं 'नो' ऽस्मान् 'महे' महते 'राये' धनप्राप्तये 'बोधय' प्रज्ञापय प्रकाशयेत्यर्थः। सति प्रकाशे क्रतुद्वारा द्रव्यस्योपार्जयितुं शक्यत्वात्। 'यथाचित्' यथैव पूर्वं नोऽस्मानबोधयः, अतीतेषु यथा बोधितवती तद्वदद्यापीत्यर्थः। हे 'सुजाते' शोभनं जाते जन्माविर्भावो यस्यास्तादृशि ! हे 'अश्वसूनृते' प्रियसत्यात्मिका स्तुतिवाग्यस्याः सा हे तादृशि देवि ! 'वाय्ये' वयपुत्रे 'सत्यश्रवसि' मयि अनुग्रहाणेत्यर्थः ॥ ३ ॥

१२ १ १ २ २ ३ २ १ २ ३ १ २ ३२
भद्रं नो अपि वातय मनो दक्षमुत क्रतुम्।
१ २ ३ १ २३ १ २ १ २ १
अधा ते सख्ये अन्धसो वि वो मदे
२ १ २ ३ १ २३ १ १ २
रणा गावो न यवसे विवक्षसे ॥ ४ ॥

अथ चतुर्थी। विमद ऋषिः। हे सोम ! त्वं 'नोऽस्मदीय 'मनः' 'भद्रं' कल्याणं 'अपि' शुभसङ्कल्पलक्षणं 'वातय' गमय अस्माकं परः शुभसङ्कल्पं कुर्वित्यर्थः। तथा 'दक्षं' बलमपि सर्वव्यापिनमन्तरात्मानमपि 'भद्रं' शुभकारित्वलक्षणं प्रापय अस्माकमन्तरात्मानं शुभकारिणं कुर्वित्यर्थः 'उत' अपिच 'क्रतुं' प्रज्ञां भद्रं शुभाध्यवसायलक्षणं प्रापय शुभाध्यवसायिनं कुर्वित्यर्थः 'अध' अनन्तरं स्तोतारः 'ते' तव 'सख्ये' स्तुत्यस्तोतृत्वेज्ययष्टृत्वलक्षणे सखिकर्मणि रमन्तामिति शेषः। तत्र दृष्टान्तः 'यवसे' घासे 'रणाः' प्रीतियुक्ता गावो 'न' गाव इव ता यथा प्रीतिं कुर्वते तद्वत्। कस्मिन् सति ? 'अन्धसः' सोमाख्यस्यान्नस्य सम्बन्धिनि वस्तुनि 'विमदे' विविधसोम-

जन्यमदनिमित्ते सति। कस्मादेवम्? यस्मात् 'विवक्षसे' महान् भवसि॥ ४॥

१२ ३१ २ ३२३१ ३२ ३१२
क्रत्वा महाँ अनुष्वधं भीम आ वावृते शवः।
१२ ३ १ ३१ २३२ ३१
श्रिय ऋष्व उपाकयोर्नि शिप्री
३२ ३ १ २३१२ ३२
हरिवां दधे हस्तयोर्वज्रमायसम्॥ ५॥

अथ पञ्चमी। गोतम ऋषिः। 'क्रत्वा' कर्मणा प्रज्ञया वा 'महान्' सर्वाधिकः 'भीम' शत्रूणा भयङ्कर इन्द्रः 'अनुष्वधं' 'स्वधेत्यन्ननाम (नै० २,७,१७)। स्वधाया विभक्त्यर्थेऽव्ययीभावः सोमलक्षणस्यान्नस्य पाने सतीत्यर्थः। 'शवः' आत्मीय बलम् 'आवावृते' आभिमुख्येन प्रावर्त्तयत्। तदनन्तरम् 'ऋष्वो' दर्शनीयः 'शिप्री' हनुमान्। नासिकावान्वा। 'हरिवान्' हरिभ्यामश्वाभ्यामुपेत इन्द्रः 'उपाकयो' समीपवर्त्तिनोर्हस्तयोर्बाह्वो 'आयसं' अयोमय वज्र 'श्रियै' सम्पदर्थं 'निदधे' निदधाति स्थापयति सोमपानेन हृष्टः प्रबल इन्द्र शत्रूणा हननाय हस्ते वज्र गृह्णातीत्यर्थः॥ ५॥

२ ३ १ ३२२ ३१२२ ३ १२
स घा त वृषणं रथमधि तिष्ठाति गोविदम्।
१ ३२ ३२ ३१२ २
यः पात्रं हारियोजनं पूर्णमिन्द्र
१२ ३ २३ ३२ ३ १२
चिकेतति योजा न्विन्द्र ते हरी॥ ६॥

अथ षष्ठी। गोतम ऋषिः। 'सघा' स खल्विन्द्रः 'वृषणं'

कामाभिवर्षकं 'गोविद्' गवां लम्भयितारं 'रथम्' 'अधितिष्ठाति' इहस्थे रथे अधितिष्ठतु आरूढो भवतु। हे इन्द्र! 'यो' रथः 'हारियोजनम्' एतत्संज्ञं धानामिश्रितं 'पूर्णं' सोमेन पूर्णं 'पात्र' 'चिकेतति' ज्ञापयति तं रथमधितिष्ठेति पूर्वत्रान्वयः अधितिष्ठाय 'ते' त्वदीयौ 'हरी' अश्वौ 'नु' क्षिप्रं 'योज' रथे योजय ॥ ६ ॥

१ २　　३२ ३ २उ　३ १ २　१　　२र ३१२
अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
१ २ ३ १ २　२ २उ　३　१ २
अस्तमर्वन्त आशवोऽस्तं नित्यासो
१ २ ३ १ २　३ २ ३ १　२
वाजिन इषꣳ स्तोतृभ्य आ भर ॥ ७ ॥

अथ सप्तमी। वसुश्रुत ऋषिः। 'तम्' 'अग्निं' 'मन्ये' स्तौमि। 'यः' अग्निः 'वसुः' वासकः। 'यम्' 'अस्तं' सर्वेषां गृहवदाश्रयभूत 'धेनवः' गावः 'यन्ति' गच्छन्ति प्रीणयितुम्। 'अस्तम्' उक्तलक्षणम् 'अर्वन्तः' अरणवन्तोऽश्वाः 'आशवः' शीघ्रगामिनः यन्ति। तथा 'नित्यासः' नित्यप्रवृत्ताः 'वाजिनः' हविर्लक्षणान्नवन्तो यजमानाः 'यमस्तं' 'यन्ति' तम् मन्ये। 'इषम्' अन्नं 'स्तोतृभ्यः' अस्मभ्यम् 'आभर' आहर इति ॥ ७ ॥

२उ　　३ २ ३ २ ३　२र　　३ १ २
न तमꣳहो न दुरितं देवासो अष्ट मर्त्यम् ।
३ २ ३ १ २ ३ १ २　३ १
सजोषसो यमर्यमा मित्रो

२र २ १ २ २ २ २ १ २
नयति वरुणो अति द्विषः ॥ ८ ॥

इति पञ्चमप्रपाठकस्य प्रथमार्द्धे चतुर्थं दशति।

---

अथ अष्टमी। अहोमुग्वामदेव्य ऋषिः। हे 'देवास.'! देवाः! आज्जसेरसुक् (७,१,५०) 'त' मर्त्यं मनुष्यम् 'अघः' पाप दुरित तत्फलरूप दुर्गमनञ्च 'नाष्ट' न प्राप्नोति अश्नोतेर्लुङि, झलोझलीति सिचोलोपः, अड्भावश्छान्दसः 'अर्य्यमा' अरीन् नियच्छति इति एतत्संज्ञकोदेवः। नयन्ति प्रभून् एते 'मित्र.' प्रमीतेः त्राता देवश्च नयति। 'वरुणः' पापाना निवारको देवः 'य' 'नयति'। एते त्रयो देवाः 'सजोषस.' सङ्गताः समाना. प्रीयमाणा वा भवन्तः 'द्विष.' द्वेष्टून् अतिक्रम्य 'य' स्तोतार नयन्ति प्रत्येकविवक्षया एकवचनम् तथाऽऽ इत्यन्वयः ॥ ८ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोआख्याने चतुर्थाध्यायस्य चरम खण्ड।

इति षाड्गम्।

---

अथ पञ्चमप्रपाठकस्य प्रथमार्द्धे पञ्चम दशति।

२ १ २ २ १ २
परि प्र धन्वेन्द्राय सोम

१ २ २१ २१ २र
स्वादुर्मित्राय पूष्णे भगाय ॥ १ ॥

परिधन्वप्रभृति ऋचस्त्रिंशद्भवन्ति हि ।
एतासान्तु ऋषिच्छन्दोदेवतास्तु पृथक् पृथक् ।
वक्ष्यन्ते सायणार्येण तत्र तत्र परिस्फुटम् ॥

अथ नवमखण्डे—सैषा प्रथमा । आद्यानां पञ्चाम् ऋचां त्रसदस्यू संहिताऋषी, पवमानो देवता । तत्रादिर्द्विपदा । हे 'सोम !' स्वादु, स्वादुरसस्त्वं 'इन्द्राय' 'पूष्णे' "भगाय" एतेभ्यो देवेभ्यः "परिप्रधन्व" परितः पात्रेषु प्रक्षर ॥ १ ॥

२ ३ १ २र २ १ २ १ १ २ ३ १ २ ३ १ २
पर्य्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः ।
३ १ २ ३ १ २ २ १ २
द्विषस्तरध्या ऋणया न ईरसे ॥ २ ॥

अथ द्वितीया । त्रिपदा अनुष्टुप्पिपीलिकामध्या । हे 'सोम !' सुष्ठु 'वाजसातये' अस्माभ्यमन्नदानायैव 'परिप्रधन्व' परितः प्रगच्छ । यद्वा । 'वाजसातये' अन्नलाभाय संग्राम प्रगच्छ । किञ्च । 'सक्षणिः' सहनशीलस्त्वं 'वृत्राणि' शत्रून् 'परि' गच्छ । तदेवोच्यते 'नः' अस्माकम् 'ऋणया' ऋणानां यापयिता विनाशयिता त्वं 'द्विषः' शत्रून् 'तरध्यै' तरीतुं हन्तुम् 'ईरसे' परिगच्छसि ।

"ईरसे" "ईयसे" इति पाठौ ॥ २ ॥

१ २ ३ १ २ २ २
पवस्व सोम महांत्समुद्रः
१ २ १ २ ३ १ ३ १ २र
पिता देवानां विश्वाभि धाम ॥ ३ ॥

अथ तृतीया । द्विपदा । हे 'सोम !' 'महान्' देवेभ्यो

दीयमानत्वेन महत्वयुक्तः। 'समुद्र' समुन्दनः यस्मात् समुद्रवन्ति रसास्तादृशः। 'पिता' सर्वेषां पालयिता त्वं 'देवानां' 'विश्वा' विश्वानि सर्वाणि 'धाम' धामानि शरीराण्यभिलक्ष्य 'परि पवस्व' परिचर ॥ ३ ॥

१ २ ३ २उ ३ २ ३
पवस्व सोम महे दक्षायाश्वो
२ ३ २ ३ १ २र
न निक्तो वाजी धनाय ॥ ४ ॥

अथ चतुर्थी। हे 'सोम!' 'अश्वोन' अश्वः इव 'नक्तः' वसतीवरीभिरद्भिर्विनिर्णिक्तः। 'वाजी' वेगवान् त्वं 'महे' महते 'दक्षाय' बलाय 'धनाय' धनार्थञ्च 'पवस्व' चर।
"महे" "क्रत्वे" इति पाठौ ॥ ४ ॥

१ २ ३ २ ३१२ ३ २ ३१२ ३ १ २र
इन्दुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय ॥५॥

अथ पञ्चमी। 'चारुः' कल्याणरूपः 'कविः' क्रान्तप्रज्ञः 'इन्दुः' सोमः। 'अपाम्' उदकानाम् 'उपस्थे' उपस्थाने अन्तरिक्षे पविश्वे वा 'मदाय' मदार्थम्। 'भगाय' भजनीयाय धनार्थञ्च 'पविष्ट' पवते ॥ ५ ॥

१२ १ २ ३१ २ ३ १२ ३ १ २ ३ १ २
अनु हि त्वा सुतꣳ सोम मदामसि महे समर्य्यराज्ये।
१ २ ३ १ २ ३ १ २
वाजाꣳ अभि पवमान प्र गाहसे ॥ ६ ॥

अथ षष्ठी। त्रिपदा अनुष्टुप् पिपीलिकमध्या। ऋषिदेवते पूर्ववत्। हे 'सोम!' 'सुतम्' अभिषुतं 'त्वा' त्वां

वयम् 'अनुमदामसि हि' अनुमदामः अनुक्रमेणाभिष्टुमः खलु। हे 'पवमान!' पूयमान सोम! स त्वं 'महे' महति 'समर्थराज्ये' महत् समनुष्य त्वदीयं राज्यमनुधारयितुं 'वाजान्' अन्नबलान्यभिलक्ष्य 'प्रगाहसे' प्रगच्छसि ॥ ६ ॥

१ २उ ३१ २ २ ३ १ २
क ईं व्यक्ता नरः सनीड़ा
१ २ ३ २ ३ ३ ३ १ २
रुद्रस्य मर्य्या अथा स्वश्वाः ॥ ७ ॥

अथ सप्तमी। वासिष्ठी। द्विपदा। मारुती। 'व्यक्ताः' कान्तियुक्ताः 'नरः' नेतारः 'सनीडाः' समानौकसः 'रुद्रस्य' रोदनशीलस्य एतत्प्रकस्य 'मर्य्याः' मर्य्येभ्यो नृभ्यो हिताः। अथापि च 'स्वश्वाः' शोभनवाहाः 'ईमम्' एवम्भूताः 'के' भवन्ति? रूपातिशयात् ऋषिः आश्चर्य्यणाहेति ॥ ७ ॥

३२ १ २३२ १ २उ १ २ ३ २ ३१ २ ३१ २
अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम्।
१ १ २ ३ १ २
ऋध्यामा त ओहैः ॥ ८ ॥

अथ अष्टमी। पदपङ्क्तिः। आग्नेयी। वामदेव ऋषिः। हे 'अग्ने!' 'अद्य' अस्मिन्नहनि, वयस्त्विगादयः 'ओहैः' इन्द्रादिप्रापकैः 'स्तोमैः' स्तोत्रसमूहैः 'तं' प्रसिद्धं त्वाम् 'ऋध्याम' समर्द्धयामः। कीदृश त्वाम् 'अश्वं न' वोढारमश्वमिव तथा 'हविषः' वाहकम्। 'क्रतुं न' कर्त्तारमिव उपकारिणमित्यर्थः। तथा 'भद्रं' भजनीयम्। 'हृदिस्पृशं' हृदयङ्गमम् अतिशयेन प्रियमित्यर्थः ॥ ८ ॥

३ १२३ १ २र ३ १ २
आविर्मर्य्या आ वाजं वाजिनो

३ १२ ३२' ३२
अग्मं देवस्य सवितुः सवम् ।

३ १ २
स्वर्गाँ अर्वन्तो जयत ॥ ९ ॥

अथ नवमी । पुर उष्णिक् । वाजिनां स्तुतिः । 'मर्य्याः' मनुष्येभ्यो हिताः 'आविः' प्रकाशमानाः 'वाजिनः' देवविशेषाः वाजिनभाजः 'सवितुः' प्रेरकस्य देवस्य 'सवम्' अभिपोतव्यं 'वाजम्' अन्नरूपं सोमं 'त्मन्' अगमन् । ततो हे यजमानाः ! 'स्वर्गं' 'जयत' तथा 'अर्वन्तः' अर्वतोऽश्वान् जयत ॥९॥

१२ २ १ २३ २
पवस्व सोम द्युम्नी सुधारो

३१ २र३ १२ ३२
महाँ अवीनामनु पूर्व्यः ॥ १० ॥

इति पञ्चमप्रपाठकस्य प्रथमार्द्धे पञ्चम दशतिः ।

---

अथ दशमी । ऐश्वरयोर्धिष्ण्या ऋषयः । द्विपदा । हे 'सोम' ! 'द्युम्नी' द्युम्नं द्योततेः, यशो वान्नं वेति यास्कः (नि० नै० ५,५) अन्नवान् यशस्वी वा । 'सुधारः' शोभनधारायुक्तः 'पूर्व्यः' पुरातनः 'महान्' त्वम् 'अवीनां' 'रोमभ्यः' रोमभ्यः सकाशात् 'अनु' क्रमेण 'पवस्व' क्षर ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने

चतुर्थस्याध्यायस्य नवमः खण्डः ।

इति पञ्चमप्रपाठकस्य प्रथमार्द्धं समाप्तम् ।

---

अथ पञ्चमप्रपाठकस्य द्वितीयार्द्धे प्रथम दशति ।

१ २ २ १ २ १ १
विश्वतोदावन् विश्वतो न आ
२ ३ २ २ १ २३१ २
भर यं त्वा शविष्ठमीमहे ॥ १ ॥

अथ दशमे खण्डे—सैषा प्रथमा। ऐन्द्री। हे 'विश्वतोदावन्'! सर्वतश्छेदनवन् सर्वत्र दानवन् वा इन्द्र! स त्वं 'विश्वतः' सर्वतः 'नः' अस्मभ्यम् अभीष्टम् 'आभर' आहर। किञ्च, 'शविष्ठम्' अतिशयेन बलवन्तं 'यं' 'त्वाम्' 'ईमहे' अभीष्टं याचामहे ॥ १ ॥

१ २ १ २उ २ १२ १२ १ २ १ २ १२
एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥२॥

अथ द्वितीया। ऐन्द्री। 'ऋत्वियः' ऋतौ वसन्तादिसमये भवः 'यः' इन्द्रः 'नामश्रुतः' विश्रुतः 'एषः' 'ब्रह्मा' स्तोतॄणामभीष्टस्य वर्द्धयिता तमहं 'गृणे' स्तौमि ॥ २ ॥

१ २ २ १ २ ३ १ २ १ २
ब्रह्माण इन्द्रं महयन्तो अर्कै-
१२ ३ १ २ ३ २ ३ १ २
रवर्द्धयन्नहये हन्तवा उ ॥ ३ ॥

अथ तृतीया। वसदस्यु ऋषिः। 'अहये' हन्तुं क्रियाग्रहणं कर्त्तव्यमिति कर्मणः सम्प्रदानत्वात् हननक्रियायां वृत्रस्य सम्प्रदानसंज्ञा 'अह्नहन्तवै' तुमर्थे सेऽसेनिति (३,४,८) तवैप्रत्ययः हन्तुम् 'अर्कैः' अर्चनीयैः स्तोत्रैः मन्त्रैः हविर्लक्षणैरन्नैर्वा 'महयन्तः' पूजयन्तः 'ब्रह्मणः' ब्राह्मणाः 'इन्द्रम्' 'अवर्द्धयन्'-वर्द्धयन्ति प्रीतं कुर्वन्तीत्यर्थः ॥ ३ ॥

१ २ ३ २३१२ २
अनवस्ते रथमश्वाय तक्षु-
२ ३ १२ २१२
स्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ॥ ४ ॥

अथ चतुर्थी। ऐन्द्री। हे इन्द्र! 'अनवः' मनुष्याः 'ऋभवः' 'ते' त्वत्सम्बन्धिने 'अश्वाय' वाहनाय तदर्थं 'रथं' 'ततक्षुः' कृतवन्तः हे 'पुरुहुत'। बहुभिराहुतेन्द्र। 'त्वष्टा' विश्वकर्मा च त्वदीय 'वज्र' 'द्युमन्त' दीप्तिमन्तमकरोत् ॥४॥

२ ३२ ३१ २३ २३ १ ३२
शं पदं मघᳪ रयीषिणे न काम-
३१ २ ३ १ २ ३ २
मव्रतो हिनोति न स्पृशद्रयिम् ॥ ५ ॥

अथ पञ्चमी। ऐन्द्री। 'रयीषिणः' रयिं धनं हविर्लक्षणं प्रेषयन्तो जनाः 'शं' सुख 'पदं' स्थानं 'मघं' धनं च लभन्ते इति शेषः। 'अव्रत.' इन्द्रविषययागादिकर्मरहितः पुरुषः शं सुखादिकं 'न हिनोति' न प्राप्नोति, दातुं समर्थो न भवतीत्यर्थः। स्वयमपि 'कामम्' अभीष्टं 'रयिं' रमणीय धन 'न स्पृशत्' न स्पृशति ॥ ५ ॥

२३ २ ३ १२ ३१२
सदा गावः शुचयो विश्वधा-
३ १ २ ३१ २३१२
यसः सदा देवा अरेपसः ॥ ६ ॥

अथ षष्ठी। इयं वैश्वदेवी। 'गावः' गन्तारः स्तोतारो वा 'सदा' इन्द्रं परिचरणादिभिरुपगच्छन्ति ते 'शुचयः' निर्मलाः

'सदा' सर्वदा 'विश्वधायसः' विश्वं धारयन्ति पुष्णन्तीति विश्वधायसः बहुवाः भवन्तीत्यर्थः। 'सदा' सर्वदा 'देवाः' दानादिगुणयुक्ताः 'अरेपसः' पापरहिताश्च भवन्ति ॥ ६ ॥

१ २ ३ १ २ ३ १ २र
आ याहि वनसा सह गावः
३ १ २ २र
सचन्त वर्त्तनिं यदूधभिः ॥ ७ ॥

अथ सप्तमी। अस्यास्त ऋषिः। छिपात्। उपस्या। हे 'उषः'। 'वनसा' वननीयेन तेजसा 'सह' सार्धम् 'आयाहि' आगच्छ। उषसो वाहनभूताः 'गावः' 'वर्त्तनिं' रथं 'सचन्त' सेवन्त अनश्वेन रथेनायाहीत्यर्थः। 'यत्' या गावः 'ऊधभिः' उपलक्षिताः प्रभूताः पीना इत्यर्थः। ताः गावः इति सम्बन्धः ॥ ७ ॥

१ २ ३ १ २र ३ २ ३
उप प्रक्षे मधुमति क्षियन्तः
१ २ ३ २ ३ १ २
पुष्येम रयिं धीमहे त इन्द्र ॥ ८ ॥

अथ अष्टमी। 'हे इन्द्र।' परमैश्वर्ययुक्त। त्वं 'मधुमति' माधुर्योपेते 'प्रक्षे' राजकर्तृकन्यग्रोधचमसे 'ते' त्वदीये 'क्षीयन्त' समीपे स्थिताः वयं 'रयिं' रमणीयमश्वं 'पुष्येम' पोषयेम। किञ्च। त्वां 'धीमहे' वयमनुध्यायेम ॥ ८ ॥

१ २ ३ २ ३ १ २ ३ १ २
अर्चन्त्यर्कं मरुतः स्वर्का आ
२र ३ १ २उ ३ १ २र
स्तोभति श्रुतो युवा स इन्द्रः ॥ ९ ॥

अथ नवमी। 'स्वर्काः' शोभनस्तोत्राः शोभनाग्नावा 'मरुतः' 'अर्कम्' अर्चनीयमिन्द्रम् 'अर्चन्ति' स्तोत्रैर्हविभिः। 'युवा' नित्यतरुणः 'श्रुतः' विख्यातः 'इन्द्रः' 'आस्तोभति' तेषां सम्बन्धीनि शत्रुजातान्याभिमुख्येन हिनस्ति ॥ ९ ॥

२ ३ १ २   ३ १ २   ३
प्र व इन्द्राय वृत्रहन्तमाय

१ २   ३ १ २ ३ १ ३ १ २
विप्राय गाथं गायत यं जुजोषते ॥ १० ॥

इति पञ्चमप्रपाठकस्य द्वितीयार्द्धे प्रथम दशतिः।

---

अथ दशमी। हे 'विप्राः!' मेधाविनः! 'वृत्रहन्तमाय' अतिशयेन वृत्रस्य हन्तमः, तस्मै इन्द्राय 'तं' 'गाथं' स्तोत्रं 'प्रगायत' प्रकर्षेण पठत। हे उद्गातारः! स इन्द्रः 'यं' स्तोत्रं 'जुजोषते' सेवते ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य दशमः खण्डः।

---

अथ पञ्चमप्रपाठकस्य द्वितीयार्द्धे द्वितीय दशतिः।

१ २ ३ १   २र   २ ३उ   ३ १ २
अचेत्यग्निश्चिकितिर्हव्यवाड् सुमद्रथः ॥ १ ॥

अथ एकादशखण्डे—सैषा प्रथमा। 'हव्यवाट्' हविषां वोढारं 'चिकितिः' विशिष्टप्रज्ञः 'सुमद्रथः' सुष्ठुहविर्युक्त रथोऽग्निः 'अचेति' चेत्यते सर्वैर्ज्ञायते। यद्वा। व्यत्ययेन

कर्त्तरि प्रत्ययः ( ३, १, ८५ ) हविः प्रदातारं यजमानं जानाति ॥ १ ॥

२ ३ २ ३ १ २ ३ २
अग्ने त्वं नो अन्तम उत
३ १ ३ १ २ ३क २र
त्राता शिवो भुवो वरूथ्यः ॥ २ ॥

अथ द्वितीया। बन्धुर्ऋषिः। आग्नेयी। हे 'अग्ने !' 'वरूथ्यः' वरणीयः सम्भजनीयः॥ यद्वा। वरूथैः यज्ञगृहैः हितः 'त्वं' 'नः' अस्माकम् 'अन्तमः' अन्तिकतमः 'भुवः' भव। 'उत' अपिच 'त्राता' रक्षकः शिवः' सुखकरश्च भव ॥ २ ॥

१ २ २ ३ २ ३ १ ३ २ ३ १ २ १२
भगो न चित्रो अग्निर्महोनां दधाति रत्नम् ॥३॥

अथ तृतीया। आग्नेयीयमृक्। 'मह्नोनां' महताम् मध्ये 'भगोन' सूर्य इव 'चित्रः' चायनीयः पूजनीयः 'अग्निः' यष्ट्रनां रत्न" रमणीय धनं 'दधाति' धारयति। प्रयच्छतीत्यर्थः ॥ ३ ॥

१ २३ १ २ ३ २ ३ १ २र ३ २ ३१
विश्वस्य प्र स्तोभ पुरो वा सन् यदि वेह नूनम्॥४

अथ चतुर्थी। एषा ऐन्द्री। 'विश्वस्य' सर्वस्य प्रवृजातस्य 'प्रस्तोभ' प्रस्तोभति हिनस्तीत्यर्थः। 'यदिवा' 'इह' यज्ञे 'नूनं' 'पुरो वासन्' पूर्वस्मिन् देशे वसन् स्थितः स इह नूनं प्रस्तोभ ऋत्विग्भिः प्रकर्षेण स्तूयते स्तोभतिस्तु स्तुतिकर्मा ॥ ४ ॥

१ २३ २ ३ १ ३२ ३ १ २
उषा अप स्वसुष्टमः सं वर्त्त-

२ १ २ २ १ २
यति वर्त्तनिं सुजातता ॥ ५ ॥

अथ पञ्चमी। सवर्त्तऋषिः। उषोदेवता। द्विपदा। ध्रुयम् 'उषाः' 'स्वसुः' भगिन्याः रात्रेः सम्बन्धि 'तमः' 'अन्धकारम्' 'अप सवर्त्तयति' आत्मीयेन तेजसा अपगमयति। 'सुजातता' सुजातत्व आत्मनः सुप्रकाशत्व च वर्त्तनि' वर्त्तयति रथं प्रापयति ॥ ५ ॥

२ १७ २ १ २ ३१ २३ १ २ ३ २
इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः॥६

अथ षष्ठी। भौवन आप्त्यऋषिः। 'इमाः' इमानि परिदृश्यमानानि 'भुवना' भुवनानि 'नु' क्षिप्र 'सीषधेम' साधयामः वयोक्तुमः। कमिति पूरकः यद्वा। इमानि सर्वाणि भूतजातानि अस्मभ्यं 'कं' सुख सीषधेम साधयतु पुरुषव्यत्ययः 'इन्द्रश्च' 'विश्वे' सर्वे देवाश्च स्तुत्या प्रीता इममर्थं साधयन्तु ॥ ६ ॥

२ १२ २ १ २ २७ २ १ २ २ १२
वि स्रुतयो यथा पथा इन्द्र त्वद्यन्तु रातयः ॥७॥

अथ सप्तमी। कवष ऐलुषऋषिः। इय वैश्वदेवी। हे 'इन्द्र!' 'त्वत्' त्वत्तः सकाशात् 'रातयः' दानानि 'वि यन्तु' विविधं गच्छन्तु। तत्र दृष्टान्तः, 'पथः' राजमार्गात् क्षुद्रमार्गा यन्ति तद्वत् ॥ ७ ॥

३ १ ३२ ३ १ २ २
अया वाजं देवहितं सनेम
१२ ३ १ २ ३ १ २
मदेम शतहिमाः सुवीराः ॥ ८ ॥

अथ अष्टमी। भरद्वाजऋषिः। द्विपदा। 'अया' अनया स्तुत्या 'देवहित' देवेन द्योतमानेनेन्द्रेण दत्तम् 'वाजम्' अन्न 'सनेम' वयं सम्भजेम। अपिच 'सुवीराः' शोभन-पुत्रोपेता वयं 'शतहिमाः' शत हेमन्तान् 'मदेम' हृष्याम ॥८॥

१ २ २ १ २र १ २ १
ऊर्जा मित्रो वरुणः पिन्वतेडाः

१ २ १ १ २ २ १ २
पीवरीमिषं कृणुही न इन्द्र ॥ ९ ॥

अथ नवमी। आत्रेयऋषिः। इय वैश्वदेवी। हे 'इन्द्र!' 'मित्रः', 'वरुण.', त्वञ्च सर्वे यूय 'ऊर्जा' रसेन बलेन वा सहिताः 'इड़ा' अन्नानि 'पिन्वत' अस्मभ्यं सिञ्चत प्रयच्छतेत्यर्थः। पिन्व सेचने (भ्वा० प०) धातूनामनेकार्थत्वादत्र प्रयच्छतेत्यर्थः किञ्च। 'पीवरी' महत्तम् 'इषम्' अन्न 'नः' अस्माकं 'कृणुहि' कुरु देहीत्यर्थः ॥ ९ ॥

१ २ १ २
इन्द्रो विश्वस्य राजति ॥ १० ॥

इति पञ्चमप्रपाठकस्य द्वितीयार्द्धे द्वितीय दशति।

---

अथ दशमी। इयमेकपदाष्टाक्षरा गायत्री। वशिष्ठ ऋषिः। यतः कारणात् 'इन्द्रः' विश्वस्य भुवनस्य 'राजति' ईश्वरो भवति, अतः कारणात् इन्द्रं प्राधान्येनाभिमुखीकृत्योच्यते इति पूर्वेणान्वयः ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्यैकादश खण्डः।

इति द्वैपदमैन्द्रं समाप्तम् ॥

---

विकद्रुकेषु मुख्याः स्युर्दशमस्तु त्रिष्टुबादिमा ।
अग्रात्ययं सच्छेत्यर्थेन्द्र्या श्रुपनस्तथा ॥
अग्निं होतारमित्येषा यस्तु श्रौषडया ऋचा ।
अतस्रोऽत्यष्टयोऽभित्वं तवत्यष्टर्यमित्युभौ ॥
इमे द्वे अतिशक्वर्यावष्टौ इत्येक ऊचिरे ।
प्रवोमहेऽतिजगती तमिन्द्रमिति ताद्दशौ ॥
सौरी त्वयं सहस्र तिं पावमानीं तया ऋचा ।
अस्तुश्रौषड्ढदेवो मारुती तु प्रवोमहे ॥
अभित्वमिति सावित्री स्यादाग्नेय्यग्निमित्यसौ ।
ऐन्द्रोऽवशिष्टा इत्येव छन्दोदैवतनिर्णयः ॥

अथ पञ्चमप्रपाठकस्य द्वितीयार्द्धे तृतीय दशतिः ।

१ २ ३१ २र १ २ र
विकद्रुकेषु महिषो यवाशिरं तुविशुष्म-
१ २ २र ३ १ २ ३ १ २ १ २ ३ १ २
स्तृम्पत्सोममपिबद्विष्णुना सुतं यथावशम् ।
१ २ १ २ ३ १ २ १ २ १ २ ३ १
स इं ममाद महि कर्म कर्त्तवे महामुरुं
२र ३ २ ३ २ ३ १ २र ३ १ २र
सैनं सश्चद्देवो देवं सत्य इन्दुः सत्यमिन्द्रम् ॥१

अथ द्वादशखण्डे—तत्र प्रथमा । अत्रासद ऋषिः ।
'महिषः' महान् पूज्यः 'तुविशुष्मः' बहुबलः 'तृम्पत्'
तृप्यन्निन्द्रः 'विकद्रुकेषु' ज्योतिर्गौरायुरित्येतन्नामकेषु 'अभिप्ल-
विकेष्वहःसु 'सुतम्' अभिषुतं 'यवाशिरं' यवमयैः सक्तुभिर्मि-
श्रितम् आङ्पूर्वस्य श्रीञ् धातोः क्विपि 'आत्मश्रेयामित्यादिना
श्रियः शिर इत्यादेशः तं सोमं 'विष्णुना' सह 'अपिबत्'

'यथावश' पूर्वं यथा तं सोममकामयत तथा अपिबत् वश कान्तौ (भ०, प०)। बहुलं छन्दसीति (२, ४, ७३) शपोलुगभावः 'सः' पीतः सोमः 'महाम्' महान्तम् 'उरुम्' विस्तीर्णम् 'ईम्' एनम् 'इन्द्रम्' 'अमादः' अमादयत्। किमर्थम्? 'महि' महत् वृत्रहननादिलक्षणम् 'कर्म' 'कर्तवै' कर्तुम्। 'सत्यः' 'इन्दुः' सन्। 'देवः' दीप्यमानः 'सः' सोमः 'सत्य' यथार्थभूतं 'देव' सोमं कामयमानम् 'एनम्' 'इन्द्रं' 'सश्चत्' सश्चतिर्व्याप्तिकर्मा व्याप्नोतु ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ १
अयꣳ सहस्रमानवो दृशः

१ २ २ १ २र २ १ २ २
कवीनां मतिर्ज्योतिर्विधर्म ।

१२ ३१ २ ३ २ ३ १ २ १ २ ३ १ २
ब्रध्नः समीचीरुषसः समैरयदरेपसः

१ २ ३ २ ३ १ २ ३ १ २ ३ २
सचेतसः स्वसरे मन्युमन्तश्चिता गोः ॥ २ ॥

अथ द्वितीया। गौराङ्गिरसऋषिः। 'सहस्रमानवः' सहस्रसंख्याका मनुष्या यस्य सः, सहस्रसंख्याकैर्मनुष्यैरिवावस्थितैररश्मिभिर्युक्तः 'दृशः' सर्वेषां दर्शनीयः 'कवीनां' मेधाविनां सर्वेषां 'मतिः' स्तुत्यः मननीयो वा 'विधर्म' विधाव 'ज्योतिः' तेजः 'अयं' 'ब्रध्नः' सूर्यः 'समीची' युक्ताः निर्मलाः 'अरेपसः' तमः पापरहिताः। 'सचेतसः' समानचित्ताः इमाः 'उषसः' 'समैरयत्' सम्यक् प्रेरयति। ततः 'स्वसरे' दिवसनामैतत् (नि, नै०१,९) दिवसे 'मन्युमन्तः' मन्युः प्रकाशस्तद्वन्तः तेजस्विनश्चन्द्रमः 'प्रभृतयः' गोः आदित्यस्य

तेजसा 'चिता.' अपचिताः भवन्तीति निगततेजस्का भवन्तीत्यर्थः। 'आदित्योऽपि गौरुच्यते (२,६)' इति निरुक्तम् ॥ २ ॥

१ २ २ ११ २ २ २ १ २र

इन्द्र याह्युप नः परावतो नायमच्छा

२ १ २ २ १ २ २ २ २ १ २ २ १ २

विदथानीव सत्पतिरस्ता राजेव सत्पतिः।

१ २ २ १ २ २ ३ २ २ २ २

हवामहे त्वा प्रयस्वन्तः सुतेष्वा पुत्रासो न

२ २ २ १ २ २ १ २ २ १ २

पितरं वाजसातये मंहिष्ठं वाजसातये ॥ ३ ॥

अथ तृतीया। परुच्छेप ऋषिः। छ० अत्यष्टिः। हे 'इन्द्र!' 'परावतः' दूरदेशात् स्वर्गलक्षणात् 'नः' अस्मान् 'उपायाहि' अस्मत्समीपं प्रत्यागच्छ। तत्र दृष्टान्तः 'नायम्' अयं न पुरोवर्त्ती अग्निः 'अभिषुतः' सोमो वा प्रस्तुतत्वान्निर्दिश्यते स इव यद्यपि पुरस्तादुपचारान्निषेधार्थीयो नकारः सर्वत्र, तथाप्यत्रौचित्येनोपमार्थीयो गृह्यते। यद्वा। 'परावतः न' दूरदेशादिव। यद्यपि यज्ञे सर्वदा सन्निहितः, तथापि स्वर्गाख्याद् दूरदेशादिव। अस्मिन् पक्षे अयमिति विभक्तिव्यत्ययः। 'अयम्' इमं देवयजनदेशम् 'अच्छ' अभि प्राप्तुम् आयाहीति शेषः। तत्र दृष्टान्तः 'सत्पतिः' सतां सर्वदा वर्त्तमानानामृत्विजाम्पालको यजमान इव 'पत्यावैश्वर्ये (६,२,१८)' इति पूर्वपदप्रकृतिस्वरत्वम् त्वमपि यज्ञगृहाण्यागच्छ। यद्वा। सतां नक्षत्राणां पतिः चन्द्रमाः, स यथा स्वधाम स्थानमागच्छति तद्वत्। 'अस्ता' अस्तं सुप आकारः (७,१,२८) अतएव बह्वृचा अस्त राजेत्यामनन्ति अस्तं गृहं 'राजेव'

राजा यथा आगच्छति तद्वत्। किञ्च। 'अर्यमवन्तः' हवि-र्लक्षणान्नवन्तः यजमाना वयं 'त्वा' त्वां 'सुतेषु' अभिषुतेषु सोमेषु 'आह्वयामहे' अभिमुख्येनाह्वयामहे। आह्वाने दृष्टान्तः 'पुत्रासः' पुत्राः 'पितरं न' पालकं जनकमिव तं यथा 'वाज सातये' संग्रामप्राप्तये तज्जयाय हविः स्वीकरणाय वा आह्वयामः॥ ३॥

१ २र ३१२ ३ २ ३१
तमिन्द्रं जोहवीमि मघवानमुग्रᳫँ सत्रा
२र ३ १ २ ३ १२ ३ १ २
दधानमप्रतिष्कुतᳫँश्रवाᳫँसि भूरि।
१ २ ३ १ २र ३ १ २
मᳫँहिष्ठो गीर्भिरा च यज्ञियो ववर्त्त
३ २ ३ ३ २ ३ १ २ ३ २
राये नो विश्वा सुपथा कृणोतु वज्री॥ ४॥

अथ चतुर्थी। रेभा ऋषिः। 'तम्' पूर्वोक्तगुणोपेतम् 'इन्द्रं' 'जोहवीमि' यङन्तं पुनः पुनराह्वयामि ह्वयतेरभ्य-स्तस्य चेति सम्प्रसारणम् कीदृशं 'मघवानं' मंहनीयधनवन्तम् 'उग्रम्' उद्गूर्णबलं 'सत्रा' सत्यं यथार्थमेव 'श्रवांसि' बलानि 'भूरि' भूरीणि 'दधानम्' अतएव 'अप्रतिष्कुतं' शत्रुभि-रप्रतिरोधनीयम् आह्वयामि। किञ्च 'मंहिष्ठः' पूज्यतमो दातृतमो वा 'यज्ञियः' यज्ञार्हः इन्द्रः 'गीर्भिः' अस्मदीयाभिः स्तुतिभिः 'आ ववर्त्त' यज्ञेऽभ्याभिमुख्येन वर्त्तते। वर्त्ततेर्लिटि रूपम्। ततो 'वज्री' वज्रवान् इन्द्रः 'राये' धनार्थं 'विश्वा' सर्वाण्येव 'सुपथा' सुमार्गाणि 'कृणोतु' करोतु। धन सर्वदि-ग्गमध्यान् प्राप्नोतु इत्यर्थः॥ ४॥

२ ३ १ २ ३ २ ३ २ ३ १ ३ २ १
अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु
२र ३ १ २ ३ १ २
त्यच्छर्धो दिव्य वृणीमह इन्द्रवायू वृणीमहे।
१ २ ३ ,२ ३ १ २ ३ १ २ ३ २ ३ १ २
यद्ध क्राणा विवस्वते नाभा सन्दाय नव्यसे।
१ २ ३ २ १ २र ३ १ २ ३ २उ ३ २ ३ १ २
अध प्र नूनमुप यन्ति धीतयो देवाँ२ अच्छ न धीतय.५

अथ पञ्चमी। पुरुच्छेपऋषि। छ० अतिशक्वरी। अत्र 'पुर' पुरत उत्तरवेद्याम् 'अग्निम' आहवनीयाख्य 'धिया' प्रणयनादि कर्मणा 'दधे' धारितवानस्मि। 'त्यत्' तत् 'शर्ध' तादृश बल बलवन्त वाऽग्निम। यद्वा। तच्छर्द्ध तादृश मरुता सङ्घरूप बल 'दिव्य' दिविभव 'नु' क्षिप्रम् 'आ वृणीमहे' आभिमुख्येन सम्भजामहे किञ्च 'इन्द्रवायू' 'वृणीमहे' प्रार्थयामहे। 'यद्ध' सुपोलुक् (७, १, ३८) य 'विवस्वते' विवो हवीरूप धन तद्वते 'नव्यसे' नवतराय यजमानाय 'नाभा' नाभौ भूम्या नाभिस्थाने देवयजने। यद्वा। वेदिरूपे अथवा नाभौ सर्वस्य फलस्य सम्बन्धक यज्ञे 'यज्ञमाहुर्भुवनस्य नाभि' इति श्रुते 'सन्दाय' सम्यक बध्वा मिथ सयुज्य 'क्राणा' धनादिक कुर्वाणौ भवत। तौ वृणीमहे इति समन्वय। यस्मादेव तस्मात् 'अस्तु 'श्रौषट्' अस्या, स्तुत श्रवण भवतु। श्रोता भवतु वा मरुता गणोऽग्निर्वा इन्द्रवायु पक्षे प्रत्येकापेक्षयैकवचनम 'अध' अनन्तर 'न' धीतय' अस्मदीयानि कर्माणि स्तुत्यादिरूपाणि 'प्रनूनम्' 'उपयन्ति' प्रकर्षेण शुष्मानुपेत्य गच्छन्ति। किञ्च, 'देवानच्छान' अग्न्यादिदेवान्

अभिमुख्येन प्राप्तुमिव 'धीतयः' अस्मदीयानि कर्माणि 'उपयन्ति' तेषां समीपं प्रापयन्ति।

"भानुत्थत्", "भानुतद्" इति "नव्यसे", "नवसि" इति, "प्रनूनं" "प्रसूनम्" इति च क्रमेण साम्ना ऋचश्च पाठः ॥ ५ ॥

१ २ ३ २ ३ १ २ ३ १ २
प्र वो महे मतयो यन्तु विष्णवे
३ १ २ ३ १ २ ३ १ २
मरुत्वते गिरिजा एवयामरुत्।
१ २र ३ १ २र ३ १२ ३ १ २
प्र शर्धाय प्र यज्यवे सुखादये तवसे
३ १ २ ३ १ २ ३ १२
भन्ददिष्टये धुनिव्रताय शवसे ॥ ६ ॥

अथ षष्ठी। एवयामरुदृषिः। छ० अतिजगती। 'प्रयन्तु' प्रगच्छन्तु 'गिरिजाः' गिरौ वाचि निष्पन्नाः 'मतयः' स्तुतयः। 'महे' महते 'वः' तुभ्यं वचनव्यत्ययः (३,१,८५) 'विष्णवे' व्याप्तायाम् इन्द्राय विष्णवे वा 'मरुत्वते' मरुद्भिस्तद्वते। कास्य स्तुतयः? इत्युच्यते 'एवयामरुत्' एतन्नामकस्य ऋषेः षष्ठ्यलुक् (७,१, ३९) अथवाऽयमृषिः गिरिजाः स्तुतेर्जनयिता भवति। किञ्च, 'प्रयन्तु' स्तुतयः। कस्मै? 'शर्धाय' बलाय मारुताय इतरव्यर्थं बलविशेषणम् 'प्रयज्यवे' प्रकर्षेण यष्टव्याय। 'सुखादये' शोभनाभरणाय खादिराभरणविशेषः। 'हस्तेषु खादिश्च कृतश्च सन्दधे' इति, 'अंसेषु च ऋष्टयः पत्सु खादयः' इति च श्रुतेः। 'तवसे' बलवते। 'भन्ददिष्टये' स्तुतिरूपा इष्टिर्यस्य तत् भन्ददिष्टिः, तस्मै। 'धुनिव्रताय' मेघानां चालनं कर्म यस्य, तादृशाय 'शवसे' गमनवते ॥ ६ ॥

१ २ २ १ २र १ २उ १ १ २
अया रुचा हरिण्या पुनानो विश्वा द्वेषांꣳसि

२ १ २ ३ २ १ २ २ १ २
तरति सयुग्वभिः सूरो न सयुग्वभिः।

१ २ ३ १ २ २ १ २ ३ १ २र
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः।

२ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिरृक्वभिः ७

अथ सप्तमी। अनानतः पारुच्छेपिरत्यष्टिः। पु० अत्यष्टि। 'पुनानः' पूयमानः सोमः 'हरिण्या' हरितवर्णया 'अया' अनया 'रुचा' रोचमानया धारया 'विश्वा' सर्वाणि 'द्वेषांसि' द्वेष्टृणि रक्षांसि 'तरति' विनाशयति। तत्र दृष्टान्तः 'सूरो न' यथा सूर्यः 'सयुग्वभिः' सह युक्तैरश्मिभिः तमांसि हिनस्ति तद्वत् सयुग्वभिरिति छिरुक्तिरादरार्था। यद्वा। धारया युक्तः सोमो युक्तैस्तेजोभिः सह रक्षांसि तरति। तस्य 'पृष्ठस्य' पृष्ठ इति धारक उच्यते जगतो धारकस्य सोमस्य पतन्ती धारा 'रोचते' दीप्यते। 'पुनानः' पूयमानः 'हरिः' हरितवर्णः सोमः 'अरुषः' आरोचमानो भवति। 'यद्' यः सोमः 'सप्तास्येभिः' रसाहरणशीलास्यैः 'ऋक्वभिः' स्तुतिमद्भिः, ऋक्वभिस्तेजोभिः 'विश्वा' विश्वानि सर्वाणि 'रूपाणि' 'परियाति' परितो व्याप्नोति।

"पृष्ठस्य" "सुतस्य" इति साम्न ऋचः पाठौ॥ ७॥

३ २उ १ १ २ ३ १ २ ३क २र १ २ ३
अभि त्वं देवꣳ सवितारमोण्योः कविक्रतु-

१ २ ३ १ २ २ २ १ २ ३ २ ३ २
अर्चामि सत्यसवꣳ रत्नधामभि प्रियं मतिम्।
१ २ ३ २ २ २ १ २ ३ १ २ २
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि
१ २ १ १ २ १ २ २
हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः॥ ८॥

अथ अष्टमी। नकुल ऋषिः। छ० अष्टि। 'सवितारं' प्रेरकं 'देवं' वाग्व्यापारेण 'अभि अर्चामि' सर्वतः पूजयामि। कीदृशं? 'कविक्रतुं' क्रान्तप्रज्ञं 'सत्यसवं' अवितथप्रेरणम्। 'रत्नधां' रमणीयानां धनानां दातारम्। 'अभिप्रियं' सर्वतः प्रीतियुक्तम्। 'मतिं' मननीयं स्तुत्यम् 'यस्य' सवितुः 'भा' दीप्तिः 'ऊर्ध्वा' उन्नता सती 'ओण्योः' द्यावापृथिव्योः। 'अदिद्युतत्' अतिशयेन दीप्यते। यस्य सवितुः 'सवीमनि' प्रसवे सति 'अमतिः' सर्वेषां कान्तिः अदिद्युतत् भृशं प्रकाशते। सः 'सुक्रतुः' शोभनकर्मा 'हिरण्यपाणिः' हिरण्यहस्तः सविता देव. 'कृपा' कृपया 'स्वः' स्वर्गे निमित्तभूते सति 'अमिमीत' 'इमं' सोमम् इयत्तया मितवान्। यद्वा। स्व. सर्वस्या कृपया सङ्कल्पेन निरमिमीत॥ ८॥

२ १ २२ १ १ २ २ १ २ ३ १
अग्निꣳ होतारं मन्ये दास्वन्तं वसोः सूनुꣳ
२२ १ १२ १ १२ २ २ १ २
सहसो जातवेदसं विप्रं न जातवेदसम्।
१ २ १ २ १ २ १२ २१ २ १ २
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा।

२ ३ २ १ २ ३ १ २ ३ १ २
घृतस्य विभ्राष्टिमनु शुक्रशो-

३ १ २ ३ १ २
चिष आजुह्वानस्य सर्पिषः ॥ ६ ॥

अथ नवमी। परुच्छेप ऋषिः। छ० अत्यष्टिः। 'अग्नि' सर्वासां देवसेनानामग्रणम् यज्ञेष्वयं नीयमानं वा। 'होतारम्' अस्मद् यागं प्रति देवानामाह्वातारम्। यद्वा। होमनिष्पादकं होतारं 'जुहोतेर्होतेत्यौर्णवाभः (७,१५) इति यास्कवचनात्। 'अग्निमद्य होतारमवृणीतेति श्रुतेः। अग्निमन्त्र आवहेति च अग्नेराह्वातृत्वं प्रसिद्धम्। अग्निं' होतारं मन्ये इत्येवं प्रतिविशेषणं मन्ये इति सम्बन्धः। यद्वा यागनिष्पत्तेरेवोपलक्षितत्वादेतदेव विधेयविशेषणम्। एतानि वक्ष्यमाणविशेषणानि स्तुतिपराणि 'दास्वन्तम्' अतिशयेन दानवन्तं 'वसो.' प्रशस्यस्य सर्वेषां 'सहसः सूनुम्' बलस्य पुत्रमग्निं मन्थनकाले बलेन मथ्यमान उत्पद्यत इति तत्पुत्रत्वमुपचर्य्यते। 'जातवेदसं' जातानां वेदितारं जातप्रज्ञं जातधनं वा जातवेदः शब्दो यास्केन बहुधा निरुक्त अग्नेर्जातवेदस्त्वे दृष्टान्त. 'विप्रं न' जातवेदसञ्जातविद्यं मेधाविनं ब्राह्मणमिव, न यथा बहु मन्यते तथा त्वामपि स्तौमीत्यर्थः। उक्तगुणविशिष्टो यो देवः 'स्वध्वरः' शोभनयज्ञवान् यज्ञं सम्यक् निर्वहन्। ऊर्ध्वया' उन्नतया उत्कृष्टया 'देवाच्या' देवान् पूजयन्त्या देवान् प्रत्यञ्चया वा 'कृपा' कृपया सामर्थ्यलक्षणया 'देवान् प्रयुञ्जया कर्पेति (६,८) यास्कः तेभ्यो हविर्वहनयुक्ता युक्तः सन् 'शुक्रशोचिषः' दीप्ततेजस्कस्य 'आजुह्वानस्य' आ समन्तात् हूयमानस्य 'सर्पिषः' सरणशीलस्य घृतस्य विनाशनेन दीप-

स्वान्यस्य 'विभ्राष्टि' विशेषेण भ्राजमनु स्वयमपि तदात्र्य 'वष्टि' कामयते स्वीकरोतीत्यर्थः ।

"वसो" "वसुम्" इति साम्न ऋच पाठौ ॥ ६ ॥

१ २ १ १र २ १ २ १ २
तव त्यन्नर्य्यं नृतोऽप इन्द्र प्रथम

१ २ १ २ ३१ २ १ २
पूर्व्यं दिवि प्रवाच्य कृतम् ।

१ २१२ १२३ १ २ १ १२ २२१२
यो देवस्य शवसा प्रारिणा असु रिणन्नपः ।

१ २ १२३ १२३१२ १ २
भुवो विश्वमभ्यदेवमोजसा विदे-

२र ३१२ ३१ २र
दूर्जं५ शतक्रतुर्विदेदिषम् ॥ १० ॥

इति पञ्चमप्रपाठकस्य द्वितीयार्द्धे दशमी खण्डः ।

---

अथ दशमी । गृत्समदऋषिः । छ० अतिशक्वरी । 'नृत' सर्वेषां नर्त्तयित । प्रवर्त्तयित ! हे 'इन्द्र !' 'नर्य्यं' नराणां हितकरम् । 'प्रथम' मतम 'प्रथमः प्रतमम्' इति यास्कः 'पूर्व्यं' पूर्वकालभवं त्वया कृतं 'तव' त्वदं तदप कर्म 'दिवि स्वर्गलोके प्रवाच्यं दवै प्रकर्षेण वक्तव्य श्लाघनीयमित्यर्थः । किन्तत् ? 'देवस्य' विजिगीषो 'असुरस्य' 'असु' असुं प्राणं 'रिणन्' हिंसन् त्वम् 'अपः' उदकानि तेन निरुद्धानि 'प्ररिणा' प्रैरयः । इति यदेतत् कर्म तत्प्रवाच्यमिति समन्वय । परोक्षनिर्देशविशिष्ट 'स' इन्द्र 'विश्वं' व्याप्तम् 'अदेव' तमोरूपम् 'असुरम्' 'ओजसा'

बलेन 'अभि भुवत्' अभिभवतु । किञ्च 'शतक्रतुः' इन्द्रः 'ऊर्जम्' बलं 'विदेत्' लम्भयेत् । 'इषं' हविर्लक्षणमन्नं च विदेत् विद्लृ लाभे (तु० उ०) ।

"यो" "यद्" इति, "विदेद्" "विदा" इति च साम्न ऋचः पाठौ ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थाध्यायस्य दशमः खण्डः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराज-परमेश्वर वैदिक मार्ग-प्रवर्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने ऐन्द्रकाण्डे चतुर्थोऽध्यायः ।

समाप्तम् ऐन्द्रम् पर्व ऐन्द्रकाण्डं वा
इति द्वितीयं पर्व ।

---

## अथ पञ्चमाध्यायः ।

—०००—

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
तृतीयं पर्व सोमस्य पवमानस्य संस्तुतिः ।
उच्चात इति गायत्र्यश्चत्वारिंशच्चतुर्युताः ॥

अथ पञ्चमप्रपाठकस्य द्वितीयार्द्धे चतुर्थ-दशति ।

२ ३ १ २ ३ १ २र ३ १ २ ३ १ २र
उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे ।

१ २र ३ १ २ ३ १ २
उग्र९ँ शर्म महि श्रवः ॥ १ ॥

तत्र प्रथमे खण्डे—सैषा प्रथमा। अमहीयुर्ऋषिः। छ० गायत्री। दे० सोमः। हे 'सोम!' 'ते' तव सम्बन्धिनः 'अन्धसः' रसस्य 'उच्चा' उपरि 'जातम्' जन्म। अपिच। 'दिवि' द्युलोके 'सत्' विद्यमानम् 'उग्रम्' उद्गूर्णम् 'शर्म' सुखं 'महि' महत् 'श्रवः' अन्नञ्च 'भूम्यादद' इत्यत्र यमा मनन्ति। विसर्जनीयलोपः सांहितिकः भूमिः भौमजन्यः अस्माहयः, भूमिष्ठैरादीयत इत्यर्थः ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ १ २
स्वादिष्ठया मदिष्ठया पवस्व सोम धारया।
३ २ ३ १ २ ३ २
इन्द्राय पातवे सुतः ॥ २ ॥

अथ द्वितीया। मधुच्छन्दा ऋषिः। हे 'सोम!' 'इन्द्राय' 'पातवे' पातुं 'सुतः' अभिषुतस्त्वं 'स्वादिष्ठया' स्वादुतमया 'मदिष्ठया' अतिशयेन मादयित्र्या 'धारया' 'पवस्व' चर ॥ २ ॥

३ २ ३ १ २ ३ १ २ ३ २
वृषा पवस्व धारया मरुत्वते च मत्सरः।
२ ३ १ २ ३ १ २
विश्वा दधान ओजसा ॥ ३ ॥

अथ तृतीया। भृगुर्वारुणिः ऋषिः। हे 'सोम!' त्वं 'वृषा' स्तोतृणामभिमतम् वर्षकः सन् 'धारया' त्वदीयया 'पवस्व' द्रोणकलशमागच्छ। पवतिर्गतिकर्मा आगतस्त्व, यदा-

स्वाभिरिन्द्राय दीयते तदा 'मरुत्वते' मद्वायां मरुतो यस्य सन्ति तस्मै इन्द्राय 'मत्सरः' मदकरश्च भव। कीदृशः? 'विश्वा' विश्वानि सर्वाणि व्याप्तानि वा धनानि 'ओजसा' आत्मीयेन बलेन युक्तः सन् स्तोतृभ्यस्तानि प्रयच्छन् त्वं मादयिता भवेति समन्वयः ॥ ३ ॥

२३ २३ १२ ३१२ ३१२
यस्ते मदो वरेण्यस्तेना पवस्वान्धसा ।
३ १२ ३२
देवावीरघशꣳसहा ॥ ४ ॥

अथ चतुर्थी। अमहीयुर्ऋषिः। हे सोम। ते तव देवावीः देवकामः अघशंसहा राक्षसानां हन्ता वरेण्यः सर्वैर्वरणीय मदः मदकरः यः रसो विद्यते तेन रसेन अन्धसा आदरणीयेन पवस्व क्षर ॥ ४ ॥

३ २उ ३१२ ३१२ ३१२
तिस्रो वाच उदीरते गावो मिमन्ति धेनवः ।
१२ ३१२
हरि रेति कनिक्रदत् ॥ ५ ॥

अथ पञ्चमी। त्रित ऋषिः। 'तिस्रोवाचः' ऋगादिभेदेन त्रिविधाः 'उदीरते' स्तुतीः प्रेरयन्ति ऋत्विजः। 'धेनवः' आशिरेण प्रीणयित्र्यः 'गावः' 'मिमन्ति' शब्दायन्ति दोहार्थम्। 'हरिः' हरितवर्णः सोमश्च 'कनिक्रदत्' शब्दं कुर्वन् गच्छति कलशम् ॥ ५ ॥

१२ ३१२३ १२३ १२
इन्द्रायेन्द्रो मरुत्वते पवस्व मधुमत्तमः ।

२ ३ २ ३ १ २ ३ १ २
अर्कस्य योनिमासदम् ॥ ६ ॥

अथ षष्ठी। कश्यप ऋषिः। हे 'इन्दो!' सोम! 'मधुमत्तमः' अतिशयेन मधुमान् 'अर्कस्य' अर्चनीयस्य यज्ञस्य 'योनिं' स्थाने 'आसदम्' उपवेष्टुं 'मरुत्वते' 'इन्द्राय' इन्द्रार्थं 'पवस्व' क्षर ॥ ६ ॥

१ २ ३ १ ३२ ३ १ ३२ ३ २
असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः।
३ २उ ३ १ २
श्येनो न योनिमासदत् ॥ ७ ॥

अथ सप्तमी। जमदग्निर्ऋषिः। 'गिरिष्ठाः' पर्वते जातः 'अंशुः' सोमः 'मदाय' मदार्थम् 'असावि' अभिषुतः। 'अप्सु' वसतीवरीषु 'दक्षः' प्रवृद्धश्च भवति। किञ्च। 'श्येनो न' यथा श्येनो वनादागत्य स्थानमासीददिति तद्वद् 'अयं' सोमः 'योनिं' स्वकीयस्थानम् 'आ सदत्' आसीदति ॥ ७ ॥

१ २ ३ १ २ ३ १ २ ३ १ २
पवस्व दक्षसाधनो देवेभ्यः पीतये हरे।
३ १ २ ३ २ ३ १ २
मरुद्भ्यो वायवे मदः ॥ ८ ॥

अथ अष्टमी। दृढच्युत आगस्त्य ऋषिः। हे 'हरे।' हरितवर्ण पापहर्तर्वा सोम। 'दक्षसाधनः' दक्षो बलन्तस्य साधकः 'मदः' मदकारस्त्वं 'पवस्व' क्षर। किमर्थम् देवेभ्यः इन्द्रादिभ्यः 'पीतये' पानाय। तथा 'मरुद्भ्यः' वायवे च पीतये पानाय 'पवस्व' क्षर ॥ ८ ॥

१ २ ३ १ २ ३ २ ३ २ ३ १ २
परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत्।
१ २ ३ १ २
मदेषु सर्वधा असि ॥ ९ ॥

अथ नवमी। ऋ० असितदेवलौ। अस्याः परस्याश्च काश्यपोऽसित ऋषिः। अयं 'सोमः' 'पवित्रे' 'पर्य्यक्षरत्' परिक्षरति। 'स्वानः' सुवानः अभिषूयमाणः 'गिरिष्ठाः' गिरिस्थायी गिरौ वर्त्तमान इत्यर्थः। स त्वं 'मदेषु' मादकेषु स्तोत्रकेषु 'सर्वधा असि' सर्वस्य धाता दाता वा भवसि ॥

'स्वानः' 'सुवानः' इति, 'अक्षरत्' 'अक्षाः' इति च साम्न ऋचः पाठौ ॥ ९ ॥

१ २ ३ २ ३ २ ३ १ २र ३क २र ३ २
परि प्रिया दिवः कविर्वयांꣳसि नप्त्योर्हितः।
३ १२ ३ १२
स्वानैर्याति कविक्रतुः ॥ १० ॥

इति पञ्चमप्रपाठकस्य द्वितीयार्द्धे चतुर्थे दशतिः।

---

अथ दशमी। कविर्मेधावी। 'कविक्रतुः' क्रान्तप्रज्ञः क्रान्तकर्मा वा सोमः 'नप्त्योः' अधिषवणफलकयोः 'हितः' निहितः। 'दिवः' द्युलोकस्य 'प्रिया' प्रियाणि 'वयांसि' वयन्ति गच्छन्तीति वयांसि ग्रावाणः तानि। तथाच मन्त्रवर्णः '*श्येना वर्तिवयः पर्वतानां ककुभः*' इति। 'स्वानैः' अभिषुण्वद्भिरध्वर्य्युभिः 'परियाति' गच्छति ॥

"स्वानैः" सुवानैः इति साम्न ऋचः पाठौ ॥ १० ॥

इति सायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोआर्च्चिके पञ्चमस्याध्यायस्य प्रथमः खण्डः।

---

अथ पञ्चमप्रपाठकस्य द्वितीयार्द्धे पञ्चम दशति ।

१ २र २ २ ३ १ २ २ १ २
प्र सोमासो मदच्युतः श्रवसे नो मघोनाम् ।
३ १ ३ १ २
सुता विदथे अक्रमुः ॥ १ ॥

अथ द्वितीये खण्डे—सैषा प्रथमा । श्यावाश्व ऋषिः । 'सोमासः' सोमाः 'मदच्युतः' मदस्राविणः 'सुताः' अभिषुताः सन्तः 'मघोनां' हविष्मतां 'नः' अस्माकं सम्बन्धिनि 'विदथे' यज्ञे 'श्रवसे' अन्नाय कीर्त्तये वा 'प्राक्रमुः' प्रगच्छन्ति ॥

"मघोनां" "मघोनः" इति पाठौ ॥ १ ॥

१ २र १ २ ३ १ २ ३ १ २
प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः ।
१ २ ३ १ २
वनानि महिषा इव ॥ २ ॥

अथ द्वितीया । त्रितऋषिः । 'विपश्चितः' मेधाविनः 'सोमासः' सोमाः 'प्र नयन्त' पात्राणि प्रति गच्छन्ति । किमिव ? 'अप ऊर्मयः' अप इति षष्ठी व्यत्ययेन द्वितीया । अपामूर्मयः अतएव बह्वृचाः अपाअयन्तीति पठन्ति ते यथा सततमुद्रवन्ति तद्वत् । बाहुल्येऽयं दृष्टान्तः । अर्थतो गमने दृष्टान्तान्तरमभिधीयते 'वनानि महिषाः' प्रद्रवा मृगा इव । अथवा स्वान्ययात् प्रद्रवणे प्रथमो दृष्टान्तः । द्वितीयस्तु दयापविवादधःप्रदेशे ॥ २ ॥

२ १ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
पवस्वेन्द्रो वृषा सुतः कृधी नो यशसो जने ।

२ ३ २३ १२
विश्वा अप द्विषो जहि ॥ ३ ॥

अथ तृतीया। असद्दीयुरुर्षिः। हे 'इन्दो!' सोम! 'सुतः' अभिषुतः 'वृषा' सेक्ता त्वं 'पवस्व' धारया क्षर। 'जने' जनपदेषु 'नः' अस्मान् 'यशसः' यशस्विनः 'अधि' कुरु। 'विश्वा' सर्वान् 'द्विषः' द्वेष्टॄन् शत्रून् 'अप जहि' मारय॥ ३॥

२ ३ १ २ ३ १ २ ३ १ २
वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे।

१ २ ३ १ २
पवमान स्वर्दृशम्॥ ४॥

अथ चतुर्थी। ऋगुरुर्षिः। हे 'सोम!' त्वं 'वृषा' अभिलषितफलानां वर्षिता 'असि हि' भवसि खलु। तस्मात् हे 'पवमान!' पूयमान पुनान वा सोम! 'स्वर्दृश' सर्वस्य द्रष्टार 'भानुना' तेजसा 'द्युमन्त' दीप्तिमन्तम् अतिशयेन तेजस्विनमित्यर्थः। स्तुतिमन्त वा 'त्वा' त्वां 'हवामहे' यज्ञेषु आह्वयामहे॥ ४॥

१ २ ३ १२ ३ १ २३ १ २ ३ २
इन्दुः पविष्ट चेतनः प्रियः कवीनां मतिः।

१ २ १२ ३ १ २
सृजदश्वं रथीरिव॥ ५॥

अथ पञ्चमी। अस्या उत्तरस्याश्च कश्यप ऋषिः। 'चेतन' प्रज्ञापकः 'प्रियः' देवानां प्रीतिकरः। 'इन्दुः' सोमः 'कवीना' क्रान्तकर्मणा स्तोतॄणा 'मतिः' मत्या स्तुत्या 'पविष्ट' पवते। 'अश्वं' अश्व 'रथीरिव' रथीव जनिम्। 'सृजत्' सृजति॥५॥

१ २ २ २ २ १ २ २ १ २र २ २
असृक्षत प्र वाजिनो गव्या सोमासो अश्वया ।
२ १ २ २ १ २र
शुक्रासो वीरयाशवः ॥ ६ ॥

अथ षष्ठी। 'वाजिनः' बलवन्तः 'आशवः' वेगवन्तश्च 'सोमासः' सोमाः 'गव्या' गवेच्छया 'अश्वया' अश्वेच्छया 'वीरया' वीरेच्छया च। 'प्रासृक्षत' ऋत्विग्भिः प्रकर्षेण सृज्यन्ते ॥ ६ ॥

१ २ २ १ २ २ १ २र २ १ २
पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः ।
२ १ २र २ १ २
वायुमा रोह धर्मणा ॥ ७ ॥

अथ सप्तमी। निध्रुविः काश्यप ऋषिः। हे सोम! 'देव' द्योतमानस्त्वं 'पवस्व' धारया क्षर। अपि च तव 'मदः' मदकरो रसः 'आयुषक्' अनुषक्तं यथा भवति तथा इन्द्रं प्रति गच्छतु। अपि च त्वं 'वायुं' 'धर्मणा' धारकेण रसेन 'आरोह' प्राप्नुहि।

'देव आयुषक्' 'देवायुषग्' इति पाठौ ॥ ७ ॥

१ २ २ २ २ १ २र १ २
पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् ।
१ २ २ १ २ २
ज्योतिर्वैश्वानरं बृहत् ॥ ८ ॥

अथ अष्टमी। अमहीयुर्ऋषिः। 'पवमानः' सोमः 'बृहत्' महत् 'वैश्वानरं' वैश्वानराख्यं 'ज्योतिः' तेजः 'दिवः'

द्युलोकस्य 'चित्रं' विचित्र 'तन्यतुं' न' अशनिमिव 'अजीजनत्' अजनयत् ॥ ८ ॥

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ २ २
परि स्वानास इन्दवो मदाय बर्हणा गिरा।
१ २ ३ १ २
मधो अर्षन्ति धारया ॥ ९ ॥

अथ नवमी। इयोः काश्यपोऽसित ऋषिः। 'स्वानासः' सुवानाः अभिषूयमाणाः 'इन्दवः' दीप्ताः। 'बर्हणा' महत्या 'गिरा' स्तुतिरूपया वाचा 'मधो' इति विभक्तिव्यत्ययः (३,१,८५)। मधवो मदकाराः सोमाः 'धारया' सह देवानां 'मदाय' तदर्थं 'पर्यर्षन्ति' दशापवित्रादधः क्षरन्तीत्यर्थः।

"मधो" "सुता" इति साम्न ऋचः पाठौ ॥ ९ ॥

१ २ १ २ २ १ ३२ ३ १ ३२ ३ २
परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः।
३ १ ३२ ३ १ २
कारुं बिभ्रत्पुरुस्पृहम् ॥ १० ॥

इति पञ्चमप्रपाठकस्य द्वितीयार्द्धे पञ्चमं दशति।

---

अथ दशमी। 'परि प्रासिष्यदत्' परिस्यन्दते 'कविः' मेधावी 'सिन्धोरूर्मावधिश्रितः' आश्रितः सन् 'पुरुस्पृहं' बहुभिः स्पृहणीयं 'कारुं' स्तोतारं 'बिभ्रत्' धारयन् सोमः परिस्यन्दते इति सम्बन्धः।

"कारुं" "कारम्" इति पाठौ ॥ १० ॥

इति मायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य द्वितीयः खण्डः।

इति पञ्चमप्रपाठकः समाप्तः।

अथ पञ्चमप्रपाठकस्य प्रथमार्द्धे प्रथम दशति ।

२ २ २ २ २ २ ३ २ १ २ ३ १ २र
उपो षु जातमप्सुरं गोभिर्भङ्गं परिष्कृतम् ।
१ २ ३ १ २
इन्दुं देवा अयासिषुः ॥ १ ॥

अथ तृतीये खण्डे—सैषा प्रथमा । अमहीयुरृषि । 'सुजातं' सम्यक् प्रादुर्भूतम् 'अप्सुं' वसतीवरीभिः प्रेरित 'भङ्गं' शत्रूणाम्भञ्जक 'गोभिः' गोविकारैः पयोभिः 'परिष्कृतम्' अलङ्कृतम् संस्कृतम् । 'इन्दु' सोमं 'देवाः' इन्द्रादयः उपायासिषुः 'उपगच्छन्ति ॥ १ ॥

३ १ २ ३ १र २ ३ ३ १ २
पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः ।
३ २ ३ १ २ ३ १ २
शुम्भन्ति विप्रं धीतिभिः ॥ २ ॥

अथ द्वितीया । 'विचर्षणिः' द्रष्टा 'पुनान.' सोमः 'विश्वाः' सर्वाः 'मृधः' शत्रुसेना 'अभ्यक्रमीत्' अभिक्रामति । 'विप्र' मेधाविन त सोम 'धीतिभिः' शुचिभिर्वा 'शुम्भन्ति'

'अभ्यर्षन्' अभितो गमयन् 'इन्दुः' दीप्तः सोमः 'इन्द्राय' इन्द्रार्थं 'धीयते' दशापवित्रे अध्वर्युभिर्निधीयते ॥ ३ ॥

१ २ ३ २ ३ १ २ ३ १ २ ३क २र २ ३
असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः ।

१ २ ३ १ २
कार्ष्मन् वाजी न्यक्रमीत् ॥ ४ ॥

अथ चतुर्थी। प्रभूवसुर्ऋषिः। 'रथ्यो यथा' रथसम्बन्धी अश्व इव स यथा विसृज्यते यज्ञे तद्वत् 'चम्वोः' अधिषवणफलकयोः 'सुतः' अभिषुतः सोमः 'पवित्रे' 'असर्जि' सृष्टोऽभूत्। तथाभूतो 'वाजी' वेगवान् सोमः 'कार्ष्मन्' कार्ष्मणि युद्धे इतरेतराकर्षणात्। अत्र देवानामाकर्षणवति यज्ञाख्ये-सङ्ग्रामे 'न्यक्रमीत्' नितरां क्रामति ॥ ४ ॥

३उ १ १ २र २ २ ३ १ ३ १ २
प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः ।

१ २ ३ २उ ३ १ २
घ्नन्तः कृष्णामप त्वचम् ॥ ५ ॥

अथ पञ्चमी। मेध्यातिथिर्ऋषिः। 'यत्' ये 'भूर्णयः' क्षिप्राः 'त्वेषाः' दीप्ताः 'अयासः' अयाः गमनकुशलाः 'कृष्णां' 'त्वचम्' 'अप घ्नन्तः' अभिषवेण निरस्यन्तः त्वचिः सम्वरणकर्मा (तु०य०)। इदृभूताः सोमाः 'प्राक्रमुः' यज्ञं प्रवर्त्तयन्ति। तत्र दृष्टान्तः 'गावो न' उदकानीव तानि यथा क्षिप्रमधः पतन्ति तद्वत्। गाव एव वा उपमीयते ता यथा स्वगोष्ठमाशु गच्छन्ति तद्वत्। अथवा गावः स्तुतिवाचः ता यथा स्तुत्यं प्रति क्षिप्रं प्राप्नुवन्ति, तद्वत् यज्ञं प्रवर्त्तयन्ति तान् स्तुवे इति शेषः ॥

"यत्" "ये" इति साम्न ऋचः पाठौ ॥ ५ ॥

२ १ २ ३ १ २ ३ १ २ ३ २
अपघ्नन् पवसे मृधः क्रतुवित्सोम मत्सरः ।
३ १ २र ३ १ २
नुदस्वादेवयुं जनम् ॥ ६ ॥

अथ षष्ठी। अस्याः परस्याश्च निध्रुविर्ऋषिः। हे 'सोम!' 'मत्सरः' मदकरः यः, त्वं 'मृधः' हिंसकान् शत्रून् 'अप घ्नन्' मारयन् 'क्रतुवित्' अस्मभ्यं प्रज्ञां प्रयच्छन् 'पवसे' क्षरसि स त्वं 'अदेवयुम् अदेवकामं जनं राक्षसवर्गं 'नुदस्व' प्रेरय ॥ ६ ॥

२ १ २ ३ १ २ ३ २ ३ २ ३ १ २
अया पवस्व धारया यया सूर्यमरोचयः ।
३ १ २र ३ २
हिन्वानो मानुषीरपः ॥ ७ ॥

अथ सप्तमी। हे सोम! 'मानुषीः' मनुष्याणां हितानि 'अपः' उदकानि 'हिन्वानः' प्रेरयन् त्वं 'यया' धारया 'सूर्यम्' 'रोचयः' प्रकाशयः। तथा 'अया' अनया धारया 'पवस्व' क्षर ॥ ७ ॥

१ २ ३ १उ ३ १ २ ३२ ३ १ २
स पवस्व य आविथेन्द्रं वृत्राय हन्तवे ।
३ १ २ ३ २ ३ १ २
वव्रिवांसं महीरपः ॥ ८ ॥

अथ अष्टमी। अमहीयुर्ऋषिः। हे सोम! यस्त्वं 'महीः' महतीः 'अपः' महान्त्युदकानि 'वव्रिवांसं' निरुन्धानं 'वृत्राय'

वृत्रं 'हन्तवे' हन्तुम् 'इन्द्रम्' 'आविथ' अरक्षः 'स' त्वं 'पवस्व' धारया क्षर। सोमं पीत्वा मत्तः सन्निन्द्रो महान्त्युदकानि-रुन्धानं वृत्रं जघानेत्यर्थः ॥ ८ ॥

३ २ ३ १ २र २ १ २ २ २ ३ २
**अया वीती परि स्रव यस्त इन्दो मदेष्वा।**

२ ३ १ ३ १ २र,
**अवाहन्नवतीर्नव ॥ ९ ॥**

अथ नवमी। अमहीयुर्ऋषिः। हे 'इन्दो!' सोम! 'अया' अनेन रसेन 'वीती' वीत्यै इन्द्रस्य भक्षणाय 'परि-स्रव' परिक्षर। कीदृशेन रसेनेत्यत आह 'ते' तव 'यः' रसः 'मदेषु' सङ्ग्रामेषु 'नवतीर्नव' नवनवतिसङ्ख्याकाः शम्बर-पुरीः 'अवाहन्' जघान (अयं सोमरसं पीत्वा मत्तः सन्निन्द्रः उक्तसङ्ख्याकाम् शम्बरपुरीर्जघानेति मत्वा रसो जघानेत्यु-पचारः ॥ ९ ॥

१ २ ३ १ २र ३ २उ ३ १ २ ३ १ २
**परि द्युक्ष्ं सनद्रयिं भरद्वाजं नो अन्धसा।**

३ १ २ ३ २ ३ २
**स्वानो अर्ष पवित्र आ ॥ १० ॥**

इति पञ्चमपाठकस्य प्रथमार्द्धे प्रथम दशतिः।

---

अथ दशमी। उचथ्य ऋषिः। 'द्युक्ष' दीप्तं 'सनत्' दीयमानं सैन्यं वा 'रयिम्' धनं यस्य तादृशं 'वाजं' बलम् 'अन्धसा' अन्नेन सह सोमः 'नः' अस्माकं 'परिभरत्' परितो-हरतु प्रयच्छतु इत्यर्थः। अथ प्रत्यक्षस्तुतिः हे सोम! 'स्वानः' सुयानोऽभिपूयमाणस्त्वम् 'पवित्रे' 'आ अर्ष' आभिमुख्येन क्षर।

'द्युचश्ःसनद्रयिं' 'द्युचःसनद्रयि' इति, 'स्वानः' 'सुवानः' इति च साम्न ऋचः पाठौ ॥ १० ॥

इति सायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य तृतीयः खण्डः ।

---

अथ षष्ठप्रपाठकस्य प्रथमार्द्धे द्वितीय दशतिः ।

१ २ २ २ २ १ २ ३ २ २ १ २ ३ १ २
अचिक्रदद्वृषा हरिर्महान् मित्रो न दर्शतः ।
१ २२
सᳲसूर्य्येण दिद्युते ॥ १ ॥

अथ चतुर्थे खण्डे—सैषा प्रथमा । मेध्यातिथिर्ऋषिः । 'वृषा' कामानां वर्षकः 'हरिः' हरितवर्णः 'महान्' पूज्यः 'मित्रोन' यथा सखा तद्वत् । 'दर्शतः' दर्शनीयो यः सोमः 'अचिक्रदत्' शब्दङ्करोति सोऽयं सोमः 'सूर्य्येण' सह 'दिद्युते' दिवि प्रकाशते । 'दिद्युते' 'रोचते' इति साम्न ऋचः पाठौ ॥१॥

२ १ १२ २ १२ १ २ ३ १ २
आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे ।
२ ३ १ २ ३ १ २
पान्तमा पुरुस्पृहम् ॥ २ ॥

अथ द्वितीया । भृगुर्ऋषिः । हे सोम ! यष्टारो वयं 'ते' तव स्वभूतं 'दक्षं' बलम् 'अद्य' अस्मिन् यागदिने 'आ' अभिमुख्येन 'वृणीमहे' सम्भजामहे । कीदृशम् ? 'मयोभुवं' सुखस्य भावयितारं 'वह्निं' धनादीनां प्रापकम् 'पान्तं' शत्रुभ्यो रक्षकम् । 'पुरुस्पृहं' बहुभिः स्पृहणीयं काम्यमानं बलमिति ॥ २ ॥

१ २ ३ १ २ २ १ २र ३ २ १ १ २
अध्वर्यो अद्रिभिः सुतꣳ सोमं पवित्र आ नय।

३ १ २ ३ १ २
पुनाहीन्द्राय पातवे ॥ ३ ॥

अथ तृतीया। उचथ्य ऋषिः। हे 'अध्वर्यो!' 'अद्रिभिः' ग्रावभिः 'सुतम्' अभिषुतं सोम 'पवित्रे' 'आनय' प्रापय। एतदेव दर्शयति 'इन्द्राय' इन्द्रस्य पातवे 'पानाय 'पुनाहि' पुनीहि पावय।

'पुनाहि' 'पुनीहि' इति, 'आनय' 'आसृज' इति च सान्न ऋचः पाठः ॥ ३ ॥

२ ३ २ २ १ २ ३ १ २ ३ १ २र
तरत्स मन्दी धावति धारा सुतस्यान्धसः।

२ १ २ ३ १ २
तरत्स मन्दी धावति ॥ ४ ॥

अथ चतुर्थी। अवत्सार ऋषिः। 'मन्दी' देवानां हर्षकः स सोमः 'तरत्' स्तोतॄन् पाप्मनः सकाशात् तारयन् 'धावति' द्रोणकलशं गच्छति। धावतीति पुनरपि तदेवावृत्यन्ता दरार्थं तरत्समन्दीधावतीति। यद्वा। अस्य ऋचो यास्केनो-क्तार्थो द्रष्टव्यः। तद्यथा 'तरति स पाप सर्व मन्दी य स्तौति धावति गच्छत्यूर्ध्वां गतिं धारा सुतस्यान्धसो धारयाभिषुतस्य मन्त्रपूतस्य वाचा स्तुतस्येति (नि० प० १३,६)' ॥ ४ ॥

१ २ २ १२ ३ १ २ ३ १ २
आ पवस्व सहस्रिणꣳ रयिꣳ सोम सुवीर्य्यम्।

३ १ २र
अस्मे श्रवाꣳसि धारय ॥ ५ ॥

अथ पञ्चमी। निध्रुविकर्ट षिः। हे 'सोम!' त्वं 'सहस्रिणं' बहुसङ्ख्याकं 'सुवीर्य्यं' शोभनसामर्थ्योपेतं 'रयिं' धनम् 'आ पवस्व' आभिमुख्येन चर। अपि च 'अस्मे' अस्मासु 'श्रवांसि' अन्नानि 'धारय' स्थापय ॥ ५ ॥

१ २ ३१ २ ३१२ ३२ ३२
अनु प्रत्नास आयवः पदं नवीयो अक्रमुः।
३१ २ ३ १ २
रुचे जनन्त सूर्य्यम् ॥ ६ ॥

अथ षष्ठी। 'प्रत्नासः' पुराणाः केचित् 'आयवः' गमनवन्तोऽश्वाः 'नवीयः' नवतरं 'पदम्' 'अन्वक्रमुः' अनुक्रमन्ते रूपकव्यवहारेण सोमाः सूयन्ते 'रुचे' दीप्तैव तदर्थं 'सूर्य्यं' 'जनन्त' जनयन्ति ॥ ६ ॥

१ २ ३१२ ३ १ ३२ ३ १ २
अर्पा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत्।
३ १ २ ३ ३१२
सीदन्योनौ वनेष्वा ॥ ७ ॥

अथ सप्तमी। भृगुऋर्षिः। हे 'सोम!' 'द्युमत्तमः' अतिशयेन दीप्तिमान् त्वं 'द्रोणानि' प्रयोगबाहुल्यापेक्षमेतद्बहुवचनम् द्रोणकलशानभिलक्षीकृत्य 'रोरुवत्' पुनः पुनर्भृशं वा शब्दं कुर्वन् 'अर्प' आगच्छतु। दशापवित्रमध्यान्निर्गतः सोमः अविच्छिन्नधारया पतन् शब्दङ्करोति खलु। तत्र दृष्टान्तः 'वनेषु' वननीयेषु यज्ञेषु वनसम्बन्धिषु यज्ञगृहेषु वा 'योनौ' स्थाने 'आसीदन्' यद्वा। वनेषु योनौ भूमौ आसदन् पूर्वं स्थितः सन् यज्ञगृहम् अभ्यर्पतीति सम्बन्धः ॥

'सीदन् योनौ वनेष्वासीदन्' 'श्येनोनयोनिम्' इति साम्न ऋचः पाठौ ॥ ७ ॥

१ २ २ १० २ ३ १ २ ३ १ २
वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः ।
१ ३ १ २
वृषा धर्म्माणि दध्रिषे ॥ ८ ॥

अथ अष्टमी । कश्यप ऋषिः । हे 'सोम !' 'वृषा' कामानां वर्षकस्त्वं 'द्युमान्' दीप्तिमान् 'असि'। अपि च हे 'देव !' द्योतमान सोम ! 'वृषा' त्वं 'वृषव्रतः' वर्षणशीलकर्म्मासि । किञ्च हे सोम ! 'वृषा' त्वं 'धर्म्माणि' देवानां मनुष्याणां च हितानि कर्म्माणि 'दध्रिषे' 'दधिषे' इति पाठौ ॥ ८ ॥

२ १ १ १ १ २ २ १ २ २ १ २
वृषे पवस्व धारया मृज्यमानो मनीषिभिः ।
१ २ २ १ २र
इन्दो रुचाभि गा इहि ॥ ९ ॥

अथ नवमी । कश्यप ऋषिः । हे 'इन्दो !' सोम ! 'मनीषिभिः' ऋत्विग्भिः 'मृज्यमानः' शोध्यमानस्त्वम् 'वृषे' अस्माकमन्नाय 'धारया' 'पवस्व' क्षर 'रुचा' रोचमानेनान्धसा 'गाः' पशून् 'अभीहि' अभिगच्छ ॥ ९ ॥

३ १ २ ३ १ २ ३ १ २ ३ २
मन्द्रया सोम धारया वृषा पवस्व देवयुः ।
२ १ १ २ ३ २
अव्या वारेभिरस्मयुः ॥ १० ॥

अथ दशमी । असित ऋषिः । हे 'सोम !' 'वृषा'

कामानां वर्षिता 'देवयुः' देवकामः 'अस्मयुः' अस्मत्कामश्च त्वम् 'अव्या' अवेः 'वारेभिः' वलैः क्वते दशापवित्रे 'मन्द्राय' मदकरया धारया 'पवस्व' चर ॥

'अव्यावारेभिः' 'अव्योवारेषु' इति पाठौ ॥ १० ॥

१ १ २ ३ १ २ ३ २उ ३क २र
अया सोम सुकृत्यया महांत्सन्नभ्यवर्धथाः ।
३ १ २र
मन्दान इद्वृषायसे ॥ ११ ॥

अथ एकादशी । कविः ऋषिः । हे 'सोम !' 'अया' अनया 'सुकृत्यया' शोभनया अभिषवादिलक्षणया क्रियया 'महान्' पूज्यमानः 'सन्' देवान् प्रति 'अभ्यवर्धथाः' अभ्यवर्धयः । 'मन्दानः इत्' मोदमानः एव 'वृषायसे' वृषवदाचरसि यथा मोदमानो वृषभः शब्दं करोति तथाभिषववेलायाम् उपरवेषु शब्दं करोषीत्यर्थः ।

'अभ्यवर्धथाः' 'अभ्यवर्धत' इति, 'वृषायसे' 'वृषायते' इति च पाठाः ॥ ११ ॥

१ १ २र १ २ २र ३ १ २
अयं विचर्षणिर्हितः पवमानः स चेतति ।
३ १ २र १ २
हिन्वान आप्यं बृहत् ॥ १२ ॥

अथ द्वादशी । जमदग्निः ऋषिः । 'विचर्षणिः' विद्रष्टा 'हितः' पात्रे निहितः 'पवमानः' शोध्यमानः 'अयं' सोमः 'आप्यम्' अप्सु भवं 'बृहत्' महत् अन्नं 'हिन्वानः' प्रेरयन् 'सचेतति' सर्वैः सञ्ज्ञायते ॥ १२ ॥

१ २ २ १ २र २ १ २र
प्र न इन्दो महे तु न ऊर्मिं न विभ्रदर्षसि।
२ २ ३ २ ३ १ २
अभि देवाꣳ अयास्यः ॥ १३ ॥

अथ त्रयोदशी। अयास्य ऋषिः। हे 'इन्दो'! क्रियमाण! त्वं 'नः' अस्माकं 'महे' महते 'तुने' धनाय 'प्रार्षसि' प्रगच्छसि। 'न' सम्प्रत्यर्थे अयास्यश्चायस्त्यपिः तव 'ऊर्मिं' तरङ्गं 'बिभ्रद्' धारयन् देवान् यष्टुमभिगच्छति ॥ १३ ॥

३ १ २ ३ २उ ३ २ ३ १ २
अपघ्नन् पवते मृधोऽप सोमो अराव्णः।
२ ३ १ २ ३ २
गच्छन्निन्द्रस्य निष्कृतम् ॥ १४ ॥

इति षष्ठप्रपाठकस्य प्रथमार्द्धे द्वितीया दशतिः।

---

अथ चतुर्दशी। अमहीयुः ऋषिः। 'सोमः' 'मृधः' हिंसकान् शत्रून् 'अपघ्नन्' मारयन् 'अराव्णः' अदातॄन् सत्वान् धनानामदातॄंश्च अपघ्नन् 'इन्द्रस्य' 'निष्कृतं' स्थानं 'गच्छन्' प्राप्नुवन् 'पवते' धारया क्षरति ॥ १४ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थाध्यायस्य चतुर्थः खण्डः।

---

अथ पञ्चमप्रपाठकस्य प्रथमार्द्धे द्वतीय दशति ।

३ १ २ ३ १ २ ३ १ २र
पुनानः सोम धारायापो वसानो अर्षसि ।
१ २३ १ २र३ १ २ १ २ ३१ २ ३ १ २
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः १

अथ पञ्चमे खण्डे—सैषा प्रथमा । छ० बृहती । भरद्वाजादयः सप्त ऋषयः । हे 'सोम' ! 'पुनानः' शोधकः 'अपः' वसतीवरीः 'वसानः' आच्छादयन् 'धारया' 'अर्षसि' गच्छसि द्रोणकलशं किञ्च 'रत्नधा' रमणीयानां धनानां दाता त्वम् 'ऋतस्य' यज्ञस्य 'योनिं' स्थानम् 'आसीदसि' अपि च 'देवः' द्योतमानः सोमः 'उत्सः' प्रस्यन्दनशीलः सन् 'हिरण्ययः' देवानां हितरमणीयो भवसि खलु ।

"देवो" "देव" इति साम्न ऋचः पाठौ ॥ १ ॥

३ १ १ २ १ २उ १ १ २ १ २ १ २ ३ १
परीतो षिञ्चता सुतꣳ सोमो य उत्तमꣳ हविः । दध-
१ २र ३ २ २उ ३ १ १ २ ३ १ २
न्वाꣳ यो नर्य्यो अप्स्वा३न्तरा सुषाव सोममद्रिभिः॥२॥

अथ द्वितीया । हे ऋत्विजः ! 'सुतम्' अभिषुतं 'सोमः' 'इतः' अस्मात् कर्मणः 'ऊर्ध्वम्' अथवा अस्मात् प्रदेशादूर्ध्वं 'परिषिञ्चत' वसतीवरीभिः 'इतोषिञ्चत' इत्यत्र संहितायां छान्दसं षत्वम् । आदेयप्रत्ययोरिति षत्वम् । 'यश्च' सोमः देवानाम् 'उत्तमं' प्रशस्तं' हविः' भवति । अपिच 'नर्य्यः' मनुष्याय हितः 'यः' च सोमः 'अप्सु' वसतीवरीषु 'अन्तर्' अन्तरिक्षे वा 'दधन्वान्' गच्छन् भवति । तं सोमम् 'अद्रिभिः

ग्रावभिः अध्वर्युः 'सुषाव' अभिषुतं चकार तं परिषिञ्चतेति समन्वयः ॥ २ ॥

१ २ ३ १ २र ३ १ २र ३ १ २
आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया ।
२ १ २ ३ २ ३क २र ३ २ ३ २ ३ १ २
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥३॥

अथ तृतीया। ऋ० अचिः। हे 'सोम'। 'अद्रिभिः' ग्रावभिः 'स्वानः' अभिषूयमाणस्त्वम् 'अव्यया' अविमयानि 'वाराणि' वालानि पवित्राणि 'तिरस्' कुर्वन् व्यवधायकानि कुर्वाणः सन् 'आ पवसे' आभिमुख्येन चरसि। 'हरिः' हरितवर्णः स सोमः चम्वोरधिषवणफलकयोरुपरि स्थिते कलशे 'विशत्' प्रविशति। तत्र दृष्टान्तः, 'जनोन' यथा जनः 'पुरि' पुरे प्रविशति। स त्वं वनेषु काष्ठनिर्मितेषु पात्रेषु 'सदः' स्थानं "दध्रिषे" "दधिषे" इति, साम्न ऋचः पाठौ ॥ ३ ॥

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १
प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा । अंशोः
२र ३ १ ३र ३ २ ३ १ २ ३ १ २
पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥४॥

अथ चतुर्थी। ऋ० विश्वामित्रः। हे 'सोम।' त्वं 'देववीतये' देवानां पानाय तदर्थम् 'अर्णसा' वसतीवर्य्याख्येनोदकेन 'प्रपिप्ये' प्याप्यायसे। तत्र दृष्टान्तः, 'सिन्धुः न' यथा सिन्धुरुदकेन प्याप्यायते तद्वत् प्यायतेः लिटि लिड्याङोर्येति पीभावः ततः स त्वम् 'मदिरः' मदकारः सुरादिरिव 'जागृविः' जागरणशीलः यद्वा न समाल्वर्थे, इदानीं मदकरो जागरणशीलस्त्वं 'अंशोः'

लताखण्डस्य 'पयसा' रसेन 'मधुश्चुतं' मधुररसस्य चारयितारं 'कोशं' द्रोणकलशम् 'अच्छ' अभिगच्छसि ॥ ४ ॥

१ २ १ २ ३ २ ३ २ ३ २ ३ १ २ १ २
सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम्। अश्वये-
३ १ २ ३ १ २ ३ १ २ ३ १ २
येव हरिता याति धारया मन्द्रया याति धारया ५

अथ पञ्चमी। 'सोतृभिः' पुरुषैः 'स्वानः' सुवानोऽभिषूयमाणः 'सोमः' अवीनां स्नुभिः' मांसस्पत्सनूनामुपसंख्यानमिति वार्त्तिकेन सानुशब्दस्य स्नुभावः समुच्छ्रितैर्बालैः पवित्रैरधियाति अधि अधिकं गच्छन्ति। 'उ' इति प्रसिद्धौ। 'अश्वयेव' वडवयेव हरितवर्णया धारया याति। 'मन्द्रया' मदकारिण्या धारया द्रोणकलशमधिगच्छति। "उष्वाणः" "उषुवाणः" इति पाठौ ॥ ५ ॥

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
तवाहꣳ सोम रारण सख्य इन्दो दिवेदिवे। पुरूणि
१ ३ २ ३ १ ३२ ३ २उ ३ १ २
बभ्रो नि चरन्ति मामव परिधीꣳरति ताꣳ इहि॥६

अथ षष्ठी। हे 'इन्दो!' सोम! तव 'सख्ये' सखिकर्मणि अहं 'दिवे दिवे' अन्वहं 'रारण' रमे रणेर्लिटि उत्तमे णलि रूपम्। हे 'बभ्रो!' बभ्रुवर्ण! सोम! 'पुरूणि' बहूनि रक्षांसि 'मां' तव सख्ये स्थितं 'न्यवचरन्ति' नीचीनं चरन्ति बाधन्ते। ये मां बाधन्ते तान् 'परिधीन्' रक्षसान् त्वम् 'अतीहि' आगच्छ ॥ ६ ॥

१ ३ २ ३ १ ३२
मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि।

३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३क २र
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥७॥

अथ सप्तमी । ऋ० वशिष्ठः । हे 'सुहस्त्या !' हस्ते भवाः हस्त्याः अङ्गुलयः, शोभनाङ्गुलिक सोम ! 'मृज्यमानः' शोध्यमानस्त्वं 'समुद्रे' अन्तरिक्षे कलशे वा 'वाचं' शब्दम् 'इन्वसि' प्रेरयसि । किञ्च, हे पवमान ! पूयमान सोम ! 'पिशङ्ग' हिरण्यं रजतादिभिः पिशङ्गवर्णं 'बहुलं' प्रभूतं 'पुरुस्पृहं' बहुभिः स्पृहणीय 'रयिं धनम्' अभ्यर्षसि' स्तोतृणामभिचरसि प्रयच्छसीत्यर्थः ॥ ७ ॥

१ १ २र ३ २ ३ १ २ ३ २ ३ १ २ ३ १
अभि सोमास आयवः पवन्ते मद्यं मदम् । समुद्र-
२र ३ १ २ ३ १ ३ ३ १ २ ३ १ २
स्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः ॥८॥

अथ अष्टमी । ऋ० विश्वामित्रः । 'आयवः' गमनशीलाः 'सोमास' सोमाः 'मद्य' मदकरं मदम् आत्मीय रसम् 'अभिपवन्ते' अभितो निर्गमयन्ति । कुत्रेत्युच्यते 'समुद्रस्य' अन्तरिक्षस्य 'अधिविष्टपे' अधिकं समुच्छ्रितपवित्रे । यद्वा । समुद्रस्य यस्मात् समुद्रवन्ति रसाः तस्य कलशस्य 'अधि' उपरि 'विष्टपे' स्थाने 'पवित्रे' निर्गमयन्ति । कीदृशाः ? 'मनीषिणः' मनस ईषितारः 'मत्सरास' मदकराः 'मदच्युत' मदकरेण रसेन च्यावयितारः ।

'विष्टपे', 'विष्टपि' 'मदच्युत', 'स्वर्विदः' इति च पाठौ ॥ ८ ॥

२ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ २ १
पुनानः सोम जागृविरव्या वारैः परि प्रियः । त्वं

२र १ २ १ २ २ १ २
विप्रो अभवोऽङ्गिरस्तम मध्वा यज्ञं मिमिक्ष णः ॥९॥

अथ नवमी। ऋ० काश्यपः। हे सोम! 'जागृविः' जागरणशीलः 'प्रियः' प्रीणयिता त्वं 'पुनानः' पूयमानः सन् 'अव्याः' मेष्याः 'वारैः' वालैर्निर्मिते दशापवित्रे परिक्षरसि। 'अङ्गिरस्तम' हे अङ्गिरसां वरिष्ठ! 'विप्रः' मेधावी त्वं पितॄणां नेता 'अभवः' भवसि। स त्वं 'नः' अस्मदीयं 'यज्ञ' 'मध्वा' मधुना आत्मीयेन रसेन 'मिमिक्ष' सेक्तुमिच्छसि। मिहिः सेचनार्थस्य (भ्वा० प०) सनि रूपम् ॥ ९ ॥

१ २ ३ २ ३ १ २ ३ १ २ ३ २
इन्द्राय पवते मदः सोमो मरुत्वते सुतः।
३ १ २ ३ १ २र ३ १ २ ३ १ २
सहस्रधारो अत्यव्यमर्षति तमी मृजन्त्यायवः॥ १० ॥

अथ दशमी। ऋ० जमदग्निः। 'मदः' मदकरः 'सुतः' अभिषुतः 'सोमः' 'मरुत्वते' मरुद्भिस्तद्वते 'इन्द्राय' इन्द्रार्थं 'पवते' क्षरति। ततः 'सहस्रधारः' बहुधारोपेतः सोमः 'अव्यम्' अविमयं पवित्रम् 'अत्यर्षति' अतिगच्छति तमिमम् 'आयवः' मनुष्या ऋत्विजः 'मृजन्ति' शोधयन्ति ॥ १० ॥

१ २ ३ १ ३ १ २र ३ १ २
पवस्व वाजसातमोऽभि विश्वानि वार्य्या।
१ २ ३ १ २ ३ २र ३ १ २ ३ २
त्वं समुद्रः प्रथमे विधर्मं देवेभ्यः सोम मत्सरः॥११

अथ एकादशी। ऋ० वसिष्ठः। हे 'सोम!' 'विश्वानि' सर्वाणि 'वार्या' वरणीयानि स्तोत्राणि 'अभि' लक्ष्य 'वाजसा-

तमः' अतिशयेनाऽस्य 'लम्भकस्त्वं' 'पवस्व' चर। हे सोम! 'देवेभ्यः' देवानां 'मत्सरः' मदकरः 'समुद्रः' समुन्दनशीलः 'विधर्मन्' विशेषेण पोषक! त्वं 'प्रथमे' मुख्ये श्रेष्ठे यज्ञे देवेभ्यस्तदर्थं चर।

"विधर्मन्" "विधारयम्" इति, "वाजसातये" "वाजसातमः" इति, "वार्य्या" "काव्या" इति च क्रमेण साम्न ऋचः पाठाः ॥ ११ ॥

१ २   ३ २३ २ ३ १ २   ३ १ २
पवमाना असृक्षत पवित्रमति धारया। मरुत्वन्तो
३ १ २ ३ १   ३२ ३ १ ३ १   ३२
मत्सरा इन्द्रिया हया मेधामभि प्रयाꣳसि च ॥ १२॥

इति पञ्चमप्रपाठकस्य प्रथमार्द्धे तृतीय दशतिः।

---

अथ द्वादशी। 'पवमानाः' पूयमानाः सोमाः 'धारया' आत्मीयया 'पवित्रम्' 'अति' अतीत्य 'असृक्षत' सृज्यन्ते। कीदृशाः? 'मरुत्वन्तः' मरुद्भिर्युक्ताः 'मत्सराः' मदकराः 'इन्द्रियाः' इन्द्रजुष्टाः। 'मेधा' स्तुतिं 'प्रियांसि' अन्नानि च 'अभि' लक्ष्य स्तोतृभ्य उभयं कर्त्तुं वा "हयाः" यज्ञे गन्तारः सृज्यन्ते ॥१२॥

इति सायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पवमानाध्यायस्य पञ्चम खण्डः।

---

अथ पञ्चमप्रपाठकस्य प्रथमार्द्धे चतुर्थ दशतिः।

३   ३२३ २ ३ २ ३   १   २२
प्र तु द्रव परि कोशं नि षीद
१ २   ३ २ ३ १   ३२
नृभिः पुनानो अभि वाजमर्ष।

१ २ ३ १ २ ३ १ २ ३ २ ३ १
अश्वं न त्वा वाजिनं मर्जयन्तो-

२ ३ १ २ ३ १ २
ऽच्छा बर्हीं रशनाभिर्नयन्ति ॥ १ ॥

अथ षष्ठे खण्डे—सैषा प्रथमा। उशना ऋषिः। छ० त्रिष्टुप्। हे सोम। 'तु' क्षिप्रं 'प्रद्रव' प्रगच्छ आगत्वा च 'कोश' द्रोणकलश 'परिनिषीद' निषण्णो भव। 'नृभिः' नेतृभिः 'पुनानः' पूयमानः 'वाजम्' अन्न यजमानार्थमुद्दिश्य 'अभ्यर्ष' वाज सङ्ग्रामं वा 'वाजिनं' बलवन्तम् 'अश्व न' अश्वमिव त यथा मार्जयन्ति तद्वत् ताम् 'मर्जयन्तः' शोधयन्तः 'बर्हिं' यज्ञम् 'अच्छ' 'प्रतिरशनाभिः' रशनावदायताभिरङ्गुलीभिः 'नयन्ति' अध्वर्युप्रमुखाः ॥ १ ॥

१ २र ३ १ २ ३ २ ३ २
प्र काव्यमुशनेव ब्रुवाणो देवो

३ १ २ १ २
देवानां जनिमा विवक्ति।

१ २ ३ १ १ २ २ १
महिव्रतः शुचिबन्धुः पावकः

१ २ ३ १ २ ३क २र ३ २
पदा वराहो अभ्येति रेभन् ॥ २ ॥

अथ द्वितीया। वृषगणो वासिष्ठ ऋषिः। 'उशने एव' तन्नामक ऋषिरिव 'काव्यं' कविकर्म स्तोत्र 'ब्रुवाणः' 'देवः' स्तोता अयमृषिर्वृषगणोनाम 'देवानाम्' इन्द्रादीना 'जनिमा' जन्मानि 'प्रविवक्ति' प्रकर्षेण वदति। वच परिभाषणे (अदा० प०)। व्यत्ययेन विकरणस्य श्लुः (२,१,८५) बहुलं छन्दसीति

(७,४,७८) अभ्यासस्य दत्वम् 'महिव्रतः' प्रभूतकर्मा। 'शुचिबन्धुः' बध्नन्ति यद्धूनिति बन्धूनि तेजांसि बलानि वा दीप्ततेजस्कः 'पावकः' पापानां शोधकः 'वराहः' वरश्च तदहश्च वराहः 'राजाहः सखिभ्यष्टच्' इति टच् समासान्तः। तस्मिन्नहनि अभिपूयमाणत्वेन तद्वान्। अर्श आदित्वान्मत्वर्थीयोऽच् तादृशः सोमः 'रेभन्' शब्दं कुर्वन् 'पदानि' स्थानानि पात्राणि 'अभ्येति' अभिगच्छति। यद्वा। यदा कायम वराहः 'पदा' पदेन भूमिं विक्रियमाणः शब्दं करोति तद्वत् ॥ २ ॥

२ १ २र ३ १ २र
तिस्रो वाच ईरयति प्र वह्नि-
१ १ १ २ १ २र ३ २
रृतस्य धीतिं ब्रह्मणो मनीषाम्।
१ २ ३ १ २ ३ १ २ ३
गावो यन्ति गोपतिं पृच्छमानाः
१ २ ३ १ २ १ २
सोमं यन्ति मतयो वावशानाः ॥ ३ ॥

अथ तृतीया। पराशर ऋषिः। 'वह्निः' वोढा यजमानः 'तिस्रो वाचः' ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति। तथा 'ऋतस्य' यज्ञस्य 'धीतिं' धारयित्रीं 'ब्रह्मणः' परिवृढस्य सोमस्य 'मनीषां' मनस ईशित्रीं कल्याणवाचं च प्रेरयति। किञ्च। 'गोपतिं' वृषभं यथा गावोऽभिगच्छन्ति तद्वत् गवां स्वामिनं सोमं 'गावः' 'पृच्छमानाः' पृच्छन्त्यः सत्यो 'यन्ति' स्वपयसामिश्रयितुमभिगच्छन्ति। तथा 'वाव-

यानाः' कामयमानाः 'मतयः' स्तोतारः 'सोमं' 'यन्ति' स्तोतुमभिगच्छन्ति ॥ ३ ॥

१ २ ३१ २१२ २१२
अस्य प्रेषा हेमना पूयमानो
१२ ३२ ३ १२ ३१२
देवो देवेभिः समपृक्त रसम् ।
३२ ३१२ १२ ३१२ २
सुतः पवित्रं पर्य्येति रेभन्मि-
२१ १२ ३१ २ १ २
तेव सद्म पशुमन्ति होता ॥ ४ ॥

अथ चतुर्थी। वसिष्ठ ऋषिः। 'अस्य' सोमस्य 'प्रेषा' प्रेषतिर्गत्यर्थः (भ्वा० प०) क्विपि रूपम्। सावेकाच इति विभक्तेरुदात्तत्वं प्रेषा प्रेरकेण 'हेमना' हिरण्येन 'पूयमानः' हिरण्यपाणिरभिषुणोतीति हिरण्यसम्बन्धः। तादृशः 'देवो' दीप्यमानः अंशुः 'रसम्' आत्मीयं 'देवेभिः' देवैः सह 'समपृक्त' सम्पर्कयति संयोजयति। पृची सम्पर्के (अदा० आ०) ततः 'सुतः' अभिषुतः सोमः 'रेभन्' शब्दायमानः 'पवित्रम्' ऊर्णास्तुकेन निर्मितं 'पर्य्येति' परिगच्छति। कथमिव? 'होता' देवानामाह्वाता ऋत्विक् 'मितेव' निर्मातेव 'पशुमन्ति' बहुपशून् 'सद्म' सदनानि यज्ञगृहान् यथा पर्य्येति तद्वत् ॥४॥

१ २ ३ १ २ ३ १
सोमः पवते जनिता मतीनां
१ ३ २ ३२ ३२१ ३ २ २
जनिता दिवो जनिता पृथिव्याः ।

२ १ २र २ १ २र
जनिताग्नेर्जनिता सूर्य्यस्य
२ १ २ ३ १ २र
जनितेन्द्रस्य जनितोत विष्णोः ॥ ५ ॥

अथ पञ्चमी। प्रतर्दन ऋषिः। 'सोमः' अभिपूयमाणः 'पवते' पात्रेषु चरति। कीदृशः? 'मतीनां' बुद्धीनाम्। यद्वा। मननीयानां स्तुतीनां 'जनिता' जनयिता 'जनिता मन्त्रे' (६,४,५३,) इति निपातेन णिलोपः किञ्च 'दिवः' द्युलोकस्य 'जनिता' प्रादुर्भावयिता। तथा 'पृथिव्याः जनिता'। 'अग्नेः' 'जनिता' प्रकाशयिता। 'सूर्य्यस्य' सर्वप्रेरकस्यादित्यस्य 'जनिता' 'इन्द्रस्य' जनिता पानेन मदस्य जनयिता। 'उत' अपि च। 'विष्णोः' व्यापकस्य 'जनिता' जनयिता। एतत्सर्वं सोमेऽभिपूयमाणे भवति सोमेन हि देवताप्यायन्त इति ॥ ५ ॥

१ १ २ ३ १ २र ३ १
अभि त्रिपृष्ठं वृषणं वयोधा-
१ २ १ २ २ १ २
मङ्गोषिणमवावशन्त वाणीः।
१ २ १ २ ३ १ २ १ २उ १ १
वना वसानो वरुणो न सिन्धुर्वि
१ २ १ २ ३ १ २
रत्नधा दयते वार्य्याणि ॥ ६ ॥

अथ षष्ठी। वसिष्ठ ऋषिः। 'त्रिपृष्ठं' त्रीणि पृष्ठानि द्रोणकलशादिस्थानानि सवनानि वा यस्य स तथोक्तस्तम्।

'वृषणं' वर्षकम्। 'वयोधाम्' अन्नस्य दातारम्। 'अङ्गोषिण' आघोषन्तं सोमं 'वाणीः' स्तोत्ररूपा वाचः 'अवावशन्त' कामयन्ते शब्दायन्ते वा। 'वना' वनानि उदकानि 'वसानः'। आच्छादयन् 'वरुणो न' वरुण इव 'सिन्धुः' अपां स्यन्दयिता पर्यन्तप्रदेशानाच्छादयति तद्वत्। 'रत्नधाः' रत्नानां दाता सोमः 'वार्य्याणि' धनानि 'दयते' स्तोतृभ्यः प्रयच्छति ॥ ६ ॥

१ २ ३१ २३१ २र
अक्रांत्समुद्रः प्रथमे विधर्मं
३१२ ३१ २र ३ २
जनयन् प्रजा भुवनस्य गोपाः।
१२ ३ २३ २ ३ १ ३ १ २
वृषा पवित्रे अधि सानो अव्ये
३१ २र ३ १ २र
वृहत्सोमो वावृधे स्वानो अद्रिः ॥ ७ ॥

अथ सप्तमी। पराशर ऋषिः। 'समुद्रः' अस्मादापः सन्द्रवन्ति स समुद्रः अपां वर्षकः। 'गोपाः' यज्ञस्य रक्षकः सोमः 'प्रथमे' विस्तृते 'भुवनस्य' उदकस्य 'विधर्मन्' विधारकेऽन्तरिक्षे 'प्रजाः' 'जनयन्' उत्पादयन् 'अक्रान्' सर्वमतिक्रामति क्रमतेर्लुङि, तिपि, इडभावे वृद्धौ च कृतायां सिज्लोपे मकारस्य मोनोधातोरिति नकारे रूपम् 'वृषा' कामानां वर्षिता 'स्वानः' अभिषूयमाणः।

"अद्रिः" "इन्दुः" इति च साम्न ऋचः पाठौ ॥ ७ ॥

१ २ ३ २ ३ २ ३ १ २ ३
कनिक्रन्ति हरिरा सृज्यमानः
२ ३ १२ ३१२ ३ २
सीदन् वनस्य जठरे पुनानः।

१ २३१ २ २ ३ ३
नृभिर्यतः कृणुते निर्णिजं

१ २र ३१ २ ३-१ २
गामतो मतिं जनयत स्वधाभिः ॥ ८ ॥

अथ अष्टमी। प्रस्कण्व ऋषिः। 'सृज्यमानः' आ समन्तात् विसृज्यमानोऽभिषूयमाणः 'हरिः' हरितवर्णः सोमः कनिक्रन्ति' पुनः पुनः शब्दायते क्रन्दतेर्यङ्लुकि, तिपि, इडभावे, 'दाधर्त्तिदर्धर्त्तीत्यादिना निपातनादभ्यासस्य निगागमः। अभ्यस्तस्वरः तथा 'पुनानः' पूयमानः 'वनस्य' वननीयस्य चास्य द्रोणकलशस्य 'जठरे' 'सीदन्' उपविशन् शब्दायते। किञ्च 'नृभिः' कर्मनेतृभिर्ऋत्विग्भि 'यतः' सयतः सोमः 'गाः' गोविकारान् चीरादीन् आच्छादयन् 'निर्णिजं' शुद्धम् आत्मनो रूप 'कृणुते' प्रहादिषु करोति। अतोऽस्मै सोमाय 'मतिं' मननीयां स्तुतिं 'स्वधाभिः' हविर्भिः सह 'जनयत' स्तोतारोऽजनयन् अस्यान्तादेशाभावः छान्दसः। अटाटेयः यद्वा हे स्तोतारः अस्मै सोमाय स्तुतिं जनयत उत्पादयत कुरुतेति यावत् ॥ ८ ॥

२ १उ २ १ १ १ २ १
एष स्य ते मधुमाॅं इन्द्र सोमो

२१ २ २ १ २ २ १ २
वृषा वृष्णः परि पवित्रे अक्षाः।

२ १ २ ३ १ २ ३ १ २
सहस्रदाः शतदा भूरिदावा

२ २ १ २उ १क २र
शश्वत्तमं बर्हिरा वाज्यस्थात् ॥ ९ ॥

अथ नवमी। उशना ऋषिः। हे इन्द्र! 'वृष्णः' वर्षकस्य 'ते' तुभ्यं चतुर्थ्यर्थे षष्ठी 'एषः' 'स्यः' स सोमः 'मधुमान्' माधुर्योपेतः 'वृषा' वर्षकः 'पवित्रे' 'पर्यक्षाः' पर्यस्रवत् चरतेर्लुङि रूपम्। स एव 'सहस्रदाः' सहस्रसङ्ख्याकस्य धनस्य दाता 'शतदाः' शतसङ्ख्याकस्य दाता 'भूरिदावा' ततोऽपि भूरेर्दाता 'वाजी' बलवान् सोमः 'शश्वत्तमम्' अतिशयेन पुराणं 'बर्हिः' यज्ञम् 'अस्थात्' अधितिष्ठति।

"वृषा वृष्णः" "वृषा वृष्ण" इति, "सहस्रदाः" "शतदाः" इति च साम्न ऋचः पाठः ॥ ९ ॥

१ २ २ १ २ १ २ ३ १
पवस्व सोम मधुमाꣳ ऋतावापो
३२ १ २ ३ १ २ १ २
वसानो अधि सानो अव्ये।
२२ १ २ ३ १ २
अव द्रोणानि घृतवन्ति रोह
१ १ २ ३ १ २ ३ १ २
मदिन्तमो मत्सर इन्द्रपानः ॥ १० ॥

इति षष्ठप्रपाठकस्य प्रथमार्द्धे चतुर्थ दशतिः।

---

अथ दशमी। प्रतर्दन ऋषिः। हे 'सोम!' 'मधुमान्' मत्वर्थीयः तादृशस्त्वम् 'अपः' वसतीवरीः एकधनाः 'वसानः' आच्छादयन् 'अधि' अधिकं 'सानौ' समुच्छ्रिते 'अव्ये' अविभवे पवित्रे 'पवस्व' चर। ततः 'मदिन्तमः' अतिशयेन मदकरः 'इन्द्रपानः' इन्द्रेण पातव्यः 'मत्सरः' मादयिता सोमः

'घृतवन्ति' उदकवत: 'द्रोणानि' द्रोणकलशान् 'अवरोह' प्रादुर्भवसि।

"रोह" "सीद" इति पाठौ ॥ १० ॥

इति सायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
पञ्चमस्याध्यायस्य षष्ठः खण्डः।

---

अथ षष्ठप्रपाठकस्य प्रथमार्द्धे सप्तम खण्डः आरभ्यते।

१ २ २ २उ २ २ २ १ २
प्र सेनानीः शूरो अग्रे रथानां

२ १ २ २ १ १ ३ १ २
गव्यन्नेति हर्षते अस्य सेना।

१ २ २ १ २ २ १ २र २
भद्रान् कृण्वन्निन्द्रहवान्त्सखिभ्य

२उ ३ १ २ ३ १ २
आ सोमो वस्त्रा रभसानि दत्ते ॥ १ ॥

अथ सप्तमे खण्डे—सेषा प्रथमा। प्रतर्दन ऋषिः। 'सेनानीः' सेनानामग्रे नेता। 'शूरः' शत्रूणां बाधकः 'सोमः' 'गव्यन्' इच्छन् यजमानानां पश्वादिकमिच्छन् 'रथानाम्' 'अग्रे' पुरतः 'प्रैति' प्रकर्षेण संग्राम गच्छति। 'अस्य' सोमस्य 'सेना' च 'हर्षते' हृष्यति वाक्यभेदादनिघातः किञ्च 'सखिभ्यः' समानख्यानेभ्यो यजमानेभ्यः 'इन्द्रहवान्' तैः कृतानि इन्द्रस्य आह्वानानि 'भद्रान्' कल्याणानि यथार्थानि 'कृण्वन्'। आहूतो हीन्द्रः सोमं पीत्वा कामान् प्रयच्छतीति। 'रभ-

सानि' इन्द्रस्य वेगेनागमननिमित्तानि 'वस्त्रा' वस्त्राण्याच्छादकानि पय प्रभृतीन्याग्रयणानि 'आ दत्ते' आ गृह्णाति ॥ १ ॥

२ १ २ १ १ २ २
प्र ते धारा मधुमतीरसृग्रन्
१२ २ ३ २ १ १ १२
वारं यत्पूतो अत्येष्यव्यम् ।
१२ १ १२१ १ २ १ २
पवमान पवसे धाम गोनां
२ १ २ १२ १ २
जनयत्सूर्य्यमपिन्वो अर्कैः ॥ २ ॥

अथ द्वितीया । पराशर ऋषि । ते तव संभूता मधुमती मधुमत्य धारा प्रासृग्रन् तदा प्रसृज्यन्ते 'यत्' यदा 'पूत' वसतीवरीभिस्त्वम् 'अव्यम्' अविभव 'वार' वाल पवित्रम् 'अत्येषि' अतीत्य गच्छसि। किञ्च हे 'पवमान' शोध्यमान सोम। 'गोना' गवा 'धाम' धीयते पीयत इति धाम पय तत् लक्षीकृत्य 'पवसे' क्षरसि। तत 'जनयन्' जायमानस्त्व 'अर्क' अर्चनीयै स्वतेजोभि 'सूर्य्यम्' आदित्यम् 'अपिन्व' पूरयसि ॥

"वार यत्पूतो अत्येष्यव्यम्" "वारान्यत्पूतो अत्येष्यव्यान्" इति, 'जनयन्' 'जघ्नान' इति च साम्न ऋच पाठौ ॥ २ ॥

१ २ ३क २र २ १ २र
प्र गायताभ्यर्चाम देवान्त्सोमं
२ १ २र
हिनोत महते धनाय ।
१ २ २ १ २ ३ १२२ २ १
स्वादुः पवतामति वारमव्यमा

२ २ १ २ ३ १ २र
सीदतु कलशं देव इन्दुः ॥ ३ ॥

अथ तृतीया । इन्द्रप्रमतिर्वासिष्ठ ऋषिः । हे स्तोतारः ! 'प्रगायत' 'सोमं' प्रकर्षेणाभिष्टुत । वयन्तु 'देवान्' 'अभ्यर्चामः' अभिष्टुमः । यद्वा । देवानभ्यर्चामोऽभ्यर्चत पुरुषव्यत्ययः । किञ्च । 'महते' महत् प्रभूत धनाय धनं प्राप्तुं सोम 'हिनोत' अभिषवार्थं प्रेरयत क्रियार्थोपपदस्य च कर्मणि स्थानिनः (२,३,१४) इति धनशब्दस्य चतुर्थी । ततः 'स्वादुः' मधुरः सोमः 'अव्यम्' अविभवं 'वारं' वालं पवित्रम् 'अतिपवताम्' अतीत्य चरतु । 'देवः' द्योतमानः । सोमः 'इन्दुः' दीप्तः सन् 'कलशं' द्रोणम् 'अभि आसीदतु' आभिमुख्येन तिष्ठतु ।

"पवतां" "पवाते" इति, "देव इन्दुः" "देवयुर्न" इति सान्न ऋचः पाठौ ॥ ३ ॥

१ २ ३ १ २ ३ १ २र ३
प्र हिन्वानो जनिता रोदस्यो

३ २ १ २र ३ १ २
रथो न वाजꣳ सनिषन्नयासीत् ।

२ ३ २ ३ १ २ ३ १ २ ३
इन्द्रं गच्छन्नायुधा सꣳशिशानो

३ २ ३ २ १ २ ३ १ २
विश्वा वसु हस्तयोरादधानः ॥ ४ ॥

अथ चतुर्थी । वसिष्ठ ऋषिः । 'प्रहिन्वानः' अध्वर्युभिः प्रेर्यमाणः 'जनिता' उत्पादयिता 'रोदस्योः' द्यावापृथिव्योः

तयोर्जनयितृत्वं हविप्रदानहविःप्रापणाभ्याम्। तादृक् सोमो 'वाजम्' अन्नं 'सनिष्यन्' दास्यन् 'प्रायासीत्' प्रगच्छति। 'इन्द्रं' गच्छन् प्राप्नुवन् 'आयुधा' 'आयुधानि' 'संशिशान.' सम्यक् तीक्ष्णीकुर्वन् इन्द्रं सहायगमनार्थं तीक्ष्णायुधः सन् 'विश्वा' सर्वाणि 'वसु' वसूनि धनानि 'हस्तयोरादधान.' अस्मभ्य' दानाय एवं कुर्वन् प्रायासीत् ॥ ४ ॥

१ २ ३ १ २ ३ २ १ २ ३
तक्षद्यदी मनसो वेनतो
१ २र ३ १ २ ३ १ २र
वाग्ज्येष्ठस्य धर्मं द्युक्षोरनीके ।
१ २ ३ २ ३ १ २ ३ २उ
आदीमायन् वरमा वावशाना
३ १ २ ३ १ २ ३ २ ३ २
जुष्टं पतिं कलशे गाव इन्दुम् ॥ ५ ॥

अथ पञ्चमी। मृडीको वासिष्ठ ऋषिः। 'वेनत.' वेनो वेनतेः कान्तिकर्मणः (दे,४,१८)' इति यास्कः। कामयमानस्य 'मनसः' मनो मन्यतेः स्तुतिकर्मणः स्तोतुः 'वाक्' स्तुतिलक्षणा यद्येन 'तक्षत्' संस्करोति। 'धर्मन्' धारके यज्ञे 'ज्येष्ठस्य' प्रशस्यस्य 'द्युक्षोः' दीप्तस्तुतिकस्य टुक्षु शब्दे (अ० प०) इत्य स्मात् कुप्रत्ययः सवनस्य 'अनीके' प्रमुखे यदा यज्ञेषु सवन मुखे स्तोतुर्वाक् सोमं स्तौतीत्यर्थः। 'आ' अनन्तरमेव 'वरं' वरणीयं 'जुष्टं' देवाना मदाय पर्याप्तं 'पतिं' सर्वस्य पालकं 'कलशे' स्थितम् 'इन्दुम्' 'ईम्' एनं सोमं 'वावशानाः' कामय-मानाः 'गावः' 'आयन्' पयसा क्षीरेण मिश्रयितुमाग-च्छन्ति ॥

"धर्मन्" "धर्मणि" इति पाठौ ॥ ५ ॥

२ १ २ २ १ २ २
साकमुक्षो मर्जयन्त स्वसारो
२ ३ १ २ १ २ ३ १ १
दश धीरस्य धीतयो धनुत्रीः ।
२ ३ १ २ ३ १ २ ३ १
हरिः पर्य्यद्रवज्जाः सूर्य्यस्य
१ २ ३ २ ३ २ ३ २
द्रोणं ननक्षे अत्यो न वाजी ॥ ६ ॥

अथ षष्ठी। नोधा ऋषिः। 'साकमुक्षः' उक्ष सेचने (भ्वा० प०) क्विपि रूपम् साहस्यः 'स्वसारः' कर्मकरणार्थमितस्ततः सुष्ठु गच्छन्त्यः अङ्गुलयः 'मर्जयन्त' सोमं शोधयन्ति मृजु शौचालङ्कारयोः (चु० उभ०) ताः दशसंख्याकाः 'धीतयः' अङ्गुलिनामैतत् (नै०२,५,७) अङ्गुलयः 'धीरस्य' समर्थस्य प्राज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य 'धनुत्रीः' प्रेरयित्र्यो भवन्ति। ततः 'हरिः' हरितवर्णः सोमः 'सूर्य्यस्य' 'जाः' प्रादुर्भूता जाया दिशस्ताः 'पर्य्यद्रवत्' परितो गच्छति। सूर्य्यस्य तेजसा हि आविर्भवतीति दिशा तस्य जायात्वम्। 'अत्यः' अतनशीलः 'वाजी न' अश्व इव स्थितः सोमः 'द्रोणं' कलशं 'ननक्षे' व्याप्नोति नक्षतिर्व्याप्तिकर्मा (नै०२,१८,२ ॥६॥

२ ३ १ २ ३ १ २ ३ २ ३
अधि यदस्मिन् वाजिनीव शुभ
१ २ ३ २ ३ २ ३ १ २२
स्पर्द्धन्ते धियः सूरे न विशः ।

२ १ २ ३ १ २ ३ १ २
अपो वृषानः पवते कवीयान्
३ १ २र ३ १ २ ३ १ २
व्रजं न पशुवर्द्धनाय मन्म ॥ ७ ॥

अथ सप्तमी। काक्षीवीर ऋषिः। 'यद्' यदा 'अस्मिन्' सोमे 'वाजिनीव शुभः' अश्वे यथा वस्त्रप्रभृत्यलङ्कारा भवन्ति। यदा वास्मिन् सोमे 'सूरे न' सूर्य्ये न यथा सूर्य्ये 'विश्वः' रश्मयः उदिता भवन्ति तदा 'धियः' अङ्गुलयः 'अधिसर्जन्ते' अहं पुरस्तात्क्षोधयाम्यर्च्च पुरतः शोधयामीत्यहमिकया उपतिष्ठते। ततोऽयं सोमः 'अपः' वसतीवरीः 'वृषानः' आच्छादयन् 'पवते' पात्रेषु चरति कलशानभिगच्छति। कीदृशः? 'कवीयान्' कविरिवाचरन्। यद्वा, कवयः स्तोतारः तानिच्छन्। तत्र दृष्टान्तः, 'व्रजं न' 'मन्म' मननीयं वोढव्यं रक्षितव्य गवां गोष्ठं पशुवर्द्धनाय गोपालः परिगच्छति यथा तथा देवानां प्रीणनाय पात्राणि पवते।

"सूर्य्ये" "सूरे" इति, "कवीयान्" "कवीयन्" इति च सात्र ऋचः पाठः ॥ ७ ॥

१ २ ३ १ २ ३ १ २ ३
इन्दुर्वाजी पवते गोन्योघा
२३ १ २ ३१ २३ १ २
इन्द्रे सोमः सह इन्वन्मदाय।
२ ३ २१ १ २३ १ २र ३
हन्ति रक्षो बाधते पर्य्यरातिं
१ २ ३ २ ३१२ ३ १ २
वरिवस्कृण्वन् वृजनस्य राजा ॥ ८ ॥

अथ अष्टमी । मन्युर्वासिष्ठ ऋषिः । "इन्दुः" क्षरणशीलः 'वाजी' बलवान् 'गोन्योघाः' गमनशीलनीचीनाग्ररससङ्घातः 'इन्द्रे' 'सहः' बलकरं रसम् 'इन्वन्' प्रेरयन् 'सोमः' 'मदाय' तस्य मदार्थं 'पवते' क्षरति । किञ्च, 'रक्षः' रक्षःकुलं 'हन्ति' छिनत्ति । किञ्च, 'अरातीः' अरातीन् शत्रून् 'परिबाधते' परितः संहरति । कीदृशः ? 'वरिवः' वरणीयं धनं 'कृण्वन्' स्तोतॄणां कुर्वन् 'वृजनस्य' बलस्य 'राजा' ईश्वरः सोम इति ॥८॥

१ २ ३१ २ ३ १ २र
अया पवा पवस्वैना वसूनि

२ १ १ २ १२ २ १ २
मांश्चत्व इन्दो सरसि प्र धन्व ।

१२ २ १२ २ २ २ १ १
ब्रध्नश्चिदत्र वातो न जूतिं

२३ १२ ३१२३ १२
पुरुमेधाश्चित्तकवे नरं धात् ॥ ९ ॥

अथ नवमी । कुत्स ऋषिः । हे सोम ! 'अया' अनया 'पवा' पवमानया धारया सह 'एना' एतानि 'वसूनि' धनानि 'पवस्व' क्षर पवा, पूञ् पवने (क्र्या० उ०) 'अन्येभ्योऽपि दृश्यन्ते (३,२,१०१) इति विन्प्रत्ययः । आर्धधातुकलक्षणो गुणः । 'सावेकाचः (६,१,१६८)' इति तृतीयाया उदात्तत्वम् । तथा हे 'इन्दो' ! त्वं 'मांश्चत्वे' मन्यमानानां चातके 'सरसि' उदके वसतीवर्य्याख्ये कलशे 'प्रधन्व' प्रगच्छ । ततः 'यस्य' यं 'ब्रध्नश्चित्' सर्वेषां पक्षापकः मूलभूतो वा आदित्यः 'वातो न' वात इव 'जूतिं' वेगं कुर्वन् । किञ्च, 'पुरुमेधाश्चित्' बहुविध-

प्रच्च इन्द्रध 'तकवे' तकतिर्गतिकर्मसु पठित.। अस्मादौणादिक उन्प्रत्ययः यज्येति (२,३,३७) कर्मणि षष्ठी। 'न लोका व्ययेति (२,३,६९) षष्ठीप्रतिषेधश्छान्दसः. सोममभिगच्छतामित्यर्थः।

"यस्य" "यत्र" इति, "जूर्ति" "जूत." इति, "नरन्धात्" "नरन्दात्" इति च साम्न ऋच' क्रमेण पाठा. ॥ ८ ॥

१ १ २र ३ १ २
महत्तत्सोमो महिषश्चका-

१ १ २र ३ २
रापां यद्गर्भोऽवृणीत देवान्।

१ २२ २ १ १२ ३ १
अदधादिन्द्रे पवमान ओजो-

२र १ २ १ २ ३ १२
ऽजनयत्सूर्य्ये ज्योतिरिन्दुः ॥ १० ॥

अथ दशमी। 'पराशर ऋषि.। 'महिष' महान् पूज्यो वा 'सोम.' 'महत्' प्रभूत 'तत्' कर्म 'चकार' अकरोत्। किं तत्? 'अपा गर्भ.' उदकाना गर्भभूत. जनयितृत्वाज्जन्यत्वाद्वा। स सोम 'देवान्' 'अवृणीत' समभजतेति 'यत्' तत् कृतवान् इति। किञ्च, 'पवमान' पूयमान । सोम' 'ओज' सोमपानजन्यं बलम् 'इन्द्रे' 'अदधान्' न्यधात्। तथा 'इन्दु' सोमः 'सूर्य्ये' 'ज्योति.' तेज अजनयत् ॥ १० ॥

१ २ ३ २ ३ २ ३ २ ३ २
असर्जि वक्का रथ्ये यथाजौ

३ २ ३ १ २ ३ १ २ ३ २
धिया मनोता प्रथमा मनीषा।

२ ३ १ २ ३ २ ३ २ ३ १ २
दश स्वसारो अधि सानो अव्ये
३ २ ३ २ ३ १ २ ३ १ २
मृजन्ति वह्निᳫं सदनेष्वच्छ ॥ ११ ॥

अथ एकादशी। कश्यप ऋषिः। 'वच्चा' शब्दायमानः वच परिभाषणे (अदा० प०) वनिप् तादृशः पवमानः सोमः 'वाजी' अजन्ति कर्मार्थं ऋत्विज इति आजियज्ञः तस्मिन् 'धिया' कर्मणा स्तोत्रेण वा साकम् 'असर्जि' पात्रेषु सृज्यते। तत्र दृष्टान्तः। 'रथ्ये यथा' रथ्ये रथार्हे वाजी सङ्ग्रामनामैतत्। अजन्ति प्रक्षिपन्त्यायुधान्यत्रेति तस्मिन्। अश्वो यथा सृज्यते तद्वत्। कीदृशः 'मनोता' यस्मां देवानां मनांसि प्रोतानि स तथाच ब्राह्मणम्। 'तस्यां हि तेषां मनाᳫंस्योतानि' इति। 'प्रथमा' मुख्या 'मनीषा' मनस ईषा मनीषा स्तुतिः तद्वान्। यद्वा। धिया विदधाति स्तुतीरिति धीः स्तोता तेन स्तुतिः प्रेर्य्यते। किञ्च। 'दश स्वसारः' दशसङ्ख्याका अङ्गुलयः 'सदनेषु' यज्ञगृहेषु पावाण्यभिमुखीकृत्य 'वह्निं' वोढारं सोमं 'सानौ' समुच्छ्रिते अधिः सप्तम्यर्थानुवादकः 'अव्ये' अविभवे अविवालेन कृते पवित्रे 'अञ्जन्ति' प्रेरयन्ति॥

"प्रथमा मनीषा" "प्रथमो मनीषी" इति, "सदनेषु" "सदनानि" इति च साम्न ऋचः पाठौ॥ ११॥

२ २ ३ २ ३ २ ३ १ ३
अपामिवेदूर्मयस्तर्त्तुराणाः
१ २ ३ १ २ ३ २ ३ १ २
प्र मनीषा ईरते सोममच्छ।

२ ३ २ १ २ ३ १ २ १
नमस्यन्तीरुप च यन्ति सं
२र ३ १ २ १ २
चाच विशन्त्युशतीरुशन्तम् ॥ १२ ॥

इति षष्ठप्रपाठकस्य प्रथमार्धे पञ्चमी दशतिः।

---

अथ द्वादशी। प्रस्कण्वऋषिः। 'अपामिव' यथा उदकानाम् 'ऊर्मयः' त्वरन्ते। 'इत्' इति पूरणः। तद्वत् 'तर्तुराणाः' कर्मणि देवान् स्तोतुं त्वरमाणाः। तुर त्वरणे जौहोत्यादिकः (आ०)। यङ्लुगन्तस्य शानचि रूपम्। अभ्यासस्य उवर्णस्य रेफादेशश्छान्दसः। अभ्यस्तस्वरः। तादृशा ऋत्विजः 'मनीषाः' मनस ईशित्रीः स्तुतीः 'सोममच्छ' सोमं प्रति प्रेरयन्ति। 'नमस्यन्तीः' नमस्यन्त्यः सोमं योजयन्त्यः सत्यः तम् 'उपयन्ति' च। उप समीपे गच्छन्ति। तमेव 'संयन्ति च' सङ्गच्छन्ते। 'च वा योगे प्रथमा (८,१,५९) इति न निघातः 'उशतीः' कामयमानाः स्तुतयः 'उशन्तं' कामयमानं सोमम् 'आविशन्ति च' प्रविशन्ति च ॥ १२ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
पञ्चमस्याध्यायस्य सप्तमः खण्डः।

इति त्रैष्टुभम्।

इति षष्ठप्रपाठकस्य प्रथमार्धः समाप्तः।

---

पुरोजितीतिमुख्यास्तु नवर्चो बृहतीत्यसौ।
'आहर्यताय धृष्णवे' शिष्टा अनुष्टुभः स्मृता॥
ऋषीणां विप्रकीर्णत्वात् तत्र तत्राभिदध्महे॥

। अथ षष्ठप्रपाठकस्य द्वितीयार्द्धे प्रथमं दशतिः।

२ १ ' २ २ १ २ २ १ २ २ १ २
पुरोजिती वो अन्धसः सुताय मादयित्नवे।
२ ३ १ २ ३ १ २ ३क २र
अप श्वानꣳ श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥१॥

तत्र षष्ठमे खण्डे—सैषा प्रथमा। श्यावाश्व ऋषिः। हे 'सखायः'! सखिभूताः समानख्याना वा हे स्तोतारः! 'वः' यूयं 'पुरोजिती' षष्ठ्याः पूर्वसवर्णदीर्घः पुरः स्थितजयस्य 'अन्धसः' अदनीयस्य सोमस्य स्वभूताय 'सुताय' अभिषुताय 'मादयित्नवे' अत्यन्तं मदकराय रसाय 'दीर्घजिह्व्य' दीर्घा जिह्वा अस्य स दीर्घजिह्वी 'दीर्घजिह्वी च छन्दसि (४,१,५८) इति 'ङीपन्ततेन' निपातितः। तादृशं 'श्वान' च 'अपश्नथिष्टन' अपश्नथयत अपबाधध्वम्। यथा श्वा राक्षसा वा 'सुतं' सोमं न लिहन्ति तथा कुरुतेत्यर्थः॥ १॥

१ २ १ २ ३ २उ ३ १ २ ३ १ २
अयं पूषा रयिर्भगः सोमः पुनानो अर्षति।
१ १ २ ३ १ १ २ ३क २र ३ १ २ ३ २
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे॥ २॥

अथ द्वितीया। ययातिर्नाहुष ऋषिः। 'पूषा' पोषकः सर्वेषाम्। 'भगः' भजनीयः 'रयिः' धनहेतुः 'अयं' सोमः 'पुनानः' पवित्रे पूयमानः सन् 'अर्षति' कलशमभिगच्छति। तथा 'विश्वस्य' सर्वस्य 'भूमनः' भूतजातस्य 'पतिः' पालयिता 'सोमः' 'उभे' 'रोदसी' द्यावापृथिव्यौ 'व्यख्यत्' स्वतेजसा प्रकाशयति। अनेन लोकद्वयपतित्वं सूचितम्॥ २॥

२ ३ १ १ २ १ २ ३ १ २ ३ १ २
सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।
३ १ २ ३१ २ ३ १ २
पवित्रवन्तो अक्षरं देवान् गच्छन्तु वो मदाः ॥ ३ ॥

अथ तृतीया। ययातिर्नाहुष ऋषिः। 'मधुमत्तमाः' अतिशयेन माधुर्य्योपेताः अतएव 'मन्दिनः' मदकराः 'सुतासः' अभिषुताः सोमाः 'पवित्रवन्तः' पवित्रे वर्त्तमानाः सन्तः 'इन्द्राय' इन्द्रार्थम् 'अक्षरन्' पात्रेषु क्षरन्ति। अथ प्रत्यक्षस्तुतिः। 'वः' युष्माकं 'मदाः' मदहेतवो रसाः 'देवान्' इन्द्रादीन् 'गच्छन्तु' ॥ ३ ॥

१ २ २ १ २ ३ १ २ ३ १ २
सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।
१ २ ३ १ २ ३ १ २ ३क २र ३ १ २
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥ ४ ॥

अथ चतुर्थी। मनुः सावर्ण ऋषिः। 'गातुवित्तमाः' अतिशयेन मार्गस्य लम्भकाः 'इन्दवः' दीप्ताः सोमाः 'पवन्ते' अस्मभ्य मदर्थं 'क्षरन्ति' आगच्छन्ति वा। कीदृशाः? 'मित्राः' देवानां सखिभूताः 'स्वानाः' अभिषूयमाणाः 'अरेपसः' पापरहिताः अतएव 'स्वाध्यः' शोभनध्यानाः 'स्वर्विदः' सर्वज्ञाः।

"स्वानाः" "सुवानाः" इति पाठौ ॥ ४ ॥

२ १ १ २ १ २ ३ १ २ ३ १ २
अभी नो वाजसातमꣳ रयिमर्ष शतस्पृहम् ।
१ २ ३ १ २ ३ १ २ ३ १ २
इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् ॥ ५ ॥

अथ पञ्चमी। अम्बरीष ऋजिश्वानौ द्वावृषी। हे "इन्दो!" दीप्यमान सोम! "वाजसातमम्" अत्यन्त बलप्रदमन्नप्रदं वा धनं पुव "नः" अस्माकम् "अभ्यर्ष" अभिगमय। कीदृशम्? "शतस्पृह" बहुभिः स्पृहणीयम्। "सहस्रभर्णसं" बहुविधभरणम् अनेकपोषणयुक्तमित्यर्थः। "तुविद्युम्नं" द्युम्नं द्योततेर्यशो वान्नं वेति यास्कः बह्वन्नं बहुयशोयुक्तं वा। "विभासहं" महतः प्रकाशस्याभिभवितारम् अतितेजस्विनमित्यर्थः।

"शतस्पृह" "पुरुस्पृहम्" इति, "विभासहं" "विभ्वासहम्" इति च साम्न ऋचः पाठः ॥ ५ ॥

२ १ १ २ १ २ २ १ २२ ३ १ २
अभी नवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम्।
१ २उ १ १ २ २ १ २ २ १ २
वत्सं न पूर्व आयुनि जातꣳ रिहन्ति मातरः॥६॥

अथ षष्ठी। ऋभसूनू काश्यपौ द्वयोः। यथा 'मातरः' गावः 'पूर्वे' प्रथमे 'आयुनि' वयसि 'जातं' वत्सं 'रिहन्ति' लिहन्ति तथा 'अद्रुहः' अद्रोग्धाः वसतीवर्याख्या आपः इन्द्रस्य 'प्रियं' काम्यं सर्वैः काम्यमानं सोमम् 'अभि नवन्ते' अभिगच्छन्ति ॥ ६ ॥

१ २ २ १ २ १ २ १ १ २ १ १ २
आ हर्य्यताय धृष्णवे धनुष्टन्वन्ति पौꣳस्यम्।
१ २उ २ १ २ १ १ २ ३१ २२ १ १ १
शुक्रा वि यन्त्यसुराय निर्णिजे विपामग्रे महीयुवः॥७

अथ सप्तमी। छं० द्वयोः। 'हर्य्यताय' सर्वैः स्पृहणीयाय 'धृष्णवे' शत्रूणां धर्षणशीलाय सोमाय 'पौंस्यं' पुंस्त्वस्याभि-

व्यञ्जकं वरं 'धनुरातन्वन्ति' धनुषि ज्यां कुर्वन्तीति। सोमस्य धाराविसर्गार्थं वितायमानं पवित्रमभिधीयते। तदेव विवृणोति 'विपा' मेधाविना 'अग्रे' पुरस्तात् 'मंहीयुवः' पूजाकामा अध्वर्यवः 'शुभ्रा' शुक्लवर्णानि श्रोपयांसि 'असुराय' बलवते 'निर्णिजे' स्वरूपाय शोधनार्थं 'वयन्ति' आच्छादयन्ती-त्यर्थः।

"शुभ्रा वियन्त्यसुराय निर्णिजे" शुभ्रायन्त्यसुराय निर्णिजम्", इति साम्न ऋचः पाठौ ॥ ७ ॥

२ ३ १ २ ३ १ ३२ ३ १ २ ३ १ २
परि त्यꣳ हर्य्यतꣳ हरिं बभ्रुं पुनन्ति वारेण ।
१ ३ २उ ३ २उ ३ १ २ ३ १ ३२
यो देवान् विश्वाꣳ इत्परि मदेन सह गच्छति ॥८

अथ अष्टमी। ऋजिश्वाम्बरीयावृषी। 'हर्य्यत.' सर्वैः स्पृहणीयं हरिं हरितवर्णं 'बभ्रुं' बभ्रुवर्णं च 'त्यं' तं सोमं 'वारेण' वालेन पवित्रेण 'परि पुनन्ति' परिशोधयन्ति। 'यः' सोमः 'विश्वान्' सर्वानिन्द्रादीन् देवानित्' देवानेव 'मदेन' मदकरेण रसेन सह 'परि गच्छति' इति ॥ ८ ॥

१ २ ३ १ ३२ ३ २ ३ १ २ ३ १ ३२
प्र सुन्वानायान्धसो मर्त्तो न वष्ट तद्वचः ।
२ ३ १ २ ३ १ २ ३ २ ३ १ ३२
अप श्वानमराधसꣳ हता मखं न भृगवः ॥ ९ ॥

अथ पञ्चमपाठकस्य द्वितीयार्द्धे प्रथमं दशति।

---

अथ नवमी । प्रजापतिर्ऋषिः । 'सुन्वानाय' अभिषूयमाणाय षष्ठ्यर्थे चतुर्थी । अभिषूयमाणस्य 'अन्धसः' सोमस्य 'तत्' प्रसिद्ध' 'वचः' वचनं योऽयं 'मर्त्तो न' मर्त्य इव कामविघ्नकारी 'तवष्टन' कामयतां न शृणोत्विति यावत् । तथा हे स्तोतारः । 'अराधस' साधककर्मरहितम् । 'श्वानम्' 'अपहत' । तत्र दृष्टान्तः, 'मख न' यथा पुरा अराधसं मखम् एतन्नामानं भृगवोऽपहतवन्तः तथा अपहतेत्यर्थः ।

"सुन्वानाय" "सुन्वानस्य" इति, "वष्ट" "इते" इति च साम्न ऋचः पाठौ ॥ ८ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य चतुर्थः खण्डः ।

इत्यानुष्टुभम् ।

---

जगत्योऽभिप्रियाणीति मुख्या द्वादश सम्मताः ।
आद्यास्तिस्र ऋचो दृष्टाः कवि नाम्ना महर्षिणा ।
उत्तरा विप्रकीर्णत्वाद्दृष्टारो ऋषयः पृथक् ॥

अथ पञ्चमप्रपाठकस्य द्वितीयार्द्धे द्वितीय दशतिः ।

१ २ ३ १ २ ३ १ २ ३
अभि प्रियाणि पवते चनोहितो

१ २ ३ २उ ३ २ ३ १ २
नामानि यह्वो अधि येषु वर्द्धते ।

१ ३२ ३ २ ३ २उ ३
आ सूर्य्यस्य बृहतो बृहन्नधि

१२ ३ २ ३ १ २
रथं विष्वञ्चमरुहद्विचक्षणः ॥ १ ॥

अथ नवमे खण्डे—सैषा प्रथमा। ऋ० कविः। छ० जगती। 'चनोहितः' चन इत्यन्ननाम चायतेरसुनि चन इत्योणादिकसूत्रेण निपातितः चनसेऽन्नाय हितः। यद्वा, हितान्नः सोमः 'प्रियाणि' जगतः प्रीणयितॄणि नामानि नमनशीलानि तान्युदकानि 'अभिपवते' अभितः चरणं करोति। 'येषु' अन्तरिक्षस्थितेषु उदकेषु 'यह्वः' महानयं सोमः 'अधिवर्द्धते' अधिकं प्रवृद्धो भवति। अपां मध्ये सोमो वसति खलु। ततः 'बृहन्' महान् सोमः 'बृहतः' महतः परिवृढस्य 'सूर्यस्य' विष्वञ्च' विष्वग्गमनं रथम् 'अधि' उपरि 'विचक्षणः' विश्वस्य द्रष्टा सन् 'आरुहत्' आरोहति। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते (म० ३,७६)' इति ॥ १ ॥

३ १२ ३ १ २३ २
अचोदसो नो धन्वन्त्विन्दवः प्र

३ १ २ २ ३ २ ३ १ २
स्वानासो बृहद्देवेषु हरयः।

१ २ ३ २ ३ १ ३ १ २ ३
वि चिदश्नाना इषयो अरातयो-

१ २ ३ १ २ ३ १ २
ऽर्यो नः सन्तु सनिषन्तु नो धियः ॥ २ ॥

अथ द्वितीया। 'अचोदसः' अचोदनाः अनन्यप्रेरिताः 'इन्दवः' सोमाः 'नः' अस्माकं 'प्रधन्वन्तु' प्रयच्छन्तु धन्वतिर्गतिकर्मा। कुत्र? 'बृहद्देवेषु हरयः' प्रभूतदेवयुक्तेषु यज्ञेषु यद्वा वा बृहद् वकुलजेषु मध्ये ते इति सम्बन्धः कीदृशा इन्दवः? 'स्वनासः' सूयमानाः 'हरयः' हरितवर्णाः। किञ्च, 'अरातयः' धनादिदानरहिताः 'नः' अस्माकम् 'अर्य्यः' अरयः 'इषयः'

द्वयोऽस्मानि द्वच्छन्तः 'अप्नाना'। अग्नेन भोजनेन वियुक्त एव सन्तु। किञ्च, नोऽस्माकं 'धिया' कर्माणि देवविषयाणि स्तोत्राणि 'सनिषन्तु' देवान् सम्भजन्तु।

"देवेषु" "दिवेषु" इति पाठौ। "विचिदश्नाना इषयो अरातयोर्या न. सन्तु सनिषन्तु नः धिया" इति छन्दोगाः। "विचिनशन्न इषो अरातयोर्यो न. सन्तु सनिषन्तो धिया" इति बह्वृचाः ॥ २ ॥

१ २उ २ १ २ २
एष प्र कोशे मधुमाꣳ अचिक्रद-
१ २ १ २ १ १२१ १ २
दिन्द्रस्य वज्रो वपुषो वपुष्टमः।
१ १ १२ ३१२ ३१९
अभ्यृ३तस्य सुदुघा घृतश्चुतो
२ १ १ ३ १ १ ३१२
वाश्रा अर्षन्ति पयसा च धेनवः ॥ ३ ॥

अथ तृतीया। 'एष' अयं सोमः 'मधुमान्' मधुररसः 'कोशे' द्रोणकलशे 'प्राचिक्रदत्' प्रकर्षेण शब्दायते। कीदृश एषः 'इन्द्रस्य' 'वज्र.' वज्रस्थानीयः बलकारत्वेन वज्रवत् प्रहरणसाधनत्वाद्व वज्रत्वोपचार.। 'एष.', एव हि सोमः 'वपुष.' वीजानां वप्तुरन्यस्मात् 'वपुष्टम' अतिशयेन वप्ता। वीजावापस्य सोमकर्त्तृकत्वात् सोमो वै रेतोधा इति श्रुतेः। 'ऋतस्य' सत्यफलस्य सोमस्य धारा इति शेषः। तां 'अभ्य-र्षन्ति' अभिगच्छन्ति। कीदृश्य.? 'सुदुघ.' सुष्ठु दोग्ध्र्यः फलानाम्। 'घृतश्चुतः उदकस्य रसस्य वा चारयित्र्यः 'वाश्रा.' शब्दयन्त्यः। पयसा युक्ता वाश्रा धेनव. इव लुप्तोपममेतत्।

"वपुष्टमः" "वपुष्टरः" इति, "अम्यृतस्य" "अमीमृतस्य" इति, "पयसा च धेनवः" "पयसेन धेनवः" इति च छन्दोग-बह्वृचानां पाठः ॥ ३ ॥

१ २ ३ २ ३ १ २ ३ २उ
प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतꣳ
३ २ ३ १ ३र २ ३ १ २
सखा सख्युर्न प्र मिनाति सङ्गिरम् ।
१ २ ३ २ ३ १ २ ३
मर्य्य इव युवतिभिः समर्षति
१ २ ३ १ २ ३ १ २ ३ २
सोमः कलशे शतयामना पथा ॥ ४ ॥

अथ चतुर्थी । कविगण ऋषिः । 'इन्दुः' सोमः 'इन्द्रस्य' "निष्कृत" संस्कृतं स्थानमुदरं 'प्रो अयासीत्' प्रकर्षेणैव गच्छति । गत्वा च 'सखा' सखिभूतः सोमः 'सख्युः' इन्द्रस्य 'सङ्गिर' सम्यक्गिरणाधारभूतमुदरं 'न प्रमिनाति' न हिनस्ति । किञ्च । सः 'मर्य्य इव' 'युवतिभिः' मर्त्यो यथा तरुणीभिः सह सङ्गतो भवति तद्वत् अयमपि सोमो युवतिभिर्मिश्रणशीलाभिर्वसतीवरीभिरद्भिः सह 'समर्षति' सङ्गच्छते अभिषवकाले । स च सोमः 'शतयामना' शतयाम्ना अनेकया मनसाधनच्छिद्रोपेतेन 'पथा' मार्गेण दशापवित्रसम्बन्धिना 'कलशे' द्रोणकलशे गच्छतीति शेषः । यद्वैकमेव वाक्यम् । यथा मर्यो युवतिभिः सह सङ्गच्छते एवं कलशो शतयाम्ना पथा सङ्गच्छतेऽद्भिः ।

"शतयामना" "शतयाम्ना" इति पाठौ ॥ ४ ॥

३ २ ३.१ २ ३ २ ३ ३ ३
धर्त्ता दिवः पवते कृत्व्यो रसो

१ २ ३१ २ ३ २ ३ १ २
दक्षो देवानामनुमाद्यो नृभिः।

१२ ३ २उ ३ १ २र २
हरिः सृजानो अत्यो न सत्वभि-

३ १ १ २ ३ २
र्वृथा पाजाꣳसि कृणुते नदीष्वा॥ ५॥

अथ पञ्चमी। कविर्ऋषिः। 'धर्त्ता' सर्वस्य धारकः सोमः 'दिवः' अन्तरिक्षात् अन्तरिक्षस्थिताद्दशापवित्रात् 'पवते' पूयते। कीदृशः सोमः 'कृत्व्यः' कर्त्तव्यः शोध्य इत्यर्थः। 'रसः' रसात्मकः। 'देवानां' 'दक्षः' बलप्रदः। यद्वा। दक्षः प्रवर्द्धनीयो देवानामर्थाय। तथा 'नृभिः' नेतृभिरृत्विग्भिः 'अनुमाद्यः' अनुमादनीयः स्तुत्यो वा। 'हरिः' हरितवर्णः। 'सत्वभिः' प्राणिभिः अस्मदादिभिः 'सृजानः' सृज्यमानः 'अत्यो न' अश्व इव स यथा अश्मोत्यनायासेन गच्छति तद्वत्। 'वृथा' अप्रयत्नेन 'पाजांसि' बलानि स्त्रीयान् वेगान् 'कृणुते' कुरुते 'नदीषु' वसतीवरीषु ताभिः सिक्त इत्यर्थः। अयमभिषवसमयाभिप्रायः॥ ५॥

१ २ ३ १ २ ३ २उ
वृषा मतीनां पवते विचक्षणः

३ १ २ ३ १ २र ३ २
सोमो अह्नां प्रतरीतोषसां दिवः।

३ १ २र ३ १ २ ३
प्राणा सिन्धूनां कलशाꣳ अचिक्रद-

१ २ ३ । २ ३१ २ ३ १ २,
दिन्द्रस्य हार्द्याविशन्मनीषिभिः ॥ ६ ॥

अथ षष्ठी। कविर्ऋषिः। अयं 'सोम.' 'पवते' अभिपूयते। कीदृशः सोमः? 'मतीना' मतयः स्तोतारस्तेषां 'वृषा' वर्षकः कामानाम्। 'विचक्षण.' विद्रष्टा 'अह्नाम्' उषसां 'दिव.' द्युलोकस्यादित्यस्य वा 'प्रतरीता' प्रवर्द्धयिता। किञ्च। 'सिन्धूनां' स्यन्दमानानामुदकाना 'प्राणा' प्रकर्षेण अनिति चेष्टते इति प्राणा कर्त्ता सोमः 'कलशान्' 'अचिक्रदत्' धारया अध्वनयत् प्रवेष्टुम्। यद्वा। 'सिन्धूनां' तृतीयार्थे षष्ठी सिन्धुभिरद्भिः 'प्राणा' प्रा पूरणे (अ० प०) पूर्णः 'सोमः' कलशान् 'अभि' लक्ष्य क्रन्दते। किं कुर्वन्? इन्द्रस्य 'हार्दि' हृदयम् 'आविशन्' प्रविशन् 'मनीषिभि.' मनस ईशित्रीभिः स्तुतिभि' सहेति शेषः यद्वा। व्यवहितमपि मनीषिभिरित्येतत् पवत इत्यनेन सम्बध्यते।

"प्राणा" इति, "क्राणा" इति, "अचिक्रदत्" "आवीविशत्" इति पाठौ ॥ ६ ॥

१ २ ३ २ ३ १ २
विरस्मै सप्त धेनवो दुदुह्रिरे
३ २ ३ १ २ ३ १ २
सत्यामाशिरं परमे व्योमनि।
२ ३ २ १ ३२ ३ २ ३
चत्वार्य्यन्या भुवनानि निर्णिजे
१ २ ३ २ ३ १ ३२
चारूणि चक्रे यदृतैरवर्द्धत ॥ ७ ॥

अथ सप्तमी। रेणुर्ऋषिः। 'अस्मै' पवमानाय 'परमे'

उत्कृष्टे 'व्योमनि' विविधम् ओम अवनं गमनं देवाना-मत्रेति व्योमा यज्ञः तस्मिन् स्थिताय ।। यद्वा । परमे व्योम-न्यन्तरिक्षे वर्त्तमानाय 'त्रिः सप्त' एकविंशतिसङ्ख्याकाः 'धेनवः' प्रीणयित्र्यो गावः 'सत्याम्' यथार्थभूतम् 'आशिरम्' आश्रयणसाधनं क्षीरादि 'दुदुह्रिरे' दुहन्ति यद्वा । त्रिःसप्त द्वादशमासाः पञ्चर्त्तवः त्रय इमे लोकाः असावादित्य एक-विंश इति । एतैः सर्वैः सह गोषु पय उत्पाद्यते तस्मात्ते दुहन्तीति । किञ्च । यत् सोमः 'अन्या' अन्यानि चत्वारि 'भुवना' उदकानि वसतीवरीसंज्ञकानि अथवा इति तानि चतुःसङ्ख्यानि 'चारूणि' कल्याणानि 'निर्णिजे' निर्णेजनाय परिशोधनाय परिपोषणाय वा 'चक्रे' तदा करोति । 'यत्' यदा अयम् 'ऋतैः' यज्ञैः 'अवर्द्धत' वर्द्धितवान् तदा करोति ।

"दुदुह्रिरे" "दुदुह्रे" इति, 'परमे' 'पूर्व्वे' इति च पाठौ ॥ ७ ॥

१ २   २ १२ ३ १ २ ३ १
इन्द्राय सोम सुषुतः परि स्रवा-
२९   ३ १ २   ३ २
पामीवा भवतु रक्षसा सह ।
२ ३ १ २   ३ २ ३
मा ते रसस्य मत्सत द्वयाविनो
१ २  - ३ २ ३ १ २
द्रविणस्वन्त इह सन्त्विन्दवः ॥ ८ ॥

अथ अष्टमी । वेनोभार्गव ऋषिः । हे 'सोम!' त्वं 'सु षुतः' सन् 'इन्द्राय' तदर्थं 'परिस्रव' परितो गच्छ रसं मुञ्च । 'अमीवा' रोगः 'रक्षसा सह' 'मा ते रसस्य मत्सत द्वयाविनो

द्रविणस्वन्त इह' 'अप भवतु' अपगतो वियुक्तो भवतु 'ते' तव 'रसस्य' स्वांशं रसं पीत्वा 'मा मदन्त' मा मद्यन्तु। कः? 'द्वयाविनः' द्वयं सत्यानृतं तेन युक्ताः पापिन इत्यर्थः। किञ्च 'इन्दवः' ते रसाः 'इह' अस्मिन् यज्ञे 'द्रविणस्वन्तः' अस्माकं धनवन्तः 'सन्तु' भवन्तु॥ ८॥

१ ३ २ १ २ ३ १२ ३ १२
असावि सोमो अरुषो वृषा हरी
१ २ २ ३ २ ३ १ ३२
राजेव दस्मो अभि गा अचिक्रदत्।
२ ३१ ३ १ २ ३ १ २ ३ १
पुनानो वारमत्येष्यव्ययꣳ श्येनो
३२ ३ १२३१ २
न योनिं घृतवन्तमासदत्॥ ९॥

अथ नवमी। भरद्वाजो वसुर्ऋषिः। 'सोमः' 'असावि' अभिषुतोऽभूत्। कीदृशः सोमः? 'अरुषः' अरोचमानः 'वृषा' वर्षकः 'हरिः' हरितवर्णः। स च 'राजेव' 'दस्मः' दर्शनीयः सन् 'गाः' उदकानि 'अभि' लक्ष्य 'अचिक्रदत्' शब्दङ्करोति क्षरणनिर्गमसमये। पश्चात् 'पुनानः' पूयमानः 'अव्ययम्' अविमयं 'वारं' वालं पवित्रम् 'अत्येषि' हे सोम! अतिक्रम्य गच्छसि। ततः 'श्येनो न' श्येन इव 'योनिं' स्वीयं स्थानं 'घृतवन्तम्' उदकवन्तम् 'आसदत्' वसतीवरी-ष्वासीदतीत्यर्थः।

"अत्येषि" "पर्येति" इति, 'आसदत्' 'आसदम्' इति च पाठः॥ ९॥

२ १ २उ २ १२ १ २ ३ १
प्र देवमच्छा मधुमन्त इन्दवो-
२ ३ १ २ ३ २उ ३ १ २
ऽसिष्यन्दत गाव आ न धेनवः
२ १२ ३ १ २ ३ १२
बर्हिषदो वचनावन्त ऊधभिः
३ १ २ ३ १ २ ३ १ २
परिस्रुतमुस्रिया निर्णिजं धिरे ॥ १० ॥

अथ दशमी। वत्सप्रीः ऋषिः। 'मधुमन्तः' मदकररसयुक्ताः 'इन्दवः' सोमाः 'देव' द्योतमानं सोमात्मकम् इन्द्रम् 'अच्छ' प्रति 'प्रासिष्यदन्त' परिस्यन्दन्ते ग्रहादिषु प्रचरन्ति। स्यन्दतेर्ण्यन्तस्य लुङि चङि रूपम् तत्र दृष्टान्तः। 'गाव आ न धेनवः' पयस्विन्यः प्रीणयित्र्यः गावो यथा वत्सं प्रति पयांसि प्रस्रवन्ति तद्वत्। किञ्च। 'बर्हिषदः' बर्हिषि सीदन्त्यः। 'वचनवन्तः' हम्भारवादियुक्ताः उस्रियेति गोनाम तादृश्यो गावः ऊधभिः पयआधारकैः स्वैः स्वैरूधोभिः तेभ्यः 'परिस्रुतम्' परितः स्रवणशील 'निर्णिजं' शुद्ध पयोभूतं सोमरसं 'धिरे' दधिरे इन्द्रार्थं धारयन्ति ॥ १० ॥

३ १ २क २र ३ १ २ ३
अञ्जते व्यञ्जते समञ्जते
१ २ ३ २ ३क २र
क्रतुᳩ रिहन्ति मध्वाभ्यञ्जते।
१ २ ३ १ २१२ ३१२
सिन्धोरुच्छ्वासे पतयन्तमुक्षणᳩ

२ २ ३ २ ३ १ २
हिरण्यपावाः पशुमप्सु गृभ्णते ॥ ११ ॥

अथ एकादशी। अविर्ऋषिः। सोमम् ऋत्विजः 'अञ्जते' गोभिः तथा 'व्यञ्जते' विविधमञ्जति 'समञ्जते' सम्यक् नयति। स्तुत्यर्थत्वादपुनरुक्तिः तथा 'क्रतुं' बलकर्तारं 'रिहन्ति' लिहन्ति आस्वादयन्ति देवाः। तथा पुनः 'मध्वा' मधुना गव्येन अभ्यञ्जते। तमेव सोमं 'सिन्धोः' उदकस्य रसस्याधारभूते 'उच्छ्वासे' उच्छ्रिते देशे 'पतयन्तं' गच्छन्तं पतॢ गतावित्यस्मात् स्वार्थिके णिचि वृद्ध्यभावश्छान्दसः 'उक्षणं' सेक्तारम् 'हिरण्यपावाः' हिरण्येन पुनन्तः 'पशुं' द्रष्टारं पशः पश्यतेरिति निरुक्तम् 'अप्सु' वसतीवरीषु 'गृभ्णते' गृह्णन्ति।

"मध्वा" "मधुना" इति, 'अप्सु' 'आप्सु' इति च पाठः ॥ ११ ॥

३ १ २ ३ १ २
पवित्रं ते विततं ब्रह्मणस्पते
३ १ ३१ ३ २ ३ ३ २ ३
प्रभुर्गात्राणि पर्य्येषि विश्वतः।
१ २ ३ २उ ३ २ ३ २
अतप्ततनूर्न तदामो अश्नुते
२ १ ३ १ ३१ ३ १ २१
शृतास इद्वहन्तः सं तदाशत ॥ १२ ॥

इति प्रथमपाठकस्य द्वितीयार्द्धे द्वितीय दशतिः।

'अथ द्वादशी। पवित्र ऋषिः। हे 'ब्रह्मणस्पते' ! मन्त्रस्य स्वामिन् ! सोम ! 'ते' 'पवित्र' शोभनमङ्गं 'विततं' सर्वत्र विस्तृतम्। स "प्रभुः" प्रभविता त्व "गात्राणि" पातुरङ्गानि "पर्येषि" परि गच्छसि। "विश्वतः" सर्वतः तव तत्पवित्रम् "अतप्ततनूः" पयोव्रतादिना असन्तप्तगात्रः 'आमः' अपरिपक्वः "नाश्नुते" न व्याप्नोति। "शृतासः इत्" शृता एव परिपक्वा एव "वहन्तः" याग निर्वहन्तः तत् पवित्रं "समासत" व्याप्नुवन्ति।

"सन्तदाशत" "तत्समाशत" इति पाठौ ॥ १२ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य नवमः खण्डः ।

---

अथ षष्ठप्रपाठकस्य द्वितीयार्द्धे प्रथम दशतिः ।

२ ३ १ २ १ २ ३ १ २२ ३ १ २

इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः ।

२ २ ३ २ ३ १ २ ३ १ २

श्रुष्टे जातास इन्दवः स्वर्विदः ॥ १ ॥

इन्द्रमच्छेति खण्डेऽस्मिन् ऋचो द्वादश संस्थिताः ।
सकला उष्णिहस्तास वक्ष्यन्ते ऋषयः पृथक् ॥

तत्र प्रथमे खण्डे—सैषा प्रथमा। अग्निश्चाक्षुष ऋषिः। 'श्रुष्टे' श्रुष्टी क्षिप्र 'जातासः' जाताः 'इन्दवः' पात्रेषु क्षरन्तः 'स्वर्विदः' सर्वज्ञाः 'हरयः' हरितवर्णाः 'सुताः' अभिषुताः 'इमे' सोमाः 'वृषणं' कामाना सेक्तारमिन्द्रम् 'अच्छ यन्तु' अभि गच्छन्तु ॥ १ ॥

१ २ २ १ २ ३१ २ २ ३१
प्र धन्वा सोम जागृविरिन्द्रायेन्दो परि स्रव ।
१ २२ २ ३१ २ ३ १ २
द्युमन्तꣳ शुष्ममा भर स्वर्विदम् ॥ २ ॥

अथ द्वितीया । चक्षुर्मानव ऋषिः । हे 'सोम !' 'जागृविः' जागरणशीलस्त्वं 'प्रधन्व' प्रचर । हे 'इन्दो' ! सोम ! 'इन्द्राय' 'परिस्रव' परितः पात्रेषु चर । किञ्च 'द्युमन्तं' दीप्तियुक्तम् । 'स्वर्विदं' सर्वस्य लम्भकं 'शुष्मं' शत्रूणां शोषकं बलम् 'आभर' आहर ॥ २ ॥

१ २ ३ १ ३२ ३ २ ३ १ २
सखाय आ नि षीदत पुनानाय प्र गायत ।
२ ३ १ ३ १ ३२ ३ २
शिशुं न यज्ञैः परि भूषत श्रिये ॥ ३ ॥

अथ तृतीया । पर्वतनारदावृषी । हे 'सखायः' ! सखिभूताः ! 'स्तोतारः' ! ऋत्विजः ! 'आनिषीदत' स्तोतुमुपविशत । अथ 'पुनानाय' पूयमानाय सोमाय 'प्रगायत' प्रकर्षेण गायत तमभिष्टुत ततः अभिषुतं सोमं 'यज्ञैः' यजनीयैः हविर्भिः मिश्रितैः 'श्रिये' शोभार्थं 'परिभूषत' परितोऽलङ्कुरुत । तत्र दृष्टान्तः 'शिशुं न' यथा शिशुं बालं पुत्रं पितरः आभरणैरलङ्कुर्वन्ति तद्वत् ॥ ३ ॥

१ २ २ १२ २ ३१ २ २
तं वः सखायो मदाय पुनानमभि गायत ।
३१ २ ३ १ २ ३ १ २
शिशुं न हव्यैः स्वदयन्त गूर्तिभिः ॥ ४ ॥

अथ चतुर्थी। पर्वतनारदाद्दष्टौ। हे 'सखायः!' ऋत्विजः! 'वः' यूयं 'मदाय' देवानां मदार्थं 'पुनान' पूयमानं 'तं' सोमम् 'अभिगायत' अभिष्टुत। तमिमं सोमं 'शिशुं न' शिशुमिवालङ्कारैः क्षीरादिभियालङ्कुर्वन्ति तद्वत्। 'हव्यैः' हविर्भिर्मिश्रयणैः 'गूर्त्तिभिः' स्तुतिभिश्च 'स्वदयन्त' स्वादूकुरुत।

"हव्यैः" "यज्ञैः" इति पाठौ ॥ ४ ॥

१ १ १२ २ १ २ २ २ २ २ १ १ १
प्राणा शिशुर्महीनाꣳ हिन्वन्नृतस्य दीधितिम्।
१ १ १२ ११ २३१२ ३२
विप्रा परि प्रिया भुवदध द्विता ॥ ५ ॥

अथ पञ्चमी। त्रित ऋषिः। 'प्राणा' यज्ञं कुर्वाणा इत्यर्थः। 'महीनां' महतीनां महनीयानां वा अपां 'शिशुः' शिशुस्थानीयः सोमः 'ऋतस्य' यज्ञस्य 'दीधितिं' दीप्तिमन्तं प्रकाशकं वा स्वीयं रसम् 'हिन्वन्' प्रेरयन्। 'विप्रा' सर्वाणि 'प्रिया' प्रियाणि हवींषि 'परि भुवत्' परिभवति व्याप्नोति। अपि च 'द्विता' द्विधा भवति। दिवि पृथिव्या च वर्त्तत इत्यर्थः।

"प्राणा" "क्राणा" इति पाठः ॥ ५ ॥

१२ ११२ २ २ २ १ २ २ १ १
पवस्व देववीतय इन्दो धाराभिरोजसा।
२ ३२ ३ १२
आ कलशं मधुमांत्सोम नः सदः ॥ ६ ॥

अथ षष्ठी। मनुर्ऋषिः। हे 'इन्दो'! सोम! 'देववीतये' देवानां भक्षणाय 'ओजसा' बलेन 'धाराभिः' आत्मीयाभिः

'पवस्व' चर। हे 'सोम'! 'मधुमान्' मदकररसवांस्त्वं 'नः' अस्मदीयं 'कलशं' द्रोणाख्यम् 'आसद' आसीद। सदेर्लेङ्‌रूपम् ॥ ६ ॥

१ २ १ २ ३ २उ ३ २ ३ १ २
सोमः पुनान ऊर्मिणाव्यं वारं वि धावति।
१ २ ३ १ २र ३ १ २
अग्रे वाचः पवमानः कनिक्रदत् ॥ ७ ॥

अथ सप्तमी। अग्निऋषिः। 'पुनानः' पूयमानः 'सोमः' 'ऊर्मिणा' स्त्रीयया धारया 'अव्यम्' अविभवं 'वारं' वाल पवित्रं 'विधावति' विविध गच्छति। कीदृशः? 'पवमानः' पूतः 'वाचः' स्तोत्रस्य 'अग्रे' 'कनिक्रदत्' पुनः पुनः शब्दं कुर्वन् विधावति।

"अव्यम्" "अव्यः" इति साम्न ऋचः पाठः ॥ ७ ॥

१ २३ १ २ ३१२ ३ १ २ ३ १ २
प्र पुनानाय वेधसे सोमाय वच उच्यते।
३ १ २र १ १ २ ३ १ २
भृतिं न भरा मतिभिर्जुजोषते ॥ ८ ॥

अथ अष्टमी। हितो नाम ऋषिः स्वात्मानं प्रत्याह। 'पुनानाय' पवित्रेण पूयमानाय 'वेधसे' कर्मणो विधात्रे सोमाय 'वचः' स्तोत्रलक्षण 'प्रोच्यते' त्वया प्रोच्यताम्। किञ्च। 'मतिभिः' स्तुतिभिः 'जुजोषते' प्रीयमाणाय स्तुतिं 'प्रभर' प्रकर्षेण धारय। तत्र दृष्टान्तः। 'भृतिव' यथा भृतकाय भृतिं सम्पादयति तद्वत्।

"वच उच्यते" "वच उद्यते" इति साम्न ऋचः पाठौ। ॥ ८ ॥

१ २ २ १ २ २ १ २
गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव।
१ २ २ २ ३ २ ३ १ २
शुचिं च वर्णमधि गोषु धारय॥ ९॥

अथ नवमी। पर्वतनारदावृषी। हे 'सुदक्ष'! सुबल! हे 'इन्दो'। सोम। 'सुत.' अभिषुतस्त्वं 'नः अस्माकम्' 'गोमत्' यज्ञसाधनगोयुक्त धन 'धनिव' धन्व वर्णविकारः गमय धन्वतिर्गत्यर्थः ततोऽह 'शुचि' पूतन्दीप्यमान 'वर्णं' रसञ्च 'गोषु' चीरादिषु अधिधारय अधिक प्रापयामि।

"धनिव" "धन्व" इति, "धारय" "दोधरम्" इति च छन्दोगबह्वृचाना पाठभेदाः॥ ९॥

२ १ २ २ १ २ ३ १ २र
अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत।
१ २३ १ २ ३ १ २
गोभिष्टे वर्णमभि वासयामसि॥ १०॥

अथ दशमी। पर्वतनारदावृषी। हे सोम। 'वसुविद' धनस्य दातार 'त्वा' त्वाम् 'अस्मभ्यं' धनादिदानार्थं 'वाणी.' अस्मदीया वाच. 'अभ्यनूषत' अभिष्टुवन्ति नु स्तवने (अदा०प०) अथ 'ते' तव 'वर्णम्' आवरक रस 'गोभिः' गोविकारैः चीरादिभिः 'अभिवासयामसि' अभिवासयामः अभित आच्छादयामः॥ १०॥

१ २ २ २उ ३ २ ३ १ २ २ १ २
पवते हर्य्यतो हरिरति ह्वराᳪसि रᳪह्या।
३क२र २ १ २ ३ २३ १ २
अभ्यर्षं स्तोतृभ्यो वीरवद्यशः॥ ११॥

अथ एकादशी। अग्निश्चाक्षुष ऋषिः। 'हर्यतः' स्पृहणीयः 'हरिः' हरितवर्णः सोमः 'रंह्या' वृतीयाया आकारः साधु वेगेन 'ह्वरांसि' कुटिलानि अनृजूनि पवित्राणि 'अति पवते' अतीत्य गच्छति। अथ प्रत्यक्षस्तुतिः हे सोम! त्वं 'स्तोतृभ्यः' 'वीरवत्' पुत्रयुक्तं 'यशः' 'अभ्यर्ष' अभिगमय प्रयच्छेत्यर्थः।

"अभ्यर्ष" "अभ्यर्षन्" इति साम्न ऋचः पाठौ॥ ११॥

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
परि कोशं मधुश्चुतꣳ सोमः पुनानो अर्षति।
३ २उ ३ १ २ ३ १ २
अभि वाणीर्ऋषीणाꣳ सप्ता नूषत॥ १२॥

इति पञ्चमप्रपाठकस्य द्वितीयार्द्धे तृतीय दशतिः।

---

अथ द्वादशी। त्रित ऋषिः। सः 'पुनानः' पूयमानः सोमः 'मधुश्चुतं' मधुररसस्य च्यावयितारं द्रोणकलशं प्रति आलोयं रसं 'पर्यर्षति' परि गमयति। तमिमं सोमम् 'ऋषीणां' 'सप्तवाणीः' सप्तच्छन्दांसि 'अभ्यनूषत' अभिष्टुवन्ति नू स्तवने कुटादिः (प०)।

"सोमः पुनानो अर्षति" "अव्यये वारे अर्षति" इति साम्न ऋचः पाठौ॥ १२॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य दशमः खण्डः।

इत्योपिग्रहम्॥

---

स्तुः पवस्वेति खण्डेऽस्मिन्नृचोऽष्टौ ककुभोऽत्र तु।
"ससुन्वे" इति गायत्री यवमध्येति केचन।
श्रध्वर्य्यूहनादेषा ककुवेवेति केचन।
'एष,,धारयासुतः' प्रगाथः काकुभोऽन्तिमः।
ऋषीणां विप्रकीर्णत्वात् तत्र तत्राभिदध्महे॥

-१२१ १२ १ ११२ ११२१
पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो

१२ १२ ३१२३ ३१
मदः। महि द्युक्षतमो मदः॥ १॥

तत्र एकादशे खण्डे—सैषा प्रथमा। गौरिवीतिः ऋषिः। छ० ककुप्। हे 'सोम!' 'मधुमत्तमः' अतिशयेन माधुर्योपेतस्त्वम् 'इन्द्राय' इन्द्रार्थं 'मदः' मदकरः सन् 'पवस्व' चर। कीदृशः? 'क्रतुवित्तमः' अत्यन्त प्रज्ञायाः कर्मणो वा लम्भकः 'महि' 'महान्' मंहनीयो वा 'द्युक्षतमः' अत्यन्तदीप्तः 'मदः' हृष्टः ॥ १॥

१ २ १ १ २२३ १ १२ २ १२
अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव

१२ १ १२ २ १ १
देवयुम्। वि कोशं मध्यमं युव॥ २॥

अथ द्वितीया। ऊर्ध्वसद्मा ऋषिः। हे 'इषस्पते'! अन्नस्य पते! हे 'देव' स्तोतव्य सोम। 'देवकाम' त्वां वय मभिष्टुम इति शेषः। किञ्च। त्वं 'द्युम्नं' द्योतमान 'बृहत्' प्रभूतं 'यशः' अन्नम् अस्मभ्यम् 'अभिदीदिहि' आभिमुख्येन प्रकाशय प्रयच्छेत्यर्थः आमन्त्रितस्याविद्यमानत्वेन पादादित्वान्न निघातः

किञ्च 'मध्यमम्' अन्तरिक्षस्थितं 'कोशं' मेघं 'वि युव' हृध्वर्यं गमय विश्लेषय।

"देवयुम्" "देवयुः" इति पाठौ ॥ २ ॥

१ २ ३ १ २ ३ २ ३ १ ३१२३१२
आ सोता परि षिञ्चताश्वं न स्तोममप्तुरꣳ

३ १२ ३ १ २३१२
रजस्तुरम्। वनप्रक्षमुदप्रुतम् ॥ ३ ॥

अथ तृतीया। ऋजिश्वा ऋषिः। हे ऋत्विजः! 'आ सोत' सोम मभिषुत षुञ् अभिषवे (स्वा०उ०) लोटि छान्दसो विकरणस्य लुक् 'तप्तनप्तनथनाश्च (पा०७,१,४५)' इति तस्य तबादेशः। किं च। 'परि षिञ्चत' परितः वसतीवर्यादिभिः सिञ्चत। कीदृशम्? 'अश्वं न' अश्व मिव वेगिनम्। 'स्तोमं' स्तोतव्यम् 'अप्तुरम्' अन्तरिक्षस्थितानामुदकानां प्रेरकं 'रजस्तुरं' तेजसां वा प्रेरकम्। 'वनप्रक्षम्' उदकैः सम्पृतम्। यद्वा। काष्ठेषु पात्रेषु धारकं प्रकीर्णम् 'उदप्रुतम्' उदकं गच्छन्तं प्लवमानं सोम मभिषुत अभिषिञ्चत।

"वनप्रक्षं" "वनक्रक्षम्" इति साम्न ऋचः पाठौ ॥ ३ ॥

१२३ १ २३१२ ३१२ ३१ ३
एतमु त्यं मदच्युतꣳ सहस्रधारं वृषभं दिवो-

१२ २३ १२३ १२
दुहम्। विश्वा वसूनि बिभ्रतम् ॥ ४ ॥

अथ चतुर्थी। शतयज्ञा ऋषिः। 'दिवः' देवान् कामयमाना ऋत्विजः। 'एतं' 'त्यमु' सोममेव 'दुहम्' अदुहन् दुहेर्लङि रूपम् दुहन्ति वा छान्दसो नकारस्य मकारः। 'ग्रावाणो वत्सा ऋत्विजो दुहन्तीति' तैत्तिरीयक ब्राह्मणम्

कीदृशं सोमम्? 'मदच्युतं' मदस्य प्रेरकं 'सहस्रधारं' बहुधारम् 'वृषभं' कामानां वर्षकं 'विश्वा' सर्वाणि 'वसूनि' धनानि 'बिभ्रतं' धारयन्तम्।

"दिवोदुहम्" इति, "दिवं दुहुम्" इति पाठौ ॥ ४॥

१ २ ३ १   २र ३ २ ३ १ २ ३ १   २र
स सुन्वे यो वसूनां यो रायामानेता य इडानाम्।

२ ३ १ २ ३ २
सोमो यः सुक्षितीनाम् ॥ ५ ॥

अथ पञ्चमी। ऋषिः। छं० गायत्री। 'यः' 'सः' 'सोमः' 'सुन्वे' अभिषुषुवे ऋत्विग्भिः। यः सोमः 'वसूनां' धनानां 'आनेता' यश्च 'रायां' रान्ति प्रयच्छन्ति चौरादिकमिति रायो गावस्तेषां आनेता विद्यते यश्च सोमः सुक्षितीनां शोभनमनुष्याणां आनेता सोऽभिषुतोऽभूदिति ॥ ५ ॥

२   १ २ ३ १ २   ३ १ २   ३ १ २
त्वꣳ ह्याऽङ्ग दैव्य पवमान जनिमानि द्युमत्तमः।

२ १ २ ३ १ २
अमृतत्वाय घोषयन् ॥ ६ ॥

अथ षष्ठी। शक्तिः ऋषिः। छं० ककुप्। हे 'पवमान'! पूयमान! सोम! 'द्युमत्तमः' अतिशयेन दीप्तिमान् 'त्वं हि' त्वमेव 'दैव्य' देवसम्बन्धीनि 'जनिमानि' जन्मानि देवानित्यर्थः। जानासीति शेषः। तानभि लक्ष्य 'अमृतत्वाय' तेषाम् अमरणाय 'अङ्ग' क्षिप्रं 'घोषयन्' ऋत्विजो ग्रावाणोव शब्दमुदपादयन् उत्पादयन्ति हि योगादर्शनिपातः।

"घोषयन्" "घोषः" इति पाठौ ॥ ६ ॥

२१ २र ३२ ३ १ २ २ १
एष स्य धारया सुतोऽव्या वारेभिः पवते मन्दि-
२ १ २ ३ २३१ २
तमः। क्रीड़न्नूर्मिरपामिव ॥ ७ ॥

अथ सप्तमी। उक्त ऋषिः। 'स्यः' सः 'एषः' 'सुतः' अभिषुतः सोमः 'अव्या वारेभिः' अवेर्वालैः कृते पवित्रे 'धारया' आत्मीयया 'पवते' कलश मभिलक्ष्य चरति। कीदृशः? 'मदिन्तमः' मादयितृतमः। 'अपामिव' उदकानाम् 'ऊर्मिः' सङ्घात इव 'क्रीड़न्' इतस्ततः सञ्चीडमानः पवते।

"अव्यावारेभि." "अव्योवारेभिः" इति साम्न ऋचः पाठभेदः ॥ ७ ॥

२ ३ २ ३ २ ३ २ ३१
य उस्रिया अपि या अन्तर-
३र २ १ ३र ३ १ २
श्मनि निर्गा अकृन्तदोजसा।
३ २ ३ १ २ ३ २ ३
अभि व्रजं तत्निषे गव्य-
१ २ ३ १ २ ३ १ २
मश्व्यं वर्मीव धृष्णवा रुज।
१ ३ १ २ ३ १ २
ओ३म् वर्मीव धृष्णवा रुज ॥ ८ ॥

अथ अष्टमी। ऋजिश्वा ऋषिः। छ० जगती। 'यः' सोमः 'उस्रियाः' उत्सरणशीलाः 'अपियाः' अप्याः अप इत्यन्तरिक्षनाम (नै०१,३,८) अस्माद् 'भवे छन्दसि (पा०

४,४,११० )' इति यत् अन्तरिक्षस्थाः। अङ्गिरःप्रभृतिभिरसुरैः अपहृत्य निहिता 'गाः' आपः 'अश्मनि' मेघे 'अन्तः' मध्ये स्थिता इत्यर्थः। 'ओजसा' बलेन 'निरक्रन्तत्' निरच्छिनत् निरगमयत् अन्तरिक्षाद्वृष्टिं प्रकाशितवानित्यर्थः। स त्वम् असुरैः अपहृतं 'गव्यम्' गोसम्बन्धि 'अश्व्यम्' अश्वेषु भवं 'व्रजं' समूहं 'अभि तत्निषे' अभितो व्याप्नोति तनु विस्तारे छान्दसे लिटि 'तनिपत्योश्छन्दसि ( पा०६,४,९९ )' इत्युपधालोपः। किञ्च। हे 'धृष्णो' शत्रुधर्षणशीलसोम! स त्वं 'वर्मीव' कवचीव 'आतज' असुरान् जहि।

"अपिधा अन्तरश्मनि" "अप्या अन्तरश्मनः" इति छन्दोग-बह्वृचानां पाठभेदः ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्यैकादशः खण्डः ॥ ११ ॥

इति काकुभं समाप्तम् ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ५ ॥

इति श्रीमद्राजाधिराज परमेश्वर-वैदिक मार्ग प्रवर्तक श्रीवीर-बुक्क भूपाल-साम्राज्य धुरन्धरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

सौम्यं पावमानं वा पर्व काण्डं वा समाप्तम्।

इति तृतीयं पर्व ॥

# सामवेदसंहितायाः

द्वितीयोभागः।

---

उत्तरार्च्चिकः।

---

पूज्यपाद-श्रीमत् सायणाचार्य्यविरचितेन माधवीयेन सामवेदार्थप्रकाशनामकेन भाष्येण सहितः

पण्डितकुलपतिना बि, ए, उपाधिधारिणा

## श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतः प्रकाशितश्च।

द्वितीय संस्करणम्।



कलिकातानगर्य्याम्

सिद्धेश्वरयन्त्रे

मुद्रितः।

---

ई १८९२।

# सामवेदसंहितायाः

## उत्तरार्चिकस्य प्रथमप्रपाठके प्रथमार्द्धम् ।

---

अथ भाष्यावतरणिका ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्—
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।
आदिशत् सायणाचार्य्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुः सायणाचार्य्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
छन्दोभिधाभूद् व्याख्याता व्याख्यास्यत्युत्तराभिधाम् ॥५॥
छन्दस्येकैकशोऽधीता ऋचः सामोद्भवाय हि ।
स्तोम निष्पत्तये सूक्तान्युत्तरायामधीयते ॥ ६ ॥

स्तोमशब्देनोत्पत्तिषु सोमयागेषु प्रयुज्यमानास्त्रिवृत्पञ्चदशादयोऽभिधीयन्ते । अतएव तैत्तिरीयकाः प्रश्नोत्तराभ्यामिदमामनन्ति । तदाहुः—"कतमा वाव तानि ज्योतींषि य एतस्य स्तोमा इति ? त्रिवृत्पञ्चदशः सप्तदश एकविंश एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः"—इति । छन्दोगाश्च त्रिवृदादि-स्तोमानां स्वरूपं ब्राह्मण-द्वितीय-तृतीययोरध्याययोः बहुधा समामनन्ति । ते च बहुभिरवान्तररूपोपेताः समा-

म्नाताः स्तोमा नवसङ्ख्याकाः। तेषु पूर्वोक्तास्त्रिवृदादयश्चत्वारः त्रिणवत्रयस्त्रिंशौ त्रिनवसङ्ख्योपेतः स्तोमस्त्रिणव इत्युच्यते। छन्दोमनामका स्तोमास्त्रयः। तेषु चतुर्विंशाख्यस्तोमः प्रथमः। गायत्रीछन्दसा चतुर्विंशत्यक्षरोपेतेन मीयत इति छन्दोमः। चतुस्त्रिंशश्चत्वारिंशाख्यो द्वितीयः। स च त्रिष्टुप्छन्दसा मीयते। अष्टाचत्वारिंशाख्यस्तृतीयः। सोऽपि जगतीच्छन्दसा मीयते। नन्वथ ये ह्याम्नातलक्षणोपेतेभ्यस्त्रिवृदादिभ्योऽष्टादश-नवदशादि नामका बहवः स्तोमा विद्यन्ते। तथाच तैत्तिरीयकाः केषुचिदिष्टकोपधान-मन्त्रेषु देवतावद्रूपेष्टकात्व विवक्षया तान् स्तोमानामनन्ति—"आशुस्त्रिवृद्भान्तः पञ्चदशो व्योम सप्तदशः प्रतूर्त्तिरष्टादशस्तपोनवदशोऽभिवर्त्तः सविंशो वर्च्च एकविंशो वर्चो द्वाविंश सम्भरणस्त्रयोविंशो योनिश्चतुर्विंशो गर्भः पञ्चविंश ओजस्त्रिणवः क्रतुरेकविंशः प्रतिष्ठा त्रयस्त्रिंशो नाकः षट्त्रिंशोऽभिवर्त्तोऽष्टाचत्वारिंश."—इति। एवन्तर्हि सन्त्येव बहूनि स्तोमान्तराणि तेषां लक्षणानि तु ब्राह्मणान्तरानुसारेण सूत्रकारैर्व्युत्पादितानि॥ ते च स्तोमाः सर्वेऽप्याज्यपृष्ठादि स्तोत्रेषूपयुक्ताः "पञ्चदशान्याज्यानि, सप्तदशानि पृष्ठानि"—इत्यादिश्रुतिभ्यः स्तोम विषयाः स्तोत्रविषयास्त्रिष्पादश्च साम-विषयाश्च। सर्वेऽपि विचारा अस्माभिश्छन्दोव्याख्यानावसरवेलायामेव जैमिनीयान्यधिकरणान्युदाहृत्य प्रदर्शिता॥ किं बहुना "एक साम तृचे क्रियते स्तोत्रियम्"—इत्यादि वचनैः स्तोत्रनिष्पादकस्य साम्नस्तृच् प्रमाणादि रूपाणि सूत्रान्याश्रयत्वेनोत्तराख्ये संहिता-ग्रन्थे समाम्नातानि। स च ग्रन्थ एकविंशति सङ्ख्यातैरध्यायैः उपेतः॥

---

१ २　　　　　२ १ २ ३ २ १ २
उपास्मै गायता नरः पवमानायेन्दवे।
२ २ ३ १　　२र
अभि देवाꣳ इयक्षते ॥*१*॥

तत्र, प्रथमाध्यायस्य प्रथमखण्डे, प्रथमसूक्ते तृचे, येयमृक् प्रथमा सैव साम्नायते—ऋषिः असितो देवलो वा। छ० गायत्री। पवमानः सोमः दे०। हे "नरः!" नेतारः! यज्ञस्य, "देवान्" इन्द्रादीन् "अभि इयक्षते" आभिमुख्येन यष्टुमिच्छते "पवमानाय" क्षरते "अस्मै" अभिषूयमाणाय "इन्दवे" सोमाय "उपगायत" उपगानं कुरुत ॥ १ ॥

३ १ २ १ २ २　१　२र
अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः।
२ २ १ २ २　१ २
देवं देवाय देवयु ॥*२*॥

अथ द्वितीया। हे सोम! "ते" तव "देव" देवनशीलं "देवयु" देव कामं रसं "देवाय" देवनशीलायेन्द्राय "मधुना" "पय" गव्येन पयसा "अथर्वाणः" ऋषयः "अभ्यशिश्रयुः" अभ्यशिश्रयन् समस्कुर्वन्नित्यर्थः ॥ २ ॥

१ २　　२ ३उ　३ १　२र ३ १ २र
स नः पवस्व शं गवे शं जनाय शमर्वते।
१　२ ३ १ २
शꣳराजन्नोषधीभ्यः ॥*३*॥ [१]

अथ तृतीया। हे "राजन्" दीप्यमान सोम! "सः" प्रसिद्धस्त्वं "नः" अस्माकं "गवे" "शं" सुखं "पवस्व" क्षर

"जनाय" पुत्राय च "शं" पवस्व "अर्वते" अश्वाय च "शं" पवस्व "ओषधीभ्य" च शं पवस्व ॥ ३ ॥ [१]

१ २ २१ २ २ १ २ २ २
द्दविद्युतत्या रुचा परिष्टोभन्त्या कृपा ।

१ २ २ १ २र
सोमाः शुक्रा गवाशिरः ॥*१*॥

अथ द्वितीयखण्डे—प्रथमा । ऋ० काश्यपः । छ० गायत्री । दे० पवमानः सोमः । "द्दविद्युतत्या रुचा" अतिशयदीप्त्या "परिष्टोभन्त्या" परितः शब्दायमानया "कृपा" धारया च युक्ताः "सोमाः" "गवाशिरः" गवाशिराः भवन्ति गव्येन पयसा मिश्रिता भवन्ति इत्यर्थः ॥ १ ॥

१ २ २ २ २ १ १ २र २क २र
हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत् ।

१ १ २ १ २
सीदन्तो वनुषो यथा ॥*२*॥

अथ द्वितीया । "वाजी" बलवान् सोमः "हेतृभिः" प्रेरकैः स्तोतृभिः "हिन्वानः" स्तोत्रैः अर्यमाणः "हितः" अभीष्टकारी सन् "वाजं" यागाख्यं युद्धम् "आ अक्रमीत्" आक्रामति । तत्र दृष्टान्तः—यथा "वनुषः" हन्तारो भटाः "सीदन्तः" युद्धं प्रविशन्तः आक्रामन्ति तद्वदित्यर्थः ॥ २ ॥

२ १ २ २ १ २ २ २ २ १ २
ऋधक् सोम स्वस्तये सञ्जग्मानो दिवा कवे ।

१ २ १ १ २ २ २
पवस्व सूर्यो दृशे ॥*३*॥ [२]

अथ तृतीया । हे "सोम" ! "कवे !" क्रान्तदर्शिन् !

"सूर्य्यः" सुवीर्य्यः त्वं "ऋधक्" ऋभुवन्। तथाच यास्कः— "ऋधगिति पृथग्भावस्यानुप्रवचनं भवत्यथाप्यृध्नोत्यर्थे दृश्यते (निरु० नै० ४, २५)" इति। "सञ्जग्मानः" सङ्गच्छमानः "स्वस्तये" "दृशे" दर्शनाय "दिवा" दिवः विभक्तिव्यत्ययः॥

"पवस्व"—"चर"—"दिवाकवे"—"दिवाकविः" इति च पाठौ॥ ३॥ [ २ ]

१ २       ३ २ ३   १ २
पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत।

१ २ ३   १ २ ३ १ २
अर्वन्तो न श्रवस्यवः॥*१*॥

तृतीय-तृचे—प्रथमा। ऋ० वैखानसः। छ० गायत्री। दे० पवमानः सोमः।ʼमार्जनप्रसङ्गादाह—हे "कवे"। क्रान्तप्रज्ञ। हे "वाजिन्"! बलवन्। सोम! "पवमानस्य" दशापवित्रेण पूयमानस्य "ते" तव "सर्गाः" सृज्यन्ते इति सर्गा धाराः। कीदृशाः? "श्रवस्यवः" "छन्दसि परेच्छायां क्यच्। (३, १, ८वा०) यशूणा मम कामयमानास्त्वदीया धाराः "असृक्षत" सृजन्ति निर्गच्छन्तीत्यर्थः। तत्र दृष्टान्तः—"अर्वन्तो न" यथा अश्वा मन्दुरातो निर्गच्छन्ति तद्वत् पवित्रात्रि सरन्तीत्यर्थः। प्रयोगापेक्ष यात्र धारा बाहुल्यम्॥ १॥

२ ३   १ २   ३ २ ३ १ २ ३ १ २ ३ १ २
अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये।

१ २    ३ १ २
अवावशन्त धीतयः॥*२*॥

अथ द्वितीया। धारानिर्गमनप्रसङ्गादभिधीयते— "मधुश्चुत" मधुररसस्य च्यावयितारं क्षारयितारं "कोशं"

द्रोणकलशम् "अच्छ" अभिलक्ष्य "अव्यये" अविमये अवि-स्वभूते "वारे" वाले दशापवित्रे "असृग्र" सोमा ऋत्विग्भिर-भिसृज्यन्ते सृजेः कर्मणि लिङा लिङो भवन्तीति टेरमा-देशः। किञ्च। "धीतयः" अङ्गुलि नामैतत् धयन्ति पिबन्त्या-भिरिति। अस्मदीया अङ्गुलयः "अवावशन्त" तान् सोमान् न पुनः पुनर्मार्जनार्थं कामयन्ते ॥ २ ॥

१ २ १ २उ २ ३ ३ १ २ २ ३ १ २
अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः।
१ २ ३ १ २ २ ३ २
अग्मन्नृतस्य योनिमा ॥*३*॥ [३]

अथ तृतीया। "इन्दव" क्षरन्तः सोमाः "समुद्र" सोमा-नामेकत्रैव सङ्गमनस्थानं द्रोणकलशम् "अच्छ" अभि गच्छन्ति। तत्र दृष्टान्तः—"धेनवः" पय प्रदानेन जनानां प्रीणयित्र्यो नवप्रसूतिका गावः "अस्तं" गृहं यथा अभिगच्छ-न्तीति तद्वत्। किञ्च ते सोमाः "ऋतस्य योनिं" सत्य-भूतस्य यज्ञस्य योनि स्थानम् "आ" "अग्मन्" आभिमुख्येन गच्छन्ति। गमेर्लुङि मिचो लुकि उपधालोपः ॥ ३ ॥ [१]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

३ २ ३ २ ३ १२ ३ २ ३ १ २
अग्न आ याहि वीतये गृणानो हव्यदातये।
१ २र ३ २ ३
निहोता सत्सि बर्हिषि ॥*१*॥

द्वितीयखण्डे, प्रथमसूक्ते—प्रथमा। हे "अग्ने" अङ्ग-

नादिगुणविशिष्ट! त्वम् "आयाहि" अस्मद् यज्ञं प्रत्यागच्छ। किमर्थम्? "वीतये" हविषां चरुपुरोडाशादीनां भक्षणाय। कीदृशः सन्? "गृणानः" अस्माभिः स्तूयमानः व्यत्ययेन कर्मणि कर्तृ-प्रत्ययः। पुनश्च किमर्थम्? "हव्यदातये" देवेभ्यो हविःप्रदानाय। आगत्य च "होता" देवानामाह्वाता सन् "बर्हिषि" आस्तीर्णे दर्भे "निषत्सि" निषीद सदेः छान्दसः शपो लुक्॥ १॥

१ २ ३ १ २　　　　३ १ २
तं त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि।

३ १ २
बृहच्छोचा यविष्ठ्य ॥*२*॥

अथ द्वितीया। हे "अङ्गिरः"! अङ्गनादिगुणयुक्त! अङ्गिरसः पुत्र वा अग्ने! "तं" पूर्वोक्तगुणं "त्वा" त्वां "समिद्भिः" समिन्धन-हेतुभिः दारुभिः "घृतेन" आज्येन च "वर्द्धयामसि" वर्द्धयामः। अतो हे "यविष्ठ्य" युवतमाग्ने! "बृहत्" महत् अत्यन्तं "शोच" दीप्यस्व॥ २॥

१ २ ३ २ ३ १ ३ १ २
स नः पृथु श्रवाय्यमच्छा देव विवाससि।

३ १ २　　३ १ २
बृहदग्ने सुवीर्य्यम् ॥*३*॥ [४]

अथ तृतीया। हे "देव" द्योतमानाग्ने! स पूर्वोक्तगुणस्त्वं "पृथु" विस्तीर्णं "श्रवाय्य" श्रवणीयं प्रशस्यं "बृहत्" महत् "सुवीर्य्यं" शोभनवीर्य्योपेतं धनं "नः" अस्मान् "अच्छ" "विवाससि" अभिगमय। अत्र वाजसनेयकम्—"अच्छादेवविवाससीति तद्योऽग्निमयेत्येवैतदाहेति॥ ३॥ [४]

१ २ ३ १ २र
आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।
१ २ १ २
मध्वा रजाᳬसि सुक्रतू ॥*१*॥

द्वितीयतृचे—प्रथमा। दे॰ मित्रावरुणः। ऋ॰ विश्वामित्रः। छ॰ गायत्री। "सुक्रतू" शोभनकर्माणौ, हे "मित्रावरुणौ"! "नः" अस्माकम् "गव्यूतिं" गवां मार्गं गोनिवासस्थानं "घृतैः" क्षरणसाधनैः पयोभिरुदकै "आ उक्षतं" समन्तात् सिञ्चतम्। अस्माभ्यं दोग्ध्रीः गाः प्रयच्छतमित्यर्थः। किञ्च "मध्वा" मधुरेण सुरसेन "रजांसि" पारलौकिकानि अस्मदावासस्थानानि "सिञ्चतम्"॥१

१ २ ३ २ ३ १ २ ३ १ २र
उरुशᳬसा नमो वृधा मह्ना दक्षस्य राजथः ।
१ २
द्राघिष्ठाभिः शुचिव्रता ॥*२*॥

अथ द्वितीया। "शुचिव्रता" परिशुद्धकर्माणौ, हे मित्रावरुणौ! "उरुशंसा" उरुभिः बहुभिः शंसनीयौ। यद्वा उरु बहु शंसः शंसं ययोस्तौ। "नमो वृधा" नमसा हविर्लक्षणेनान्नेन स्तोत्रेण वा वर्द्धमानौ। "द्राघिष्ठाभिः" अत्यन्तदीर्घस्तुतिलक्षणाभिर्युक्तौ युवां "दक्षस्य" दक्षते समर्थो भवत्यनेनेति दक्षं धनं बलं वा तस्य "मह्ना" महत्त्वेन "राजथः" ईशाथे॥ २ ॥

३ २ ३ १ २ २ १ २ ३ १ २
गृणाना जमदग्निना योनावृतस्य सीदतम् ।
३ १ २र
पातᳬसोममृता वृधा ॥*३*॥ [५]

अथ तृतीया। हे मित्रावरुणौ। "जमदग्निना" एतन्नाम

येन महर्षिणा यद्वा जमदग्निना प्रज्वलिताग्निना विश्वामित्रेण "गृणाना" स्तूयमानौ युवां "ऋतस्य" यज्ञस्य "योनौ" देवयजनाख्ये देशे "सीदतम्" उपविशतं "ऋतावृधा" ऋतस्य कर्मफलस्य वर्द्धयितारौ युवां "सामं" "पातम्" अस्माभिरभिषुतम् सोमं पिबतम् ॥ ३ ॥ [५]

१ २　　२ ३उ　　२ ३ १　२ ३　१ २　३ २
आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम्।
१उ　३ १ २　३ २　३ २
एदं बर्हिः सदो मम ॥*१*॥

तृतीये तृचे—प्रथमा। ऋ० इरमिठिः। छ० गायत्री। दे० इन्द्रः। हे "इन्द्र"! त्वम् "आयाहि" अस्मद्यज्ञं प्रत्यागच्छ, वयं "ते" त्वदर्थं "सुषुमा हि" सोममभिषुतवन्तः खलु तम् "इम्" अभिषुतं सोमं त्वं "पिब" त्वदर्थं "मम" यजिदं "बर्हिः" वेद्यामास्तीर्णं दर्भम् "आ सदः" आसीद अभि निषीद ॥ १ ॥

१ २　　२ ३ १　३ २ १ २　　　३ १ २
आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना।
३ २ ३ २
उप ब्रह्माणि नः शृणु ॥*२*॥

अथ द्वितीया। हे "इन्द्र"! "ब्रह्मयुजा" ब्रह्मणा मन्त्रेण युज्यमानौ "केशिना" केशिनौ केशवन्तौ "हरी" हरणशीलौ वा अश्वौ "त्वा" त्वाम् "आवहताम्" अभिप्रापयताम्। त्वं चास्मद्यज्ञमुपेत्य "नः" अस्माकं "ब्रह्माणि" स्तोत्राणि "शृणु" सम्यक् चित्ते धारय ॥ २ ॥

३ १ २　　३ २ ३ २　३ २ ३ २　　२ ३ २
ब्रह्माणस्त्वा युजा वयꣳसोमपामिन्द्र सोमिनः।
२ ३ २
सुतावन्तो हवामहे ॥*३*॥ [६]

अथ तृतीया। हे "इन्द्र!" "ब्रह्माणः" ब्राह्मणा वयं 'त्वा'

"उग्रम्" उद्गूर्णं "शर्म" सुखं "महि" महत् । "श्रवः" अन्नं "भूमि" भूमिष्ठैः यजमानैः "आददे" आदीयते॥ "दिविषद्"-दिविषद्"—इति पाठौ ॥ १ ॥

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः ।

२ १ २र
वरिवो वित्परि स्रव ॥*२*॥

अथ द्वितीया । हे सोम ! "वरिवोवित्" धनस्य लम्भक ! पवमान ! "नः" अस्माकं "यज्यवे" यष्टव्याय "इन्द्राय" "वरुणाय" च "मरुद्भ्यः" च "परि स्रव" धारया क्षर ॥ २ ॥

२ १ २र ३ १र २ ३ २ १ २
एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् ।

१ २
सिषासन्तो वनामहे ॥*३*॥ [८]

अथ तृतीया। "मानुषाणां" मनुष्याणां लब्धव्यानि "एना" एतानि "विश्वा" विश्वानि सर्वाणि "द्युम्नानि" यशःसाधनानि धनानि हे सोम ! त्वत्प्रसादात् "आ" आभिमुख्येन "अर्य्य" अभिगच्छन्तः वयं "सिषासन्तः" सम्भक्तु मिच्छन्तश्च "वनामहे" त्वा सम्भजामहे ॥ ३ ॥ ८ ॥

१ १ २ ३ १ २ ३ १ २र
पुनानः सोम धारयापो वसानो अर्षसि ।

१ २३ १ २र ३ १ २ ३ १
आ रत्नधा योनिमृतस्य सीदस्यु-

२ ३१ २३ १ २
त्सो देवो हिरण्ययः ॥*१*॥

द्वितीय-तृचरूपे प्रगाथे प्रथमा—ऋ० उशना। छ० काकुप।

दे०पवमानः सोमः। हे सोम! "पुनानः" पूयमानस्त्वम् "अपः" उदकानि वसतीपर्य्यायाणि "वसानः" आच्छादयन् "धारया" "अर्पसि" पवित्रं गच्छसि, ततो "रत्नधाः" रत्नानां रमणीयानां धनानां दाता च "ऋतस्य" सत्यभूतस्य यज्ञस्य "योनिं" स्थानम् "आसीदसि"। कीदृशस्त्वम्? "उत्सः" प्रस्यन्दनशीलः "देवः" द्योतमानः "हिरण्ययः" हिरण्मयः सुवर्णीत्पत्तिस्थानमित्यर्थः। "उत्सो देवः"—"उत्सो देव"—इति पाठौ॥ १॥

१ १ २र ३ १ २र ३ १ ३ १ ३ १ ३ १ १ २

दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नꣳसधस्थमासदत्।

२ १ २ ३ १ २ ३क २र २

आपृच्छ्यं धरुणं वाज्यर्षसि

१ २ ३ १ २ ३ १

नृभिर्धौतो विचक्षणः॥२॥ [८]

अथ द्वितीया। 'मधु' मदकरं "प्रियं" प्रीणनकारि 'दिव्यं' दिवि भवम् 'ऊधः' सोमवल्ली-लक्षणं "दुहानः" पवमानः सोमो देवः "प्रत्नं" पुरातनं "सधस्थं" सह तिष्ठन्त्यत्रेति सधस्थं स्थानमन्तरिक्षम् "आसदत्" आसीदति सदेर्लुङि रूपं तदनन्तरम् "आपृच्छ्यं" कर्मणा प्रष्टव्यं "धरुणं" कर्मणो धारयितारं यजमानं "वाजी" अन्नवान् सन्, हे सोम। त्वम् "अर्षसि" तस्मै अन्नं दातुमभिगच्छसि। कीदृशः? नृभिः कर्मनेतृभिः ऋत्विग्भिः "धौतः" अदाभ्यग्रहे परिशोधितः "तेरेन चतुराप्नोति पञ्च सप्त वा सप्त छन्दो वा (१२, ५, १७)"—इत्यापस्तम्बेन सूचितम् "विचक्षणः" सर्वस्य विद्रष्टा॥ "नृभिर्धौतः"—"नृभिर्धूतः"—इति पाठौ॥ २॥ [८]

नानि उपद्रवाणि परिहृत्येति शेषः, "रक्षमाणः" "पिता" "पालकः" "देवानां" "तथा" "जनिता" उत्पादकः "सुदक्षः" शोभनबलः "दिवः" "विष्टम्भः" विशेषेण स्तम्भयिता "पृथिव्याः" च "धरुणः" धारकः। एवं महानुभावः पवते। "वृजना"— "वृजन्"—इति पाठौ ॥ २ ॥

२ ३ १ २   ३ १   २र
ऋषिर्विप्रः पुर एता जनाना-
३ १ १र ३ १२ १ २
मृभुर्धीर उशना काव्येन ।
१ २ ३ १ २ ३ १ २ ३
स चिद्विवेद निहितं यदा सामपी-
३ २ ३ ३ २ १ २
च्याऽ२ं गुह्यं नाम गोनाम् ॥*३*॥ [१०]

अथ तृतीया। "ऋषिः" अतीन्द्रियद्रष्टा "विप्रः" मेधावी "पुरः एता" पुरतो गन्ता "जनानां" मनुष्याणां "ऋभुः" उरु-भासमानः "धीरः" धीमान् "उशनाः" एतन्नामकः ऋषिः यः "स चित्" स एव "काव्येन" स्तोत्रेण "विवेद" लभते। किमिति ? उच्यते। "आसां" "गोनां" गवां सम्बन्धि "यत्" "अपीच्यम्" अन्तर्हितनामैतत् अन्तर्हितं "नाम" नामकमुदकं पयोलक्षणम्। कीदृशम् ? "गुह्यं" गोपनीयम् ॥ ३ ॥ [१०]

इति सामवेदार्थ प्रकाशे उत्तरार्चिकस्य प्रथमस्याध्यायस्य तृतीयः खण्डः।

---

३ १ २   ३ १ २   ३ १ २
अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।

१ २ २ १ २र ३ १ २ १ २ २ १ २
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥*१*

अथ चतुर्थखण्डे, प्रथम-सूक्ते—प्रथमा। ऋ० वसिष्ठः। छ० बृहती। दे० इन्द्रः। हे "शूर!" विक्रान्तेन्द्र! "त्वा" त्वाम् "अभि नोनुमः" वयं भृशमभिष्टुमः। तत्र दृष्टान्तः— "अदुग्धा इव धेनवः" अक्षतदोहा गावः आदरेण वत्सान् प्रति हम्भारवं कुर्वन्ति तद्वत् वयं स्तुमः इत्यर्थः। कीदृशम्? "अस्य" "जगतः" जङ्गमस्य "ईशानम्" ईश्वरं "तस्थुषः" स्थावरस्य च "ईशान" "स्वर्दृशं" सर्वदृश सर्वज्ञमित्यर्थः॥ १॥

१ २र ३ १ ३ १
न त्वावाꣳ अन्यो दिव्यो न

१र२ १ ३ १ २र
पार्थिवो न जातो न जनिष्यते।

२ १ २
अश्वायन्तो मघवन्निन्द्र

२ १ २ ३१ २
वाजिनो गव्यन्तस्त्वा हवामहे ॥*२*॥ [११]

अथ द्वितीया। हे "मघवन्निन्द्र!" "दिव्यः" दिवि भवः "त्वावान्" त्वत्सदृशः "अन्यः" न जायते। "पार्थिवः" पृथिव्यां भवोऽपि त्वावान् "न जातः" न जायते। दिव्यः पार्थिवो वा त्वावान् न जातः न च "जनिष्यते" नोत्पत्स्यते लोकद्वयेऽपि त्रिष्वपि कालेषु त्वादृशः कश्चिन्नास्ति त्वमेव समर्थो भवसीत्यर्थः। "अश्वायन्तः" अश्वानिच्छन्तः "वाजिनः" वाजमन्नमिच्छन्तः। इच्छाया मिन् प्रत्ययः। हविष्मन्तो वा "गव्यन्तः" गा इच्छन्तश्च वय हे इन्द्र! "त्वा" त्वा "हवामहे" आह्वयामः॥ २॥ [११]

१ २    ३ १    ३ २  ३ १  २ १  ३ १  १ २
कया नश्चित्र आ भुवदूती सदा वृधः सखा।
३ २  ३ १ २    ३ २
कया शचिष्ठया वृता ॥*१*॥

द्वितीय-तृचे प्रथमा। ऋ० वामदेवः। छ० गायत्री। दे० इन्द्रः। "सदावृधः" सदावर्द्धमानः "चित्रः" चायनीयः पूजनीयः "सखा" मित्रभूतः इन्द्रः "कया" "ऊती" ऊत्या तर्पणेन "न." अस्मान् "आ भुवत्" आभिमुख्येन भवेत्? "शचिष्ठया" प्रज्ञावत्तमया प्रज्ञामहितानुष्ठीयमानेन। "कया वृता?"— केन वर्त्तनेन कर्मणा च अभिमुखो भवेत्॥ १॥

१ २   ३ १   ३ २  ३ १   २    ३ १२
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः।
३ १   २ ३ १ ३  १ २
दृढा चिदारुजे वसु ॥*२*॥

अथ द्वितीया। "मंहिष्ठः" पूजनीयः "सत्य." सत्यभूतः "मदाना" मादयितॄणा मध्ये "क." मदकरः? "अन्धसः" सोमलक्षणस्यान्नस्य रसः। "दृढाचित्" दृढमपि "वसु" शत्रुसम्बन्धि गवादिकं धनम् "आरुजे" आ समन्तात् भङ्क्तुम्। हे इन्द्र। "त्वा" त्वा "मत्सत्" मादयेत्॥ २॥

३ २उ  ३ १ २        ३ १ २  ३ २
अभीषूणः सखीनामविता जरितॄणाम्।
३ १ २  ३ १ २
शतं भवास्यूतये ॥*३*॥ [१२]

अथ तृतीया। हे इन्द्र! "सखीना" समानख्यातीनां "जरितॄणाम्" "अविता" रक्षिता त्वं "न." अस्माकं "शत" शतसङ्ख्याकम्

ऊतये रक्षायै "सु" सुष्ठु "अभि भवासि" अभिमुखो भव। "शतम्भवास्यूतये"—"शतं भवास्यूतिभिः"—इति पाठौ॥[१२]

१ २ ३१ २ ३ २३ ३१ २ ३ २र
तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
३ २ ३ १ २र ३१२ ३ १ २ ३ १ २
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥१॥

अथ प्रगाथरूपे तृतीये सूक्ते—प्रथमा ऋ० नोधा। छ० बृहती। दे० इन्द्रः। नोधा नाम ऋषिरिन्द्रं स्तौति। हे ऋत्विग्यजमानाः! "दस्मं" दर्शनीयम् "ऋतीषहम्" ऋतयो बाधकाः शत्रवः तेषामभि-भवितारम्; पुनः कीदृशम्? "वसोः" वासयितुर्दुःखस्य विवासयितुर्निवारयितुः; यद्वा वसोः पात्रे निवसतः स्थितस्य तादृशस्य अन्धसः सोम-लक्षणस्य अन्नस्य पानेन "मन्दानं" मन्दमानं मोदमानं "वः" षष्ठ्यर्थत्वेन युष्मत्सम्बन्धिनं तं तादृशमिन्द्रं "गीर्भिः" स्तुतिलक्षणाभिर्वाग्भिः "नवामहे" नु स्तवने, शब्दे वा अभिष्टुमः। कुत्रेति "स्वसरेषु"। अत्र यास्कः—"स्वसराण्यहानि स्वयं सारीणि अपि वा स्वरादित्यो भवति स एतानि सारयतीति (निरु० नै० ५, ४) सूर्य-नेतृकेषु दिवसेषु वयम् "अभिष्टुमः" अभितः शब्दयामः। तत्र दृष्टान्तः—"वत्सं न" यथा धेनवो नव-प्रसूतिका गावः स्वसरेषु गृहेषु अस्यन्ते प्रेर्यन्ते गावोऽत्रेति स्वसराणि गोष्ठानि तेषु वत्समभिलक्ष्य शब्दयन्ति तद्वत् ॥ १ ॥

२ २ ३२ ३ १ २ ३ १
द्युक्षꣳसुदानुं तविषीभिरा
२ ३ १ १र२ ३ १ २
वृतं गिरिं न पुरुभोजसम् ।

१ २३ १ २ ३ १ २ ३
द्युमन्तं वाजꣳशतिनꣳसह-

१ २ ३ १ २र
स्त्रिणं मक्षू गोमन्तमीमहे ॥*२*॥ [१२]

अथ द्वितीया। "द्युक्ष" दीप्तिमन्तं निवासस्थानम् अति प्रथितदीप्तमित्यर्थः। यद्वा, द्युक्षं दिवि द्युलोके क्षियन्त निवसन्त "सुदानुं" शोभनदानं "तविषीभिः" बलैः "आवृतम्" आच्छादितम्। पुनः कीदृशम्? "पुरुभोजसं" सोमादि-हविः-प्रदानेन बहुभिर्यजमानैर्भाजयितव्यम्। यद्वा, बहुना पालयितारम् इन्द्रम् "द्युमन्तम्" द्यु चु चये। शब्दवन्तम् अनेन पुत्रादिकं लक्ष्यते; स्तावादीनि कुर्वाण "शतिन सहस्रिण" शत सहस्र-सङ्ख्याक धन-युक्तं "गोमन्तम्" गवादि युक्तं "वाजम्" अन्न "मक्षु" शीघ्रम् "ईमहे" याचामहे। यद्वा, पूर्वार्द्धो वाज विशेषणत्वेन योजनीयः—प्रदीप्तं शोभन-दान-योग्य बलादियुक्तं बहुभि पुत्रमित्रादिभिर्भोक्तव्य शब्दादि युक्तम् अन्नम् इन्द्रं याचामहे इति ॥ २ ॥ [१२]

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
तरोभिर्वो विदद्वसुमिन्द्रꣳसबाध ऊतये।

१ २ २र ३ १ २ ३ २
बृहद्गायन्तः सुतसोमे अध्वरे

१ २उ ३ १ २ ३ १ २
हुवे भरं न कारिणम्॥*१*॥

चतुर्थे प्रगाथे—प्रथमा। ऋ०कलिः। छ०बृहती। दे०ऐन्द्रः। हे ऋत्विजः! "वः" यूय "तरोभिः" वेगैरश्वैरुपेत वेगे रेव वा "विददसुं" वेदयदसुं धनावेदकम् "इन्द्र" "सबाधः" बाधा-

मध्विता: "ऊतये" रक्षणाय "इन्द्रायन्तः" इन्द्रत्वन्त्रकं साम गायन्तः सन्तः परिचरतेति शेषः । कुत्र? इति, तदुच्यते— "सुतसोमे" अभिषुत-सोमके "अध्वरे" यज्ञे सोमयागे ; अहञ्च स्तोता युष्मदर्थे "हुवे" आह्वयामि । कमिव ? "भरं न" भरं भर्त्तारं कुटुम्बपोषकं "कारिणं" रक्षित-करणशीलं, यथा रक्षित-करणायाह्वयन्ति पुत्रादयस्तद्वत्, तथाभूतमिन्द्रं हुवे इति ॥ १ ॥

१उ २ १ १२ १ २ २ २उ ३ १ २ ३ १ २र
न यं दुध्रा वरन्ते न स्थिरा मुरो मदेषु शिप्रमन्धसः ।

२ ३ १ २ ३ १ २ ३ १
य आहत्या शशमानाय सुन्वते

२र ३ २ ३क २र
दाता जरित्र उक्थ्यम् ॥ २ ॥ [१४]

अथ द्वितीया । "सुशिप्रं" शोभन-हनुकं शोभन-नासिकं वा "शिप्रे हनुनासिके वा (६,१७)—इति यास्कः "यम्" इन्द्र "दुध्राः" दुर्द्धराः असुरादयः "न वरन्ते" संग्रामे न वारयन्ति, तथा "स्थिराः" देवाः "न" वरन्ते, किञ्च "मुरः" मरणशीला मनुष्याः न वरन्ते, "यः" च इन्द्रः "अन्धस" सोमलक्षणस्यान्नस्य "मदे" मदाय सोमपानजनिताय "आहत्य", "शशमानाय" शसमानाय "सुन्वते" अभिषवं कुर्वते "जरित्रे" स्तोत्रे च "दाता" भवति । किम् ? "उक्थ्यं" स्तुत्यं धनम्, तं हुवे इति पूर्वेण सम्बन्धः ॥

"मदेषु शिप्रं"—"मदेषु शिप्रम्"—इति षकार सकारो पाठौ ॥ २ ॥ [१४]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य चतुर्थखण्डः ॥ ४ ॥

१ ० २ ११ ० ३ १२ ३ १ ०
स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।

१ ० ३ ? ० ० ?
इन्द्राय पातवे सुतः ॥०१०॥

प्रथमखण्डे, प्रथम तृचे—प्रथमा । ऋ० विश्वामित्रपुत्रः मधुच्छन्दः । छ० गायत्री । दे० सोमः । हे "सोम !" "इन्द्राय" "पातवे" पातुं "सुतः" अभिषुतः त्वं "स्वादिष्ठया" स्वादुतमया "मदिष्ठया" अतिशयेन मादयित्र्या "धारया" "पवस्व" चर ॥ १ ॥

३ २ ३ १ २ १ २७ २ १२
रक्षोहा विश्वचर्षणिरभि योनि मयोहते ।

१ २ ३ २ ३ १ २
द्रोणे सधस्थमासदत् ॥०२०॥

अथ द्वितीया । "रक्षोहा" रक्षसां हन्ता "विश्वचर्षणिः" विश्वस्य द्रष्टा सोमः "अयोहते" अयसा हिरण्येन हते । तथा च श्रूयते—"हिरण्यपाणिरभिषुणोति"—इति "द्रोणे" द्रोणकलशेन अधिषवणफलकाभ्यां वा "सधस्थं" सहस्थानं "योनिम्" अभिषवस्थानम् "अभ्यासदत्" आभिमुख्येनासीदति ॥

"मयोहते"—"अयोहते", "द्रोणे"—"द्रुणा"—इति च पाठौ ॥ २ ॥

२ १ २ ३ १ २ ३ १ २
वरिवोधा तमो भुवो मꣳहिष्ठो वृत्रहन्तमः ।

२ ३ १ २ ३ १ २
पर्षिराधो मघोनाम् ॥०३०॥ [१५]

अथ तृतीया । हे सोम ! त्वं "वरिवोधातम." अतिशयेन

धनानां दाता "भुवः" भव। 'वेदः', 'वरिवः'—इति धननामसु निघ०२,१०, ४-५ पाठात् "मंहिष्ठः" दातृतमश्च भव। सर्वदा-वत्वसत्रोच्यते इत्यपुनरुक्तिः। "वृत्रहन्तमः" अतिशयेन शत्रूणां हन्ता च भव। किञ्च "मघोनां" धनवतां शत्रूणां "राधः" धनञ्च "पर्षि" अस्मभ्यं प्रयच्छ॥

"भुवः"-"भव"—इति पाठौ॥ ३॥ [१५]

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २
पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः।

१ २ ३ १ २ ३ १ २
महि द्युक्षतमो मदः॥*१*॥

ऋ० गौरिवीतिः। छ० गायत्री। दे० ऐन्द्रः। अथ प्रगाथरूपे द्वितीय-सूक्ते—प्रथमा। हे "सोम!" "मधुमत्तमः" अतिशयेन माधुर्य्योपेतस्त्वम् "इन्द्राय" इन्द्रार्थं "मदः" मदकरः सन् "पवस्व" क्षर। कीदृशः? "क्रतुवित्तमः" अत्यन्तं प्रज्ञायाः कर्मणो वा लम्भकः, "महि" मंहनीयः "द्युक्षतमः" अत्यन्तं दीप्तः "मदः" मदहेतुः॥ १॥

१ २ १ २ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः।

१ २ ३ १ २ ३क २र ३
स सुप्रकेतो अभ्यक्रमी

२ड ३ १ ३ १ २
दिषोऽच्छा वाजं नैतशः॥*२*॥ [१६]

अथ द्वितीया। "वृषभः" कामानां वर्षकः इन्द्रः, हे सोम! "यस्य" यं "ते" त्वां "पीत्वा" "वृषायते" वृषभ इवाचरति, किञ्च "स्वर्विदः" सर्वं जानतः "अस्य" तव "पीत्वा" पाने

सति "सु प्रकेत:" शोभन-प्रज्ञः "सः" इन्द्रः वृषभः शत्रूणाम् भद्राणि "अभ्यक्रमीत्" अभिक्रामति। तत्र दृष्टान्तः—"नः" "एतशः" इत्यश्वनाम (निघ० १, १४, १०) यथा अश्वः "वाजं" सङ्ग्रामम् अभिगच्छति तद्वत्॥

"स्वर्विद"—"स्वर्दृशः"—इति पाठौ॥ २॥ [१६]

२ ३ १ २ ३ २ ३१ २र २ ३१
इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः।
१२२ १ २ १ २ १ १ २
श्रुष्टे जातास इन्दवः स्वर्विदः॥*१*॥

ऋ० अग्निः। छ० उष्णिक्। दे० ऐन्द्रः। उत्तरासमे तृतीय-सूक्ते—प्रथमा। "श्रुष्टे" श्रुष्टीति क्षिप्रनाम (निरु० ६, १२) क्षिप्रं "जातासः" जाताः "इन्दवः" पात्रेषु चरन्तः "स्वर्विदः" सर्वज्ञाः "हरयः" हरितवर्णाः "सुताः" अभिषुताः "इमे" सोमाः "वृषणं" कामानां सेक्तारम् "इन्द्रम्" "अच्छ यन्तु" अभिगच्छन्तु॥ "श्रुष्टे"-"श्रुष्टी"—इति पाठौ॥ १॥

३१ २र ३ १ २र ३१
अयं भराय सानसिरिन्द्राय पवते सुतः।
२ ३ १ २ ३ १२ ३२
सोमो जैत्रस्य चेतति यथा विदे॥*२*॥

अथ द्वितीया। "भराय" संग्रामाय "सानसि" भजनीयः "सुतः" अभिषुत "अयं" "सोमः" "इन्द्रार्थं "पवते" क्षरति ग्रहादिषु क्षरति। ततः सोमः "जैत्रस्य" "क्रियाग्रहणं कर्त्तव्यम् (१, २, २०५ वा०)"—इति कर्मणः सम्प्रदानसञ्ज्ञा, चतुर्थ्यर्थे षष्ठी (पा० २, ३, ३६) जययोर्निमिन्द्र "चेतति" जानाति। "यथा" इन्द्रः "विदे" लोकैर्ज्ञायते तथा जानाति॥२॥

१२उ २ ३२ ३ २ ३ १ २ ३ २
अस्येदिन्द्रो मदेष्वा ग्राभं गृभ्णाति सानसिम् ।
१ २ ३ १ २, २ १ २ ३ २
वज्रञ्च वृषणं भरत्समप्सु जित् ॥*३*॥ [१७]

अथ तृतीया । "अस्येत्" अस्य सोमस्येव "मदेषु" सञ्जातेषु "सानसि" सर्वैः सम्भजनीयं "ग्राभं" ग्रहीतव्यं धनं "गृभ्णाति" गृह्णाति "हृग्रहोर्भश्छन्दसि"—इति भत्वम् किञ्च "अप्सुजित्" उदकार्थं वृत्रस्य जेता । यद्वा, 'आप' इत्यन्तरिक्षनाम (निघ० १, ३, ८) अन्तरिक्षे अहिनामकस्य जेता "इन्द्र" "वृषणं" वर्षितारं "वज्रं च" स्वकीयमायुधं "सम्भरत्" सम्बिभर्त्तु । विभक्तेरडागमः ॥

"गृभ्णाति"—"गृह्णीत"—इति पाठौ ॥ ३ ॥ १७

१ १ २ २ १ २ ३ १ २ ३ १ २
पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
१ १ १ २ २ १ २ ३क २र
अप श्वानᳪश्नथिष्टन सखायो दीर्घजिह्व्यम् ॥*१*॥

ऋ० श्यावाश्वः । छ० अनुष्टुप् । दे० ऐन्द्रः । अथ चतुर्थसूक्ते—प्रथमा । हे "सखायः" ! सखिभूताः समानख्याता वा हे स्तोतारः । "वः" युयं "पुरोजिती" पूर्वसवर्णदीर्घ (पा०७,१,३८) पुरः स्थित जयस्य "अन्धसः" अदनीयस्य सोमस्य स्वभूताय "सुताय" अभिषुताय "मादयित्नवे" अत्यन्त मदकराय रसाय "दीर्घजिह्व्य" दीर्घा जिह्वा यस्य सः "दीर्घजिह्वो च छन्दसि (४, ३, ५८)"—इति ड्यपन्तत्वेन निपातितः तादृशं श्वानम् "अप श्नथिष्टन" अपश्नथत अपबाध, यथा श्वाना राक्षसा वा सुतं सोमं न लिहन्ति तथा कुरुतेत्यर्थः ॥ १ ॥

१ २र ३ १ २ ३ १ २ ३ २
यो धारया पावकया परिप्रस्यन्दते सुतः।

३ २ ३ २ १ २र
इन्दुरश्वो न कृत्व्यः ॥*२*॥

अथ द्वितीया। "सुतः" अभिषुतः "कृत्व्यः" कृत्वीति कर्मनाम ( निघ० २, १, २० ) कर्मणि साधुः 'इन्दुः' सोमः "पावकया" पापानां शोधयित्रा "धारया" "परि प्रस्यन्दते" परितः चरति। कथमिव? "अश्वो न" यथा अश्वो वेगेन प्रगच्छति तद्वत् ॥ २ ॥

३ २ १ २ ३ १र ३ १ २ ३ १ २ ३ २
तं दुरोषमभी नरः सोमं विश्वाच्या धिया।

३ १ २ ३ १ २
यज्ञाय सन्त्वद्रयः ॥*३*॥ [१८]

अथ तृतीया। "नरः" कर्मनेतारः ऋत्विजः "दुरोषं" रोषतेर्हिंसार्थस्य (भ्वा० प०) रेफलोपे दीर्घाभावे, ओषते-र्दाहार्थस्य (भ्वा० प०) वा खलि रूपमिति, सन्देहादनवग्रहः "तन्दुः" वधं दुर्दहं वा सोमम् "अभि" लक्ष्य "विश्वाच्या" सर्वान् कामानञ्चित्रा, कामान् प्रापयित्रा "धिया" बुद्ध्या "यज्ञाय" यज्ञार्थम् "अद्रयः सन्तु" अदारणयुक्ता भवन्तु ॥

"यज्ञायसन्त्वद्रयः"-"यज्ञ छिन्वन्त्यद्रिभिः"—इति पाठौ ॥३॥ [१८]

२ ३ २ ३ १ २ ३ १ २ ३
अभि प्रियाणि पवते चनोहितो

१ २ २ ३उ ३ २ ३ १ २
नामानि यह्वो अधि येषु वर्द्धते।

१ २र २ १ २उ १
आ सूर्य्यस्य वृहतो वृहन्नधि
२ १ १ २ २ १
रथ विष्वञ्चमरुहद्विचक्षणः ॥*१*॥

*ऋ० कवि । छ० जगती । दे० ऐन्द्र । अथ पञ्चमसूक्ते— प्रथमा । "चनो हित" चन इत्यन्ननाम, चायतेरसुनि चन इत्यौणादिक सूत्रेण निपातित चनसे अन्नाय हित, यद्वा हितान्न सोम "प्रियाणि" जगत प्रीणयितृणि "नामानि" नमनशीलानि, तान्युदकानि "अभि पवते" अभित करोति। "येषु" अन्तरिक्षस्थितेषु उदकेषु "यह्व" महानय सोम "अधिवर्द्धते" अधिक प्रवृद्धो भवति, अपा मध्ये सोमो वसति खलु। तत "वृहत्" महान् सोम वृहत " महत परिवृढस्य "सूर्य्यस्य" विष्वञ्च" विष्वग् गमनम "अधि रथम्" उपरि रथ "विचक्षण" सर्वस्य विद्रष्टा सन् "आ अरुहत्" आरोहति "अग्नौ प्रास्ताहुति सम्यगादित्यमुपतिष्ठते (मनु० ३अ० ७६श्लो०)"—इति॥ १॥

२ १ २ २ १ २ २ १ २ २ १
ऋतस्य जिह्वा पवते मधु प्रियं
२ १ २र २ १ २ १ २र
वक्ता पतिर्धियो अस्या अदाभ्य ।
१ २ २ १ २ १ २ ३ २ १ २
दधाति पुत्र पित्रोरपीच्याऽ३न्नाम
१ २ ३ १ २ १ २ २ १
तृतीयमधि रोचन दिवः ॥*२*॥

अथ द्वितीया। "ऋतस्य" सत्यभूतस्य यज्ञस्य "जिह्वा" मुख्य

त्वेन जिह्वास्थानीयः सोमः "प्रियं" प्रियकरं "मधु" मदकरं रसं "पवते" क्षरति। कीदृशः ? "वक्ता" शब्दकृत् ; यद्वा, स्तोतृभिः क्रियमाणाः स्तुतयः साधीयस्य इति प्रतिश्रवणस्य कर्त्ता "अस्य धियः" एतस्य कर्मणः "पतिः" पालयिता "अदाभ्यः" रक्षोभिर्हिंसितु मशक्यः "पुत्रः" यजमानः "पित्रोः" पिता माता उभयोः "अपीच्यम्" अन्तर्हितं यत् "नाम" तौ न जानीतो नाम करणवेलायां तस्मात्तयोरपरिज्ञायमानं "दिवः" द्युलोकस्य "रोचनं" दीप्यमानं "तृतीयं" नाम सोमेऽभिषूयमाणे "अधि दधाति" अत्यन्तं धारयति ; "नक्षत्रव्यावहारिकनाम्नी प्रभाष्य सोमयाजो तृतीय मस्य नाम"—इति भगवता बौधायनेनोक्तम् ॥

"अधिरोचनम्"—"अधिरोचने"—इति पाठौ ॥ २ ॥

१ २  २ २  २ १ २  २
अव द्युतानः कलशाꣳ अचिक्रद-

१ २  २ ३ उ  २ १  २ ३ १ २
न्नृभिर्येमाणः कोश आ हिरण्यये ।

२ १  २ १ २  २ १ २  २ १  २
अभी ऋतस्य दोहना अनूषताधि

२ २  २ २ २  २ २
त्रिपृष्ठ उषसो वि राजसि ॥*३*॥ [१८]

अथ तृतीया । "द्युतानः" द्युतदीप्तौ (भ्वा० आ०) दीप्यमानो "नृभिः" कर्मनेतृभिऋत्विग्भिः "हिरण्यये" हिरण्मयकोशे अधिषवणचर्मणि ; तस्य हिरण्मयत्वं "हिरण्यपाणिरभिषुणोति"—इति हिरण्य-सम्बन्धात् ; तादृशे "कोशे" "येमानः" छान्दसे कर्मणि लिटि कानचि रूपम् नियम्यमानः सोमः "कल-

यान्"- द्रोणाभिधान् प्रति "अवाचिक्रदत्" अवक्रन्दति शब्दायते। ततः "ऋतस्य" सत्यभूतस्य यज्ञस्य "दोहनाः" दोग्धार ऋत्विजः "इम" सोमम् "अभ्यनूषत" अभिष्टुवन्ति "ग्रावाणो वत्सा ऋत्विजो दुहन्ति"—इति तैत्तिरीयक-ब्राह्मणे एषां दोग्धृत्वमभिहितम् "त्रिपृष्ठः" त्रीणि सवनानि तान्येव पृष्ठानि यस्य स तथोक्तः त्रिषु च सवनेषु सोमस्य विद्यमानत्वात्। त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् हे सोम! ताहग्भूतस्त्वम् "उषसः अधि" यागाहनि "विराजसि" "अधिग्नोड् स्वाधाम् (१,४,४६)"—इति द्वितीया तेष्वहस्सु विशेषेण दीप्यसे। यद्वा राजिरन्तर्णीतण्यर्थः; अहानि प्रकाशयसि।

"येमाणः"-"येमान"—इति, "अभीऋतस्य"-"अभीऋतस्य"—इति, "विराजसि"-विराजति"—इति पाठाः॥२॥[१८]

इति सामवेदार्थे प्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य पञ्चमः खण्डः॥५॥

---

१ २ १ २ १ २ १ २ १ २ १ २ ३ १ २
यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे।

१ २ ३ १ २ ३ १ २ ३ १ २ १ २ १ २ ३ १ २ ३ २ ३
प्रप्रवयमृतञ्जातवेदसं प्रियं मित्रन्न शꣳसिषम्॥१*

ऋ० शंयुपार्थिः शंयुः। छ० बृहती। दे० अग्निः।

अथ षष्ठे खण्डे- प्रथमसूक्ते प्रगाथे—प्रथमा। हे स्तोतारः! "वः" यूयं "यज्ञायज्ञा" यज्ञे यज्ञे सर्वेषु यागेषु "दक्षसे अग्नये" प्रवृद्धायाग्नये "गिरा गिरा" स्तुतिरूपया वाचा वाचा स्तोत्रं कुरुतेति शेषः। च शब्दो भिन्नक्रमो वः इत्यस्मात् परो द्रष्टव्यः। यूयं "च" स्तोत्रं कुरुत। "वयम्" अपि तमग्निं "प्रप्रशंसिषम्" "प्रसमुपोदः पादपूरणे (८, १, ६०)"—

इति प्र-शब्दस्य द्विरुक्तिः पादपूरणार्था; व्यत्ययेनैकवचनम् (३, ४, ८८); छान्दसोलुङ् (७, १, ३८) प्रशंसामः कीदृशम्? "अमृतम्" मरणरहितं "जातवेदसम्" जातानां वेदितारं जातप्रज्ञं जातधनं वा "मित्र" सखिभूतमिव "प्रियम्" अनुकूलम्। यद्वा, व्यत्ययेन (३, ४, ८८) त्वमित्यस्य वसादेशः; अम्नय इति च कर्मणि चतुर्थी, "क्रियाग्रहणं कर्त्तव्यम्"—इति कर्मणः सम्प्रदानत्वात्; च शब्दश्चेदित्यर्थे निपातः, चेदर्थे वर्त्तते; दचस इति च दघेर्वृद्धिकर्मणः (भ्वा० आ०) अन्तर्भावितण्यर्थाल्लिङि रूपम्; चण्योगात् "निपातैर्यद्यदिहन्त० (८, १, ३०)"—इति निघातप्रतिषेधः। तत्राय मर्थः—हे स्तोत! त्वं यज्ञे यज्ञे इम मग्निं गिरा गिरा स्तुत्या स्तुत्या दचसे च वर्द्धयसि चेत् वयमपि अमृतत्वादिगुणकं तं प्रशंसामः॥ १॥

२ १ २र२ २ १ १ २र २
ऊर्जो नपातꣳ स हिनायमस्म-

१ २र ३ १ २
युर्दाशेम हव्यदातये।

२३१ २ ३ १ २र३ २
भुवद्वाजेष्वविता भुवद्वृध

१ १ ३ २ ३ १ २
उत त्राता तनूनाम्॥*२*॥ [२०]

अथ द्वितीया। "ऊर्ज" अन्नस्य बलस्य "नपात" पुत्रं प्रशंसिष्म सित्यनुषङ्गात् प्रशंसामेत्यर्थः। "हिना"—इति निपात-द्वय-समुदायो होत्यस्यार्थे "स" खलु "अयम्" अग्निः "अस्मयुः" अस्मान् कामयमानो भवति। वयञ्च "हव्यदातये"

हव्यानां हविषां देवेभ्यो दाता तस्मा अग्नये "दाशेम" हवींषि दद्याम। स च अग्निः 'वाजेषु' सङ्ग्रामेषु रक्षिता। 'वृधः' वर्द्धकश्चास्माकं 'भुवत्' भवतु। "उत" अपिच "तनूनाम्" तनयानामस्मत्पुत्राणाञ्च "त्राता" रक्षिता "भुवत्" भवतु ॥२॥ [२०]

१ २ १ २र ३ १ २ ३ १ २ ३ १ २
एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः।

२ १२ ३ १ २
एभिर्वर्द्धास इन्दुभिः ॥*१*॥

ऋ० भरद्वाजः। छ० गायत्री। दे० अग्निः। अथ त्र्यृचात्मके द्वितीये सूक्ते—प्रथमा। हे "अग्ने!" "एहि" आगच्छ "ते" तुभ्यं च त्वदर्थं "गिरः" स्तुतीः "इत्था" इत्थमनेन प्रकारेण "सु ब्रवाणि" सुष्ठु ब्रवाणीत्याशास्महे। ताः स्तुतीः शृण्वित्यर्थः। "ऊ"—इत्येतत् पूरकम्। "इतराः" असुरैः कृताः स्तुतीः शृणु इति शेषः। तथा च ब्राह्मणम्—"अग्न इत्थेतरा गिर इत्यसुर्य्या ह वा इतरा गिरः"—इति। अपिच आगतस्त्वम् "एभिः" एतैः इन्दुभिः सोमैः "वर्द्धासे" वर्द्धस्व ॥ १ ॥

१२क २र ३ १ २ ३ १ २ ३ १ २
यत्र क्व च ते मनो दक्षं दधस उत्तरम्।

१ २ ३ २
तत्र योनिं कृणवसे ॥ २ ॥

अथ द्वितीया। हे अग्ने। "ते" तव "मनः" अनुग्रहात्मकमन्तःकरणं "यत्र" यस्मिन् देशे "क्व च" कस्मिंश्चिद् यजमाने वर्त्तते, "तत्र" तस्मिन् यजमाने वर्त्तमाने "उत्तरम्" उत्कृष्टतरं श्रेष्ठं "दक्षं" बलकरं अन्नं वा "दधसे" धारयसि तथा "योनिं" स्थानं च "कृणवसे" तस्मिन् यजमाने करोषि।

"तत्र योनिं"-"तत्रासदः"—इति पाठौ ॥ २ ॥

१ २८ ३ १ २ ३ २ १ १८
न हि ते पूर्त्तमचिपद्भुवन्नेमानां पते।
१ २ १ २
अथा दुवो वनवसे ॥*३*॥ [२१]

अथ तृतीया। हे अग्ने! "ते" त्वदीयं "पूर्त्तं" पूरकं तेजः "अचिपत्" अक्ष्णोः पातकं विनाशकं "न हि भुवत्" न भवतु सर्वदा अस्माकं दर्शनसामर्थ्यं करोतु। हे "नेमानां पते"। नेमशब्दोऽल्पवाची, मनुष्याणां मध्ये कतिपयानां यजमानानां पते! पालक! "अथ" अतः कारणात् "दुवः" दुवस्यतिः परिचरणकर्मा (निघ० ३, ५, ५) अस्माभिर्यजमानैः कृतं परिचरणं "वनवसे" सम्भजस्व ॥ ३ ॥ [२१]

३ १ ३ १ २ ३ १ ७ ३ १ २ ३ १ १
वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः।
१ २ ३ १ २
वज्रिं चित्रᳲ हवामहे ॥*१*॥

ऋ० सोभरिः। छ० गायत्री। दे० इन्द्रः। अथ तृतीयस्य प्रगाथे—प्रथमा। हे "अपूर्व्य"। त्रिषु सवनेषु प्रादुर्भूतत्वादभिनव! हे "वज्रिन्"! वज्रवन्निन्द्र! "भरन्तः" सोमलक्षणैरन्नैस्त्वां पोषयन्तः "वयम्" "चित्र" चायनोय विविधरूप वा "त्वाम्" त्वामेव "अवस्यवः रक्षण मात्मन इच्छन्तः सन्तः" "हवामहे" आह्वयामः। तत्र दृष्टान्तः—"स्थूरं न" यथा भरन्तः व्रीह्यादिभिर्गृहं पूरयन्तो जनाना स्थूरं स्थूलं गुणाधिकं "कच्चित्" कञ्चित् पुरुषं यथा आह्वयन्ति तद्वत्।

"वज्रिन्"-"वाज"—इति पाठौ ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ १ २ १ २ ३ २
उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत्।
१ २र २ १ १ २ ३ २
त्वामिद्ध्यवितारं ववृमहे
१ २ २
सखाय इन्द्र सानसिम् ॥*२*॥ [२२]

अथ द्वितीया। प्रथमपादः प्रत्यक्षकृतः। हे "इन्द्र!" "कर्मन्" अग्निष्टोमादि कर्मणि "ऊतये" रक्षणाय "त्वा" त्वाम् "उप" गच्छामः। द्वितीयः पादः परोक्षकृतः। "य" इन्द्रः "धृषत्" धृष्णोति प्रबूनभिभवति "ञि धृषा प्रागल्भ्ये (स्वा० प०), "बहुलं छन्दसि (२, ४, ७३)"—इति श्नप्रत्ययः "युवा" तरुणः "उग्र." उद्गूर्ण. स इन्द्र "न," अस्मान् प्रति "चक्राम" आगच्छतु; यद्वा, चक्राम अस्मा, नुत्साहयुक्तान् करोतु क्रमतेः सर्गार्थे व्यत्ययेन परस्मैपदम्॥ परोऽर्द्धर्चः प्रत्यक्षकृतः। "सखाय" समानख्याना बन्धुभूता या वयं "सानसि" "वनषण सम्भक्तौ (भ्वा० प०) सम्भजनीयम् "अवितार" सर्वस्य रक्षितारं "त्वामित् न" त्वामेव "ववृमहे" वृणीमहे सम्भजामहे। "हि" प्रसिद्धौ (हि प्रर्योगादनि घातः (८, १, ३४) ॥ २ ॥ [२२]

२ ३क २र २ १ २ ३ १ २ ३ १ २ २ २ १ २
अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे।
२ ३ २ १ २ ३ १ २
उदेव ग्मन्त उदभिः ॥*१*॥

ऋ० नृमेधः। छ० ककुप्। दे० ऐन्द्रः। अथ चतुर्थ-दृचे—प्रथमा। हे गिर्वण.। गीर्भिः वननीय। इन्द्र! "अधाहि"

[प्रति च्हि "त्वा" त्वां "कामे" काम मभिलषितमर्थम् "ईमहे"। यद्वा, "कामे" कामान् कमनीयान् स्तोमान् "उपससृग्महे" उपसृजामः त्वां प्रापयाम इत्यर्थः। तत्र दृष्टान्त माह—"उदेव" यथा उदकेन "ग्मन्तः" गच्छन्तः पुरुषाः "उदभिः" अञ्जलिनोत्क्षिप्तोदकैः समीपस्थान् पुरुषान् क्रीडार्थं संसृजन्ति तद्वदित्यर्थः॥

"काम ईमहे ससृग्महे"-"कामाभ्युपससृज्महे"—इति च पाठाः। "उदेवग्मन्तः"-"उदेवयन्तः"—इति च पाठौ॥१॥

१ १२ २१ २१२ २१२
वार्ण त्वा यव्याभिर्वर्द्धन्ति शूर ब्रह्माणि।
२ १ २ २११
वावृध्वाꣳसं चिदद्रिवो दिवेदिवे॥*२*॥

अथ द्वितीया। हे "अद्रिवः"! वज्रिन्! "शूर"! इन्द्र! "वार्ण" यथोदकमुदकस्थानं "यव्याभिः" नदीभिः 'अवनयः', 'यव्याः'—इति (निघ० १, १३, १-२) नदीनामसु पाठात् "वर्द्धन्ति" वर्द्धयन्ति, तथा "ब्रह्माणि" स्तोत्रैः "वावृध्वांसं" "चित्" यथा निरुदकं देशं नदीभिः तथा न किन्तु प्रवृद्धमेव "त्वा" त्वां "दिवेदिवे" अन्वहं वर्द्धयन्ति स्तोतारः॥२॥

१ १ २ १२ २२२ १ २
युञ्जन्ति हरी इषिरस्य गाथ-
२१ २१ २१२ २ १ २
योरौ रथ उरुयुगे वचोयुजा।
२ १ २ ३ १ २
इन्द्रवाहा स्वर्विदा॥*३*॥ [२३]

अथ तृतीया। "इषिरस्य" गमनशीलस्येन्द्रस्य "उरुयुगे"

महायुगे "उरौ" महति "रथे" "इन्द्रवाहा" इन्द्रस्य वाहनभूतौ "वचोयुजा" वचनमात्रेणैव युज्यमानौ "स्वर्विदा" स्वर्गाख्य मिन्द्रस्य स्थानं जानन्तौ "हरी" एतन्नामकावश्वौ "गाथया" स्तोत्रेण स्तोतारः "युञ्जन्ति" योजयन्ति ॥

"उरुयुगे वचो युजा इन्द्रस्य वाहा स्वर्विदा"—"इन्द्रवाहा वचोयुजा"—इति पाठौ ॥ २ ॥ [२३]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य प्रथमस्याध्यायस्य षष्ठः खण्डः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ महेश्वरः ॥ १ ॥

## इत्युत्तरार्चिके प्रथमस्यार्द्ध-प्रपाठकः ।

इति श्रीमद्राजाधिराज परमेश्वर वैदिकमार्गप्रवर्त्तक श्रीवीरबुक्क भूपाल साम्राज्य धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ प्रकाशे उत्तराग्रन्थे प्रथमोऽध्यायः ।

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥ १ ॥

## अथ द्वितीयाध्याय आरभ्यते ।

तत्र,

१ २ २ ३ १ २ ३ १ २ ३ १ २र
पान्तमा वो अन्धस इन्द्रमभि प्र गायत ।
३ १ २ ३ १ २ ३ १ २ ३ २
विश्वासाहꣳ शतक्रतुं मꣳहिष्ठं चर्षणीनाम् ॥१॥

ऋ० श्रुतकक्षः । छ० अनुष्टुप् । दे० इन्द्रः । पान्त-

माव इति प्रथम खण्डे—तृचात्मके प्रथमे सूक्ते, प्रथमा। हे ऋत्विजः! "वः" युष्मदीयम् "अन्धसः" सोमलक्षणमन्नम् "आ पान्तम्" आभिमुख्येन पिवन्त पा पाने (भ्वा० प०); छान्दसः शपोलुक् (२, ४, ७३); 'सर्वे विधयश्छन्दसि विकल्प्यन्ते'—इति "न लोकाव्यय (२, ३, ६९)"—इति षष्ठी-प्रतिषेधाभावः; ततोऽन्धस इत्यस्य "कर्तृकर्मणोः (२, ३, ६५)"—इति षष्ठी। सोममाभिमुख्येन पिवन्तमेतादृशम् "इन्द्रम्" "अभि प्रगायत" प्रकर्षेण अभिष्टुत। कीदृशम्? "विश्वासाहं" सर्वेषां शत्रूणामभिभवितारं सर्वेषां भूतजातानां वा, अतएव "शतक्रतुं" बहुविधप्रज्ञानं बहुविधकर्माणं वा "चर्षणीनां" मनुष्याणां "मंहिष्ठं" धनस्य दातृतमम्। यद्वा, यजमानानां वहुव्यत्वेन पूजनीयमिन्द्रं प्रगायतेत्यर्थः॥ १॥

२   १ २   २ १   २ ३   २     १ २
पुरुहूतं पुरुष्टुतं गाथान्या३ं सनश्रुतम्।
   २ २   १ २
इन्द्र इति ब्रवीतन ॥*२*॥

अथ द्वितीया। हे ऋत्विग्यजमानाः! "पुरुहूतं" यज्ञेषु बहुभिराहूत "पुरुष्टुत" बहुभि स्तोत्रशस्त्रादिभिः स्तुतमत-एव "गाथान्य" गानयोग्य गातव्य "सनश्रुत" सनातनया प्रसिद्धम्, एवंविध देवम् "इन्द्र इति" यूयं "ब्रवीतन" ब्रुवीध्व 'ब्रूञ् व्यक्तायां वाचि (अदा० उ०)'—इत्यस्य लङि व्यत्ययेन (३, ४, ८८) थ्वमस्तनवादेशः, अतएव गुणः॥ २॥

२   १   २ १   २ १   २   २ १    २८    २ १
इन्द्र इन्नो महोनां दाता वाजानां नृतुः।

२ १ २ २ १ २
राधाए अभिद्युम्ना यमत् ॥*३*॥ [१]

अथ तृतीया। "इन्द्र इत्" पूर्वोक्तलक्षण इन्द्र एव "नः" अस्मभ्यं "मघोनां" मघोनां धनवतां पश्वादि-लक्षण-धन-युक्तानां "वाजानाम्" अन्नानां "दाता" भवतु। कीदृशः? "नृतुः" "नृतिगृध्योःक्नुः"—इति क्नुप्रत्ययः, छान्दसः सर्वस्य नर्त्तयिता; यद्वा, नृ नये, (क्र्या० स्वा० प०) औणादिक-तु-प्रत्ययः, धातोर्ह्रस्वश्छान्दसः स्तोतृभ्यो गवादिनेता; अतएव "महान्" स इन्द्रः "अभिद्यु" अभिगत-जातुकर्म अस्मभ्यम् "आ यमत्" आयच्छतु ददातु। यद्वा स इन्द्रः अभिद्यु अस्मदभिमुखमागच्छत धनं स्वहस्तयोः परिगृह्य अस्मान् नयतु,—धनं गृहीत्वा अस्मभ्यं ददात्वित्यर्थः॥

"मघोनाम्"-"मघोनाम्"—इति पाठौ॥ ३॥ [१]

१ २ १ २ २ १ २ २ १ १
प्र व इन्द्राय मादनए हर्यश्वाय गायत।

१ २ २ १ २
सखायः सोमपाव्ने ॥*१*॥

ऋ० वसिष्ठः। छ० त्रिष्टुप्। दे० इन्द्रः। अथ द्वितीय तृचे, प्रथमा। हे "सखायः!" स्तोतारः! "वः" यूयं "हर्यश्वाय" हरिनामकाश्वोपेताय "सोमपाव्ने" सोमाना पात्रे "मादनं" मदकरं हर्षकरं स्तोत्रं प्रगायत॥ १॥

१उ २ र २ १ २ २ २ २ १उ २ १ १
शएसेदुक्थए सुदानव उत द्युक्षं यथा नरः।

२ १ २ १ २
चकृमा सत्यराधसे ॥*२*॥

अथ द्वितीया। "उत" अपिच, हे स्तोतः! "सुदानवे" शोभन-दानाय "सत्यराधसे" सत्यधनायेन्द्राय "उक्थ" स्तोत्रं,

१ २ ३ १ २र ३ १ २ ३ २ ३ १ २
न घेमन्यदा पपन वज्रिन्नपसो नविष्टौ।
२उ ३ १ २
तवेदु स्तोमैश्चिकेत ॥४२॥

अथ द्वितीया। हे "वज्रिन्!" वज्रवन्निन्द्र! "अपसः" अपस्विनः कर्मवतः "तव" सम्बन्धिनि "नविष्टौ" अभिनवे यागे वर्त्तमानोऽहम् "अन्यत्" तद्विषयादन्यत् स्तोत्रं "नघेम्" नैव "आपपन" अभिष्टौमि पनतेः स्तुतिकर्म्मणः (भ्वा० आ०) उत्तमे णलि रूपम्; "तवेदु" तवैव "स्तोमैः स्तोम स्तोत्रं "चिकेत" अभिजानामि त्वामेव सर्वदा स्तौमीत्यर्थः॥ २॥

३ १ २ ३२ ३ १ ३ १ २र
इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति।
१ २ ३२ ३१२
यन्ति प्रमादमतन्द्राः ॥४३॥ [३]

अथ तृतीया। "सुन्वन्त" सोमाभिषवं कुर्वन्तं यजमानं "देवाः" इन्द्रादयः सर्वे "इच्छन्ति" रक्षितुम्, "स्वप्नाय न स्पृहयन्ति" स्वप्नावस्थान्तस्य सुन्वतो नेच्छन्ति सर्वदा प्रबुद्धमेव कुर्वन्तीत्यर्थः "स्पृहेरीप्सित. (१, ४, ३६)"—इति कर्म्मणि चतुर्थी; स्पृह ईप्सायां चुरादिरदन्तः। यतएव अतः कारणात् "अतन्द्राः" अनलसा देवाः "प्रमादं" प्रकर्षेण मदकरं तदीयं सोमं "यन्ति" शीघ्रं प्राप्नुवन्ति॥ ३॥ [३]

१ १ ३ १ २ ३१ २र २ १ २
इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः।
३ १ २ ३ १ २
अर्कमर्चन्तु कारवः ॥४४॥

ऋ० श्रुतकक्ष.। छ० गायत्री। दे० इन्द्रः। अथ

चतुर्थ्यर्थे, प्रथमा। "मद्यने" माद्यतेः (दि०, प०) क्वनिप् मदनशीलाय "इन्द्राय" तदर्थं "सुतं" अभिषुत सोमं "नः" अस्मदीयाः "गिरः" स्तुतिलक्षणा वाचः परिष्टोभन्तु स्तोभतिः स्तुतिकर्मा (निघ० ३, १४, ४) सोमं स्तुवन्तु। ततः "कारवः" स्तुतिकारिणः स्तोतारश्च "अर्कं" सर्वैरर्चनीयं सोमम् "अर्चन्तु" पूजयन्तु॥ १॥

२ ३   ३ २   २ ३   २ ३   १ २   ३ १ २   १ २
यस्मिन् विश्वा अधि श्रियो रणन्ति सप्त सꣳसदः।

१ २   ३ १ २
इन्द्रꣳ सुते हवामहे॥*२*॥

अथ द्वितीया। "यस्मिन्" इन्द्रे "विश्वाः" सर्वाः "श्रियः" कान्तयः "अधि" अधिकं भवन्ति अतिशयेन तेजस्वीत्यर्थः। किञ्च "सप्त" सप्तसङ्ख्याकाः "संसदः" सम्यग् यज्ञेषु कर्मपारणार्थं सीदन्तीति संसदो होत्रकाः यस्मिन् "रणन्ति" सोमप्रदानार्थं रमन्ते; यद्वा ये शब्दयन्ति स्तुवन्ति तं पूर्वोक्तलक्षणम् "इन्द्र" "सुते" सोमेऽभिषुते सति "हवामहे" वयं सोमपानायाह्वयामः॥ २॥

१ २   २ १ २   ३ १ २   ३ १ २
त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत।

१ २र   ३   १ २
तमिद्वर्धन्तु नो गिरः॥*३*॥ [४]

अथ तृतीया। "देवासः" देवाः इन्द्रादयः "त्रिकद्रुकेषु" आभिप्लविकेष्वहःसु ज्योतिर्गौरायुरिति त्रिकद्रुकाः, तेषु "चेतनं" चिती सञ्ज्ञाने (भ्वा०, प०) चेतन्ति जानन्ति अनेन स्वर्गादिकमिति चेतनो ज्ञानसाधनो यज्ञः तम् "अत्नत" अतन्वत

स्वैः स्वैः कर्मभिः पालनेव विस्तारितवन्तः तनु विस्तारे (तना०, उ०) लङि "बहुलं छन्दसि (२, ४, ७३)"—इति विकरणस्य लुक्, "तनिपत्योश्छन्दसि (६, ४, ९९)"—इति उपधालोपः "तमित्" तमेव यज्ञं "नः" अस्माकं "गिरः" स्तुतिलक्षणा वाचः "वर्धन्तु" वर्धयन्तु ॥ ३ ॥ [४]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

१ १ २ २ २ २ १ २ ३ १ २ ३ १ २
अयं त इन्द्र सोमो निपूतो अधि बर्हिषि ।
१ २ ३ २उ ३ १ २
एहीमस्य द्रवा पिब ॥॰१॰॥

ऋ० हरिमिठः । छ० गायत्री । दे० इन्द्रः । अथ द्वितीयखण्डस्य—प्रथम ऋचे, प्रथमा । हे "इन्द्र !" "ते" तुभ्यं त्वदर्थम् "अयं सोमः" "बर्हिषि अधि" वेद्यामास्तीर्णे दर्भे "निपूतः" नितरां दशापवित्रेण शोधितः अभिषवादिसंस्कारैः संस्कृत इत्यर्थः । "ईम्" इदानीम् "अस्य" इमं सोमं प्रति "एहि" आगच्छ । आगत्य च यत्र रसात्मकः सोमो हूयते तं देशं प्रति "द्रव" शीघ्रं गच्छ, तदनन्तरं सोमं "पिब" ॥ १ ॥

१ २ ३ १ २ ३ १ २र ३ १
शाचिगो शाचिपूजनायं रणाय ते सुतः ।
१ २ ३ १ २
आखण्डल प्र हूयसे ॥॰२॰॥

अथ द्वितीया । "शाचिगो" शाचयः शक्ता गावो यस्यासौ शाचिगुः; यद्वा, शच् व्यक्तायां वाचि (भ्वा०, आ०), अस्मादौणादिक इञ् प्रत्ययः शाचयः व्यक्ताः प्रख्याता गावो रश्मयो

पा यस्य तादृश ! हे "शाचिपूजन" ! पूज्यतेऽनेनेति पूजनम् स्तोत्रादि प्रख्यातपूजन ! "ते" तव "रणाय" रमणाय सुखजननाय "अयं" सोमः "सुतः" अभिषुतः ; अतः कारणात् हे आखण्डल" ! शत्रूणामाखण्डयितः ! इन्द्र ! "प्रह्वयसे" प्रशस्ताभिः स्तुतिभिराह्वयसे । इत आगत्य इमं सोमं पिबेत्यर्थः ॥ २ ॥

१२        २ १२        २ १ २

**यस्ते शृङ्गवृषो णपात्प्रणपात् कुण्डपाय्यः ।**

२र     २    १    २र

**न्यस्मिं दध्र आ मनः ॥१३४॥ [५]**

अथ तृतीया । हे "शृङ्गवृषोणपात्" ! शृङ्गवृषनामा कश्चित् ऋषिः तस्य चेन्द्रः स्वयमेव पुत्रतया जज्ञे—इत्याख्यायिका । नपादित्यपत्यनाम हे शृङ्गवृष-पुत्र ! शृणन्ति हिंसन्तीति शृङ्गाणिरश्मयः, तैर्वर्षतीति शृङ्गवृडादित्य, तस्य न पातयितः स्वकोयेऽवस्थानेऽवस्थापयितः ! । "सुबामन्त्रिते ( २, १, २ )" —इति षष्ठ्यन्तस्य पराङ्गवद्भावेनामन्त्रितानुप्रवेशात् समुदायस्याष्टमिक सर्वानुदात्तत्वम् । ईदृश ! हे इन्द्र ! "ते" तव सम्बन्धो "प्रणपात्" प्रकर्षेण न पातयिता रक्षिता, "कुण्डपाय्यः" कुण्डैः पीयते अस्मिन् सोम इति कुण्डपाय्यः क्रतुविशेषः । "क्रतौ कुण्डपाय्य सञ्चाय्यौ ( ३, १, १३० )"—इति पिबतेरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते—एतत्-सञ्ज्ञो यः क्रतुरस्ति , "अस्मिन्" कुण्डपाय्य-क्रतौ "मनः" स्वान्त "आ नि दध्रे" अभितो वर्त्तमानाः कुण्डपायिनामान ऋषयः पुरा निदधिरे सम्यक् त्वद्देवत्य क्रतुमनुष्ठितवन्त इत्यर्थः । दधातेर्लिटि "इरयोरे ( ६, ४, ७६ )"—इति रेभावः ॥ ३ ॥ [ ५ ]

२ १ १ २ २ २ १ २ २ १ १
अभि त्वा वृषभा सुते सुतꣳ सृजामि पीतये ।

२ १ १ २ १२
तृम्पा व्यश्नुही मदम् ॥ १ ॥

ऋ० विश्वोक्तः। छ० गायत्री। दे० इन्द्र। अथ तृतीयऋचे, प्रथमा। हे "वृषभ"। हे इन्द्र। "त्वा" त्वा "सुते" सोमेऽभिषुते सति "सुतम्" अभिषुत सोम "पीतये" पानाय "अभिसृजामि"। "तृम्प" तृप्य। "मद" मदकर सोम "व्यश्नुहि" च ॥ १ ॥

१ २ २ १ २ १ २ ३ २ ३ १ १ ३ १ २
मा त्वा मूरा अविष्यवो मोपहस्वान आ दभन् ।

१ २ १ २
माकीं ब्रह्मद्विष वनः ॥ २ ॥

अथ द्वितीया। हे इन्द्र। "त्वा" त्वा "मूरा" मूर्खा मूढा, मनुष्या "अविष्यव" पालनकामा "मा दभन्" मा हिंसन्तु। "उपहस्वान उपहसनपराश्च "मा" भवन्तु। "ब्रह्मद्विष" ब्राह्मणाना द्वेष्टार "मा की वन" मा भजेथा ॥ "ब्रह्मद्विष" "ब्रह्मद्विष"—इति पाठौ ॥२॥

१२ २ १ २ २ १ २ १ २
इह त्वा गोपरीणस महे मन्दन्तु राधसे ।

२ १ ३ १ २र
सरो गौरो यथा पिब ॥ ३ ॥ [७]

अथ तृतीया। हे इन्द्र। "त्वा" त्वाम् "इह" अस्मिन् यज्ञे "गोपरीणस गव्येन पयसा समिश्र सोम "महे" महते

"राधसे" धनाय "मन्दन्तु" मनुष्या मादयन्तु। त्वञ्च सोमं "यथा" "गौरः" मृगः "सरः" पिबति, तथा "पिब" ॥

"परीणस"-"परीणसा"—इति पाठौ ॥ २ ॥ [७]

२१ २ ३ २उ ३ २ ३ १२ ३ १२

इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम्।

१ २ ३ १ २ ३

अनाभयिन्ररिमा ते ॥*१॥

ऋ० मेधातिथि-प्रियमेधौ वा। छ० गायत्री। दे० इन्द्र। अथ चतुर्थखण्डे—प्रथमा। हे "वसो!" वासयितरिन्द्र! "इदं" पुरोवर्त्तमानं "सुतम्" अभिषुतम् "अन्धः" अन्न सोमलक्षणं "पिब"। यथा—"उदरं" "त्वदीयं" जठरं "सुपूर्णम्" अतिशयेन सम्पूर्णं भवति तथेत्यर्थः। हे "अनाभयिन्" आ समन्तात् बिभेति—इत्याभयी; बिभेतेरौणादिक इनिः; न आभयी अनाभयी तादृश! हे इन्द्र! "ते" तुभ्य त्वदर्थं "ररिम" उक्तलक्षणं सोम दद्म. रादाने (अदा०, प०) छान्दसो (३, २, १०५) लिट् ॥ १ ॥

१ २ ३ २ ३ २उ ३ १ २ ३ २ ३ २

नृभिर्धौतः सुतो अश्नैरव्या वारैः परिपूतः।

३ १ २ ३ २ ३ १ २

अश्वो न निक्तो नदीषु ॥*२॥

अथ द्वितीया। "नृभिः" अध्वरस्य नेतृभिः ऋत्विग्भिः "धौतः" तृणाद्यपनयनेन शोधितः यद्वा; धौतः धूतः आधूतः, पदाभ्यपहे आधूननेन संस्कृतः, तदनन्तरम् "अश्नैः" अश्मभिः ग्रावभिः करणभूतैः "सुतः" अध्वर्युभिष्टुतः ततः "अव्यावारैः" अविर्मेषः तत्सम्बन्धिभिः वालैः "परिपूतः" शोधितः, दशा-

पवित्रस्य नाभिपूततया ऊर्णास्तुकया हि सोमः परिपूयते ; तदुक्तं भगवता आपस्तम्बेन—"शक्लामूर्णास्तुकां यजमानाय प्रयच्छति तां शकटे दशापवित्रस्य नाभिं कुरुते शक्लश्च तस्याः पवित्रं मोतं भवति"—इति। "नदीषु" नदनाखप्सु "अश्वोन" अश्व इव "निक्तः" निर्णिक्तः शोधितः ; यथा अप्सु स्नातो अश्वः अपगतमलः सन् दीप्तो भवति, एवं वसतीवर्याख्याभिरद्भिरभिषुतः सोमो दीप्तो भवतीत्यर्थः। ईदृशो यः सोमः "तन्तेयवम्"—इत्युत्तरया सम्बन्धः ॥

"धौतः"—"धूतः"—इति पाठौ ॥ २ ॥

२ ३ १२ १२ १ २ ३ १२ ३ १ २
तं ते यवं यथा गोभिः स्वादुमकर्म्म श्रीणन्तः ।

१ २ ३ १ २ ३१ २
इन्द्र त्वास्मिंत्सधमादे ॥*२*॥ [८]

अथ तृतीया। "तं" पूर्वोक्तगुणं सोमं, हे इन्द्र! "ते" त्वदर्थं "यवं यथा" यवमयं सवनीय-पुरोडाशमिव "गोभिः" गवि भवैः क्षीरादिभिः श्रयणद्रव्यैः "श्रीणन्तः" मिश्रीकुर्वन्तः "स्वादु" रसवत्त्वेनास्वादनीयम् "अकर्म्म" अकार्ष्म करोतेर्लुङि "मन्त्रे घस (२, ४, ८०)"—इति च्लेर्लुक्। यस्मादेवं तस्मात्, हे "इन्द्र!" "त्वा" त्वां तादृशं सोमं पातुम् "अस्मिन्" वर्त्तमाने "सधमादे" सहमादने यज्ञे आह्वयामीति शेषः ॥३॥ [८

इति सामवेदार्थप्रकाशे उत्तरार्चिकस्य प्रथमस्याध्यायस्य द्वितीयः खण्डः ॥ १ ॥

---

३ १ २र ३ १ २
इदꣳ ह्यन्वोजसा सुतꣳ राधानां पते ।

१ २ ३ १ २
पिबा त्वा३स्य गिर्वणः ॥*१*॥

ऋ० विश्वामित्रः। छ० गायत्री। दे० इन्द्रः। अथ तृतीयखण्डे—प्रथमतृचे, प्रथमा। हे "राधानां पते!" धनानां स्वामिन्! "गिर्वणः" गीर्भिः स्तुतिभिः वननीय! हे इन्द्र! "ओजसा" बलेनावच्छिन्नः त्वम् "इदम् अनु" अनेनानुक्रमेण उद्देशानुक्रमेणेत्यर्थः; "सुतम्" अभिषुतम् "अस्य" इमं सोमं "तु" क्षिप्रं "पिबस्व" ॥ १ ॥

१ २ १ २ ३ १ २र ३ १ २र ३क २र
यस्ते अनु स्वधामसत्सुते नि यच्छ तन्वम्।

१ २
स त्वा ममत्तु सोम्य ॥*२*॥

अथ द्वितीया। हे इन्द्र! "ते" त्वदर्थं "यः" सोमः "स्वधाम्" अन्नम् "अनु" अनु लक्ष्य ग्रावभिः अभिषुतः "असत्" भवेत् अस्तेर्लेट्यडागमः। यद्वृत्तयोगान्न निघातः (८, १, ६६), आगमस्यानुदात्तत्वे धातुस्वरः (६, १, १६२)। "सुते" तस्मिन् सोमे "तन्वं" स्वकीयं शरीरं "नियच्छ" प्रेरय "सः" सोमः, हे "सोम्य!" सोमार्ह! "त्वा" त्वां "ममत्तु" मादयतु॥२

१ २ ३ २उ ३ १ २ ३ १ २
प्र ते अश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा शिरः।

२ ३ १ २ ३ १ २
प्र बाहू शूर राधसा ॥*३*॥ [६]

अथ तृतीया। हे "इन्द्र"! 'सः' सोमः "ते" तव "कुक्ष्योः" कुक्षिरुभयोः पार्श्वयोः "प्राश्नोतु" प्रकर्षेण व्याप्नोतु अशू व्याप्तौ स्वादिः (स्वा० पा०) लोटि व्यत्ययेन परस्मैपदम् (३, १, ८५) निघातः (८, १, ७०) तथा 'ब्रह्मणा' स्तोत्रेण सहितः स सोमः 'शिरः' शरीरम् अवयविना अवयवो लक्ष्यते त्वच्छरीर

प्राप्नोतु । हे "शूर" ! विक्रान्तेन्द्र ! "राधसा" धनेन निमित्तेन तव "वाह्नं" अपि प्राप्नोतु ॥

'राधसा'-'राधसः'—इति पाठौ ॥ ३ ॥ [८]

२उ  ३ १ २ ३ १ २ ३ १  २र

आ त्वेता नि षीदतेन्द्रमभि प्र गायत ।

१ २ ३ १ २

सखाय स्तोमवाहसः ॥*१४॥

ऋ० मधुच्छन्दाः । छ० गायत्री । दे० इन्द्रः । अथ द्वितीयदचे, प्रथमा। "तु" शब्दः क्षिप्रार्थो निपातः, ताभ्यां माङ्भ्याम् अन्वेतुम् इति शब्दोऽभ्यसनीयः । हे "सखायः !" ऋत्विजः ! क्षिप्रम् अस्मिन् कर्मणि आगच्छत आगच्छत आदरार्थोऽभ्यासः । आगत्य च 'निषीदत' उपविशत । उपविश्य च "इन्द्रम्" 'अभिप्रगायत' सर्वतः प्रकर्षेण स्तुत । कीदृशाः सखायः ? 'स्तोमवाहसः' विहृतवृद्ध्यादिस्तोमानस्मिन् कर्मणि वहन्ति प्रापयन्तीति ॥ "अर्त्ति-स्तु-सु-हु-सृ-धृ-क्षि-क्षु भा या-वा पदि यक्षि-नीभ्यो मन् (उ०, १, १३७)"—इति स्तौतेर्मन्-प्रत्ययान्तः स्तोमशब्दो नित्वादाद्युदात्तः (६, १, १९७) । स्तोमं वहन्तीति स्तोमवाहसः "वहि-हा-धाञ्-भ्यश्छन्दसि" इत्यसुन् प्रत्ययः, तत्र णिदित्यनुवृत्तेः "अत उपधायाः (७, २, ११६)"-इत्युपधाया वृद्धिः ; कृदुत्तरपदप्रकृतिस्वरत्वे (६, २, १३९) प्राप्ते "गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वञ्च (उ०, ४, २२६)"—इत्यौणादिकसूत्रात् समास आद्युदात्तः ॥ १ ॥

१ १२ २ १ २र३ १ २

पुरूतमं पुरूणामीशानं वार्याणाम् ।

२ ३ १ २ ३ १ ३ २
इन्द्रꣳ सोमे सचा सुते ॥*२*॥

अथ द्वितीया। सखायोऽभिप्रगायतेति पदद्वयमत्रानुवर्त्तते। हे "सखायः"। ऋत्विजः! "सचा" यूयं सर्वे सह यद्वा सचा परस्परसमवायेन "सुते" अभिषुते सोमे प्रवृत्ते सति "इन्द्रम्" अभिप्रगायत। कीदृशमिन्द्रम्? "पुरूतमं" पुरून् बहून् शत्रून् तमयति ग्लापयतीति पुरूतमः। तमु ग्लानौ (दि०,प०)—इति धातोर्ण्यन्तात् पचाद्यचि चित्वादन्तोदात्तेऽपि (६,१,१६३) सदुत्तरपदप्रकृतिस्वरं (६, २, १३९) बाधित्वा "परादिश्छन्दसि बहुलम् (६, २, १९९)"—इत्युत्तरपदाद्युदात्तत्वम्, "पुरूणां" बहूनां "वार्याणां" वरणीयानां धनानाम् "ईशानं" स्वामिनम् ॥ २ ॥

२ ३ १ २ ३ १ २ ३ १ ३ १ २र
स घा नो योग आ भुवत्स राये स पुरन्ध्या।

१ २ १ २ ३ १ २र
गमद्वाजेभिरा स नः ॥*३*॥ [१०]

अथ तृतीया। घ-शब्दोऽवधारणार्थो निपातः, सर्वैस्तच्छब्दैः सम्बध्यते। "स घ" स एवेन्द्रः पूर्वमन्त्रोक्तगुणविशिष्टः "नः" अस्माकं "योगे" पूर्वमप्राप्तपुरुषार्थस्य सम्बन्धे "आ भुवत्" आभिमुख्येन भवतु, पुरुषार्थं साधयत्वित्यर्थः। भवतेराशीर्लिङि परतो "लिङ्याशिष्यङ् (४, १, ८६)"—इत्यङ् प्रत्ययः, तस्य ङित्त्वेन गुणाभावात् उवङादेशः। स एव "राये" धनार्थम् "आभुवत्" आभवतु; "पुरन्ध्या" योषिता भवतु। यद्वा, बहुविधायां बुद्धावाभुवत् "पुरन्धिर्बहुधीः"—इति यास्कः (६, १३) स एव "वाजेभिः" दत्तैः अन्नैः सह "नः" अस्मान्

"आगमत्" आगच्छतु गमेर्लेट् तिप्, "इतश्च लोपः परस्मैपदेषु (३, ४, ९७)"—इति इकार-लोपः, "बहुलं छन्दसि (२, ४, ७३)"—इति शपोलुक् "लेटोडाटौ (३, ४, ९४)"—इत्यडागमः आगमा अनुदात्ताः इति तस्यानुदात्तत्वे धातु-स्वरएव (६, १, ११२) शिष्यते ॥ ३ ॥ [१०]

१ २      १ १ २ ३ १ २
योगेयोगे तवस्तरं वाजेवाजे हवामहे ।

१ २ १   १ २ १ १ २
सखाय इन्द्रमूतये ॥*१*॥

ऋ० शुनःशेपः । छ० गायत्री । दे० इन्द्रः । अथ तृतीय-तृचे, प्रथमा । "योगेयोगे" प्रवेशे प्रवेशे तत्तत्कर्मोपक्रमे युजिर् योगे (रु०, उ०) "हलश्च (३, ३, १२१)"—इति घञ्, "चजोः कुघिण्यतोः (७, ३, ५२)"—इति कुत्वम्, घञोञित्वादाद्युदात्तत्वम् (६, २, १९७), "नित्यवीप्सयोः (८, १, ॥)"—इति वीप्सायां द्विर्भावे सति, आम्रेडितानुदात्तम् (८, १, ३) "वाजेवाजे" कर्मविघातिनि तस्मिन् सङ्गामे "तवस्तरम्" अतिशयेन बलिनम् "इन्द्रम्" "ऊतये" रक्षार्थं "सखाय." सखिवत् प्रियाः वयं "हवामहे" आह्वयामः ॥ १ ॥

१ २ ३ १    ३२    ३ १ २   ३ १   ३२
अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् ।

३ १ १ २   ३ १   ३ १
यं ते पूर्वं पिता हुवे ॥*२*॥

अथ द्वितीया । "प्रत्नस्य" पुरातनस्य "ओकसः" स्थानस्य स्वर्गरूपस्य सकाशात् "तुवि प्रति" बहून् यजमानान् प्रति-

गन्तारम् अत्र प्रतिशब्दो भीमसेनो भीम इतिवत् प्रतिगन्तृशब्दं लक्षयित्वा तद्द्वारा तदर्थं लक्षयति, अतः प्रतिः प्रतिनिधिप्रतिदानयोरितिवत् सत्ववचनत्वेनानिपातत्वादनव्ययत्वे "पूरणगुणेत्यादिना ( २, २, ११ ) न षष्ठी-समास-निषेधः। "नरं" पुरुषमिन्द्रम् "अनुहुवे" अनुक्रमेण कर्मस्वाह्वयामि ह्वेञो लिटि "बहुलं छन्दसि ( ६, १, ३४ )"—इति पूर्ववत्। सम्प्रसारण-पर-पूर्वत्वे द्विर्वचन-प्रकरणे "छन्दसि वा ( ६, १, १ वा० )"—इति वक्तव्यमिति द्विर्वचनाभावः। "यद्वृत्तयोगादनिघातः ( ८, १, ६६ )। "यं" "ते" त्वामिन्द्रं "पिता" अस्मदीयो जनकः "पूर्वं" पुरा स्वकीयानुष्ठानकाले "हुवे" आहूतवान्, तमाह्वयामीति पूर्वत्रान्वयः॥ २॥

१ २ २ ३ ३ १ २ ३ १ २ ३ १ २
आ घा गमद्यदि श्रवत्सहस्त्रिणीभिरूतिभिः।

१ २ ३ १ २ २ १ २
वाजेभिरुप नो हवम्॥*३*॥ [११]

अथ तृतीया। "यदि श्रवत्" यद्ययमिन्द्रो "नः" अस्मदीयं "हवम्" आह्वानं शृणुयात्, तदानीं स्वयमेव "सहस्त्रिणीभिः ऊतिभिः" बह्वीभिः पालनैः "वाजेभिः" अन्नैश्च "उप" समीपे "आ घ" अवश्यम् "आगमत्" आगच्छेत्॥ ३॥ [११]

१ ३ १ २ ३ १ २ १ २ १ २ ३ २क १र
इन्द्र सुतेषु सोमेषु क्रतुं पुनीय उक्थ्यम्।

२ ३ १ २ ३ १ २ ३ १
विदे वृधस्य दक्षस्य महाँ हि षः॥*१०॥

ऋ० नारदः। छ० उष्णिक्। दे० इन्द्रः। अथ चतुर्थ्यां प्रथमा। "सोमेषु" "सुतेषु" अभिषुतेषु सत्सु हे "इन्द्र!" त्वं

तान् पीत्वा "क्रतुं" कर्म्मणां कर्त्तारम् "उक्थ्यं" स्तोतारञ्च "पुनीषे" शोधयसि। यद्वा सोमेष्वभिषुतेषु उक्थ्याख्यं "क्रतुं" यागं तैः सोमैः पुनीषे यजमानैः पूतं कारयसि। किमर्थम्? "वृधस्य" वर्द्धकस्य "दक्षस्य" बलस्य "विदे" लाभाय "सः" तादृशस्त्वं "महान्" "हि" खलु; अतएवं कर्त्तुं शक्नोषीत्यर्थः।

"इन्द्रसुतेषु"-"इन्द्र सुतेषु"—इति, "पुनीषे"-"पुनीते"—इति, "दक्षस्य महाएँह्वियः"—"दक्षसो महान्ह्वियः"—इति च पाठौ ॥ १ ॥

१ २३१ २    २ २ ३    १२   ३२
स प्रथमे व्योमनि देवानाᳬ सदने वृधः।
३   २   ३१२    ३   १२३ २
सुपारः सुश्रवस्तमः समप्सुजित् ॥*२*॥

अथ द्वितीया। "सः" इन्द्रः "प्रथमे" प्रथिते विस्तीर्णे सुख्ये वा "व्योमनि" विशेषेण रक्षके च "देवानां" "सदने" सीदन्त्यस्मिन्निति सदनं स्थानं स्वर्गाख्यं तत्र स्थितः सन् "वृधः" यजमानानां वर्द्धयिता च भवति। तथा "सुपारः" सुष्ठु पारयिता प्रारब्धस्य सम्यक् परिसमापयिता "सुश्रवस्तमः" अतिशयेन शोभनं श्रवोऽन्नं यशोवा यस्य स तथोक्तः, "समप्सुजित्" सम्यक् अप्सूदकेषु प्राप्येषु सत्सु यत् तद्विघातिनो वृत्रादेर्जेता; यद्वा, अप इत्यन्तरिक्षनाम (निघ० १, ३, ८) अन्तरिक्षे वर्त्तमानानामसुराणां जेता तमु हुवे इत्युत्तरत्र सम्बन्धः ॥ २ ॥

१२   ३ १ २    ३ २३ १२   ३ १ २
तमु हुवे वाजसातय इन्द्रं भराय शुष्मिणम्।
१ २    ३१   २२ ३ १ २   ३२
भवा नः सुम्ने अन्तमः सखा वृधे ॥*३*॥ [१२]

अथ तृतीया। "तम्" पूर्वोक्तगुणमेव "शुष्मिणं" बलवन्तम् "इन्द्रं" 'वाजसातये' बलानामन्नानां वा सातिर्लाभो यस्मिन् तादृशाय "भराय" संग्रामाय ; यद्वा, भ्रियन्ते तस्मिन् हवींषीति भरो यज्ञः, प्रायेण संग्रामनामानि यज्ञनामत्वेन व्याख्यायन्ते भराय यज्ञार्थं "हुवे" आह्वयामि। हे इन्द्र! त्वं "सुम्ने" सुखे धने वा निमित्ते सति "नः" अस्माकम् "अन्तमः" अन्तिकतमः सन्निकृष्टतमो भव तमेतादेरेति अन्तिकशब्दस्य तादि लोपः ; "वृधे" वर्द्धनाय च "सखा" समानख्यानो मित्रभूतो भव॥

तमुहुवे"—"तमुह्वे—इति पाठौ॥ ३॥[१२]

इति सामवेदार्थ प्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य तृतीयः खण्डः।

---

१ २ १ २ १ २ ३१ २ १ २३ २ १ २
एना वो अग्निं नमसोर्जो नपातमा हुवे।
१ २ ३२ ३ १ २ १ २ ३२ ३ २ ३ २ ३ १
प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतमम्मृतम्
॥१॥

ऋ० वसिष्ठः। छ० बृहती। दे० अग्निः। अथ चतुर्थे खण्डे, प्रगाथरूपे—प्रथमसूक्ते, प्रथमा। "ऊर्जः" बलस्य "नपातं" नपादित्यपत्यनाम (निघ० २, २, १३) पुत्रं 'प्रियम्' अस्माकम् "चेतिष्ठम्" अतिशयेन ज्ञातारं प्रज्ञापकं वा 'अरतिं' गन्तारं स्वामिनं वा "स्वध्वरं" शोभन-यज्ञं "विश्वस्य" सर्वस्य यजमानस्य "दूतम्" "अमृतं" नित्यम् "अग्निम्" "एना" एतेन "नमसा" स्तोत्रेण हे ऋत्विग्यजमानाः! "वः" युष्मदर्थम् "आहुवे" आह्वयामि॥१॥

१ २ ३ २ ३ १ २ ३ १ २ ३क २र
स योजते अरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः।
३ १ २ ३ २ ३ २ ३ १ २ ३ २उ ३ १ २
सुब्रह्मा यज्ञः सुशमी वसूनां देवꣳ राधो जनानाम्
॥*२*॥ [१३]

अथ द्वितीया। "सः" अग्निः "अरुषा" आरोचमानौ "विश्वभोजसा" विश्वस्य पालयितारावश्वौ "योजते" स्वकीये रथे "युनक्तु" यद्वा, "विश्वभोजसा" विश्वस्य रक्षकेण "अरुषा" आरोचमानेन तेजसा "योजते" अयुज्यत। तदनन्तरं यः अग्निः "स्वाहुतः" स्तोतृभिः सुष्ठु आहुतः सन् "दुद्रवत्" आनेतुं देवान् प्रति भृशं द्रवतु गच्छतु। कीदृशः? सुब्रह्मा शोभनस्तुतिकः शोभनान्नोवा "यज्ञः" यष्टव्यः "सुशमी" शोभनकर्मा च भवति; ततः "वसूनां" वासकानां "जनानां" यजमानानां सम्बन्धि "राधः" हविर्लक्षणं धनं "देव" द्योतमानमग्निम्प्रति गच्छत्विति शेषः॥ २ ॥ [१३]

१ २ ३ २ ३ १ २ ३ २ ३ १ २
प्रत्यु अदर्श्यायत्यू३च्छन्ती दुहिता दिवः।
३ १ ३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी
॥*१*॥

ऋ० वसिष्ठः। छ० वृहती। दे० उषाः। अथ द्वितीयप्रगाथे—प्रथमा। "आयती" आगच्छती "उच्छन्ती" तमांसि विवासयन्ती वर्जयन्ती "दिवः" द्युलोकस्य सूर्यस्य वा "दुहिता" पुत्री, एवम्भूता उषाः "प्रति अदर्शि" सर्वैः प्रति दृश्यते; "उ"—इति पूरणः; सैषा "मही" महत् "तमः"

नैशमन्धकारं "चक्षुषा" दर्शनेन "अप उ"—इति निपातद्वय; समुदायः अपेत्यस्यार्थे "हणुते" निवारयति। एवं कृत्वा "सूनरी" जनानां सुष्ठु नेत्री उषाः "ज्योतिः" प्रकाशं "कृणोति" करोति ॥

"वृणुतेचक्षुषा"-"व्ययतिचक्षुषे"—इति पाठौ ॥१॥

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
उदुस्रियाः सृजते सूर्य्यः सचा उद्यन्नक्षत्रमर्चिवत्।
१ २र ३ २ ३ १ ३ १ २ ३ २ ३ १ २
तवेदुषो व्युषि सूर्य्यस्य च सं भक्तेन गमेमहि
॥*२*॥ [१४]

अथ द्वितीया। "सूर्य्यः" सर्वस्य प्रेरकः आदित्यः "उस्रियाः" रश्मीन् "सचा" सह युगपदेव "उत्सृजते" उद्गमयति। तथा "उद्यत्" उद्गच्छत् प्रादुर्भवन् "नक्षत्र" नभसि दृश्यमानं यद् नक्षत्रादिकम् "अर्चिवत्" दीप्तिमत् करोति ; "सौरेण तेजसा हि नक्षत्रचन्द्रप्रभृतीन्यपि नक्षत्राणि भासन्ते", "सुषुम्नः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वः"—इति हि निगमान्तरम्। एवञ्च सति हे "उषः"। उषोदेवते। "तव" "सूर्य्यस्य" च "व्युषि" विवासने प्रकाशने सति "भक्तेन" अन्नेन "सङ्गमेमहि" वयं गच्छेमहि। "इत्" शब्दः पूरकः॥ २ ॥ [१४]

२ १ २ ३ १ २ ३ १ २
इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना।
३१ २ ३१ २ ३ १ २ ३ १ २र
अयं वामह्वे ऽवसे शचीवसू विशंविशꣳ हि गच्छथः
॥*१*॥

ऋ० वसिष्ठः । छ० बृहती । दे० अश्विद्वयः । अथ तृतीये प्रगाथे—प्रथमा । "इमा:" "दिविष्टय:" दिवमिच्छन्त्यः प्रजा ऋत्विजोऽपि "उ"—इति चार्थे ; हे "अश्विना !" "उस्रा" उस्रौ वासकौ 'वां' "हवन्ते" आह्वयन्ति "अयं" स्तोतापि हे "शचीवसो" ! कर्मधन ! "वां" युवाम् "अवसे" अस्मद्रक्षणाय युवयोस्तर्पणाय वा "अह्वे" आह्वयामि । किमर्थम् ? एवं प्रजा अपि, अयमपीत्यादरोक्तिरिति "विशं विशं हि गच्छथः" सर्वाः स्तुतिकर्त्रीः प्रजाः प्रति युवां गच्छतः खलु, तस्मादेवमुच्यते इति ॥ १ ॥

२१ २ २ २ १ १ २ २ १ २ २ १ १
युवं चित्रं दद्युर्भोजनं नरा चोदेथाᳬ सूनृतावते ।
१ २७ २ १ १ २ १ २ २ १ २ २ १ २८
अर्वाग्रथᳬ समनसा नि यच्छतं पिबतᳬ सोम्यं मधु
॥*२*॥ [१५]

अथ द्वितीया । हे "नरा" ! नेतारावश्विनौ ! "युवं" युवां "चित्रं" चायनीयं "भोजनं" धनं "दद्युः" धारयेथे, तद्धनं "सूनृतावते" स्तुतिमते स्तोत्रे "चोदेथां" प्रेरयतम्, तदर्थं "समनसा" समानमनस्कौ सन्तौ "रथं" युवयोः सम्बन्धिनम् "अर्वाग्" अस्मदभिमुखं "नियच्छत" नियमतम्, तथा कृत्वा "सोम्यं" सोमसम्बन्धिनं "मधु" मधुरसञ्च "पिबतम्" ॥ २ ॥ [१५]

इति सामवेदार्थप्रकाशे उत्तराचिकस्य द्वितीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

२ १ २ ३ २ २ १ २ १ २ १ २ १
अस्य प्रत्नामनु द्युतᳬ शुक्रं दुदुह्रे अह्रयः ।

१ २ १ २ ३१
पयः सहस्रसामृषिम् ॥*१॥

ऋ०' प्रयसारः। छ० गायत्री। दे० सोमः। अथ प्रथम-खण्डे—अस्य प्रत्नेति नवर्चसूक्ते, प्रथमा। "अस्य" सोमस्य "प्रत्नां" पुरातनां "द्युत" द्योतमानां तनुम् "अनु" "शुक्रं" दीप्तं "सहस्रसाम्" अभिलषितस्य अपरिमितस्य फलस्य दातारम् "ऋषिम्" अतीन्द्रियकर्मफलद्रष्टारं "पयः" पातव्यम् "अदुह्यः" यावयः "दुह्रे" दुहन्ति ॥ १ ॥

१ २ ३२ ३१२१ ३१
अयꣳ सूर्य्य इवोपदृगयꣳ सराꣳसि धावति।
१२ ३१२ १ ३१
सप्त प्रवत आ दिवम् ॥*२*॥

अथ द्वितीया। "अयं" सोमः "सूर्य्य इव" यथा सूर्य्य सर्वस्य लोकस्य उपद्रष्टा, तथा कर्मणाम् "उपदृक्" उपद्रष्टा; अपि च "अयं" सोमः "सरांसि" त्रिंशत् उक्थ्यपात्राणि—इति केचिद् वदन्ति, अपरे तु त्रिंशदहोरात्राणि सरांसीति, तानि "धावति" प्रतिगच्छति तथाच यास्कः—"तत्रैतद् याज्ञिका वेदयन्ते त्रिंशदुक्थपात्राणि, माध्यन्दिने सवने एक-देवतानि, तानि एतस्मिन् काले एकेन प्रतिधानेन पिबन्ति, तान्यत्र सरांस्युच्यन्ते—त्रिंशदपरपक्षस्य अहोरात्राः त्रिंशत् पूर्वपक्षस्येति नैरुक्ताः (५, ११) इति। अपि च अयं सोमः "दिवम्" अधिकृत्य "सप्त प्रवत" सप्त नदीरातिष्ठति ॥ २ ॥

२ १ ३२ १ २ ३२ ३ १ २
अयं विश्वानि तिष्ठति पुनानो भुवनोपरि।

१ २ ३ १ २र
सोमो देवो न सूर्य्यः ॥*३*॥ [१६]

अथ तृतीया। "पुनानः" पूयमानः "अयं" "सोमः" "विश्वानि" सर्वाणि "भुवना" भुवनानि सर्वेषां भुवनानाम् "उपरि" "तिष्ठति"। तत्र दृष्टान्तमाह—"देवो न सूर्य्यः" यथा सूर्य्यो देवः सर्वेषां भुवनानाम् उपरि तिष्ठति तद्वत् अयं सोमोऽपीत्यर्थः ॥ ३ ॥ [१६]

१२ १२३ १ २ १ २ ३१२ १०
एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः।

१ २ ३ १ २
हरिः पवित्रे अर्षति ॥*१*॥

ऋ० शुनःशेपः। छ० गायत्री। दे० सोमः। अथ चतुर्थी। "हरिः" हरितवर्णः "देवः" द्योतमानः "एषः" सोमः "प्रत्नेन" पुराणेन "जन्मना" जननेन "देवेभ्यः" देवार्थं "सुतः" अभिषुतः सन् "पवित्रे" "अर्षति" आरोचते ॥ ४ ॥

१२ १२३ १ २ १२ ३२३ १ २
एष प्रत्नेन मन्मना देवो देवेभ्यस्परि।

३ १ २र
कविर्विप्रेण वावृधे ॥*२*॥

अथ पञ्चमी। "प्रत्नेन" पुराणेन "मन्मना" साधनेन स्तोत्रेण युक्त इति शेषः। "देवः" द्योतमानः "एषः" सोमः "देवेभ्यः" देवार्थं "कविः" मेधावी सन् "विप्रेण" मेधाविना यजमानेन ऋत्विजा "परिवावृधे" परिवर्द्धते ॥ ५ ॥

१ २ ३ १ २र ३ २ ३ १ २
दुहानः प्रत्नमित्पयः पवित्रे परिषिच्यसे।

१ २ ३ १ २
क्रन्दं देवाꣳ अजीजनः ॥*३*॥ [१७]

अथ षष्ठी। "प्रत्नमित्" पुराणमेव "पयः" रसं "दुहानः" हे सोम! पवित्रे परिषिच्यसे। हे सोम! त्वं "क्रन्दन्" शब्दं कुर्वन् "देवान्" इन्द्रादीन् "अजीजनः" स्वसमीपे जनयति। यत्र सोमोऽभिषुते तत्र देवा नियतं प्रादुर्भवन्तीत्यर्थः॥

"अजीजनः"-"अजीजनत्"—इति पाठौ॥ ६॥ [१७]

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
उप शिक्षापतस्थुषो भियसमा धेहि शत्रवे।

१ २ ३ १ २ ३
पवमान विदा रयिम् ॥*१*॥

ऋ० असितः देवलो वा। छ० गायत्री। दे० सोमः। अथ सप्तमी। हे "पवमान!" सोम! "उपशिक्ष" त्वं समीपे कुरु। कान्? "उपतस्थुषः" उपक्रम्य स्थितानस्मदभिमतानित्यर्थः। "शत्रवे" शत्रुषु अस्मद्विरोधिषु "भियसं" भयम् "आधेहि" कुरु जय। किञ्च तेषां शत्रूणां "रयिं" धनं "विदाः" अस्मभ्यं विन्ति देहीत्यर्थः॥ ७॥

१ २ ३ २ ३ १ २ ३ २ १ २ ३ १ २ ३ २र
उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम्।

१ २ ३ १ २
इन्दुं देवा अयासिषुः ॥*२*॥

अथ अष्टमी-नवम्योर्ऋचोः प्रतीकमेवमाम्नातम्—"उपपु जातमप्तुरम्"—इति, "उपास्मैगायतानरः"—इति च॥

तत्राष्टमी प्रदेशान्तरे आम्नाता—"जातं" सम्यक् प्रादु

भूतम् "अप्सुरम्" वसतीवरीभिः अद्भिः प्रेरितं "भक्षं" भक्षणां भक्षकं "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतं संस्कृतम् "इन्दुं" सोमं "देवाः" इन्द्रादयः "उप उ"—इति निपातद्वयसमुदायः उपेत्यस्यार्थे वर्त्तते सुष्ठु "उप अयासिषुः" उपागच्छन्ति ॥ ८ ॥

१ २ २ १२ ३ १ २
उपास्मै गायता नरः पवमानायेन्दवे ।
३ २ ३ १ २र
अभि देवाꣳ इयक्षते ॥*३*॥ [१८]

नवमीत्वेव मन्त्रवाम्नाता—हे "नरः" ! नेतारः ! यज्ञस्य "देवान्" इन्द्रादीन् "अभि इयक्षते" आभिमुख्येन यष्टुमिच्छते यजमानाय क्षरते "अस्मै" अभिपूयमाणाय "इन्दवे" सोमाय "उपगायत" उपगानं कुरुत ॥ ८ ॥ [१८]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य पञ्चमः खण्डः ।

---

१ २र ३ १ २ १ २ ३ १ २
प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः ।
१ २ ३ १ २
वनानि महिषा इव ॥*१*॥

ऋ० आस्यः त्रितो वा । छ० गायत्री । दे० सोमः । षष्ठे खण्डे—प्रथमतृचे, प्रथमा । "विपश्चितः" मेधाविनः "ऊर्मयः" प्रवृद्धाः "सोमासः" सोमाः "अपः" वसतीवर्याख्याः "प्र नयन्ते" प्राप्नुवन्ति । तत्र दृष्टान्तः—"वनानि महिषा इव" यथा प्रवृद्धा मृगा वनानि प्राप्नुवन्ति तद्वत् ॥

"अपोनयन्ते"-"अपो नयन्ति"—इति पाठौ ॥ १ ॥

२ १ १२ २ १ २ २ १ २ १२ ३ १ २
अभि द्रोणानि बभ्रवः शुक्रा ऋतस्य धारया ।

२ ३ १ २
वाजं गोमन्तमचरन् ॥*२*॥

अथ द्वितीया। "अभि" चरन्तीति शेषः अभि शब्दश्रुतेः कथित-क्रियाध्याहारः। किं प्रति ? "द्रोणानि" द्रोणकलशान् यद्यपि द्रोणकलश एकएव तथापि तत्प्राधान्यादितराण्यपि पात्राणि द्रोणानीत्युच्यन्ते। अथवा एकस्मिन्नेव पूजार्थं बहुवचनम्। के "बभ्रवः" बभ्रुवर्णाः सोमाः "शुक्राः" दीप्ताः। केन प्रकारेण ? "ऋतस्य" अमृतस्य "धारया" धाराकारेण। किञ्च "वाजम्" अन्नं, "गोमन्त" बहुगोयुतम् "अचरन्" चरन्ति। अथवैकमेव वाक्यम्।—उक्तविधाः सोमाः द्रोणानि प्रति अचरन् धारया। किं कुर्वन्तः ? गोमन्तं वाजं प्रयच्छन्त इत्यर्थः। कस्मै प्रयोजनाय ? ॥ २ ॥

१ २ १२ १ २ ३ १ २ ३ १ २
सुता इन्द्राय वायवे वरुणाय मरुद्भ्यः ।

१ २ ३ १ २
सोमा अर्षन्तु विष्णवे ॥*३*॥ [१८]

अथ तृतीया। "सुताः" अभिषुताः सोमाः इन्द्रादिदेवार्थम् "अर्षन्तु" गच्छन्तु ॥

"अर्षन्तु"-"अर्षन्ति"—इति पाठौ ॥ ३ ॥ [१८]

१ २ ३ १ २ ३ १ २ ३ २ ३ | १ २
प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।

१ २ ३१ २ ३ १२ ३ १ २ १ २ ३ १ २
अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम्
॥*१*॥

ऋ० विश्वामित्रः। छ० वृहती। दे० सोमः। अथ प्रगाथात्मके—द्वितीयसूक्ते, प्रथमा। हे "सोम!" त्वं "देववीतये" देवानां पानाय तदर्थम् "अर्णसा" वसतीवर्य्याख्येन "प्रपिप्ये" प्रप्यायसे। तत्र दृष्टान्तः—"सिन्धुः न" यथा सिन्धुः उदकेन प्रपिप्ये प्राप्यायते तद्वत् प्यायतेर्लिटि "लिङ्यङोश्च (६, १, २९)"—इति पी भाव., स त्वं "मदिरो न" मदकर सुरादिरिव "जागृविः" जागरणशीलः। यद्वा, नेति सम्प्रत्यर्थे। इदानीं मदकरो जागरणशीलस्त्वम्। "अंशोः" लताखण्डस्य "पयसा" रसेन "मधुश्चुत" मधुर रसस्य चारयितारं "कोशं" दोणकलशम् "अच्छ" अभि गच्छसि॥ १॥

१　२३१२　　२र३ १ २　　　२ १　१ २　　१र
आ हर्यतो अर्जुनो अत्के अव्यत प्रियः सूनुर्न मर्ज्यः।
१ २　　　　२ ३ १ २ ३　३ २ ३ १　　　१र
तमीं॑ हिन्वन्त्यपसो यथा रथं नदीष्वा गभस्त्योः

॥*२*॥ [२०]

अथ द्वितीया। "हर्यतः" स्पृहणीयः "प्रियः" प्रीणयिता "सूनुर्न" सूनुरिव "मर्ज्यः" मार्जनीयः "अर्जुनः" श्वेतवर्णः सोमः "अत्के" रूपे विचित्रे "आ अव्यत" आवृणोति "तम्" "ईम्" एन सोमम् अङ्गुलयः "नदीषु" नदमानासु वसतीवरीषु "गभस्त्योः" बाह्वोः "आ" आभिमुख्येन "हिन्वन्ति" प्रेरयन्ति। तत्र दृष्टान्तः—"अपसः यथा" वेगवन्तः शूराः जनाः "रथं" सङ्ग्रामेषु प्रेरयन्ति तद्वत्॥

"अर्जुनः"-"अर्जुनेः"—इति पाठौ॥ २॥ [२०]

१　　१र　　　२ १ २ , १ २　　　२ १ २
प्र सोमासो मदच्युतः श्रवसे नो मघोनाम्।

२ १ २ १ १
सुता विदथे अक्रमुः ॥*१*॥

ऋ० श्यावाश्वः। छ० गायत्री। दे० सोमः। अथ तृतीयतृचे, प्रथमा। "सोमासः" सोमाः "मदच्युत" मदस्राविणः "सुताः" अभिषुताः सन्तः "विदथे" यज्ञे "मघोना" हविष्मतां "नः" अस्माकं "श्रवसे" अन्नाय कीर्त्तये वा "प्र अक्रमुः" प्र गच्छन्ति ॥

."मघोनां"-"मघोनः"—इति पाठौ ॥ १ ॥

१ २ २ १ २र १ १ १र २ १
आदीᳯहᳯसो यथा गणं विश्वस्यावीवशन्मतिम्।

२ ३ १ २र
अत्यो न गोभिरज्यते ॥*२*॥

अथ द्वितीया। "आत्" अपिच "ईम्" अयं सोमः "हंसो यथा" "गणं" जनसङ्घं स्वगतिविशेषेण स्वनेन वा प्रविशति, तद्वत् "विश्वस्य" सर्वस्य स्तोतृजनस्य "मतिं" स्तुतिं बुद्धिं वा "अवीवशत्" वशं नयति; स च सोमः "अत्यो न" अश्व इव "गोभिः" गव्यैरुदकैर्वा "अज्यते" सिच्यते स्निग्धीक्रियते ॥ २ ॥

१ २ २ १ २ १ २ २ १ २ २ १ २
आदीं त्रितस्य योषणो हरिᳯ हिन्वन्त्यद्रिभिः।

२ ३ १ २ २ १ २
इन्दुमिन्द्राय पीतये ॥*३*॥ [२१][2]

अथ तृतीया। "आत्" अपिच "ईम्" एनं "हरिं" हरितवर्णम् "इन्दुम्" सोमं "त्रितस्य" ऋषेः "योषणः" अङ्गुलयः "अद्रिभिः" ग्रावभिः "हिन्वन्ति"। किमर्थम्? इन्द्राय इन्द्रस्य "पीतये" पानार्थम् ॥ ३ ॥ [२१]

२ १ २ २ १ २र २ १ २ १ २ २ १ १
अया पवस्व देवयु रेभन्पवित्रं पर्य्येषि विश्वतः ।

२ ३ १ २
मधोर्धारा असृक्षत ॥*१*॥

ऋ० अग्निः । छ० उष्णिक् । दे० सोमः । अथैकर्चे चतुर्थसूक्ते—प्रथमा । हे सोम ! "देवयुः" देवान् कामयमानः त्वम् "अया" अनया धारया "पवस्व" क्षर । ततः "रेभन्" शब्दायमानः "पवित्रं" "विश्वतः" "पर्य्येषि" परिगच्छसि । अनन्तरं "मधोः" मदकरस्य तव "धाराः" आत्मीयाः "असृक्षत" सृज्यन्ते ॥

अत्र द्वितीय तृतीय पादौ व्यत्ययेन पाठौ ॥ १ ॥

१ २ ३ १ ३ १ २ १ २ ३ १ २
पवते हर्य्यतो हरिरति ह्वराᳫंसि रᳫंह्या ।

२क ११ १ १ १ २ १ २ १ २
अभ्यर्ष स्तोतृभ्यो वीरवद्यशः ॥*२*॥

अथैकर्चे पञ्चमे—प्रथमा । "हर्य्यतः" स्पृहणीयः "हरिः" हरितवर्णः सोमः "रᳫंह्या" तृतीयाया आकारः साधुवेगेन "ह्वरांसि" कुटिलानि अङ्गूनि पवित्राणि "अति पवते" अतीत्य गच्छति । किं कुर्वन् ? स्तोतृभ्य "वीरवत्" पुत्रयुक्तं "यशः" "अभ्यर्षन्" अभिगमयन् पवते ॥ २ ॥

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २र
प्र सुन्वानायान्धसो मर्त्तो न वष्ट तद्वचः ।

२ १ २ ३ १ २ ३ २ ३ १ २र
अप श्वानमराधसᳫं हता मखन्न भृगवः ॥*३*॥ [२२

इति प्रथमः प्रपाठकः ।

---

अथैकर्चे पक्षे प्रथमा। "सुन्वानाय" षष्ठ्यर्थे चतुर्थी (२, ३, ६२ वा०) सुन्वानस्य अभिषूयमाणस्य "अन्धसः" अदनीयस्य सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तः" मारकः कर्म्मविघ्नकारी "न प्र वष्ट" न भजतां न शृणोत्विति यावत्। तथा हे स्तोतारः। "अराधसं" साधककर्म्म-रहितं "श्वानम्" "अपहत"। तत्र दृष्टान्तः—"मखं न" यथा पुरा अपराद्धं मखम् एतन्नामानं "भृगवः" अपहतवन्तः तथा अपहतेत्यर्थः॥ "प्रसुन्वानाय"-"प्रसुन्वानस्य","वष्ट"-"व्रत"—इति पाठौ॥१[२२

इति सामवेदार्थे प्रकाशे उत्तराग्रन्थस्य द्वितीयस्याध्यायस्य षष्ठः खण्डः॥ ६॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः॥ १॥

इति श्रीमद्राजाधिराज परमेश्वर वैदिकमार्गप्रवर्त्तक श्रीवीरबुक्क भूपाल
साम्राज्य धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये
सामवेदार्थ प्रकाशे उत्तराग्रन्थे द्वितीयोऽध्यायः।

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम्॥ १॥

## अथ तृतीयोऽध्यायः आरभ्यते।

१ २ २ १ १ २ १ १र २ १ २ २ १ १
पवस्व वाचो अग्रियः सोम चित्राभिरूतिभिः।
२ १ १र २ १ २
अभि-विश्वानि काव्या॥*१*॥

ऋ० जमदग्निः। छ० गायत्री। दे० पवमानः सोमः। तत्र, पवस्वयाच इति पञ्चर्चात्मके प्रथमखण्डे—प्रथमतृचे—

प्रथमा । हे "सोम !" "अग्रियः" मुख्यः त्वं "पिताभिः" पूजनीयैः "ऋतिभिः" रसणीयैः सह "वाचः" अस्मदीयाः स्तुतीः प्रति "पवस्व" । उत्तरार्द्धं उक्तमेवार्थं विशदयति—"विश्वानि" सर्वाणि "काव्या" काव्यानि स्तुत्यात्मकानि वाक्यानि "अभि" पवस्वेति ॥ १ ॥

१ २ ३ १ २ ३ २ ३ १ ३२ ३ १ २
त्वꣳ समुद्रिया अपोऽग्रियो वाच ईरयन् ।
१ २
पवस्व विश्वचर्षणे ॥*२*॥

अथ द्वितीया । हे "विश्वचर्षणे" । सर्वस्य द्रष्टः सोम । "अग्रियः" मुख्यः त्वं "वाच" "ईरयन्" प्रेरयन् "समुद्रियाः" आन्तरिक्षाणि "अपः" उदकानि "पवस्व" धारया क्षर ॥

"विश्वचर्षणे"—"विश्वमेजय"—इति छन्दोग-बह्वृचानां पाठो ॥ २ ॥

१ २ १ ३२ २ १ २
तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे ।
१ २ २ १ २
तुभ्यं धावन्ति धेनवः ॥*३*॥ [१]

अथ तृतीया । हे "कवे !" क्रान्तकर्मन् सोम । "तुभ्य" तव "महिम्ने" "इमा" इमानि "भुवना" भुवनानि "तस्थिरे" तिष्ठन्ति त्वामेव पुरस्कुर्वन्तीत्यर्थः । किञ्च "धेनवः" नवप्रसूतिकाः देवानां हविःप्रदानेन प्रीणयित्र्यो गावः "तुभ्य" त्वदर्थमेव 'आशिर प्रयच्छ मे'—इति "धावन्ति" आगच्छन्ति ॥

"धावन्ति धेनवः"—इति छन्दोगाः, "अर्षन्ति धेनवः"—इति बह्वृचाः ॥ ३ ॥ [१]

१ २ २ १ १ २ २ ३ १ २ ३ २ ३ १ २
पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने।

२ ३ २ ३ १ २
विश्वा अप द्विषो जहि ॥*१*॥

ऋ० अमहीयुः। छ० गायत्री। दे० पवमानः सोमः। अथ द्वितीयत्वचे—प्रथमा। हे "इन्दो!" सोम! "सुतः" अभिषुतः "वृषा" कामानां वर्षिता त्वं "पवस्व" धारया क्षर "जने" जनपदे "नः" अस्मान् "यशसः" यशस्विनः "कृधि" कुरु; "विश्वा" विश्वान् सर्वान् "द्विषः" द्वेष्टॄन् शत्रून् "अपजहि" मारय च ॥ १ ॥

१ २ २ २ ३१ २ ३ १ २ ३ २
यस्य ते सख्ये वयꣳ सासह्याम पृतन्यतः।

३१ २ १ २ ३ १
तवेन्दो द्युम्न उत्तमे ॥*२*॥

अथ द्वितीया। हे "इन्दो!" सोम! "यस्य" अस्मिन् यागे वर्त्तमानस्य "ते" तव "सख्ये" सखित्वे सति वयं स्तोतारः "तव" त्वदीये "उत्तमे" श्रेष्ठे "द्युम्ने" अन्ने वर्त्तमानाः तथाच यास्कः—"द्युम्नं द्योततेर्यशो वान्नं वा (निरु० नै० ५, ५)"—इति "पृतन्यतः" युद्धमिच्छतः शत्रून् "सासह्याम" अभिभवेम ॥

द्वितीय तृतीयपादौ व्यत्ययेन पाठो ॥ २ ॥

१ १ २ १ २२ ३ २ ३ २ ३ १२
याते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे।

१ २ २ २
रक्षा समस्य नो निदः ॥*३*॥ [२]

अथ तृतीया। हे "सोम!" "ते" तव "या" यानि

"भीमानि" शत्रूणां भयङ्कराणि "तिग्मानि" तीक्ष्णानि "आयुधा" आयुधानि "धुर्वणे" शत्रुवधार्थं सन्ति तैः "आयुधैः" "समस्य" सर्वस्य शत्रोः "निदः" निन्दायाः "नः" अस्मान् "रक्ष" पालय ॥ ३ ॥ [२]

१ २   २ १   २ ३ १ २   २ ३ २
वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः ।
२ ३   १ २
वृषा धर्माणि दध्रिषे ॥*१*॥

ऋ० कश्यपः । अथ तृतीयतृचे—प्रथमा । हे "सोम !" "वृषा" कामानां वर्षिता त्वं "द्युमान्" दीप्तिमान् "असि"। अपिच हे "देव !" द्योतमान सोम ! "वृषा" त्वं "वृषव्रतः" वर्षणशीलकर्मासि । किञ्च हे सोम ! "वृषा" त्वं "धर्माणि" देवानां मनुष्याणाञ्च हितानि कर्माणि "दध्रिषे" धारयसि ॥

"दध्रिषे"-"दधिषे"—इति पाठौ ॥ १ ॥

१ २ ३   २ २   २ ३   २ ३   २ ३ / १ २   २ २
वृष्णस्ते वृष्ण्यꣳ शवो वृषा वनं वृषा सुतः ।
१   २२३ १   २२
स त्वं वृषन्वृषेदसि ॥*२*॥

अथ द्वितीया । हे "वृषन् !" कामानां वर्षक ! सोम ! "वृष्णः" वर्षितुः "ते" तव "शवः" बल "वृष्ण्यं" वर्षणशीलं भवति "वनं" तव भजनमपि, "वृषा" वर्षणशील "सुतः" अभिषुतः तव रसोऽपि "वृषा" वर्षणशीलः "स त्वं" "वृषेदसि" वर्षणशील एवासि भवसि ॥

"सुतो मदः"—इति, "सत्वं सत्यम्"—इति च पाठौ ॥२॥

१ २ ३
१ २ १ २ ३ २ ३ १ ३२ २ १ ३२
अश्वो न चक्रदो वृषा सङ्गा इन्दो समर्वतः ।

१ २ ३ १ ३२
विनोराये दुरो वृधि ॥*३*॥ [३]

अथ तृतीया । हे "इन्दो !" सोम । "वृषा" त्वम् "अश्वो न" अश्व इव "अचक्रदः" सक्रन्दसे । अपिच "गाः" पशून् "अर्वतः" अश्वाय अश्वाश्च सम्यगच्छसीति शेषः । किञ्च "नः" अस्माकं "राये" धनाय "दुरः" द्वाराणि 'विवृधि' विवृतानि कुरु ॥ ३ ॥ [३]

१ २ १ २ २ १ २ २ १ २
वृषा ह्यसि भानुना द्युमन्त त्वा हवामहे ।

१ २ २ १ २
पवमान स्वर्दृशम् ॥*१*॥

ऋ० जमदग्नि । छ० गायत्री । दे० पवमान सोम । अथ चतुर्थतृचे—प्रथमा । हे सोम ! त्वं "वृषासि हि" अभिमत फलानां वर्षिता भवसि खलु । तस्मात् हे पवमान ! पूयमान ! वा सोम ! "स्वर्दृशं" सर्वस्य सूर्यस्य वा द्रष्टारं सर्वै र्देवैर्द्रष्टव्य वा "भानुना" तेजसा "द्युमन्त" दीप्तिमन्तम् अतिशयेन तेजस्विनमित्यर्थः स्तुतिमन्त वा, "त्वा" त्वां वयं "हवामहे" यज्ञेषु आह्वयामहे ॥ १ ॥

१ २ १ १ २ १ २ २ १ २ २ १ २
यदद्भिः परिषिच्यसे मर्मृज्यमान आयुभिः ।

१ २ ३ १ २
द्रोणे सधस्थमश्नुषे ॥*२॥

अथ द्वितीया । हे सोम ! त्वं "आयुभिः" मनुष्यैः ऋत्विग्भि "मृज्यमानः" अतिशयेन शोध्यमानः । त्वं "यदि"

वसतीवर्य्याख्याभिः 'यद्' यदा 'परि सिच्यसे' परितः सिच्यमानो भवसि, तदानीं "द्रोणे" द्रोणकलशे गृह्यमाणः सन् 'सधस्थं' सह तिष्ठन्त्यत्रेति सधस्थं स्थानं ग्रहचमसादिकम् 'अश्नुषे' व्याप्नोषि ॥

"सृज्यमान आयुभिः"-"सृज्यमानो गभस्त्योः"—इति, "द्रोणे"-'दुणा'—इति च पाठौ ॥ २ ॥

१ २ २ ३ २ १ २
आ पवस्व सुवीर्य्यं मन्दमानः स्वायुध ।
२ १ २ ३ १ २
इहो ष्विन्दवा गहि ॥*३*॥ [४]

अथ तृतीया। हे 'स्वायुध!' यज्ञे 'स्फ्य कपालादीनि' दशायुधानि-इत्यभिधीयन्ते, शोभनानि तानि यस्य स तथोक्तः। यद्वा धनुरादीन्यायुधानि यस्य सः, तादृश हे सोम! त्वं 'मन्दमान' मोदमानः सन् अर्च्चतीत्यर्थः देवान् स्वयं मादयन् 'सुवीर्य्यं' शोभनवीर्य्योपेतं पुत्रादिकमस्माकम् 'आ पवस्व' पवतिर्गत्यर्थः, आ प्रापय। किञ्च हे इन्दो! यज्ञेषु चमसेषु रक्षणशील। सोम। 'इह उ' इहैव अस्मदीये यज्ञे 'सु आगहि' सुष्ठु आगच्छ ॥ ३ ॥ [४]

१ २ ३२ ३ १ २ ३२
पवमानस्य ते वयं पवित्रमभ्युन्दतः ।
३ १ २र
सखित्वमा वृणीमहे ॥*१*॥

ऋ० अमहीयुः। छ० गायत्री। दे० सोमः। अथ पञ्चमखण्डे—प्रथमा। हे सोम! "पवित्रम् अभ्युन्दतः" पवित्रमभिद्रवतः "पवमानस्य" चरतश्च "ते" तव "सखित्व" स ख्य

वयम् धमद्दीयवः धाङ्गिरसाः स्तोतारः "आ वृणीमहे" प्रार्थयामहे ॥ १ ॥

१ २ २ १ २ २ १ २ २ १ २ ३ १ २
ये ते पवित्रमूर्मयोऽभिचरन्ति धारया ।

१ २
तेभिर्नः सोम मृडय ॥*२*॥

अथ द्वितीया। हे सोम! "ते" तव 'ये' ऊर्मय तरङ्गा "पवित्र" 'धारया' "अभि चरन्ति" तेभि' तैः ऊर्मिभि 'न' अस्मान् "मृडय" सुखय ॥ २ ॥

१ २ २ १ १२ ३ २ ३ १ २३ १ २
स नः पुनान आ भर रयिं वीरवतीमिषम् ।

१ २ ३ १ २
ईशानः सोम विश्वतः ॥*३*॥ [५]

अथ तृतीया। हे सोम। "विश्वत" सर्वस्य जगत "ईशान" ईश्वर "स" अभिषुत "पुनान" पूयमान त्व 'न' अस्मभ्य "रयि" धन "वीरवतीं" पुत्राद्युपेतम् "इषम्" तम् "आभर" आहर ॥ ३ ॥ [५]

इति सामवेदार्थप्रकाशे उत्तरायणस्य तृतीयस्याध्यायस्य प्रथम खण्ड ।

---

३ २ ३ १ २ ३ १ २ ३ १ २
अग्निं दूत वृणीमहे होतारं विश्ववेदसम् ।

२ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम् ॥*१*॥

ऋ० मेधातिथि'। छ० गायत्री। दे० अग्नि। अथ द्वितीय खण्डे—प्रथमत्रचे—प्रथमा। अग्नेर्दूतत्वमितरस्मा

व्याख्याने तैत्तिरीयब्राह्मणे समाम्नायते—'अग्निर्देवानां दूत आसीदुशनाकाव्योऽसुराणाम्'—इति तादृश देव "दूतम्" अग्निम् अस्मिन् कर्मणि वृणीमहे भजाम । कीदृश 'होतार' देवानामाह्वातार "विश्ववेदस" सर्वधनोपेत [बहुव्रीहौ विश्व सञ्ज्ञायाम् ( ६, २, १०६ )—इति पूर्वपदान्तोदात्तत्वम् 'अस्य' प्रवर्त्तमानस्य यज्ञस्य निदानत्वेन "सुक्रतु" शोभन-कर्माण शोभन प्रज्ञ वा ॥ १ ॥

१ ११२   १२   २ १ २        १ ११

अग्निमग्निᳲ हवीमभिः सदा हवन्त विश्पतिम् ।

१  १२   २१

हव्यवाह पुरुप्रियम् ॥*२*॥

अथ द्वितीया । यद्यप्यग्नि स्वरूपेणैक एव तथापि प्रयोगभेदादाहवनीयादिस्थानभेदाद्वा बहुविधत्वमभिप्रेत्य 'अग्निम अग्निम्'—इति वीप्सा त "हवीमभि" आह्वानकरणैर्मन्त्रे "सदा हवन्त" निरन्तरमनुष्ठातार आह्वयन्ति । कीदृशम ? "विश्पति" विशा प्रजाना जीवादीना पालक "हव्यवाह" यजमान समर्पितस्य हविष देवान् प्रति वोढारम् अतएव "पुरुप्रिय" बहूना देवाना प्रीत्यास्पदम् । अग्निमग्निम्—"नित्यवीप्सयो ( ८, १, ४ )"—इति वीप्सायां द्विर्भाव , "तस्य परमाम्रेडितम् ( ८, १, २ )'—इत्युत्तरस्य आम्रेडित सञ्ज्ञायाम् "अनुदात्तञ्च ( ८, १, ३ )"—इत्यनुदात्तत्वम । हवीमभि —'ह्वेञ् स्पर्द्धाया शब्दे च ( भ्वा०, उभ० ), आह्वानकरणभूतेषु मन्त्रेषु स्वव्यापारस्वातन्त्र्यात् कर्त्तृत्वविवक्षया "अन्येभ्योऽपि दृश्यन्ते ( ३, २, ७५ )"—इति कर्त्तरि मनिन् , तस्य छान्दस ईडागम , बहुल छन्दसि ( ६, १, ३४ )"—

इति धातोः सम्प्रसारणम्; परपूर्वत्वं; गुणावादेशौ; नित्त्वादाद्युदात्तत्वं (६, १, १८)। सदा—"सर्वैकान्येत्यादिना (५, ३, १५) सर्वशब्दाद्दाप्रत्ययः "सर्वस्य सोऽन्यतरस्याम् (५, ३, ६)"—इति सभावः; व्यत्ययेनाद्युदात्तत्वम् (३, १, ८५)। हवन्त—ह्वेञो लट् झस्य थस्तादेशः (७,१,३); टेरेभावश्छान्दसः (६, ४, ७६) अपि "बहुलं छन्दसि (६, १, ३४)"—इति सम्प्रसारणम्; "तिङ्ङतिङः (८,१,२८)" —इति निघातः। विश्पतिं—"पत्यावैश्वर्ये (६, २, १८)" —इति पूर्वपदप्रकृतिस्वरे प्राप्ते, "परादिश्छन्दसि (६,२,१९९)" —इत्युत्तरपदाद्युदात्तत्वम्। हव्यवाहम्—'वह प्रापणे (भ्वा॰, उभ॰), "वहश्च (३, २, ६४)"—इति ण्वि प्रत्ययः; कृदुत्तरप्रकृतिस्वरत्वम् (६, २, १३९)। पुरुप्रियं—समासान्तोदात्तत्वम् (८, १, २२३) ॥ २ ॥

१ २ ३ २ २ १ २ १ २ २,१ २
अग्ने देवाꣳ इहा वह जज्ञानो वृक्तबर्हिषे।

१ २ १ २ ३१ २
असि होता न ईड्यः ॥*३*॥ [६]

अथ तृतीया। हे "अग्ने," "जज्ञान." अरण्योर्मथ्यमान त्वं "वृक्तबर्हिषे" आस्तरणार्थं छिन्नेन बर्हिषा युक्ताय। त यजमानमनुग्रहीतुम् "इह" कर्मणि हविर्भुजो देवानावह—"नः" अस्मदर्थं "होता" देवानामाह्वाता त्वम् "ईड्योऽसि" स्तुत्यो भवसि ॥ ३ ॥ [६]

२ ३ २ ३ १ २ ३ १ २ २ २ १
मित्रं वयꣳ हवामहे वरुणꣳ सोमपीतये।

१ ३ २ ३ १ २
या जाता पूतदक्षसा ॥*१*॥

ऋ० मेधातिथिः। छ० गायत्री। दे० मित्रावरुणः। अथ द्वितीयहचे—प्रथमा। "वयम्" अनुष्ठातारः "सोमपीतये" सोमपानार्थे "टामीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वं" "मित्र" "वरुण" च उभावाह्वयामः। कीदृशावुभौ? "या जाता" यौ जातौ सन्तौ प्रदेशं प्रादुर्भवन्तौ, "पूतदक्षसा" प्रवृद्धबलौ। पूञ् पवने (क्रया०, उभ०); "निष्ठा (३, २, १०२)"—इति क्तः, "श्र्युकः किति (७, २, ११)"—इति इट् प्रतिषेधः। पूतं दक्षो ययोस्तौ "बहुव्रीहौ प्रकृत्या (६, २, १)"—इति पूर्वपदप्रकृतिस्वरत्वम्॥

"याजाता"-"जज्ञाना"—इति पाठौ॥ १॥

१ २ ३ १ २ २ १ २ १ २ १ २ १ २

ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती।

२ ३ १ २८

ता मित्रावरुणा हुवे॥*२*॥

अथ द्वितीया। "यौ" मित्रावरुणौ "ऋतेन" सत्यवचनेन यजमानानुग्रहकारिणा "ऋतावृधौ" ऋतमवश्यम्भावितया सत्यं कर्मफलं तस्य वर्धकौ "ऋतस्य" सत्यस्य प्रशस्तस्य "ज्योतिषः" प्रकाशस्य "पती" पालकौ श्रुत्यन्तरे मित्रावरुणयोरदितिपुत्रत्वेन श्रुतत्वात् द्वादशादित्येष्वन्तर्भूतत्वेन ज्योतिषः पालकत्वं युक्तम्। श्रुत्यन्तरे च अष्टौ पुत्रासो अदितेरित्युपक्रम्य मित्रश्च वरुणश्चेत्यादिकमाम्नातम्। तौ मित्रावरुणौ। तथाविधैर्मित्रावरुणौ. 'सुपां सुलुगिति (७, १, ३८) पूर्वसवर्णदीर्घ आकारः "हुवे" आह्वयामि। ह्वेञ आत्मनेपदोत्तमपुरुषैकवचने सम्प्रसारणे (६, १, ३४) पूर्वरूपत्वे च (६, १, १०८) "बहुलं छन्दसि (२, ४, ७३)"—इति

शपोलुक्; टेरेत्वम् ( ३, ४, ३८ ); गुणे प्राप्ते "क्ङिति च ( १, १, ५ )"—इति प्रतिषेधः; उवङादेशः ( ६, ४, ७७ ); "तिङतिङ. ( ८, १, २८ )"—इति निघातः ॥ २ ॥

१ २ | २ १ २ २ १ २र २ १ २
वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः।
१ २ २ १ २
करतां नः सुराधसः ॥*३*॥ [७]

अथ तृतीया। अथ "वरुण." देव अस्माकं "प्राविता भुवत्" प्रकर्षेण रक्षको भवतु। "मित्र." च "विश्वाभि ऊतिभि." सर्वाभिः प्राविता भुवत्। तावुभावपि "न." अस्मान् "सुराधस" प्रभूतधनयुक्तान् "करता" कुरुताम्। डुकृञ् करणे (उभ०) भौवादिक, लोटस्तस्, तसस्ताम्, कर्त्तरि शप्, गुणोरपरत्वम्, शप पित्त्वादनुदात्तत्वम् ( ३, १, ४ ); तिङश्च लसार्वधातुकस्वरेण ( ६, १, १८६ ) धातुस्वर ( ६, १, १६२ ) शिष्यते ॥ ३ ॥ [७]

२ १ २१ १ २ २१ २र ३ १ २ ३ १ २
इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः।
२ ३ १ २
इन्द्रं वाणीरनूषत ॥*१*॥

ऋ० विश्वामित्रो वा मधुच्छन्द । छ० गायत्री। दे० इन्द्र'। इन्द्रमिद्गाथिन इति चतुर्ऋच तृतीय सूक्तम्। तत्र प्रथमा। "गाथिन" गीयमान सामयुक्ता उद्गातार "इन्द्रमित्" इन्द्रमेव "बृहत्" "त्वामिद्धिहवामहे ( छ० आ० ३, १, ५, २ )"—इत्यस्यामृच्युत्पन्नेन बृहन्नामकेन ( आ० गा० १, १, २७ ) साम्ना "अनूषत" स्तुतवन्तः। एवं स्तुतौ

(तु०, प०); "णो नः (६, १, ६५)"—इति नत्वम्; लुङि व्यत्ययेनात्मनेपदम् (३, १, ८५); झस्य अदादेशः (७, १, ५); सिच इडभावः उकारस्य दीर्घत्वं छान्दसम् (६, १, १३३); धातोः कुटादित्वात् सिचो ङित्त्वेन (१, २, १) गुणाभावः (१, १, ५) "अर्किणः" अर्चन-हेतु-मन्त्रोपेता होतारः "अर्केभिः" ऋग्रूपैर्मन्त्रैरनूषत। ये त्वमिष्टा अध्वर्यवः ते "वाणीः" 'वाग्भिः' यजूरूपाभिः इन्द्रम् अनूषत अर्कस्य मन्त्रपरत्वं यास्केनोक्तम् (५, ४) 'अर्कोमन्त्रोयदनेनार्चन्तीति' ॥ १ ॥

२ १ १उ २ २ १ १ २ २ १ २१ ११
इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा ।
१ २ २ १ २ २ १ १
इन्द्रो वज्री हिरण्ययः ॥*२*॥

अथ द्वितीया। "इन्द्रइत्" इन्द्रएव "हर्योः" हरिनामकयोः अश्वयोः "सचा" सह युगपत् "आ सम्मिश्लः" सर्वतः सम्यक् मिश्रयिता। कीदृशयोर्हर्योः? "वचोयुजा" इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः। अयम् "इन्द्रः" "वज्री" वज्रयुक्तः "हिरण्ययः" सर्वाभरणभूषित इत्यर्थः ॥ २ ॥

२ २ १ २ २ १ २
इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च ।
२ १ २१ २ २ १ २
उग्र उग्राभिरूतिभिः ॥*३*॥

अथ तृतीया। हे "इन्द्र!" "उग्रः" शत्रुभिरप्रधृष्यः त्वम् "उग्राभिः" अप्रधृष्याभिः "ऊतिभिः" अस्मदुद्देश्यापरपचाभिः

"वाजेषु" युद्धेषु "नः" अस्मान् "अव" रक्ष। तथा "सहस्र-प्रधनेषु च" सहस्र-सङ्ख्याक-गजाश्वादि लाभयुक्तेषु महायुद्धे-ष्वपि रक्ष ॥ ३ ॥

१ २ ३ २ ३ १ २ ३ १ ३र ३ २
इन्द्रो दीर्घाय चक्षस आ सूर्य्यꣳ रोहयद्दिवि।
२उ ३ १ २
वि गोभिरद्रिमैरयत् ॥४॥ [८]

अथ चतुर्थी। अयम् "इन्द्रः" "दीर्घाय" प्रौढाय निर-न्तराय "चक्षसे" दर्शनाय "दिवि" द्युलोके "सूर्य्यमारोहयत्" पुरा वृत्रासुरेण जगति यदापादितं तमस्तन्निवारणेन प्राणिनां दृष्टिसिद्ध्यर्थम् आदित्यं द्युलोके स्थापितवानित्यर्थः। स च सूर्य्यः "गोभिः" स्वकीय रश्मिभिः "अद्रिम्" मेघम् "व्यैरयत्" विशेषेण दर्शनार्थं प्रेरितवान् प्रकाशितवानित्यर्थः अथवा इन्द्र एव "गोभिः" जलैर्निमित्तभूतैः "अद्रि" मेघं "व्यैरयत्" विशेषेण प्रेरितवान्। एतदस्य सङ्ख्याकेषु रश्मि-नामसु 'खेदयः' (१) 'किरणाः' (७) 'गावः' (३)—इति पठन्ति (निघ० १, ५); विंशत्सङ्ख्याकेषु मेघनामसु 'अद्रिः' (१) 'ग्रावा' (२) —इति पठितम् (निघ० १, १०) ॥ ४ ॥ [८]

१ २ ३ १ ३र ३ १ २ ३ १ ३र
इन्द्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे।
३ १ ३र ३ १ २
धिया धेना अवस्यवः ॥१॥

ऋ० मैत्रावरुणो वा वसिष्ठः। छ० गायत्री। दे० इन्द्रः। अथ तृचात्मके चतुर्थसूक्ते—प्रथमा। "अवस्यवः" रक्षण-कामाः वयम् "इन्द्रे" देवे "अग्ना" अग्नौ च "बृहत्" प्रवृद्धं

यद्वैकं "नमः" हविर्लक्षणमन्नं "सुवृक्तिं" सुप्रवृत्तां स्तुतिञ्च "आदीरयामहे" प्रेरयामः। तथाच "धिया" कर्म्मणा युक्ता "धेनाः" वाङ्नामैतत् ( निघ० १, ११, १९ ) स्तुतिरूपा वाचः अभिप्रेरयामः ॥ १ ॥

१    २र १   १ २   २ २   २र   २ १ २

ता हि शश्वन्त ईडत इत्था विप्रास ऊतये।

२ १ २   १ २

सबाधो वाजसातये ॥•२•॥

अथ द्वितीया। "ता हि" तौ खलु इन्द्राग्नी "शश्वन्तः" बहवः "विप्रासः" मेधाविनः जनाः "ऊतये" रक्षणाय "इत्थम्" अनेन प्रकारेण "ईडते" स्तुवन्ति। तथा "सबाधः" समानं परस्परं बाध्यमाना जनाः "वाजसातये" अन्नसातये अन्न-लाभाय ताविन्द्राग्नी ईडते। यद्वा 'वाजसातिः'—इति संग्राम-नाम ( निघ० २, १७, २६ ) संग्रामार्थम् ॥ २ ॥

१   २   २   १   १२   २२   १ २

ता वां गीर्भिर्विपन्युवः प्रयस्वन्तो हवामहे।

२ १ २    २ १ २

मेधसाता सनिष्यवः ॥•३•॥ [९]

अथ तृतीया। "विपन्यवः" स्तोत्रमिच्छन्तः "प्रयस्वन्तः" हविर्लक्षणेनान्नेनोपेताः "सनिष्यवः" सनिं धनमात्मन इच्छन्तः वय "मेधसाता" मेधानां यागानां "सातौ" सम्भजने निमित्त-भूते सति हे इन्द्राग्नी! "ता" तौ "वां" युवां "गीर्भिः" स्तुतिभिः "हवामहे" ॥

"विपन्यवः"-"विपन्यवे"—इति पाठौ ॥ ३ ॥ [९]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य तृतीयस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

१ २ २ ३ १ २ ३ १ २ ३ २
वृषा पवस्व धारया मरुत्वते च मत्सरः।

२ ३ १ २ ३ १ २
विश्वा दधान ओजसा ॥*१*॥

ऋ० वारुणिः वा भृगुः। छ० गायत्री। दे० सोमः। वृषापवस्वेति तृतीयखण्डे—प्रथमऋचे—प्रथमा। हे सोम! त्वं "वृषा" स्तोतॄणामभिमतफलस्य वर्षक सन् "धारया" त्वदीयया "पवस्व" द्रोणकलशमागच्छ पवतिर्गतिकर्मा (निघ० २, १४, १०८) आगतस्त्वं यदा अस्माभि इन्द्राय दीयसे तदा "मरुत्वते" सहाया मरुतो यस्य सन्ति तस्मै इन्द्राय "मत्सर" मदकरश्च भव। कीदृश ? "विश्वा" विश्वानि सर्वाणि व्याप्तानि वा धनानि "ओजसा" आत्मीयेन बलेन युक्तः सन् स्तोतृभ्य तानि "दधान" प्रयच्छस्त्वं मादयिता भवेति समन्वय ॥ १ ॥

१ २ ३ १ २ ३ १ १ २ ३ १ २
तं त्वा धर्त्तारमोण्योऽ३: पवमान स्वर्दृशम्।

३ १ २ र १ २ ३
हिन्वे वाजेषु वाजिनम् ॥*२*॥

अथ द्वितीया। हे "पवमान"! पूयमान पुनान वा सोम! 'ओण्यो' द्यावापृथिवी नामैतत् (निघ० ४, ३०, १५) तयो "धर्त्तारं" धारकम् अतएव 'स्वर्दृशं' सर्वस्य द्रष्टारं, सर्वद्रष्टव्य वा। "वाजिनं" बलवन्तं त पूर्वोक्तगुण प्रसिद्धं "त्वा" त्वा "वाजेषु" सङ्ग्रामेषु त्वा प्रेरयामि यद्वा "वाजेषु" विषयेषु प्रेरयामि, अन्नादिक प्रयच्छेत्यर्थः ॥२॥

२ १   ३ २   ३ २र   २   १ १       ३ १ २
अया चित्तो विपानया हरिः पवस्व धारया ।
  ३ २   १ २
युजं वाजेषु चोदय ॥ *२*॥ [१०]

अथ तृतीया । हे "पवमान !" सोम ! "अया" अय पय गतौ ( भ्वा०, आ० ) पचाद्यच् ( ३, १, १३४ ), तृतीयाया आकारः (७, १, ३८) कर्मार्थमितस्ततो गच्छन्तीभिः 'विपा' विप प्रेरणे ( तु०, उभ० ) इवीयन्तो प्रेरयन्तीति विपा अङ्गुलयः । एकवचन छान्दस प्रत्येकं विवक्षया वा एताभिर्मदीयाभिरङ्गुलिभिः "चितः" प्रातः निर्गतः अभिषुतः "हरि" हरितवर्णः त्वं "धारया" सन्ततया "पवस्व" द्रोणकलश प्रहाय गच्छ । किञ्च "युज" सखायम् इन्द्र "वाजेषु" सङ्ग्रामेषु "चोदय" प्रेरय । यदास्माभिरिन्द्रार्थं सोमा दीयन्ते तदा-नीमिन्द्र सुत्यानेन हृष्टः सन् शत्रून् हन्तीत्यर्थः ॥ ३ ॥ [१०]

२ ३   १ २   ३ १ २   ३२
वृषा शोणो अभिकनिक्रदद्गा

३ १ २   ३ २ ३ २
नदयन्नेषि पृथिवीमुत द्याम् ।

१ २   ३ १   ३र   ३ १
इन्द्रस्येव वग्नुरा शृण्व आजौ

३ २ १ २   ३ २ ३ २
प्रचोदयन्नर्षसि वाचमेमाम् ॥*१*॥

ऋ० उपमन्युः । छ० त्रिष्टुप् । दे० सोमः । अथ द्वितीयहचे—प्रथमा । "शोण." शोणवर्णः "वृषा" कश्चिद् वृषभः "गा" पशून् "अभि" लक्ष्य "कनिक्रदत्" शब्द करोति एव "गा." स्तुतो. "अभि कनिक्रदत्" अभिशब्दाय-

मानः। तदेवाह—"नदयन्" शब्दमुत्पादयन् हे सोम! त्वं "पृथिवीम्" "उत" अपिच "द्याम्" एतौ लोकौ "एषि" गच्छसि। किञ्च "वग्नु:" वग्नु वाङ्नामैतत् (निघ० १, ११, २५) तस्य वाक्स्य शब्दः "आजौ" संग्रामे "इन्द्रस्येव" इन्द्रशब्द इव "शृण्वे" सर्वैः श्रूयते। ततः "प्रचेतयन्" आत्मानं सर्वेषां प्रज्ञापयन् "इमां" "वाचम्" "अर्षसि" समन्तादागमयसि उच्चैः शब्दायत इत्यर्थः ॥ १ ॥

१ २ १ १२ १ १ २ २ १-२ १ ११ २ २
रसाय्यः पयसा पिन्वमान ईरयन्नेषि मधुमन्तमꣳशुम्

१ २ २ १ २ ३ १
पवमान सन्तनिमेषि कृण्व-

२र १ १ २
न्निन्द्राय सोम परिषिच्यमानः ॥*२*॥

अथ द्वितीया। हे सोम! "रसाय्य." रसैरौणादिक आय्यप्रत्ययः (उ०, ३, ८६) आसाद्यः "पयसा" "पिन्वमानः" वर्धस्त्वम "ईरयन्" "मधुमन्त" माधुर्योपेतम् "अंशुम्" रसभावम् "एषि" प्राप्नोषि "अंशुमष्टमात्रो भवति"—इति यास्कः (निरु० , )। अनेन सोमरसोऽभिधीयते। किञ्च हे सोम! "परिषिच्यमानः" अद्भिः परिषिक्तो भवंस्त्वं "पवमानः" पवित्रे पूयमानः सन् "सन्तनि" तनु विस्तारे (त०, प०) इ प्रत्ययः सन्ततां धारां "कृण्वन्" कुर्वन् "इन्द्राय" इन्द्रार्थम् "एषि" गच्छसि ॥ २ ॥

१ २ २ २१ २र
एवा पवस्व मदिरो मदायो-

१ २ १ २ १ २ १ १
दग्राभस्य नमयन्वधस्नुम्।

२ २ ३ २ ३ १ २ १ १ २
परि वर्णं भरमाणो रुशन्तं

२ १ २ २ १ २ २ १
गव्युर्नो अर्ष परि सोम सिक्तः ॥*३*॥[११]

अथ तृतीया। हे सोम! "मदिरः" मदकरः त्वम् "उदयाभस्य" "क्रिया ग्रहणं कर्त्तव्यम्"—इति कर्मणः सम्प्रदानत्वात्। चतुर्थ्यर्थे बहुलमिति षष्ठी। उदयाभम् उदकयाचिणमेव "नमयन्" ह्यार्थं प्रह्वीकुर्वन्। कीदृशम्? "वधस्नुम्" हननेन प्रस्नवन्तम् "मदाय" मदार्थमेव "पवस्व" पात्रेषु चर। किञ्च "रुशन्तम्" आरोचमानं श्वेतं "वर्णं" "परि भरमाणः" परितो बिभ्रत् "सिक्तः" पवित्रे सिच्यमानः त्वं "गव्युः" अस्माकं गा इच्छन् "पर्यर्ष" परिगच्छ॥

"वधस्नु"-"वधस्नैः"—इति पाठौ॥ ३॥[११]

इति सामवेदार्थप्रकाशे उत्तरायन्नस्य तृतीयस्याध्यायस्य तृतीय खण्ड।

---

१ २र २ १ २र २ १ १
त्वामिद्धि हवामहे सातौ वाजस्य कारवः।

२ ३ १ २ २ १ २ ३ २ ३ १उ २ १ २
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः॥*१*॥

ऋ० भरद्वाजः। छ० बृहती। दे० इन्द्रः। अथ चतुर्थखण्डे प्रगाथरूपे—प्रथमसूक्ते—प्रथमा। 'कारवः' स्तोतारो वयं "वाजस्य" अन्नस्य "सातौ" सम्भजने निमित्तभूते सति, हे "इन्द्र!" "त्वाम् इत् हि" त्वामेव "हवामहे" स्तुतिभिराह्वयामहे। हे इन्द्र! "सत्पतिं" सतां पालयितारं श्रेष्ठं त्वा "नरः" अन्येऽपि मनुष्याः "वृत्रेषु" आवरकेषु शत्रुषु

सन् "हवन्ते" आह्वयन्ति, तज्जयार्थम्। अपिच "अर्वतः" अश्वस्य सम्बन्धिनीषु "काष्ठासु" यथा अश्वः क्रान्त्या तिष्ठति। तासु "काष्ठासु" सङ्ग्रामेषु युद्धकामाय त्वामेवाह्वयन्ति, अतो वयं त्वामेवाह्वयाम इत्यर्थः ॥

"सातौ"-"साता"—इति पाठौ ॥ १ ॥

१ २र १ २ ३ १ २ ३ १ २
स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः।
१ २र ३क २र २ १ २ १ २उ १ २ २ १ १ १
गामश्वꣳ रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे

॥ *२* ॥ [१२]

अथ द्वितीया। हे "चित्र"! चायनीय। "वज्रहस्त"! वज्रबाहो! "अद्रिवः" वज्रवन् यद्वा आहत्यनेनेत्यद्रिरश्-निस्तद्वत् एवम्भूत हे इन्द्र। "धृष्णुया" धृष्णुः शत्रूणां धर्षयिता "महः" महान् स तादृशस्त्वं 'स्तवानः' अस्माभिः स्तूयमानः सन् "गाम्" "रथ्य" रथवाहम् "अश्वं" च "सं किर" सम्यक् प्रयच्छ। "जिग्युषे" जितवते पुरुषाय भोगार्थं "सत्रा" महत् प्रभूतं "वाजं न" अन्नमिव यथा शत्रून् जितवते भोगार्थं बहु प्रयच्छसि तद्वत् ॥ २ ॥ [१२]

१ १- २र ३ १ २ ३ १ २ ३ १ २ ३ २
अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे।
१ २१ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ १ २
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति

॥ *१* ॥

ऋ॰ प्रस्कण्वः। छ॰ बृहती। दे॰ इन्द्रः। अथ द्वितीय-सूक्ते प्रगाथे—प्रथमा। "पुरुवसुः" अश्वादिवसुधनोपेतः,

यज्ञबाहुल्यात् बहुनिवासको वा "मघवा" धनवान् "यः" इन्द्रः "जरितृभ्यः" स्तोतृभ्यः यथाभ्यं "सहस्रेणेव" सहस्र-सङ्ख्याकेन धनेनेव "शिक्षति" शिक्षतिर्दानकर्मा (निघ० ३, २०, ८), पश्चादिवद्धु-धनम् यथाभ्यं प्रयच्छतीत्यर्थः। स इन्द्रः 'यथाविदे' यथास्माभिर्विज्ञायते तथा हे ऋत्विजः! 'वः' यूयं "सुराधस" शोभनधनोपेतम् "इन्द्रम्" ऐश्वर्ययुक्तं देवम् "अभि" आभिमुख्येन "प्र अर्च" प्रकर्षेणार्चत ॥१॥

१ २ २ ३ १ २ ३ २ ३ २ ३ १ १ २ ३ १ २

शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे।

१ २ ३ २ १ २र ३ १ २ ३ १ २

गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः

॥ २ ॥ [१३]

अथ द्वितीया। "धृष्णुया" धृष्णुः धर्षणशीलः पुरुषः "शतानीकेव" यथा शतसङ्ख्याकानि शत्रुसैन्यानि "प्रजिगाति" जयार्थं प्रकर्षेण गच्छति, तद्वत्; इन्द्रः "दाशुषे" यजमानार्थं "वृत्राणि" यज्ञविघातकान् शत्रून् प्र जिगाति ततस्तान् "हन्ति"। किञ्च "पुरुभोजसः" बहुधनस्य "अस्य" इन्द्रस्य सम्बन्धीनि "दत्राणि" दत्तानि धनानि "प्र पिन्विरे" यजमानार्थं प्रकर्षेण वर्त्तन्ते। तत्र दृष्टान्तः—"गिरेरिव" यथा गिरेः सकाशात् "रसा" उदकानि पिन्विरे प्रवर्त्तन्ते तद्वत् ॥२॥ [१३]

२ ३ १ २र ३ १ २

त्वामिदा ह्यो नरोऽपीप्यन् वज्रिन् भूर्णयः।

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २

स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥१॥

ऋ० मित्रावरुणो वा वसिष्ठः। छ० बृहती। दे० उषा।

अथ तृतीयप्रगाथे—प्रथमा। हे "वज्रिन्"। वज्रवन्निन्द्र! य "त्वाम्" "भूर्णय." हविर्भरणशीलाः "नरः" कर्मणां नेतारो यजमानाः "इदा" अद्य "ह्य." पूर्वद्युश्च "अपीप्यन्" सोममपाययन्। हे इन्द्र! 'स' त्व 'स्तोमवाहस.' स्तोत्रवाहकस्य मम स्तोत्रम् 'इह' यज्ञे "श्रुधि" शृणु 'सस्वर' गृहश्च 'दुर्यो.' (९) "स्मराणि" (१०)—इति (निघ० ३, ४) गृहनामसु पाठात् "उपागहि" उपागच्छ॥

*"स्तोमवाहसः"—इति छन्दोगाः, "स्तोमवाहसाम्"—इति बह्वृचाः॥ १॥

मत्स्वा सुशिप्रिन् हरिवस्तमीमहे त्वया भूषन्ति वेधसः।
तव श्रवाᳪस्युपमान्युक्थ्य सुतेष्विन्द्र गिर्वणः
॥*२*॥ [१४]

अथ द्वितीया। हे "सुशिप्रिन्।" शोभनहनो! "हरिव." हरिनामकाश्वोपेतः!" "गिर्वण." गोभिर्वननीयेन्द्र! "त्वया" त्वयि "वेधस." परिचारकाः 'आ भूषन्ति' आभवन्ति, 'मत्स्व' सोमेन मादय आत्मानम्। किञ्च "तम्" त्वा वयम् "ईमहे" याचामहे। किं वाच्यम्? इत्यवाह—"सुतेषु" सोमेषु अभिषुतेषु सत्सु "तव" "श्रवांसि" अन्नानि "उपमानि" उपमानभूतानि, हे "उक्थ्य!" प्रशस्य! तव प्रसादात् सन्त्विति॥

"सुशिप्रिन्"-"सुशिप्र"—इति पाठौ॥ २॥ [१४]

इति सामवेदार्थ प्रकाशे उत्तराग्रन्थस्य तृतीयाध्यायस्य चतुर्थः खण्डः॥४॥

---

१ २ १ २ १ २ ३ १ २ ३ १ २
यस्ते मदो वरेण्यस्तेना पवस्वान्धसा।

२ ३ १ २ ३ २
देवावीरघशꣳसहा ॥*१*॥

ऋ० आङ्गिरस अमहीयुः। छ० बृहती। दे० इन्द्रः। पञ्चमखण्डे—प्रथमऋचे—प्रथमा। हे सोम! "ते" तव "देवावीः" देवकामः "अघशंसहा" राक्षसानां हन्ता "वरेण्यः" सर्व्वैर्वरणीयः "मदः" मदकरः "यः" रसः विद्यते, "तेन" "अन्धसा" अदनीयेन "पवस्व" चर॥ १॥

१ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
जघ्निर्वृत्रममित्रियꣳ सस्निर्वाजं दिवेदिवे।

१ २ ३ १ २
गोषातिरश्वसा असि ॥*२*॥

अथ द्वितीया। हे सोम! त्वम् "अमित्रियं" अमित्रभवं "वृत्रं" शत्रुं "जघ्निः असि" हन्ता भवसि। किञ्च "दिवे दिवे" प्रतिदिनं "वाजं" सङ्ग्रामं "सस्निः" सम्भक्तोऽसि। अपि च "गोषातिः" गवां सातिर्दातासि, "अश्वसाः" अश्वानां दाता चासि।

"गोषातिः"—"गोषाउ"—इति पाठौ॥ २॥

१ २ ३ २ ३ २ ३ २ ३ २ ३ २ ३ १
सम्मिश्लो अरुषो भुवः सूपस्थाभिर्न धेनुभिः।

१ २ ३ २उ ३ २
सीदं श्येनो न योनिमा ॥*३*॥ [१५]

अथ तृतीया। हे सोम! त्वं "सूपस्थाभिः" शोभनोपस्थानाभिः "धेनुभिः" गोभिः गोविकारैः पयोभिरित्यर्थः।

'सम्मिश्रः' सम्मिश्रितः 'श्येनः न' यथा श्येनः शीघ्रमागत्य स्थानमासीदति तद्वत् 'योनिं' स्वकीयं स्थानम् 'आसीदन्', 'न'—इति सम्प्रत्यर्थे इदानीम् 'अरुषः भुवः' आरोचमानो भव ॥ "भुवः"-"भवः"—इति वा पाठौ ॥ ३ ॥ [१५]

१ २ २ २ ३ २उ ३ १ २ ३ १ २
अयं पूषा रयिर्भगः सोमः पुनानो अर्षति ।
२ ३ १ २ ३ १ २ ३क २र ३ १ २ ३ २
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥१॥

अथ द्वितीयखण्डे—प्रथमा। 'पूषा' पोषकः सर्वेषां "भगः" भजनीयः "रयिः" धनहेतुः "अयं" सोमः "पुनानः" पवित्रे पूयमानः सन् "अर्षति" कलशमभिगच्छति। तथा "विश्वस्य" सर्वस्य "भूमनः" भूतजातस्य "पतिः" पालयिता "सोमः" "उभे रोदसी" द्यावापृथिव्यौ "व्यख्यत्" स्वतेजसा प्रकाशयति। अनेन लोकद्वयपतित्वं सूचितम् ॥ १ ॥

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
समु प्रिया अनूषत गावो मदाय घृष्वयः ।
१ २ ३ १ २र ३ १ २
सोमासः कृण्वते पथः पवमानास इन्दवः ॥२॥

अथ द्वितीया। "प्रियाः" प्रियतमाः "घृष्वयः" अत्यन्तदीप्ताः, यद्वा 'अहं प्रथमतः स्तौमि', 'अहं पुरस्तात् स्तौमि'—इति परस्परं स्पर्द्धमानाः "गावः" स्तुति-लक्षणा वाचः 'मदाय' सोमस्य मदार्थं 'समनूषत' संस्तुवन्ति; 'उ' प्रसिद्धौ यद्वा गावः धेनवः सोमस्य मदाय शब्दायन्ते। ततः 'पवमानासः' पूयमानाः 'इन्दवः' दीप्ताः 'सोमासः' सोमाः पथः मार्गान् 'कृण्वते' धरणार्थं कुर्वन्ति ॥ २ ॥

१        २र ३ १        १र२ १ र           ३ २  १
य ओजिष्ठस्तमा भर पवमान श्रवाय्यम् ।
१       २र       ३ १ २  १ २ ३ २उ     २ १ २
यः पञ्च चर्षणीरभि रयिं येन वनामहै॥*३॥ [१६]

अथ तृतीया। 'ओजिष्ठ' ओजस्वितमः 'यः' तृतीयो रसोऽस्ति तं "श्रवाय्यं" श्रवणीयं रसम् "आभर" अस्मभ्यमाहर। किञ्च "यः" रसः "पञ्च चर्षणीः" पञ्चजनान् निषादपञ्चमान् चतुरो वर्णान् "अभि तिष्ठति"। अपि च "येन" रसेन वयं "रयिं" धनं च "वनामहै" सम्भजामहै यद्वा येन त्वां रयिं याचामहै तमाभर॥ ३॥ [१६]

१ २        २ १  २                       २ २उ
वृषा मतीनां पवते विचक्षणः
  १   १ २          ३ १  २र   ३ २
सोमो अह्नां प्रतरीतोषसां दिवः।
२  १         २र       ३ २ १                     २
प्राणा सिन्धूनां कलशाए अचिक्रद-
 १ २ ३  १  २  ३ १ २  ३ १  १
दिन्द्रस्य हार्द्याविशन्मनीषिभिः॥*१*॥

ऋ० भार्गवः कविः व। छ० बृहती। दे० सोमः। अथ तृतीयवृचे—प्रथमा। अयं "सोमः" "पवते" अभिषूयते। कीदृशः सोमः? 'मतीनां' मतयः स्तोतारः तेषां "वृषा" वर्षकः, 'कामाना' 'विचक्षणः' विद्रष्टा, 'अह्नाम्' उषसां 'दिवः' द्युलोकस्य आदित्यस्य वा "प्रतरीता" प्रवर्द्धयिता किञ्च 'सिन्धूनां' स्यन्दमानानाम् उदकानां 'प्राणा' प्राणयिता चेतयिता अनितेः (अदा० प०) आनचि, 'बहुलं छन्दसि

( २, ४, ७२ )'—इति शन्विकरणस्य लुक्, सुपां सुलुगित्याकारः ( ७, १, ३९ ) 'कलशान्' 'अचिक्रदत्' शब्दं करोति प्रवेष्टुम्। किं कुर्वन् ? "इन्द्रस्य" "हार्दि" हृदयम् 'आविशन्' प्रविशन् "मनीषिभिः" मनस ईषितृभिः स्तुतिभिः स्तुत इति शेषः। व्यवहितमपि मनीषिभिरित्येतत् पवत इत्यनेन सम्बध्यते ॥

"अक्राम्"-"अक्रः"—इति, 'उषसाम्'-'उषसः'—इति, "माया"-"क्राणा"—इति, "अचिक्रदत्"-"अवीवशत्"—इति च पाठाः ॥ १ ॥

१ १ २   २ २   १ २

मनीषिभिः पवते पूर्व्यः कवि-

१२ १ २उ   १ २ १

र्नृभिर्यतः परि कोशाꣳ असिष्यदत्।

१ २ १ २ १   १ २ २ १   १ २ १

त्रितस्य नाम जनयन्मधु क्षर-

१ २   २ १   २ २   १ २ ३ १

न्निन्द्रस्य वायुꣳ सख्याय वर्धयन् ॥*२*॥

अथ द्वितीया। अयं सोमः "मनीषिभिः" मेधाविभिः अध्वर्य्यादिभिः 'पवते' पूयते। यद्वा अयं मनीषिभिर्धाराभिः 'पवते' चरति। कीदृशोऽयम् ? "पूर्व्यः" पुराणः "कविः" मेधावी 'नृभिः' नेतृभिः अध्वर्य्यादिभिः "यतः" सन् 'कोशान्' कलशान् प्राप्तुं "परि असिष्यदत्" परितः स्यन्दते स्रवति। "त्रितस्य" त्रिषु स्थानेषु लोकेषु विस्तृतस्य "इन्द्रस्य" यजमानस्य सम्बन्धि "नाम" नामकमुदकं "जनयन्" उत्पादयन् "मधु" मधुरं रसं "क्षरन्" क्षरति। किं कुर्वन् ? इन्द्रस्य "सख्याय" सखित्वाय "वायुं" "वर्धयन्" प्रवृद्धं कुर्वन् ॥

"असिष्यदत्"-"अचिक्रदत्"—इति पाठौ, "वायु"-'वायोः'—इति च, "वर्द्धयन्"-"कर्त्तवे"—इति च ॥ २ ॥

२ १ २ ३ २ ३ १ २
अयं पुनान उषसो अरोचय-

३ १ २र ३ २
दयꣳ सिन्धुभ्यो अभवदु लोककृत् ।

१ २उ ३ १ २ ३ २ १ २ १
अयं त्रिः सप्त दुदुहान आशिरꣳ

१ २ ३ १ २ ३ १ २ ३ २
सोमो हृदे पवते चारु मत्सरः ॥१३॥ [१७]

अथ तृतीया । "अयं" सोमः "पुनानः" पूयमानः "उषसः" "अरोचयत्" प्रदोपयत् । अयं "सिन्धुभ्यः" स्यन्दमानेभ्यः वसतीवरीभ्यः,"अभवत्" सम्भूतो भवति । "उ"—इति पूरणः । कीदृशोऽयम् ? "लोकाकृत्" लोकानां कर्त्ता वर्षसृत्त्वाद्वैतोधारकत्वाच्च लोककृत्त्वम् । "अयं" सोमः "त्रिःसप्त" एकविंशतिं गाः त्र्युखेन "आशिरं" "दुदुहानः" दुहानः दोहस्य प्रयोजकत्वात् कर्त्तोपचारः "मत्सरः" मदकरः "चारु" रमणीयं "पवते" क्षरति । किमर्थम् ? "हृदे" हृदयाय हृदय गमनाय ॥

"अरोचयत्"-"विरोचयत्"—इति पाठौ ॥ ३ ॥ [१७]

इति सामवेदार्थ प्रकाशे उत्तरार्च्चिके तृतीयस्याध्यायस्य पञ्चमः खण्डः ।

---

१ २ ३र ३ २ ३ १ ३र ३ २ ३ १ २
एवा ह्यसि वीरयुरेवा शूर उत स्थिरः ।

३ २ ३ १ २ ३ १ २
एवा ते राध्यं मनः ॥१॥

ऋ० अङ्गिरस-श्रुतकक्षो वा । छ० गायत्री । दे० इन्द्रः ।

एवाह्नीति-षष्ठे खण्डे—प्रथमऋचे—प्रथमा। हे इन्द्र! त्वं "वीरयुः" वीरान् युद्धकर्म्मणि समर्थान् शत्रून् हन्तुं कामयमानः "एव असि" भवसि खलु। "हि" प्रसिद्धो अतएव त्वं "शूरः" सामर्थ्यवान् "एव" भवसि। "उत" अपि च "स्थिरः" संग्रामे धैर्य्यवान् भवसि, एकत्र स्थित्वैव शत्रून् सम्प्रहरसीत्यर्थः। एवं सति "ते" तव "मनः" "राध्यं" स्तुतिभि. आराधनीयम् "एव"। यतोऽनेन मनसा त्वं शत्रुवधं संग्रामे धैर्य्यादिक करोषीति तव मन एव सर्व्वैः स्तुत्यमित्यर्थः॥ १॥

१ २ २ १ २ १ १ २ २ १ २
एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः।
१ २ १ २ २
अधा चिदिन्द्र नः सचा॥*२*॥

अथ द्वितीया। हे "तुविमघ।" तुविरिति बहु नाम (निघ० ३, १, १) बहुधन इन्द्र! "विश्वेभि." सर्व्वैः 'धातृभिः' कर्म्मधारकैः यद्वा, देवानां हविर्दानेन पोषयितृभिः सर्व्वैः यजमानैः तव "रातिः" गवाश्वादि दानं "धायि" तैर्धार्य्यत एव दधातेर्लुङि कर्म्मणि रूपम्। "चित्" एवार्थे। "अध" अनन्तरमेव हे इन्द्र! एवविधस्त्वं "न." अस्माक यष्टॄणामपि "सचा" धनादि-दानेन कर्म्म सहायो भव॥

"इन्द्रनस्सचा"-"इन्द्रमेसचा"—इति पाठौ॥ २॥

१उ २ १ १ २ १ २र
मो षु ब्रह्मेव तन्द्रयुर्भुवो वाजानां पते।
१ १ १ २ २ १ १
मत्स्वा सुतस्य गोमतः॥*३*॥ [१८]

अथ तृतीया। हे "वाजानां पते!" अन्नानां पते! बलानां

'या, हे इन्द्र ! 'तन्द्रयुः' निष्कारणं निवृत्तकर्मत्वादालस्ययुक्तः 'ब्रह्मेव' ब्राह्मण इव त्वं "मा उ षु भुवः" सुष्ठु मा भव, सर्वदा अस्मत्-कर्मरतो भवेत्याशासनम् ॥ तदेवाह—'सुतस्य' अभिषुतस्य, मतः "गोमतः" गव्येन क्षीरेण दध्ना वा मिश्रणवतः सोमस्य पात्रेण "मत्स्व" मादय हृष्टो भव ॥ २ ॥ [१८]

२ ३ १ २ ३ १ २ ३ २ ३ १ २
इन्द्रं विश्वा अवीवृधंत्समुद्रव्यचसं गिरः ।
२ ३ १ २ ३ १ २ ३ १ २ ३ ३ १ २ ३ १ २
रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् ॥*१

ऋ० मधुच्छन्दः । छ० अनुष्टुप् । दे० इन्द्रः । द्वितीय-तृचे—प्रथमा । "विश्वाः" सर्वाः "गिरः" अस्मदीयाः स्तुतयः "इन्द्रम्" "अवीवृधन्" वर्द्धितवत्यः वृधेर्णिचि चङि "उर्ऋत् (७, ४, ७)"—इत्यनुवृत्तौ "नित्यं छन्दसि (७, ४, ८)"—इति ऋकारस्य ऋकार-विधानात् लघूपधगुणाभावः, निपात-स्वरः (८, १, २८) कीदृशमिन्द्रम् ? "समुद्रव्यचसं" समुद्रवद्व्याप्तवन्तं, "रथीनां" रथ-युक्तानां योद्धॄणां मध्ये "रथीतमम्" अतिशयेन रथ-युक्तं, "वाजानाम्" अन्नानां "पतिं" स्वामिनं, "सत्पतिं" सतां सन्मार्गवर्त्तिनां पालकं "पत्यावैश्वर्य्ये (६, २, १८)"—इति पूर्वपदप्रकृतिस्वरत्वम् ॥ १ ॥

२ ३ २ ३ २ ३ १ २
सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते ।
२ ३ १ २र ३ १ २ ३ १ २
त्वामभि प्र णोनुमो जेतारमपराजितम् ॥*२*॥

अथ द्वितीया । हे "शवसस्पते !" बलस्य पालकेन्द्र ! 'ते' तव "सख्ये" अनुषङ्गप्रयुक्ते सखित्वे वर्त्तमाना वयं "वाजिनः"

भवन्तः भूत्वा 'मा भेम' भवद्भ्यो भीतिं प्राप्ता मा भूम। अतः "त्वाम्" अभयहेतुम् "अभि प्र नोनुमः" सर्वतः प्रकर्षेण स्तुमः णु स्तुतौ (अदा०, प०) "णोनः (६, १, ६५)"—इति नत्वम्, यङोलुक् (२, ४, ७४), प्रत्ययलक्षणेन (१, १, ६२), "सन्यङोः (६, १, ८)"—इति द्विर्भावः, "गुणो यङ्लुकोः (७, ४, ८२)"—इत्यभ्यासस्य गुणः प्रत्ययलक्षणेन धातुसंज्ञाया (३, १, ३२) लटोमस् (३, ४, ७८), अदादिवद्भावात् शपो लुक् (२, ४, ७२)। कीदृश त्वाम्? "जेतारं" युद्धेषु जयशीलम् अपराजितं क्वापि पराजय रहितम्॥

"प्रनोनुमः"-"प्रणोनुमः"—इति पाठौ॥२॥

१ १ १र २ १ २ १ १र ३ १ २
पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः।
२ १ १र २ १ २ २ २ २ १ २ ३ १
यदा वाजस्य गोमत स्तोतृभ्यो मंहते मघम्

॥३॥ [१८]

## इति द्वितीयप्रपाठकस्य प्रथमार्द्धम्।

---

अथ तृतीया। "इन्द्रस्य" सम्बन्धिन्यः "रातयः" धनदानानि "पूर्वीः" अनादि काल-सिद्धाः, अस्येन्द्रस्य मर्यादा यद्भूयो धनदानमेव स्वभाव इत्यर्थः; एवं सति इदानीन्तनोऽपि यजमानः "स्तोतृभ्य." ऋत्विग्भ्यः "गोमतः" गो सहितस्य "वाजस्य" अन्नस्य पर्याप्तं "मघं" धनं "यदा" "मंहते" दक्षिणारूपेण ददाति, तदानीं "रातय." बहु-धन दान-पूर्वकाणीन्द्रस्यात्म विषयाणि रक्षणानि "न वि दस्यन्ति" विशेषेण नोपक्षीयन्ते। "यदा"-"यदि"—इति पाठौ। "मघं",

"रेक्णः", "रिक्थं"-- इत्यादिष्वष्टाविंशति सङ्ख्याकेषु धननामसु (निघ० २, १०) मघशब्द पठित । "दाति"-"दाशति"— इत्यादिषु दशसु दानकर्मसु "मंहते" --इति पठितम् (निघ० ३, २०, १०)। पूर्वीः—पुरु शब्दस्य "वोतोगुणवचनात् (४, १, ४४)"--इति ङीप्, आद्यस्योकारस्य दीर्घश्छान्दसः, जसि "दीर्घाज्जसि च (६, १, १०५)"- इति निषेधं वाधित्वा "वा छन्दसि (६, १, १०६)"-- इति पूर्वसवर्णदीर्घत्वम्, ङीपः प्रत्ययस्वरेणोदात्तत्वम्। मंहते—शपः पित्वादनुदात्तत्वम्, तिङश्च ल सार्वधातुकस्वरेण 'तिङतिङ (८, १, २८)'—इति निघातो न भवति "निपातैर्यद्यदिहन्त (८, १, ३०)"—इति निषेधात् ॥ २ ॥ [१८]

इति सामवेदार्थप्रकाशे उत्तरार्च्चिकस्य तृतीयस्याध्यायस्य षष्ठ खण्ड ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ महेश्वर ॥ ३ ॥

इति श्रीमद्राजाधिराज परमेश्वर वैदिकमार्गप्रवर्त्तक श्रीवीर बुक्क भूपाल साम्राज्य धुरन्धरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तरार्च्चिके तृतीयोऽध्याय ।

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे, तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥ १ ॥

## अथ चतुर्थोऽध्यायः आरभ्यते ।

१ १ २ २ १ २ २ २ ३ १ २ ३ १ २
एत असृग्रमिन्दवस्तिरः पवित्रमाशवः ।

१ २ ३ १ ३र
विश्वान्यभि सौभगा ॥*१*॥

ऋ० जमदग्निः। छ० गायत्री। दे० सोमः। प्रथमखण्डे—एते असृग्रमिति प्रथमऋचे—प्रथमा। तत्र "तिरः पवित्र" तिर्य्यग् गच्छन्तं दशापवित्रं प्रति "आशवः" शीघ्रगामिनः "एते" पवमाना "इन्दवः" सोमाः "विश्वानि" सर्वाणि "सौभगा" सौभगानि धनानि "अभि" लक्ष्य "असृग्रम्" ऋत्विग्भिः सृज्यन्ते ॥ १ ॥

१ १ २   २ २ २ २ २ २ २ १ २.२ १ २
विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः।

१ २   १ २   १   १ २
त्मना कृण्वन्तो अर्वतः ॥*२*॥

अथ द्वितीया। "वाजिनः" बलवन्तः सोमाः "पुरु" बहूनि "दुरिता" दुरितानि "वि घ्नन्तः" विशेषेण नाशयन्तः "तोकाय" अस्माकं पुत्राय "सुगा" अतिसुखरूपाणि धनानि "अर्वतः" अश्वांश्च "त्मना" आत्मना स्वयमेव "कृण्वन्तः" ददत इत्यर्थः। ऋत्विग्भिः सृज्यन्त इति पूर्वेण सम्बन्धः ॥

"त्मना"-"तना" इति—इति पाठौ, "अर्वतः"-"अर्वते"—इति च ॥ २ ॥

१ २ २   १ २ २   २ ३क २र   १ २
कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम्।

१ २ २ १ २   २ १ २
इडामस्मभ्यं संयतम् ॥*३*॥ [१]

अथ तृतीया। सोमाः अस्माकं "गवे" "अस्मभ्यं" च "संयन्त" यदस्मात् संयच्छति। तद् "वरिवः" धनम् "इडाम्" अन्नञ्च "कृण्वन्तः" कुर्वन्तः "सुष्टुतिम्" अस्मदीयां शोभनां स्तुतिम् "अभ्यर्षन्ति" आभिमुख्येन गच्छन्ति ॥ ३ ॥ [१]

१ २ २ १ २ २ १२ २१ २र
राजा मेधाभिरीयते पवमानो मनावधि।
१ १ २ २ १ २
अन्तरिक्षेण यातवे ॥*१*॥

ऋ० जमदग्नि। छ० गायत्री। दे० सोम। अथ द्वितीयतृचे—प्रथमा। "मनो अधि" मनुष्ये याग कुर्वाणे सति। यद्वा मनावधि मनुर्मन्त्रव्यो यज्ञस्तस्मिन् "पवमान" पूयमान पुनानो वा "राजा" राजशब्देन सोमोऽभिधीयते "सोम राजानमक्षवन (य० मा० २८, ७२)"—इत्यादिषु दृष्टत्वात्, स राजा सोम "मेधाभि" स्तुतिभि सह "ईयते" गच्छति। कुत्र? "अन्तरिक्षेण" आकाशमार्गेण द्रोणकलश प्रति "यातवे" यातुम्। द्रोणाभिगमन काले हि स्तोत्रभि स्तूयते खलु॥ १॥

१ २ १ २१ १२ २१ २र
आ नः सोम सहो जुवो रूप न वर्चसे भर।
२ २ ३१२
सुष्वाणो देववीतये ॥*२*॥

अथ द्वितीया। हे "सोम।" "देववीतये" देवाना पानाय देवाना कामाय वा "सुष्वाण" अभिषुतो वा त्व "सह" शत्रुभिभवनसमर्थं बल "जुव" जु—इति गत्यर्थ शत्रून् प्रति शीघ्रगमन यद्वा सर्वतो गमनशील बलम्। किञ्च "न"—इति चार्थे "वर्चस" वर्चदीप्तौ (भ्वा०, आ०) दीप्त्यै सर्वत्र प्रकाशनाय रूपञ्च "न" अस्मभ्यम् "आ भर" आहर प्रयच्छ॥ २॥

१ २ ३ १ २ ३ ३ २ ३ २ ३ २ १ २
आ न इन्दो शतग्विनं गवां पोषᳬ स्वश्व्यम् ।

१ २ ३ २ ३ १ २
वहा भगत्तिमूतये ॥*३*॥ [२]

अथ तृतीया। हे "इन्दो"! पात्रेषु चरणशील! दीपनशील! वा हे सोम! "शतग्विन" शतसङ्ख्यसङ्ख्याकाभिः गोभिः युक्तं "गवां पोषं" गवादीनां पुष्टिवर्द्धनं "स्वश्व्यं" शोभनाश्व सङ्घ-सहितं "भगत्तिं" भगदत्तिं भजनीय-धन-दानञ्च "ऊतये" रक्षणाय "नः" अस्माकम् "आवह" प्रापय। गवादीन् तेषां वृद्धिं प्रयच्छेत्यर्थः ॥ ३ ॥ [२]

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
तं त्वा नृम्णानि बिभ्रतᳬ सधस्थेषु महो दिवः ।

१ २ ३ १ २
चारुᳬ सुकृत्ययेमहे ॥*१*॥

ऋ० कविः। छ० गायत्री। दे० सोमः। तन्त्वा नृम्णानीति पञ्चर्चं तृतीयं सूक्तम्, तत्र प्रथमा। "महोदिवः" महतो द्युलोकस्य "सधस्थेषु" सहस्थानेषु स्थितं, "नृम्णानि" धनानि "बिभ्रतं" अस्मदर्थं धारयन्तं "चारु" कल्याणं हे सोम! "तं" तादृशं पवमान-लक्षणं "त्वा" त्वां "सुकृत्यया" शोभन-क्रियया "ईमहे" धनानि याचामहे ॥ १ ॥

१ २ ३क २र ३ १ २ ३ १ २
संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदम् ।

३ १ २र ३ १ २
शतं पुरो रुरुक्षणिम् ॥*२*॥

अथ द्वितीया। हे सोम! "संवृक्तधृष्णुं" संवृक्ताः संछिन्नाः

धृष्णवो धर्षणशीला: मरुतो येनासौ संहृताधृष्णु:, तम्, "उक्थ्यं" उक्थार्हं प्रशस्यम्, "संग्रामद्भिवितं" महोय बहु कर्माणं, "मदं" मदकरं "शतं" बहूनि "पुरः" असुराणां पुराणि "रुरुक्षणिं" विनाशयन्तम्; त्वां धनानाम् ईमहे इति सम्बन्धः ॥ २ ॥

१ २ ३ २ ३क २र ३ १ २ २ १
अतस्त्वा रयिरभ्ययद्राजानꣳ सुक्रतो दिवः।

१ १ २ ३ १ २
सुपर्णो अव्ययी भरत् ॥*३*॥

अथ तृतीया। हे "सुक्रतो!" शोभनकर्मन्! पवमान सोम! "रयि:" रयिम् धनं प्रति "अभि अयत्" अभिगमयति "राजानं" "त्वा" त्वाम् "अतः दिवः" अमुष्मात् द्युलोकात् "अव्ययी" व्यथारहितः "सुपर्णः" श्येनवत् "भरत्" आहरत्। तथा च श्रूयते—'आदाय श्येनो अभरत् सोमम् (ता० ब्रा०)' —इति॥ "अव्ययी"-"अव्यथि:"—इति पाठौ॥ ३ ॥

१ २ २ १ २ ३ १ २र २ १ २
अधा हिन्वान इन्द्रियं ज्यायो महित्वमानशे।

३ १ २र
अभिष्टिकृद्विचर्षणिः ॥*४*॥

अथ चतुर्थी। "अधा" अथ "विचर्षणिः" कर्मणां विद्रष्टा "अभिष्टिकृत्" यजमानानाम् अभीष्ट-फलस्य कर्त्ता सोमः "इन्द्रियं" स्वकीयं बलं "हिन्वानः" प्रेरयन् "ज्यायः" प्रशस्यतरं "महित्वं" महत्वम् "आनशे" प्राप्नोति ॥ ४ ॥

१ २ १ १ २ ३ १ ३२ ३ १ २
विश्वस्मा इत् स्वर्दृशे साधारणꣳ रजस्तुरम्।

१ २ १ २ २ १ २
गोपामृतस्य विर्भरत् ॥*५*॥ [३]

अथ पञ्चमी। "रजस्तुरम्" उदकस्य प्रेरकम् "ऋतस्य" यज्ञस्य "गोपां" गोपयितारं "विश्वस्मै" सर्वस्मै "स्वर्दृशे" देवाय "साधारणम् इत्" समानम् ग्रावमन्तं सोम "विः" पक्षी श्येनो "भरत्" स्वर्गादाहरत् ॥ ५ ॥ [३]

२१ १ २ १२ २१ २ २ १ १
इषे पवस्व धारया मृज्यमानो मनीषिभिः।
१ २ ३१ २८
इन्दो रुचाभि गा इहि ॥*१*॥

ऋ० कश्यपः। छ० गायत्री। दे० सोमः। अथ त्र्यचात्मके चतुर्थसूक्ते—प्रथमा। हे "इन्दो!" सोम! "मनीषिभिः" ऋत्विग्भिः "मृज्यमान." शोध्यमानः त्वम् "इषे" अस्माकमन्नाय "धारया" "पवस्व" क्षर। "रुचा" रोचमानेनान्धसा "गा." पशून् "अभीहि" अभिगच्छ ॥ १ ॥

२ १ १२ २ १२ १ १
पुनानो वरिवस्कृध्यूर्जं जनाय गिर्वणः।
१ २ २ २ २ १ १
हरे सृजान आशिरम् ॥*२*॥

अथ द्वितीया। हे "गिर्वणः!" गोभिर्वननीय। "हरे!" हरितवर्ण सोम! "आशिर" क्षीरं प्रति "सृजानः" विसृज्यमानः "पुनान." पूयमानः त्व "जनाय" जनार्थं "वरिवः" धनम् "ऊर्जम्" अन्नञ्च "कृधि" कुरु ॥ २ ॥

१ १ २१२ २ १२ २ २
पुनानो देववीतय इन्द्रस्य याहि निष्कृतम्।
२ १ २ १ २ २ १
द्युतानो वाजिभिर्हितः ॥*३*॥ [४]

अथ तृतीया। हे सोम! "वाजिभिः" हविर्लक्षणान्न-

ऋत्विग्यजमानैः सह "द्युतानः" दीप्यमानः "देववीतये" यज्ञार्थं "पुनानः" पूयमानः "हितः" हितकरः त्वम् "इन्द्रस्य" "निष्कृतं" स्थानं "याहि" गच्छ ॥

"हितः"-"यतः"—इति पाठौ ॥ ३ ॥ [४]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थस्याध्यायस्य प्रथमः खण्डः ।

---

३ २ ३ १ २र ३ २ ३ १ २ ३ १ २

अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।

३ २ ३क २र

हव्यवाड्जुह्वास्यः ॥*१*॥

ऋ० मेधातिथिः । छ० गायत्री । दे० अग्निः । द्वितीयखण्डे—प्रथमतृचे—प्रथमा । "अग्निः" आहवनीयाख्यः तस्मिन् प्रक्षिप्यमाणेन "अग्निना" निर्मन्थ्य प्रणीतेन वा सह "समिध्यते" सम्यग् दीप्यते । कीदृशोऽग्निः ? "कविः" मेधावी "गृहपतिः" यजमान गृहस्य पालकः "युवा" नित्य तरुणः "हव्यवाट्" हविषो वोढा वहतेः "वहश्च (३, २, ६४)"—इति ण्वि-प्रत्ययः ; णित्वादुपधावृद्धिः (७, २, ११६) 'गतिकारकोपपदात् कृत् (६, २, १३९)"—इत्युत्तर-पद प्रकृति-स्वरत्वम् "जुह्वास्यः" जुहूरूपेण मुखेन युक्तः । हूयते अनयेति जुहूः "हुवः श्लुवच्च (उ०, २, ६१)"—इति क्विप् ; तत्सन्नियोगाद् (३, २, १७८ वा०) दीर्घश्च ; श्लुवद्भावात् द्विर्भावः ; जुत्व-जश्त्वे ; प्रातिपदिक स्वरेणान्तोदात्तः (फि० १, १, ) ; जुह्वास्यं यस्येति बहुव्रीहौ पूर्वपद-प्रकृतिस्वरत्वेन स एव शिष्यते (८, २, १) ; शेष-निघातः ; यणादेशे "उदात्तस्व-

रितयोर्यथः स्वरितोऽनुदात्तस्य ( ८, २, ४ )"—इत्याकारः स्वरितः ॥ १ ॥

१ २र २ १ २ १ १ २ २ १ २
यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्य्यति ।

१ २ २ १ २
तस्य स्म प्राविता भव ॥*२*॥

अथ द्वितीया । हे "अग्ने !" "देव !" "यः" "हविष्पतिः" यजमानः "दूतं" "त्वाम्" "सपर्य्यति" परिचरति । तस्य यजमानस्य "प्राविता" "भव स्म" अवश्यं रक्षको भव । हूयत इति हविः "अर्चि-शुचि (उ०, २, १०७ )"—इत्यादिना इसिः, प्रत्ययस्वरेण इकार उदात्तः ( ३, १, ३ ), हविषः पतिः हविष्पतिः, "नित्यं समासेऽनुत्तरपदस्थस्य (८, ३, ४५)"—इति षत्वम्, "पत्यावैश्वर्य्ये ( ६, २, १८ )"—इति पूर्वपदप्रकृतिस्वरत्वम् । सपर्य्यति—सपर-शब्दात् "कण्ड्वादिभ्यो यक् ( ३, १, २७ )"—इति यक्, धातुप्रकरणात् गुणप्रतिषेधार्थात् यकः कित्त्वाच्च सपरशब्दस्य धातुत्वात्ततो विहितस्य यक आर्द्धधातुकत्वे सति "अतोलोप ( ६, ४, ४८ )"—इति लोपः "सनाद्यन्ता धातवः ( ३, १, ३२ )"—इति धातुसञ्ज्ञायां तिप्, "कर्त्तरि शप् ( ३, १, ६८ )", तस्मिन् पूर्वस्य "अतो गुणे ( ६, १, ९६ )"—इति पररूपत्वम्, यकः प्रत्यय स्वरेणोदात्तत्वम् ( ३, १, ३ ), शपा सह एकादेशस्य "एकादेश उदात्त० ( ८, २, ५ )"—इत्युदात्तत्वम्, "तिङतिङः ( ८, २, २८ )"—इति निघातो न भवति "यद्वृत्तान्नित्यम् ( ८, १, ६६ )"—इति प्रतिषेधात् ॥ २ ॥

१ २ २ १ २ १ २ १ २ १ २
यो अग्निं देववीतये हविष्मां आविवासति ।

१ २
तस्मै पावक मृडय ॥*३*॥ [५]

अथ तृतीया। "हविष्मान्" हविर्युक्तो "यः" यजमानः "देववीतये" देवानां हविर्लक्षणहेतुयागार्थम् "अग्निम्" "आविवासति" अग्नेः समीपे विशेषेणागत्य परिचर्य्यां करोति। हे "पावक!" अग्ने। "तस्मै" "मृडय" तं यजमानं सुखय। देववीतये—'वी गतिप्रजन कान्त्यसन खादनेषु ( अदा०, उभ० )'—इत्यस्मादसनार्थात् क्तिन्, देवानां वीतिर्यस्मिन् यागे स देववीतिः, "बहुव्रीहौ पूर्वपद-प्रकृतिस्वरत्वम्, "नञ्विषयस्यानिसन्तस्य ( फि०, २, ३ )"—इति पर्युदासाद्धविः-शब्दोदात्तः, मतुपः सर्वानुदात्तत्वात् स एव शिष्यते। आविवासति—'वा गति-गन्धनयोः ( अदा० प० )'—अस्मादन्तर्भावितण्यर्थादागमयितुमिच्छतीत्यर्थे सन्, आह्वानेच्छा; परिचर्य्यायां पर्य्यवस्यतीति विवासति-शब्दः परिचर्य्यार्थे निघण्टौ ( ३, ५, १० ) पठितः, द्विर्भावः, अभ्यासस्य ह्रस्वः ( ७, ४, ५९ ), "सन्यतः ( ७, ४, ७९ )"—इति इत्वम्, "ञ्नित्यादिर्नित्यम् ( ६, १, १९७ )"—इत्याद्युदात्तत्वम्, "तिङ्ङतिङः ( ८, १, २८ )"—इति निघातो न भवति "यद्वृत्तान्नित्यम् ( ८, १, ६६ )"—इति प्रतिषेधात्, "तिङि चोदात्तवती ( ८, १, ७१ )"—इत्यादौ "सह सुपेत्यत्र ( २, १, ४ ) सहेति योगविभागादाङ्स्तिङा सह समासे समासान्तोदात्तत्वे प्राप्ते ( ८, १, २२३ ) "परादिश्छन्दसि बहुलम् ( ६, २, १९९ )"—इत्युत्तर-पदाद्युदात्तत्वम्। तस्मै—"क्रियाग्रहणं कर्त्तव्यम् ( २, ३, १३ वा० )" —इति सम्प्रदानत्वाच्चतुर्थी ॥ ३ ॥ [५]

१ १ २ ३ १ २ ३ १ २ ३ १ २
मित्रं हुवे पूतदक्षं वरुणं च रिशादसम्।

१ २ २ २ २ १ २
धियं घृताचीᳬ साधन्ता ॥*१*॥

ऋ॰ मधुच्छन्दः। छ॰ गायत्री। दे॰ मित्रावरुणः। अथ द्वितीयऋचे—प्रथमा। अहमस्मिन् कर्मणि हविः-प्रदानाय "पूतदक्ष" पवित्रबल "मित्र" "हुवे" आह्वयामि ह्वयतेः "बहुलं छन्दसि (२, ४, ७३)"—इति शपोलुकि सति "ह्वः सम्प्रसारणम् (६, १, ३२)"—इत्यनुवृत्तौ "बहुलं छन्दसि (६, १, ३४)"—इति सम्प्रसारणे उवङादेशः, "तिङतिङः (८, १, २८)"—इति निघातः। तथा "रिशादस" रिशानां हिंसकानाम् अदनमत्तारम् "वरुणञ्च" हुवे। कीदृशौ मित्रावरुणौ? "घृताचीं" घृतमुदकमञ्चति भूमिं प्रापयति या धीः येन कर्मणा तां घृताचीं "धियम्" "साधन्ता" साधयन्तौ 'साध साध संसिद्धौ (दि॰, प॰)'—इत्यस्मादन्तर्भावितण्यर्थाल्लटः शत्रादेशे (६, १, १६१), श्नु बाधित्वा व्यत्ययेन (३, १, ८५) शप्, अदुपदेशत्वात् उपरि शत्र प्रत्ययस्य ल-सार्वधातुकानुदात्तत्वम्, द्वितीयाद्विवचनस्य शपश्च 'अनुदात्तौ सुप्पितौ (३, १, ४)"—इत्यनुदात्तत्वे, 'धातोः (६, १, १६२)'—इति धातुस्वर एव शिष्यते, 'सुपां सुलुक्॰ (७, १, ३९)'—इत्यादिना विभक्तेराकारादेशः ॥ १ ॥

२ १ २
ऋतेन मित्रावरुणावृतावृधावृतस्पृशा।

१ २ २ १ २
क्रतुं बृहन्तमाशाथे ॥*२*॥

अथ द्वितीया। हे "मित्रावरुणौ!" मित्रश्च वरुणश्चेति मित्रावरुणौ "देवता द्वन्द्वे च (६, ३, २६)"—इति पूर्वपद-

स्थानङादेशः, तादृशौ युवां "क्रतुं" प्रवर्त्तमानमिमं सोमयागम् "आशाथे" आनशाथे व्याप्नुवन्तौ "छन्दसि लुङ् लङ् लिटः (३, ४, ६)"—इति वर्त्तमाने लिट् नुडभावश्छान्दसः। केन ? "ऋतेन" अवश्यम्भावितया सत्येन फलेन असाध्यं फलं दातुमित्यर्थः। कीदृशौ युवाम् ? "ऋतावृधौ" 'ऋतमित्युदकनाम (निघ० १, १२, ६), सत्यं वा यज्ञं वा'—इति यास्कः उदकादीनामन्यतमस्य वर्द्धयितारौ। अतएव "ऋतस्पृशा" उदकादीन् स्पृशन्तौ। कीदृशं क्रतुम् ? "बृहन्तम्" अङ्गैरुपाङ्गैश्चातिप्रौढ़म् ॥ २ ॥

१ २ २ २ १ १२ २ १ १२ १२

कवी नो मित्रावरुणा तुविजाता उरुक्षया।

१२ २१२

दक्षं दधाते अपसम् ॥*३*॥ [६]

अथ तृतीया। "मित्रावरुणा" मित्रावरुणौ एतौ देवौ "नः" अस्माकं "दक्षं" बलम् "अपसं" कर्म्म च "दधाते" पोषयतः, कीदृशौ ? "कवी" मेधाविनौ, "तुवि जाता" तुविजातौ बहूनामुपकारकतया समुत्पन्नौ, "उरुक्षया" बहु निवासौ मित्रावरुणौ—मित्रशब्दः प्रातिपदिक-स्वरेणान्तोदात्तः (फि० १, १), वरुणशब्दो नित्स्वरेणाद्युदात्तः (६, १, १८७)। तुविजातौ—बहूनामुपकारकतया तत्सम्बन्धित्वेन जाताविति षष्ठीसमासे समासान्तोदात्तत्वम् (८, १, २२३), चतुर्थीसमासे हि "क्तेच (६, २, ४५)"—इति क्वचित् पूर्वपदप्रकृतिस्वरः स्यात्। उरूणां बहूना क्षयो ययोः उरुक्षयो, "क्षि निवास गत्योः (तु० प०)"—इति धातोः क्षियन्त्यस्मिन्निति अय इत्यधिकरणे एव अच् प्रत्ययान्तस्य 'चितः (६, १, १६३)'

—इत्यन्तोदात्तत्वे प्राप्ते "चयो निवासे (६, १, २०१)"—इत्याद्युदात्तत्वं विहितम्, समासे तु "समासस्य (८, १, २२३)"—इत्यन्तोदात्तत्व वाधित्वा कृदुत्तरप्रकृतिस्वरेण (६, २, १३९) प्राप्तमुत्तरपदाद्युदात्तत्वम्। यद्यपि थाथादि स्वरेणान्तोदात्तत्वेन बाध्यते तथापि "पदादिश्छन्दसि बहुलम् (६, २, १९९)" —इत्युत्तरपदाद्युदात्तत्व द्रष्टव्यम्। दच – दधतेक्त्वाद्कर्मणो जित्वादाद्युदात्तः (६, १, १९७)। आप्यते फलमनेनेत्यपः कर्म, "आप कर्मोख्यायां ह्रस्वो नुट् च वा (उ० ४, १०८ दी० वृ०)"—इत्यसन्तस्य अपसशब्दे इत्यादौ नित्वा (६, १, १९७) दाद्युदात्तस्यापस् शब्दस्यात्र व्यत्ययेन प्रत्ययाद्युदात्तत्वम् (३, १, २) ॥ २ ॥ [६]

१ २ ३ १ २र २ १ २र
इन्द्रेण सꣳ हि दृक्षसे संजग्मानो अविभ्युषा।
२ १ ० २ १२
मन्दू समानवर्चसा ॥*१*॥

ऋ० मधुच्छन्द। छ० गायत्री। दे० मरुद्गण.। अथ तृतीयदृचे—प्रथमा। हे मरुद्गण। त्वम् "इन्द्रेण" "सञ्जग्मान." सङ्गच्छमान· "स दृक्षसे हि" सम्यग् दृश्यसे· खलु, भवद्गणमस्माभिर्द्रष्टव्यमित्यर्थः। कीदृशेनेन्द्रेण? "अविभ्युषा" भीति रहितेन कीदृशाविन्द्रमरुद्गणौ? "मन्दू" नित्य प्रमुदितौ, "समानवर्चसा" तुल्य दीप्ती "पुरा कदाचित् इन्द्र वध दशायाम् इन्द्रस्य सखायः सर्वे देवा वृत्र श्वासेनापसारितास्तदानीमिन्द्रस्य वृत्रसम्बन्धि-सकल सेना जयार्थं मरुद्भिः सङ्गमो भूत.' —सोऽयमर्थो "वृत्रस्य त्वा श्वसथा (ऋ० चा० ४, १, ४, २, १०६ पृ०)"—इति मन्त्रे समाम्नातः; "इन्द्रो वै वृत्त्र हनिष्यन्"

—इति ब्राह्मणे (ता०) प्रपञ्चितम्; इन्द्रशब्दः परमैश्वर्यवन्तं मरुद्गणञ्चाभिधत्ते, तदानीमिन्द्रस्य सम्बोधनं वह्निरेवाध्याहर्त्तव्यम्। तथा चेयमृक् यास्केनैव व्याख्याता—"इन्द्रेण हि सन्दृश्यसे सङ्क्रममाणोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्, समानवर्चसेत्येतेन व्याख्यातम् (४, १२)"—इति। सन्दृक्षसे—सम्पश्येथाः "दृशेश्चेति वक्तव्यम् (७, १, ७ वा०)"—इत्यात्मनेपदम्, दृशेः "लिडर्थे लेट् (३, ४, ७)"—इति प्रार्थनायां लेट्, थासस्से (३, ४, ८०), "लेटोऽडाटौ (३, ४, ९४)"—इत्यडागमः, "सिब्बहुलं लेटि (३, १, ३४)"—इति सिप्, "सञ्ज्ञापूर्वको विधिरनित्यः (प० शे० ९३)"—इति गुणाभावः, व्रश्चादिना (८, २, ३६) षत्वम्, "षढोः कः सि (८, २, ४१)"—इति कत्वम्, "आदेशप्रत्यययोः (८, ३, ५९)"—इति सिपः षत्वम् बहुलग्रहणात् सिपः परस्तात्क्सवपि भवति, सिपा व्यवधानात् प्रत्ययादेशो न भवति, प्रपः पित्त्वादनुदात्तत्वम् (३, १, ४), उत्तरस्य लसार्वधातुकानुदात्तत्वम् (६, १, १८६), धातुस्वर एव शिष्यते (६, १, १६२), हि शब्दयोगात् "तिङ्ङतिङः (८, १, २८)" —इति निघातो न भवति "हि च (८, १, ३४)"—इति प्रतिषेधात्। सञ्जग्मानः—गमेः सम्पूर्वात् छन्दसि लुङ्लङ्लिटः (३, ४, ६)"—इति वर्त्तमाने लिट्, "समोगम्यृच्छि० (१, ३, २९)"—इत्यात्मनेपदविधानात् लिटः कानजादेशः (३, २, १०६), द्विर्भावः (६, १, ८), हलादिशेषः (७, ४, ६०), अभ्यासस्य चुत्वम् (७, ४, ६२), "गमहन० (६, ४, ९८)"—इत्युपधा लोपः, कानचश्चित्त्वादन्तोदात्तत्वम्, गतिसमासे (२, २, १८), कृदुत्तरपदप्रकृतिस्वरत्वम् (६, २ १३९)। अबिभ्युषा—"ञि भी भये (ज०, प०), पूर्ववच्छिट्

( ३, ४, ६ ), "शेषात् कर्त्तरि० ( १, ३, ७८ )"—इति परस्मैपदम्, "क्वसुश्च ( ३, २, १०७ )"—इति लिटः क्वसुरादेशः, तस्य कित्त्वाद् गुणाभावः ( १, १, ५ ), अभ्यासस्य ह्रस्व-जश्त्वे ( ७, ४, ६९ )—( ८, ४, ५४ ) क्रादिनियमात् प्राप्त इट् ( ७, २, १३ ) "वस्वेकाजाद्घसाम् ( ७, २, ६७ )"—इति नियमात् निवर्त्तते नञ्समासे तृतीयैकवचने भत्वाद "वसोः सम्प्रसारणम् ( ६, ४, १३१ )"—इति वकारस्य उकारादेशः, "सम्प्रसारणाच्च ( ६, १, १०८ )"—इति पूर्वरूपत्वं बाधित्वा "एरनेकाच ( ६, ४, ८२ "—इति यणादेशः, अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( ६, २, १६८ ), पूर्वेण सह संहितायामोकारस्य "एङः पदान्तादति ( ६, १, १०९ )"—इति पररूपत्वे प्राप्ते "प्रकृत्यान्तः पादमव्यपरे (६, १, ११५ )"—इति प्रकृतिभावः। मन्द्रू—'मद स्तुति-मोद-मद स्वप्न कान्ति गतिषु' ( भ्वा०, आ०, ), "इदितो नुम् धातोः (७, १, ५८)" —इति नुमागमः, कुरित्यनुवृत्तौ "स्फाय-तञ्चु वीयु नीवञ्च लिगु ( उ० १, ३६ )"—इत्यत्राविभक्तिक निर्देशाद्वक्तेर्लिङ्गुरितिवदात्वन्तरादपि कुरित्युक्तम्, प्रत्ययस्वरेणान्तोदात्तः ( ३, १, ३ ), द्विवचने सौ "प्रथमयोः पूर्वसवर्णः ( ६, २, १०४ ), तृतीयैकवचने च "सुपा सु लुक्० ( ७, १, ३९ )"—इत्यादिना पूर्वसवर्णदीर्घत्वम्, समान वर्चो ययोरिति वा यस्येति वहुव्रीहिः, द्विवचने "सुपां सु-लुक्० ( ७, १, ३९ )"—इत्याकारः, समान-पदस्य प्रातिपदिकान्तोदात्तत्वम् ( फि० १, १ ), बहुव्रीहौ पूर्वपद प्रकृति स्वरेण ( ८, २, १ ), तदेवावशिष्यते ॥१॥

१ २र ३१उ २ ३१ २ ३ १ २ ३ १

आदह स्वधामनु पुनर्गर्भत्वमेरिरे ।

१ २ ३ १ २ ३ १ २
दधाना नाम यज्ञियम्॥*२*॥

अथ द्वितीया। अहेत्यवधारणार्थः। "आत् अह" वर्षर्त्तोरनन्तरमेव "स्वधामनु" इतःपरं जनिष्यमाणमन्नमुदकं वा अनुलक्ष्य मरुतो देवाः "पुनः गर्भत्वम् आ ईरिरे" मेघ-मध्ये जातस्य गर्भाकारं प्रेरितवन्तः प्रतिसंवत्सर मेवं कुर्वन्तीति दर्शयितुं पुनःशब्दः प्रयुक्तः। कीदृशा मरुतः? "यज्ञियं" यज्ञार्हं "नाम" "दधानाः" धारयन्तः। सप्तसु गणेषु मरुतामीदृक् चान्यादृक् चेत्यादीनि यज्ञ योग्यानि नामान्यन्यत्राम्नातानि। "अन्धः"—इत्यादिष्वष्टाविंशति-सङ्ख्याकेष्वन्ननामसु "अर्क" (१५), "रसः" (१६), "स्वधा" (१७)—इति पठितम्, (निघ० २, ७) "अर्णः"—इत्यादिष्वेकशत-सङ्ख्याकेषूदक-नामसु च "तेजः" (८६), "स्वधा" (८७), "अध्वरम्" (८८)—इति पठितम् (निघ० १, १२)। "आत्"-"अह"-निपातावाद्युदात्तौ (फि० ४, १२)। स्वधा—स्वं लोकं दधाति पुष्णातीति स्वधा, "आतोऽनुपसर्गे कः (३, २, ३), थाद्युत्तर-प्रकृतिस्वरत्वम् (६, २, १६८)। अनु-पुनः-शब्दौ निपातावाद्युदात्तौ (फि०, ४, १२)। गर्भस्य भावो गर्भत्वं प्रत्ययस्वरः (३, १, ३)। एरिरे—अन्तर्भावितण्यर्थात् 'इण् गतौ (अदा०, प०)'—इत्यस्मादनुदात्तेतः परस्य लिटो झस्य इरेच्, चित्त्वादन्तोदात्तः (६, १, १६३), "सह सुपा (२, १, ४)"—इत्यत्र "सुपा" योगविभागाटाङा सह तिङः "समासस्य (८, १, २२३)"—इत्यन्तोदात्तत्वम्, "इजादेश गुरुमतोऽनृच्छः (३, १, ३६)"—इत्याम् न भवति मन्त्रत्वात् अह शब्द-योगान्निघाताभावः "तु-पश्यपश्यताहैः पूजायाम् (८, १, ३९)"—इति

निषेधात्। दधानाः—आनचयित्वादन्तोदात्तत्वे प्राप्ते (६,१,१६२) "अभ्यस्तानामादिः (६, १, १८९)"—इत्याद्युदात्तत्वत्। यज्ञमर्हति यज्ञियम्, "यज्ञर्त्विग्भ्यां घ-खञौ (५,१,७१)"—इति घ-प्रत्ययः "आयनेयीनीयियः फ ढ ख छ घां प्रत्ययादीनाम् (७, १, २)"—इतीयादेशः प्रत्ययस्वरेण इकार उदात्तः (३, १, ३) ॥ २ ॥

२ १ १ २ २ १ २ २ २ १ १
वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः।
१ २ ३ २ ३ १ २
अविन्द उस्रिया अनु ॥*३*॥ [७]

अथ तृतीया। अस्ति किञ्चिदुपाख्यानम् 'पणिभिर्देवलोकाद् गावोऽपहृताः अन्धकारे प्रक्षिप्ताः तायेन्द्रो मरुद्भिः सहाजयत'—इति। एतच्च बह्वृचानुक्रमणिकायां सूचितम्—"पणिभिरसुरैर्निगूढा गा अन्वेष्टुं सरमादेवशुनीन्द्रेण प्रेषिता ता ऋषिभिः पणयाऽमित्रीयन्तः प्रोचुः"—इति। मन्त्रान्तरेऽपि दृष्टान्ततया सूचितम्—"निरुद्धा आपः पणिनेव गावः"—इति तदेव उपाख्यानमभिप्रेत्योच्यते—हे "इन्द्र!" "वीळु चित्" दृढमपि दुर्गमस्थानम् "आरुजत्नुभि." अभिभञ्जद्भिः "वह्निभिः" वोढृभिः अन्यत्र नेतुं समर्थैः मरुद्भिः सहितस्त्वं "गुहा चित्" गुहायामपि स्थापिता "उस्रिया." गाः "अन्वविन्दः" अन्विष्य लब्धवानसि। "ओजः" (१), "पाजः" (२)—इत्यादिष्वष्टाविंशतिसङ्ख्याकेषु बल-नामसु "दृढः" (१२) "वीळु" (१४) "च्यौत्नम्" (१५)—इति पठितम्। (८, ९) नव सङ्ख्याकेषु गो-नामसु "अघ्न्या" (१), "उस्रा" (२), "उस्रिया" (३)—इति पठितम् निघ० (२,११)। वीळु—प्रातिपदिक-स्वर (फि० १, १)। चित्—आदिरुदात्तः।

आरुजत्नुभि.—'रुजो भङ्गे ( तु० प० ) इत्यस्मादौणादिकः क्नुच् प्रत्ययः, कित्त्वाद् ( १, १, ५ ) गुणाभावः, चित्त्वादन्तोदात्तत्वम् ( ६, १, १६ ) समासे कृदुत्तरपदप्रकृतिस्वरत्वञ्च (. ६, २, १३९ )। गुहा—सप्तम्या डादेशः ( ७, १, ३९ ), "ग्रामादीनाञ्च (फि०, २, १५)"—इत्याद्युदात्तः। वह्निभिः—"वहि-श्रि श्रु युद्रु-ग्ला हा-त्वरिभ्यो नित् ( उ० ४, ५१ )"—इति नि प्रत्ययः, नित्त्वादाद्युदात्तः। अविन्द—'शेमुचादीनाम् ( ७, १, ५९ )"—इति नुमागमः, लुङ् लङ् लृङ् क्ष्वडुदात्तः (६, ४, ७१)। वसन्तीति उस्रियाः वसेः कर्त्तरि रक् प्रत्ययः, घत्वाभावश्च बाहुलकादूहनीय. ( ३, १, ८५ ), उक्तं हि 'यत्र पदार्थविशेषसक्तं प्रत्ययतः प्रकृतेश्च तद् बाह्यम् ( ३, १, ८५ भा० )'—इति, इकारः प्रत्ययस्वरेणान्तोदात्तः (३,१,३) ॥२॥[७]

ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतम्।
इन्द्राग्नी न मर्धतः ॥*१॥

ऋ० भरद्वाजः। छ० गायत्री। दे० इन्द्राग्निः। अथ चतुर्थे तृचे प्रथमा। "ता" तौ तादृशौ "इन्द्राग्नी" "हुवे" आह्वये। "ययो." इन्द्राग्न्योः "पुरा" पूर्वस्मिन् काले "कृतं" "विश्वं" सर्वम् "इदं" पूर्वोक्तं कीर्त्तितं वीर्यं "पप्ने" पन्यते ऋषिभिः स्तूयते;—ताविन्द्राग्नी हुवे इत्यन्वयः। तौ चेन्द्राग्नी न "मर्धत." मर्धतिः हिंसाकर्मा ( निघ० २, १९, १४ ) स्तोतॄन् अहिंस्तः। अतोऽस्मान् आहूतौ रक्षतामिति भावः ॥ १ ॥

१ २  २ २ २ २  २ २  २ १ २
उग्रा विघनिना मृध इन्द्राग्नी हवामहे ।
१ २  २ १ २
ता नो मृडात ईदृशे ॥*२*॥

अथ द्वितीया । "उग्रा" उग्रौ उद्गूर्णं बलौ अतएव "मृधः" शत्रून् "विघनिना" विघनितौ विशेषेण हतवन्तौ "इन्द्राग्नी" "हवामहे" आह्वयामहे । तौ चेन्द्राग्नी "ईदृशे" अस्मिन् संग्रामे "नः" अस्मान् "मृडात" सुखयताम् यद्वा मृडातिः उपदयाकर्मा ; नोऽस्माकं मृडातः उपदयां कुरुताम् ॥२॥

१ २  ३ १  २र  ३ १  २र
हथो वृत्राण्यार्य्या हथो दासानि सत्पती ।
२ ३उ  १ २ ३ २
हथो विश्वा अप द्विषः ॥*३*॥ [८]

अथ तृतीया । हे इन्द्राग्नी ! "आर्य्या" आर्य्यैः कर्मानुष्ठातृभिः कृतानि "वृत्राणि" उपद्रवजातानि "हथः" हिंस्थः । तथा "सत्पती" सतां पालयितारौ युवां "दासानि" दासाः कर्महीनाः असुराः, तैः कृतानि चोपद्रवजातानि हथः । अपि च "विश्वाः" सर्वाः "द्विषः" द्वेष्ट्रीः शत्रुभूताः प्रजाः "अप हथः" विनाशयथः अतोऽस्माकमप्येवमेव कुरुतामिति भावः॥
"हथः"-"हनः"—इति पाठौ ॥ ३ ॥ [८]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

३ १  २र  ३ २ ३ १ २ ३ २ ३ २ ३ २
अभि सोमास आयवः पवन्ते मद्यं मदम् ।

२ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १२
समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो: मदच्युत:
॥*१*॥

ऋ॰ विश्वामित्र:। छ॰ बृहती। दे॰ सोम:। अथ तृतीयखण्डे प्रथमतृचे—प्रथमा। "आयव:" गमनशीला: "सोमास:" सोमा: "मद्य" मदकरं मदम् आत्मीयं रसम् "अभिपवन्ते" अभितो निर्गमयन्ति। कुत्रेत्युच्यते "समुद्रस्य" अन्तरिक्षस्य "अधिविष्टपे" अधिकं समुच्छ्रिते पवित्रे यद्वा समुद्रस्य यस्मात् समुद्द्रवन्ति रसास्तस्य कलशस्य "अधि" उपरि "विष्टपे" स्थाने पवित्रे निर्गमयन्ति। कीदृशा:? "मनीषिण:" मनस ईशितारो "मत्सास:" मदकरा: "मदच्युत:" मदस्राविण: ॥

"विष्टपे"-"विष्टपि"—इति पाठौ, "मदच्युत:"-"स्वर्विद:" इति च ॥ १ ॥

१ २ ३ १ २र ३ २ ३ १ २ ३ २ ३ १ २ ३१
तरत्समुद्रं पवमान ऊर्म्मिणा राजा देव ऋतं बृहत्
१ २ ३ १ २ ३ २ ३ १ २ ३ ३ १ २ ३ १ २ ३ १२
अर्षा मित्रस्य वरुणस्य धर्मणा प्र हिन्वान ऋतं बृहत्
॥*२*

अथ द्वितीया। "पवमान:" पूयमान: "देव:" द्योतमान: "बृहत्" अत्यन्तम् "ऋतम्" सत्यभूत: "राजा" सोम: "समुद्रम्" अन्तरिक्षं कलशं वा "ऊर्म्मिणा" धारया "तरत्" तरति "हिन्वान:" प्रेर्य्यमाण:। "ऋतम्बृहत्" अत्यन्तं सत्यभूत: स सोम: "मित्रस्य वरुणस्य" मित्रावरुणयो: "धर्मणा" धारणार्थं "प्र अर्षा" प्रार्षति प्रकर्षेण गच्छति ॥

"अर्षा"-"अर्षन्"—इति पाठौ ॥ २ ॥

१ २ २ १ २ ३ १ २ ३ १ ३२ ३ १ १२४.२२
नृभिर्येमाणो हर्य्यतो विचक्षणो राजा देवः समुद्र्यः ॥*३*॥ [९]

अथ ऋग्व्याख्यारूपा तृतीया। "नृभिः" कर्म-नेतृभिः ऋत्विग्भिः "येमानः" नियम्यमानः "हर्य्यतः" स्पृहणीयो "विचक्षणः" विद्रष्टा "देवः" दीप्यमानः "समुद्र्यः" अन्तरिक्षे भवः "राजा" सोमः इन्द्रार्थं पवते इति शेषः॥

"येमाणः"-येमानः" इति पाठौ॥ ३॥ [९]

२ १ ३२ ३ १ ३२
तिस्रो वाच ईरयति प्र वह्निः

३ १ २ २ १ ३२ २ २
ऋतस्य धीतिं ब्रह्मणो मनीषाम्।

१ २ ३ १ २ ३ १ २ ३
गावो यन्ति गोपतिं पृच्छमानाः

१ २ ३ १ २ ३ २
सोमं यन्ति मतयो वावशानाः ॥*१*

ऋ० पराशरः। छ० त्रिष्टुप्। दे० सोमः। अथ द्वितीयतृचे—प्रथमा। "वह्निः" वोढा यजमानः "तिस्रोवाचः" ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति। तथा "ऋतस्य" यज्ञस्य "धीतिं" धारयित्रीं "ब्रह्मणः" परिवृढस्य सोमस्य "मनीषां" मनस ईशित्रीं कल्याणीं वाचं प्रेरयति। किञ्च "गोपतिं" वृषभं यथा गावोऽभिगच्छन्ति तद्वत् गवां स्वामिनं सोमं "गावः" "पृच्छमानाः" पृच्छन्त्यः सत्यः यन्ति स्व-पयसा मिश्रयितुम् अभिगच्छन्ति। तथा "वावशानाः" कामयमानाः "मतयः" स्तोतारश्च "सोमं" "यन्ति" स्तोतुमभिगच्छन्ति॥१॥

२ १ १ २ ३ १ २ २ १उ
सोमं गावो धेनवो वावशाना:

३ १ २ २ १ २ २ १ २
सोमं विप्रा मतिभिः पृच्छमाना: ।

१ २ ३ १ २ ३ १ २ २
सोम: सुत ऋच्यते पूयमान:

१ २ ३ २ ३ १ ३ १ २
सोमे अर्कास्त्रिष्टुभः सं नवन्ते ॥*२*॥

अथ द्वितीया। "धेनवः" प्रीणयित्र्यो "गावः" "सोमं" "वावशाना:" कामयमाना भवन्ति, "विप्राः" मेधाविनः स्तोतारः "सोमं" "मतिभिः" स्तुतिभिः "पृच्छमाना:" पृच्छन्तो भवन्ति "सुतः" अभिषुतः "सोमः" "पूयमानः" ऋत्विग्भिः "ऋच्यते" चरति। तथा "त्रिष्टुभः" त्रिष्टुब्रूपाः "अर्का:" अर्चाभिः क्रियमाणा एते मन्त्राः "सोमे" "सन्नवन्ते" सङ्गच्छन्ते ॥

"सोमस्सुतऋच्यतेपूयमान:"—इति छन्दोगाः, "सोमः-सुतः पूयते अज्यमानः"—इति बह्वृचाः ॥ २ ॥

१ १ २ २ १ २ १
एवा नः सोम परिषिच्यमान

१ २ ३ १ १ २ १
आ पवस्व पूयमानः स्वस्ति ।

१ २ १ २ २ १ २र
इन्द्रमा विश बृहता मदेन

१ ० १ २ ३ २ ३ १ १ २
वर्धया वाचं जनया पुरन्धिम् ॥*३*॥ [१०]

अथ तृतीया। हे "सोम!" "परिषिच्यमान:" परितः

पात्रेषु सिच्यमानः पूयमानः त्वं "नः एवा" अस्माकमेव "स्वस्ति" अविनाशम् चा पयस्व प्रापय। किञ्च "बृहता" महता "मदेन" मदकर-रसेन अहम् "इन्द्रम्" "आविश" प्रविश। तथा "वर्द्धया" "वाच" स्तुति-लक्षणां प्रसिद्धां कुरु। किञ्च "पुरन्धि" बहुधिय प्रज्ञान "जनया" अस्मभ्यमुत्पादय। वाक्यभेदादनिघात. ॥ ३ ॥ [१०]

इति सामवेदार्थप्रकाशे उत्तरार्चिकस्य चतुर्थस्याध्यायस्य तृतीय. खण्ड. ॥ ३ ॥

१ १२ २ १ २ १ १२ २ १
यद्याव इन्द्र ते शतᳬ शतं भूमीरुत स्युः।
१ २ २ २ २ २ २ २ २ २ १ १ २ २ १ २
न त्वा वज्रिन्त्सहस्रᳬ सूर्य्या अनु न जातमष्ट रोदसी ॥*१*॥

ऋ० पुरुहन्मा। छ० बृहती। दे० इन्द्रः। अथ चतुर्थखण्डे, प्रगाथरूपे—प्रथमसूक्ते—प्रथमा। हे "इन्द्र!" "ते" तव प्रतिमानार्थं "यद्" यदि "द्याव." द्युलोका: "शत" शतसङ्ख्याका. "स्यु." तथापि नाश्नुवन्ति। "उत" अपि च "भूमी." भूम्य. "ते" तव मूर्त्ति प्रतिबिम्बाय "शत" स्यु: तथापि "न" अश्नुवन्ति। हे "वज्रिन्!" "त्वा" त्वाम् "सहस्र" "सूर्य्या." अगणिता अपि सूर्य्याः "न" "अनु" भवन्ति न प्रकाशयन्तीत्यर्थ.। "न तत्र सूर्य्यो भाति (मु० उप०)"—इति श्रुतेः। किं बहुना जातं पूर्वमुत्पन्न किञ्चित् त्वामनु "नाष्ट" नाश्नुते तथा "रोदसी" द्यावापृथिव्यौ नाश्नुवाते सर्वेभ्योऽतिरिच्यसे इत्यर्थ.। "ज्यायान् पृथिव्या ज्यायानन्तरिक्षाद् दिवो ज्यायानेभ्यो लोकेभ्य."—इति (छा० उप०) श्रुतेः ॥ १ ॥

१ २ ३१ २र
आ पप्राथ महिना वृष्ण्या

१ २ २ २ ३ १२
वृषन्विश्वा शविष्ठ शवसा

१ २ २ ३ १ २
अस्माꣳ अव मघवन् गोमति

१ २ ३र १ २ ३ १ २
व्रजे वज्रिं चित्राभिरूतिभिः ॥*२*॥ [११]

अथ द्वितीया। हे "वृषन्"! अभिमतवर्षकेन्द्र! त्वम् "आ पप्राथ" आ पूरयसि व्याप्नोषि। कानि? "विश्वा" सर्वाणि "वृष्ण्या" वर्षकाणि बलानि शत्रु सम्बन्धीनि। केन साधनेन? "महिना" महता "शवसा" बलेन स्वीयेन अथवा वृष्ण्येत्येतच्छवो विशेषणम्। तथा सति अभिमतवर्षकेण महता बलेन अस्मदीयानि बलानि पूरयसीत्यर्थः। अथ तथाभूतस्त्वा हे "शविष्ठ!" बलवत्तम! "गोमति" बहुभिः गोभिर्युक्ते "व्रजे" शत्रु-सम्बन्धिनिमित्ते सति "अस्मान्" "अव" रक्ष। हे "मघवन्!" धनवन्! "वज्रिन्!" वज्रयुक्तेन्द्र! कैः साधनैः? "चित्राभिः" नानाविधैः "ऊतिभिः" रक्षणैरिति॥२॥ [११]

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः।

३ १ २ २ ३ २ ३ १ २ ३ १ २
पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते॥*१*

ऋ० मेधातिथिः। छ० बृहती। दे० इन्द्रः। अथ द्वितीयतृचे—प्रथमा। हे "वृत्रहन्!" इन्द्र! "त्वा" त्वाम् "वयं घ"

वयं खलु "सुतवन्तः" "आपः न" आप इव प्रवणमभिग-च्छामः। "पवित्रस्य" सोमानां प्रस्रवणेषु "वृक्तवर्हिषः" तीर्णवर्हिषः स्तोतारश्च त्वां पर्युपासते ॥ १ ॥

१ २ ३ २उ ३ १ २ ३ १२ ३ १ २
स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः।
३ १ ३ १ २ ३ २ २उ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
कदा सुतं तृषाण ओक आ गमदिन्द्र स्वब्दीव वंसगः
॥*२*॥

अथ द्वितीया। हे "वसो!" वासयितरिन्द्र! "त्वा" त्वां "सुते" अभिषुते सोमे "निरेके" निर्गमे "उक्थिनः" "नरः" नेतारः "स्वरन्ति" शब्दायन्ते। अपि चेन्द्रः "सुतं" सोमं प्रति "तृषाणः" तृष्यन् "स्वब्दीवः" स्वभूत-शब्दो इव "वंसगः" वननीय-गमनो वृषभः शब्द कुर्वन् "कदा" "ओकः" स्थानम् "आगमत्" आगच्छेत् ॥ २ ॥

१ २ ३ १ २ ३ १ २ ३ २र ३ १ २
कण्वेभिर्धृष्णवा धृषद्वाजं दर्षि सहस्रिणम्।
३ १ २ २ ३ २र
पिशङ्गरूपं मघवन्विचर्षणे मक्षू गोमन्तमीमहे
॥*३*॥ [१२]

अथ तृतीया। हे 'धृष्णो'!धर्षकेन्द्र! 'कण्वेभिः' कण्वान् मेधाविनः स्तोतॄन् अनुपिच्य विभक्ति व्यत्ययः (३, १, ८५) "सहस्रिणं" सहस्र-सङ्ख्याकं "वाजम्" "आदर्षि" प्रयच्छसि। हे "मघ-वन्"!धनवन्!"विचर्षणे" विद्रष्टरिन्द्र!"धृषत्" धृष्टं "पिशङ्ग-रूपं" "गोमन्तम्" वाजं "मक्षू" शीघ्रम् "ईमहे" याचामहे, त्वामिति शेषः ॥ ३ ॥ [१२]

३ २ ३ १ २ ३ १ ३ १ २ ३ २
तरणिरित्सिषासति वाजं पुरन्ध्या युजा ।
१ २ १ २ ३ १ २ ३ २ ३ १ ३र ३ १ २
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम्

॥*१*॥

ऋ० वसिष्ठः । छ० बृहती । दे० इन्द्रः । अथ प्रगाथरूपे तृतीयसूक्ते—प्रथमा । "तरणिरित्" युद्धादौ कर्मणि त्वरित एव पुमान् "पुरन्ध्या" महत्या धिया "युजा" सहायभूतया "वाजम्" अन्न "सिषासति" सम्भजते, "पुरुहूत" बहुभिराहूतम "इन्द्रम्" "गिरा" स्तुत्या हे यजमानाः ।-"व" युष्मदर्थम् अहम् "आ नमे" आनतमभिमुख कुर्वे । तत्र दृष्टान्त — "नेमि" चक्रस्य वलयम् "सुद्रुव" शोभनदारु "तष्टेव" यथा वर्द्धकि दारु नेमिमानमयति तद्वदित्यर्थ ॥ १ ॥

१ २२ ३१ २ ३ १ ३ १ ३र ३ १ २
न दुष्टुतिर्द्रविणोदेषु शस्यते न स्रेधन्तं रयिर्नशत् ।
२ ३ १ २ २ २ ३ २ १ २ ३ १ ३र २ ३
सुशक्तिरिन्मघवन् तुभ्यं मावते देष्णं यत्पार्य्ये दिवि

॥*२*॥ [१३]

अथ द्वितीया । "द्रविणोदेषु" धनदातृषु पुरुषेषु "दुष्टुतिः" असमीचीना स्तुतिः "न शस्यते" नाभिधीयते । किञ्च "स्रेधन्त" हिंसन्त धनदातृविषय स्तुत्यादि कर्माण्यकुर्वन्तमित्यर्थ, एवम्भूत जन "रयि." धन "न नशत्" न व्याप्नोति । तथा हे "मघवन्" धनवन्निन्द्र । "पार्य्ये दिवि" सौत्ये दिवसे "मावते" मत्सदृशाय स्तोत्रे "देष्ण" दातव्य "यत्" धनमस्ति

तत् "तुभ्यं" तस्य: सकाशात् "सुशक्तिरित्" शोभन-स्तुतिक एव स्तोता लभत इति शेषः ॥

"नदुष्टुतिर्द्रविणोदेषुशस्यते"—इति छन्दोगाः, "नदुष्टुती मर्त्योविन्दतेवसु"—इति बह्वृचाः ॥ २ ॥ [१३]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्थस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

१ २उ   २ ३ २   २ ३ २   ३ १ २
तिस्रो वाच उदीरते गावो मिमन्ति धेनवः ।

३ २   ३ १ २
हरिरेति कनिक्रदत् ॥*१*॥

ऋ० त्रित-आप्त्यो वा । छ० गायत्री । दे० सोमः ।

अथ पञ्चमे खण्डे—प्रथमतृचे—प्रथमा । "तिस्रोवाचः" ऋगादिभेदेन "उदीरते" प्रोद्गायन्ति ऋत्विजः । "धेनवः" आशिरेण प्रीणयित्र्यो "गावः" "मिमन्ति" शब्दायन्ते दोहार्थम्, "हरिः" हरितवर्णः सोमश्च "कनिक्रदत्" शब्दं कुर्वन् "एति" गच्छति द्रोणकलशम् ॥ १ ॥

२ १   २र   ३ २ ३ १ २   ३ १ २
अभि ब्रह्मीरनूषत यह्वीर्ऋतस्य मातरः ।

३ १ २   ३ १   २र
मर्जयन्तीर्दिवः शिशुम् ॥*२*॥

अथ द्वितीया । "ब्रह्मीः" ब्राह्मण-प्रेरिताः "यह्वीः" महत्यः 'यह्वः'—इति महन्नाम (निघ० ३, ३, १२) "ऋतस्य" यज्ञस्य "मातरः" निर्मात्र्यः स्तुतयः "दिवः" द्युलोकात् "शिशुं" शिशु-स्थानीय सोमम् "मर्जयन्तो." पावयन्तोः "अभ्यनूषत" स्तुवन्ति तृतीयस्यामितोदिवि सोम आसीदित्यादि श्रुतेः द्युशिशुत्वं तस्य ॥

"मर्जयन्तीः"-मर्म्यज्यन्ते"—इति पाठौ ॥ २ ॥

२ १ २ ३ २ २ ३ २ १ २ २ १ २
राय: समुद्रांश्चतुरोऽस्मभ्यं सोम विश्वतः ।
१ २ २ १ २
आ पवस्व सहस्रिणः ॥*२*॥ [१४]

अथ तृतीया। "रायः" धनस्य सम्बन्धिनश्च "चतुरः समुद्रान्" मणि-मुक्तादि-धन पूर्णानित्यर्थः। तादृशान् समुद्रान् "अस्मभ्यम्" अर्थाय हे "सोम!" "विश्वतः" सर्वतः "आ पवस्व"। तथा "सहस्रिणः" अपरिमितान् कामान् आपवस्व प्रयच्छ चतुःसमुद्रस्य धन-विशेष प्राप्ते तन्मध्यगत-धन-भूमि-स्वामित्वमन्तरेणा सम्भवात् चतुस्समुद्र-सहित-भूमण्डल-स्वामित्वमेवाशास्ते यजमानः ॥ ३ ॥ [१४]

२ १ १ १ २ २ २ २ १ २ २ १ १
सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।
१ २ २ २ १ २ १ २ २
पवित्रवन्तो अक्षरं देवान् गच्छन्तु वो मदाः ॥*१*॥

ऋ०.यजातिः। छ० अनुष्टुप्। दे० सोमः। अथ द्वितीयखचे—प्रथमा। "मधुमत्तमाः" अतिशयेन माधुर्य्योपेताः अत एव "मन्दिनः" मदकराः "सुतासः" अभिषुताः सोमाः "पवित्रवन्तः" पवित्रे वर्त्तमानाः सन्तः "इन्द्राय" इन्द्रार्थम् "अक्षरन्" पात्रेषु क्षरन्ति। अथ प्रत्यक्षकृतः—"वः" युष्माकं "मदाः" मदहेतवः रसाः "देवान्" इन्द्रादीन् "गच्छन्तु" ॥ १ ॥

२ १ १ १ २ १ २ ३ १ २
इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् ।
२ १ २र २ ३ २ १ २ ३ १ २
वाचस्पतिर्मखस्यते विश्वस्येशान ओजसः ॥*२*॥

अथ द्वितीया। "इन्दु." सोमः "इन्द्राय" इन्द्रार्थं "पवते" कलशे क्षरति—"इति" "देवासः" स्तुतिकारिणः स्तोतारः "अब्रुवन्" वदन्ति; यदा स्तोतार एव ब्रुवन्ति तदानीं "वाचः" स्तुतेः "पतिः" पालयिता यद्वा शब्दस्य स्वामी अत्यन्तं शब्दायमान इत्यर्थः, तादृशः सोमः "मखस्यते" स्तुतिभिः पूजामिच्छति लालसायां सुगागमः। कीदृशः? "ओजसः" बलवतः "विश्वस्य" सर्वस्य "ईशानः" प्रभुः॥

"ओजस."-"ओजसा"—इति पाठौ॥ २॥

१ २ २    २ ३ २    ३ २
सहस्रधारः पवते समुद्रो वाचमीङ्खयः।
१ २ ३ १ २ ३    १२    २ ३ २
सोमस्पती रयीणाꣳ सखेन्द्रस्य दिवेदिवे॥*३*॥ [१५]

अथ तृतीया। "सहस्रधारः" बहुविध धारोपेतः "सोम." "पवते" क्षरति। कीदृशः? "समुद्र." समुद्रवन्ति रसः रस-स्थानीयः "वाचमीङ्खयः" ईङ्खतेर्ण्यन्तस्य सुप्युपपदे खश् प्रत्ययः। स्तुतीना प्रेरयिता "रयीणां" धनानां "पतिः" प्रभुः यद्वा "रयीणा" हविषो दातृणां यजमानानां "पति." पालयिता "दिवेदिवे" प्रत्यहम् "इन्द्रस्य" "सखा" मित्रभूतः सोमः पवते॥

"सोमस्पतिः"-"सोमःपतिः"—इति पाठौ॥ ३॥ [१५]

२ १२ ३ १ २
पवित्रं ते विततं ब्रह्मणस्पते
३ १    ३१    २ १ २    २ ३ १
प्रभुर्गात्राणि पर्य्येषि विश्वतः।

१ २ २ ३उ ३ १ २
अतप्ततनूर्न तदामो अश्नुते

३ २ ३ १ १ २र ३ १ २र
शृतास इद्वहन्तः सं तदाशत ॥*१*॥

ऋ० पवित्रः। छ० गायत्री। दे० सोमः। अथ तृतीय-तृचे—प्रथमा। हे "ब्रह्मणस्पते।" मन्त्रस्य स्वामिन् सोम। "ते" "पवित्रं" शोधकमङ्गं "विततं" सर्वत्र विस्तृतम्। सः "प्रभुः" प्रभविता त्वं "गात्राणि" पातृङ्गानि "पर्य्येषि" परि-गच्छसि "विश्वतः" सर्वतस्तव तत् पवित्रम् "अतप्ततनूः" पयो-व्रतादिना असन्तप्तगात्रः "आमः" अपरिपक्वः "न अश्नुते" न व्याप्नोति। "शृतास इत्" "शृता एव" परिपक्वा एव "वहन्तः" यागं निर्वहन्तः "तत्" पवित्रम् "समाशत" व्याप्नुवन्ति॥
"सन्तदाशत"-"तत्समाशत"—इति पाठौ॥ १॥

१ २ ३ १२ १ २ ३ १ ३ १
तपोष्पवित्रं विततं दिवस्पदे-

२ ३ १ २३क २र
ऽर्चन्तो अस्य तन्तवो व्यस्थिरन्।

१ २ ३ १ २ ३ १ २
अवन्त्यस्य पवितारमाशवो

३ २ ३ १ २र ३ १ २
दिवः पृष्ठमधि रोहन्ति तेजसा ॥*२*॥

अथ द्वितीया। "तपो," अर्चुषा तापकस्य सोमस्य "पवित्रं" शोधकमङ्ग "दिवस्पदे" द्युलोकाख्योच्छ्रिते स्थाने "विततं" विस्तृ-तम्। "तृतीयस्यामितो दिवि सोम आसीत्"—इति ब्राह्म-णम्। "अस्य" "तन्तवः" अंशवः "अर्चन्तः" दीप्यमानाः

"व्यस्थिरन्" विविधं तिष्ठन्ति पृथिव्यां हविर्धाने वा "अस्य" सोमस्य "आशव." शीघ्रगामिनः रसा. "पवितार" पावयितार यजमानम् "अवन्ति" रचन्ति होमद्वारा पयानुता, "दिवः" द्युलोकस्य "पृष्ठ" पृष्ठभागम् उन्नतदेशम् "तेजसा" स्वप्रकाशेन सार्धम् "अधिरोहन्ति" आरोहणं कुर्वन्ति ॥

"अर्षन्तः" "शोचन्त."—इति पाठौ, "अधिरोहन्ति तेजसा"- "अधितिष्ठन्ति चेतसा"—इति पाठौ ॥ २ ॥

१ २   २ ३ ३ १ २   २ १
अरूरुचदुषसः पृश्निरग्रिय

२ १   २   १ २ १    २ १
उचा मिमेति भुवनेषु वाजयुः ।

१   २ २    २ १ २
मायाविनो ममिरे अस्य मायया

२ १ २   २ २ १ २ १ १   २
नृचक्षसः पितरो गर्भमा दधुः ॥*३*॥ [१६]

अथ तृतीया। "उषस." सम्बन्धि "पृश्नि." आदित्यः "पृश्निरादित्यो भवति प्राशुत एनं वर्णः"—इति निरुक्तम् (२, १४) "अग्रियः" मुख्य सोऽयम् "अरूरुचत्" रोचयति। स "उचा" जलस्य सेक्ता "भुवनेषु" भूतजातेषु "मिमेति" मिनोति उदकं प्रचिपतीत्यर्थः। "वाजयुः" तेषामन्नमिच्छन् "मायाविन." माया प्रज्ञा तद्वन्तः देवा "अस्य" सोमस्य "मायया" प्रज्ञया "ममिरे" निर्मितवन्तः, सोमस्यैकैकाशपानबला अग्न्यादयः स्व-स्व व्यापारेण जगत् सृजन्तीत्यर्थः। तथा "अस्य" मायया "नृचक्षस." नृणां द्रष्टारः "पितरः" पालका देवाः अङ्गिरसः पितरो वा "गर्भम्" "आदधु." धारयन्ति ओषधीषु च। अत्र सूर्यात्मकः सोमः स्तूयते। सूर्यरश्म्यनुगमाधीन-

वर्द्धनाच्चन्द्रस्य अयमुपमः पृश्निः सविता अरूरुचत् रोचते रोचयति वा सर्वं श्लिष्टं समानं तत्सम्बन्धिनः 'नृचक्षसः' नृणां द्रष्टारः 'पितरौ' जगद्रक्षका रश्मयो 'गर्भमादधुः' वृष्ट्यर्थम् ॥
"मिमेति भुवनेषु" "बिभर्त्ति भुवनानि"—इति पाठौ ॥३॥ [१६

इति सामवेदार्थप्रकाशे उत्तराचार्यस्य चतुर्थस्याध्यायस्य प्रथमः खण्डः ।

---

१ २र ३ १ २ ३ १ २ ३ १ २
प्र मꣳहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे।
२ १ २ ३ १ २
उपस्तुतासो अग्नये ॥*१*॥

ऋ० सौभरिः । छ० ककुप्-सतोबृहती । दे० अग्निः ।
अथ षष्ठे खण्डे—प्रथमसूक्त-प्रगाथे—हे "उपस्तुतासः" । उपस्तोतारः ! यूयं "मंहिष्ठाय" दातृतमाय "ऋताव्ने" ऋतवते यज्ञवते वा "बृहते" महते "शुक्रशोचिषे" दीप्ततेजसे "अग्नये" "प्र गायत" स्तोत्रं पठत ॥ १ ॥

१ २ ३ १ २ ३ १२ ३ १ २ ३ २ ३ १ २
आ वꣳसते मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः।
३ १ २ २ १ २र ३ १ २ १ २ ३ १ २
कुविन्नो अस्य सुमतिर्भवीयस्यच्छा वाजेभिरागमत्
॥*२*॥ [१७]

अथ द्वितीया । "मघवा" धनवान् "द्युम्नी" अन्नवान् यशस्वी वा । तथा च यास्कः—"द्युम्नं" द्योततेर्यशो वान्नं वा (५, ५)"—इति "समिद्धः" सम्यग् दीप्तः "आहुतः" आभिमुख्येन हुतः अग्निः "वीरवत्" पुत्रवत् "यशः" यशस्करम् अन्नम् "आवंसते" यजमानेभ्य आ प्रयच्छति तस्य "अस्य"

अग्ने: "भवीयसी" अस्मासु अतिशयेन भवितुं योग्या "सुमतिः" अनुग्रह-बुद्धिः "नः" अस्मान् "अच्छ" प्रति "वाजेभिः" अन्नैः सह "कुवित्" बहुवारम्। सन्निलम् कुविदिति बहु-नाम (निघ० ३, १, १२) "आगमत्" आगच्छतु॥

"भवीयसी"-"नवीयसी"—इति पाठौ॥ २॥ [१०]

१ २ ३१ २ ३ १ २ ३ १ २ ३ २
तं ते मदं गृणीमसि वृषणं पृत्सु सासहिम्।
२ ३ १ २ ३ १ २
उ लोककृत्नुमद्रिवो हरिश्रियम्॥*१*॥

ऋ० गोषुक्त-अश्वसूक्तौ वा। छ० उष्णिक्। दे० इन्द्रः। अथ द्वितीयतृचे—प्रथमा। हे "अद्रिवः।" वज्रवन् इन्द्र! "ते" त्वदीयं तं "मदं" सोमपान-जनितं हर्षं "गृणीमसि" गृणीमः प्रशंसामः "गृ शब्दे" क्र्यादिः 'प्वादीनां ह्रस्वः (७, ४, ८०)', "इदन्तोमसि (७, १, ४६)"—इति मसइगागमः। कीदृशम्? "वृषणं" वर्षितारं कामानां "पृत्सु" पृतनासु सङ्ग्रामेषु "सासहिं" शत्रूणाम् अभिभवितारं "लोककृत्नुं" लोकस्य स्थानस्य कर्त्तारं हरिश्रियं "हरिभ्याम्" अश्वाभ्यां श्रयणीयं सेव्यम् "उ" शब्द एवः समुच्चये पादपूरणे वा॥

"पृत्सु"-"पृत्सु"—इति पाठौ॥ १॥

३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
येन ज्योतींष्यायवे मनवे च विवेदिथ।
१ २ ३ १ २ ३ १ २ ३ २
मन्दानो अस्य बर्हिषो वि राजसि॥*२*॥

अथ द्वितीया। हे इन्द्र! "येन" यादृशेन मदेन "आयवे" पौर्वगेयाय "मनवे" विवस्वतः पुत्राय च "ज्योतींषि"

सूर्य्यादीनि वृत्रादिभिरावृतानि तद्वरणेन "विवेदिथ" अलम्भयः प्रज्ञापितवान् प्रकाशितवानसीत्यर्थः ; तेन मदेन "मन्दानः" मोदमानस्त्वम् "अस्य बर्हिषः" वृद्धस्य यज्ञस्य "विराजसि" विशेषेण दीप्यसे । यद्वा अस्येति तृतीयार्थे षष्ठी, अनेन बर्हिया वृद्धेन मदेन हृष्यन् विराजसि विशेषेण दीप्यसे ॥ २ ॥

१ २ ३ १ ० २　२　१　२र　३ १ २
तद्द्या चित्त उक्थिनोऽनु ष्टुवन्ति पूर्वथा ।
१ २　३ १　२　३ १ २
वृषपत्नीरपो जया दिवेदिवे ॥६३॥ [१८]

अथ तृतीया । हे इन्द्र । "ते" त्वदीयं "तत्" प्रसिद्धं बलम् "अद्य)चित्" अद्यापि "पूर्वथा" पूर्वस्मिन् काले इव "उक्थिन" शस्त्रिणः स्तोतारः "अनुष्टुवन्ति" क्रमेण प्रशंसन्ति । स त्वं "वृषपत्नीः" वृषा वर्षकः पर्जन्यः पतिर्यासां तादृशीः अपः "दिवेदिवे" प्रतिदिवसं "जय" स्वायत्तं कुरु ॥ ३ ॥ [१८]

१ २　१र　१ २उ　३　१ २　३ १ २
श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्य्यति ।
३ १ २ ३　१ २　३ १ २　३ १　२
सुवीर्य्यस्य गोमतो रायस्पूर्धि महाꣳ असि ॥ ९४ ॥

ऋ० तिरश्चो । छं० अनुष्टुप् । दे० इन्द्रः । अथ तृतीयऋचे—प्रथमा । हे इन्द्र ! यः "त्वा" त्वां "सपर्य्यति" सपरयन्दः कण्ड्वादिः हविर्भिः परिचरति । तादृशस्य "तिरश्च्याः" —एतन्नामकस्य ऋषेर्मम "हवं" स्तुतिभिस्त्वद्विषयमाह्वानं "श्रुधि" शृणु । श्रुत्वा च हे इन्द्र ! त्वं "सुवीर्य्यस्य" शोभन-

वीर्य्यापितस्य यद्वा वीरे पुत्रे भवं वीर्य्यं, सुपुत्रवतः "गोमतः" गवादि-पशुमतः "रायः" धनस्य दानेन अस्मान् "पूर्द्धि" पूरय। एतत्सामर्थ्यं कुत इत्यत आह—त्वं "महान्" गुणाधिकः श्रेष्ठश्च "असि" भवसि खलु॥ १॥

१ २ ३ १ २ ३ १ २ ३ १
यस्त इन्द्र नवीयसीं गिरं मन्द्रामजीजनत्।

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
चिकित्विन्मनसं धियं प्रत्नामृतस्य पिप्युषीम्॥२

अथ द्वितीया। हे "इन्द्र!" "यः" यजमानः "नवीयसीं" नवतरां पुनः पुनः क्रियमाणतया "मन्द्रां" मदकरीं "गिरं" स्तुतिलक्षणां वाचं "ते" त्वदर्थम् "अजीजनत्" उदपीपदत् अकार्षीदित्यर्थः। तस्मैः "स्तोत्रे" त्व "प्रत्नां" पुरातनीम् "ऋतस्य" सत्यस्य सम्बन्धि यद्वा तृतीयार्थे षष्ठी (२, ३, ६३) सत्येन "पिप्युषीं" प्रवृद्धां "लिङ्याशिष्य (३, १, ८६)"—इति प्यायतेः पी भावः तादृशः "चिकित्वित् मनसं" 'कित ज्ञाने' अस्मात् रूपम्, अकारस्येकारश्छान्दसः चिकित्वांसि ज्ञानानि सर्वेषां हृदयानि यथेति अभयं क्रियमाणं यत्तत्र रक्षणं तत् सर्वेषां हृदयं प्रज्ञापयतीति। ततः अतीन्द्रियार्थदर्शिका "धियं" त्वदीयं रक्षणाख्यं कर्म तस्मै कुरु॥

"यस्त इन्द्र"-"इन्द्रयस्ते"—इति व्यत्ययेन पाठौ॥ २॥

१ २ ३ १२ ३ १ २ ३ १ २ ३ १ २
तमु ष्टवाम यं गिर इन्द्रमुक्थानि वावृधुः।

३ २ ३ १ २ ३ १ २
पुरूण्यस्य पौंस्या सिषासन्तो वनामहे॥३॥[१८]

इति द्वितीयः प्रपाठकः।

---

अथ तृतीया। अन्वयः "तम्" परस्परमाहुतं पूर्वोक्तलक्षणम् "उ"—इत्यवधारणे तमेव "इन्द्रम्" "स्तवाम" स्तुतिभिः स्तुमः "यम्" इन्द्र "गिर" अस्माकं स्तुतयः "उक्थानि" शस्त्राणि च "वावृधु" प्रावर्द्धयत् तं स्तुम; ततो वयम् "अस्य" इन्द्रस्य "पुरूणि" बहूनि "पौंस्याणि" वीर्य्याणि "सिषासन्तः" 'षण सम्भक्तौ' सनीडभावपक्षे आत्मने क्रते रूप, "सनोतेरन. (८, ३, १०८)"—इति षांत्वनिषेधत्वम्। तानि वीर्य्याणि सम्भक्तुमिच्छन्तः सन्तो "वनामहे" तमिन्द्रं स्तुतिभिः सम्भजामहे ॥ ३ ॥ [१८]

इति सामवेदार्थ प्रकाशे उत्तरायन्थस्य चतुर्थाध्यायस्य षष्ठ खण्ड ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ४ ॥

इति श्रीमद्राजाधिराज परमेश्वर वैदिकमार्गप्रवर्त्तक श्रीवीर बुक्क भूपाल
साम्राज्य धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये
सामवेदार्थप्रकाशे उत्तराग्रन्थे चतुर्थोऽध्यायः।

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ५ ॥

अथ तृतीयः प्रपाठकः।

पञ्चमाध्यायः आरभ्यते।

१ २   १ २                    १ २ २
प्र त आश्विनीः पवमान धेनवो
२  १   २   २  १ २ २   १ २
दिव्या असृग्रन् पयसा धरीमणि।

१ २र ३ १ २
प्रान्तरिक्षात्स्थाविरीस्ते असृक्षत

१ २ ३ १ २ ३ १ २
ये त्वा मृजन्त्यृषिषाण वेधसः ॥*१*॥

ऋ० ऋषिगणाः। छ० जगती। दे० सोमः। तत्र, प्रथमे खण्डे प्रत्नाश्विनीरिति द्वचं प्रथमं सूक्तम्, तत्र प्रथमा—हे "पवमान"! सोम। "ते" तव "आश्विनी." व्याप्ता 'अशू व्याप्तौ (स्वा० आ०)' तस्मादौणादिको विनि', ततोऽण्, व्यत्ययेनाद्युदात्त "धेनव." प्रीणयितारः "दिव्याः" दिवि भवा दिव्य' पतन्त्यो धाराः "पयसा" युक्ताः "धरीमणि" धारके द्रोण-कलशे "प्र असृग्रन्" गच्छन्ति "ये" "वेधसः" विधातार ऋत्विजः हे-सोम। "ऋषिषाण" । ऋषिभिः सम्भक्तत्वात् "त्वा" त्वाम् "मृजन्ति" अभिषुण्वन्ति, "ते" वेधस "स्थाविरी" "स्थविरा धाराः" "अन्तरिक्षात्" सकाशात् "प्र असृक्षत" पात्रं प्रति सृजन्ति ॥

"धेनवः"-"धीजुवः"—इति पाठौ, "प्रान्तरिक्षात् स्थाविरीस्ते असृक्षत"-"प्रातर्त्तं पयः स्थाविरीरसृक्षत"—इति च ॥१॥

२ ३ १ ३१ २ ३ १
उभयतः पवमानस्य रश्मयो

३ १ २ ३ १ ३२ ३ १ २
ध्रुवस्य सतः परि यन्ति केतवः।

३१ ३ १ २ ३ २ ३ १ २ ३ २
यदी पवित्रे अधि मृज्यते हरिः

२ ३ १ ३२ ३ १ २
सत्ता नि योनौ कलशेषु सीदति ॥*२*॥

अथ द्वितीया। "पवमानस्य" पूयमानस्य "ध्रुवस्य" स्थि-

मविचलितस्य "सतः" विद्यमानस्य सोमस्य "केतवः" प्रज्ञापका रश्मयः "उभयतः" इतश्चामुतश्च "परि यन्ति" परितो गच्छन्ति अभिषवसमये एवं भवति। "यदि" यदा "पवित्रे" दशापवित्रे "हरिः" हरितवर्णोऽयं सोमः "अधि मृज्यते" तदानीं "सत्ता" सदनशीलोऽयं "योनौ" योनिषु स्थानेषु कलशेषु द्रोणकलशादिषु पात्रेषु निषीदति" निषसो भवति॥

"योनौ"-"योना"—इति च पाठौ॥२॥

२ ३ १ २ ३ १ २
विश्वा धामानि विश्वचक्ष ऋभ्वसः
१ १ २ ३१ ३१ ३ १ २
प्रभोष्टे सतः परि यन्ति केतवः।
२ १ २ ३ १ २ १
व्यानशी पवसे सोम धर्म्मणा
१ २ १ २ ३ १२
पतिर्विश्वस्य भुवनस्य राजसि॥३॥ [१]

अथ तृतीया। हे "विश्वचक्षः!" सर्वस्य द्रष्टः! सोम! "प्रभोः" परिवृढस्य "सतः" "ते" तव "ऋभ्वसः" "ऋभ्वा"—इति महन्नाम। महान्तः "केतवः" रश्मयः "विश्वा" विश्वानि सर्वाणि "धामानि" तेजःस्थानानि देव शरीराणि "परियन्ति" परितो गच्छन्ति प्रकाशयन्तीत्यर्थः। हे "सोम!" "व्यानशी" व्यापनशीलस्त्वं "धर्म्मणा" धारकेण रसनिष्यन्देन "पवसे" पूयसे। किञ्च "विश्वस्य भुवनस्य" "पतिः" स्वामी त्वं "राजसि" ईश्वरो भवसि॥

"प्रभोष्टेसतः परियन्ति"-"प्रभोस्तेसतः परियन्ति"—इति पाठौ, "व्यानशी"-"व्यानशि"—इति, "धर्म्मणा"-"धर्म्मभिः"—इति च॥३॥[१]

१ २ ३ २ ३ १ ३२ ३ १
पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम्।
१ २ ३ १ २ २
ज्योतिर्वैश्वानरं बृहत् ॥*१*॥

ऋ० असद्वीयु। छ० गायत्री। दे० सोम। अथ द्वितीय तृचे—प्रथमा। "पवमान" पूयमान सोम "बृहत्" महत् "वैश्वानर" वैश्वानराख्य "ज्योति" तेज "दिव" द्युलोकस्य "चित्र" विचित्र "तन्यतु न" अशनिमिव "अजीजनत्" अजनयत् ॥ १ ॥

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
पवमान रसस्तव मदो राजन्नदुच्छुनः।
२उ ३ १ २
वि वारमव्यमर्षति ॥*२*॥

अथ द्वितीया। हे "राजन्!" दीप्यमान! "पवमान!" पूयमान! सोम! "तव" त्वदीय "मद" मदकर "अदुच्छुन" रक्षोवर्जित "रस" "अव्यम्" अविमय "वार" वाल इया पवित्रम् "वि अर्षति" अभिगच्छति ॥

"पवमानरसस्तव" 'पवमानस्यते रस"—इति पाठौ ॥२॥

१ २ ३ २ ३ १ ३ १ २ ३ १
पवमानस्य ते रसो दक्षो वि राजति द्युमान्।
१ २ ३ १ २३क ३२ ३ १ २
ज्योतिर्विश्वं स्वर्दृशे ॥*३*॥ [२]

अथ तृतीया। हे सोम! "पवमानस्य" "ते" त्वदीय "रस" "दक्ष" "द्युमान्" दीप्तिमान् "विराजति" प्रकाशते।

न केवलं स्वयमेव प्रकाशते किन्तु "विश्वं" व्याप्तं "सः" सर्वं "ज्योतिः" तेजः "दृशे" द्रष्टुं करोतीति शेषः ॥

"पवमानस्यतेरसः"-"पवमानरसस्तव"—इति पाठौ ॥१॥ [२]

१७ २ १ २र २ २ २ १ २ १ १

प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः ।

१ १ २ २७ २ १ १

घ्नन्तः कृष्णामप त्वचम् ॥*१*॥

ऋ० मेधातिथिः । छ० गायत्री । दे० सोमः । अथ प्रयद्गाव इति षड्‌चं तृतीयं सूक्तम्, तत्र प्रथमा । "यत्" ये अभिषुताः सोमाः "गावः न" उदकानीव तानि यथा तूर्णमधः पतन्ति तद्वत्; गाव एव वोपमीयन्ते, ता यथा स्वं गोष्ठं प्रत्याशु गच्छन्ति तद्वत्; अथवा गावः स्तुतिवचनाः यथा स्तुत्यं प्रति क्षिप्रं प्राप्नुवन्ति तद्वत्, "भूर्णयः" क्षिप्राः, "त्वेषाः" दीप्ताः "अयासः" अयाः गमनशीलाः, "कृष्णां" कृष्णवर्णाम् "अपत्वचम्" अपकृष्टां त्वचं "घ्नन्तः", विनाशयन्तः, ईदृग्भूता ये सोमाः "प्र अक्रमुः" तां स्तुम इति शेषः ॥

"यत्"-"ये"—इति पाठौ ॥ १ ॥

१ १ २ १ २ २ १ २ २क २र

सुवितस्य वनामहेऽति सेतुं दुराय्यम् ।

१ २ २ १ २ २ २ २

साह्याम दस्युमव्रतम् ॥*२*॥

अथ द्वितीया । "सुवितस्य" शोभनं प्राप्तस्य सोमस्य सम्बन्धिनम् "अतिसेतुम्" रक्षोविषयं बन्धनं "वनामहे" सोमकर्तृकं रक्षसां बन्धनं स्तुम इत्यर्थः । कीदृशम्? "दुराय्यम्" दुष्प्रापणीयम् किञ्च "अव्रतम्" यज्ञादि-कर्म-रहितं "दस्युं" शत्रुं "साह्याम" अभिभवेम ॥

"दुराव्यं"-"दुराव्य", "शाम्राम"-"साह्वांसः"—इति पाठाः ॥२॥

२ १ २ १ १ २ १ २र २ १ ३ २

शृण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः ।

१२ २ १ २ ३ १

चरन्ति विद्युतो दिवि ॥*३*॥

अथ तृतीया। "शृण्वे" श्रूयते। कः ? "स्वनः"। किमिव ? "वृष्टेः" वर्षणस्य स्वन इव तस्य यथा महान् स्वनः श्रूयते तद्वत् प्रभूततरम् पात्र-समये श्रूयते। कस्य स्वन इति ? तत्राह—"पवमानस्य" पूयमानस्य "शुष्मिणः" बलवतः तस्यैव "विद्युतः" दीप्तयः "दिवि" अन्तरिक्षे चरन्ति ॥ ३ ॥

१ २ २ १उ २ १ २ ३ १२

आ पवस्व महीमिषं गोमदिन्दो हिरण्यवत् ।

१ २ २ १ १

अश्ववत्सोम वीरवत् ॥*४*॥

अथ चतुर्थी। हे "इन्दो!" "सोम!" अभिषुतः त्वं "महीम् इषम्" महदन्नम् "आ पवस्व"। कीदृशम् अन्नम् ? "गोमद्" गोभिर्युक्तम्, "हिरण्यवत्" सुवर्णोपेतम्, "अश्ववत्" अश्वोपेतम्, "वीरवत्" पुत्रयुक्तम् ॥

"अश्ववत्सोमवीरवत्"-"अश्वावद्वाजवत्सुतः"—इति पाठौ ॥४॥

१ २ २ २ १ १ २र

पवस्व विश्वचर्षण आ मही रोदसी पृण ।

१ २उ २ १ २ १ २

उषाः सूर्यो न रश्मिभिः ॥*५*॥

अथ पञ्चमी। हे "विश्वचर्षण!" विश्वस्य द्रष्टः! सोम! स त्वं "पवस्व" क्षर रसम्। तथा कृत्वा तेन रसेन "मही" "रोदसी" द्यावापृथिव्यौ "आ पृण" आ पूरय। "उषाः"

उषसः एकदेशवाचिनोषः-शब्देनाहान्युपलक्ष्यन्ते तत्प्राधान्यात् अहानि "रश्मिभिः" "सूर्य्योन" सूर्य्य इव ॥
"पवस्व विश्वचर्षणे"-"पवस्व विश्वचर्षण"—इति पाठौ ॥ ५ ॥

१ २ ३ २ ३ १ २ ३ १ २
परि नः शर्म्मयन्त्या धारया सोम विश्वतः।

१ २ ३१२ ३ १२
सरा रसेव विष्टपम् ॥*६*॥ [३]

अथ षष्ठी। हे सोम! "नः" अस्मभ्यं "शर्म्मयन्त्या" सुखयन्त्या धारया "विश्वतः" सर्वतः "परि सरा" परिसर परिचर। "रसेव" रसेनैव "विष्टपं" भूलोकम्। यद्वा रसा नदी स्थानं सा प्रवणरूपमिव ॥

"परिनः"-"परिणः"—इति पाठौ ॥ ६ ॥ [३]

इति सामवेदार्थ प्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य प्रथमः खण्डः।

---

३ १ २ ३ १ २ ३२ ३ १ २
आशुरर्ष वृहन्मते परि प्रियेण धाम्ना।

१ २ ३ २उ ३ १ २
यत्रा देवा इति ब्रुवन् ॥*१*॥

ऋ० वृहन्मतिः। छ० गायत्री। दे० सोमः। अथ द्वितीयखण्डे—आशुरर्षेति षडृचं प्रथमं सूक्तम्, तत्र प्रथमा। हे "वृहन्मते!" महामते! सोम! "प्रियेण" देवानां प्रियतमेन "धाम्ना" शरीरेण "धारया" "आशुः" शीघ्रः सन् "पर्य्यर्ष" परिगच्छ, "यत्र" "देवाः" इन्द्रादयः वर्त्तन्ते—"इति" "ब्रुवन्" उच्चारयन्, तं देशं गच्छामीति ब्रुवन्नित्यर्थः ॥ १ ॥

२ १ २र २ १ २ २ २ २ १ २
परिष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः ।
२ २ २ १ २र
पृष्टिं दिवः परि स्रव ॥*२*॥

अथ द्वितीया। "अनिष्कृतम्" असंस्कृतं यजमानं स्थानं वा परिष्कृण्वन् संस्कुर्वन् "जनाय" "इषः" अन्नानि "यातयन्" निर्गमयन् "दिवः" अन्तरिक्षात् "वृष्टिं" "परि स्रव" ॥ २ ॥

२ १उ १ १ २र २ १ २ २ १ २ १
अयꣳ स यो दिवस्परि रघुयामा पवित्र आ ।
१ २ २ १ २र
सिन्धोरूर्मा व्यक्षरत् ॥*३*॥

अथ तृतीया। "सः" "अयं" सोमः "पवित्रे आ" सिच्यमानः—इति शेषः "सिन्धोः" जलस्य "ऊर्मा" ऊर्मौ सङ्घाते "वि अक्षरत्" विविध क्षरति। स इत्युक्तम्, कः ? इत्याह—"यः" "दिवस्परि" द्युलोकस्योपरि "रघुयामा" लघुगमनः देवप्राप्तौ, सोऽयमिति सम्बन्धः ॥ ३ ॥

२ १ १ २ १ २ २उ २ १ २ १ १ २
सुत एति पवित्र आ त्विषिं दधान ओजसा ।
१ १ २ २ १ २
विचक्षाणो विरोचयन् ॥*४*॥

अथ चतुर्थी। "सुतः" अभिषुतः सन् "पवित्रे" दशापवित्रे "आ"—इत्यनर्थकः "ओजसा" बलेन "शीघ्रम्" "एति" गच्छति। कीदृशः सन् ? "त्विषिं" दीप्तिं "दधानः" धारयन्, "विचक्षाणः" सर्वं पश्यन्, "विरोचयन्" दीपयंश्च ; किम् ? देवानिति शेषः ॥ ४ ॥

२ १ २　　　३ २ ३　१ २　३ १ १　३ २
आविवासन् परावतो अथो अर्वावतः सुतः

१ २　　　२ १ २
इन्द्राय सिच्यते मधु ॥*५*॥

अथ पञ्चमी। "सुतः" अभिषुतः सोमः "परावतः" दूरनामैतत् दूरस्थान् "अथो" अपि च "अर्वावतः" अन्तिकस्थांश्च देवान् "आ विवासन्" रसेन परिचरयायेत्यर्थः। "इन्द्राय" इन्द्रार्थम् "मधु" मधुसदृशः सोमः "सिच्यते" ॥ ५ ॥

२　१　१　२ १ २　　२ १ २
समीचीना अनूषत हरिं हिन्वन्त्यद्रिभिः ।

२ ३ १ २　　२ १ २
इन्दुमिन्द्राय पीतये ॥*६*॥ [४]

अथ षष्ठी। "समीचीनाः" सम्यगञ्चिताः सङ्गताः स्तोतारः "अनूषत" स्तुवन्ति किञ्च सोमं "हरिं" हरितवर्णं "हिन्वन्ति" प्रेरयन्ति गमयन्ति "अद्रिभिः" ग्रावभिः। किमर्थं हिन्वन्ति? "इन्दुं" सोमम् "इन्द्राय" इन्द्रस्य "पीतये" पानाय ॥६॥ [४]

१ २　३ १२१२३　१ २　२ ३२ १ २
हिन्वन्ति सूरमुस्रयः स्वसारो जामयस्पतिम् ।

३ १　२र　२ १ २
महामिन्दुं महीयुवः ॥*१*॥

ऋ० जमदग्निः भृगुः वा। छ० गायत्री। दे० सोमः। अथ त्र्यात्मके द्वितीयसूक्ते—प्रथमा। "उस्रयः" कर्मार्थं निवसन्त्यः सर्वत्र गन्त्र्य इत्यर्थः। "जामयः" एकस्याः पाणेः उत्पन्नत्वात् परस्परं बन्धुभूताः, "स्वसारः" अङ्गुलिनामैतत् (निघ० २, ५, १२)। सुष्ठु कर्मसु प्रेर्यन्ते ऋत्विग्भिरिति

स्वमारः अङ्गुलयः, "मही॑युवः" सोमाभिषवं कामयमानाः सन्तः "सूरं" सुवीर्य्यं सोमे पीते वीर्य्यं भवतीति ; शोभनं वीर्य्यं कारणं वा, सर्वेषां कर्मणि प्रेरकं वा, तादृशम् "पतिम्" सर्वस्य स्थावरजङ्गमजातस्य स्वामिनं, यस्माद्देवार्थमिन्यते-ऽतएव "महाम्" देवेभ्यो दीयमानत्वेन महान्तं मंहनीयं वा "इन्दुम्" पश्वेषु स्यन्दमानं सोमं "हिन्वन्ति" प्रेरयन्ति "हिवि प्रीति गत्योः (भ्वा० प०)"—इति धातोरेतद्रूपं स्वादि ॥ १ ॥

१ २    ३ १ २ ३   ३ १ ३ १ २    ३ २
पवमान रुचारुचा देव देवेभ्यः सुतः ।
१ २   ३ १ १    २
विश्वा वसून्या विश ॥*२*॥

अथ द्वितीया। हे "पवमान !" दशापवित्रेण पूयमान ! यद्वा पुनान शुद्ध ! सोम ! "रुचारुचा" "रुच दीप्तौ (भ्वा० आ०)" सर्वेण तेजसा हे "देव !" दीप्यमान ! "देवेभ्य" देवार्थं "सुतः" अभिषुतः त्वं "विश्वा" व्याप्तानि सर्वाणि बहूनि "वसूनि" धनानि "आ विश" अस्मान् प्रापय यद्वा सर्वाणि "वसूनि" वासस्थानानि यज्ञादीनि "आविश" समन्तात् प्रविश ॥

"देवेभ्यसुत."—"देवेभ्यस्परि"—इति पाठौ ॥ २ ॥

१ २      ३ २ ३ २ ३ २ ३ १ २
आ पवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः ।
३ १ २   ३ १ २
इषे पवस्व संयतम् ॥*३*॥ [५]

अथ तृतीया। हे "पवमान !" पूयमान ! पुनान ! वा सोम ! "सुष्टुतिं" शोभनस्तुतियुक्तां "वृष्टिं" "देवेभ्यः"

देवानां "दुवः" "सुपां सुलुक् (७, १, ३९)"—इति चतुर्थ्या लुक् दुवसे परिचरणाय "आ पवस्व" आ गमय त्वम् यथा मदीयया स्तुत्या वृष्टिर्भवति तथा कुर्वित्यर्थः। किञ्च अस्माकम् "इषे" अन्नार्थञ्च "सयतं" सम्यगस्मान् सङ्गच्छतीति वृष्टिं कुरु यद्वा "दुवः" परिचर्यां मभिलक्ष्य क्रियमाणां "सुष्टुतिं" शोभन-स्तुतिरूपां वृष्टिं बहुशः स्तुतिमित्यर्थं, एतां देवेभ्यः प्रापय॥ २॥ [५]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य द्वितीयः खण्डः।

---

१ २  २ १ २  २ १ २  १ २
जनस्य गोपा अजनिष्ट जागृविरग्निः

२ १ २  २ १ २ १ २
सुदक्षः सुविताय नव्यसे।

२ १ १  २ १ २ २ १ १
घृतप्रतीको बृहता दिविस्पृशा

३ १  १र  २ २ ३  १ २
द्युमद्वि भाति भरतेभ्यः शुचिः॥*१*॥

ऋ० यतभारः। छ० जगती। दे० अग्निः। अथ तृतीयखण्डे, प्रथमऋचि प्रथमा। "जनस्य" "गोपा" गोपयिता रक्षिता, "जागृविः" जागरणशीलः सदा प्रबुद्धः, "सुदक्षः" सुबलः सर्वैः श्लाघनीयबलः, सः "अग्निः" "नव्यसे" नवतराय "सुविताय" लोकानां कल्याणाय "अजनिष्ट" जातः। ततः "घृत प्रतीकः" घृतेन प्रज्वलिताङ्गः, बृहता" महता "दिविस्पृशा" द्युलोकं प्राप्नुवता तेजसा युक्तः, "शुचिः" शुद्धः, एवंविधोऽग्निः "भरतेभ्यः" ऋत्विग्भ्यः तत्तदर्थं "द्युमत्" दीप्तिमत् यथा भवति तथा "भाति" प्रकाशते॥ १॥

१ २ २ १ २ २ १२ २ १
त्वामग्ने अङ्गिरसो गुहा हित-

२र ३ १ १र
मन्वविन्दं छिश्रियाणं वनेवने ।

१ २ २ १ २ २ १ २ ३ १
स जायसे मथ्यमानः सहो मह-

२र ३ १ २ २ १ १
त्वामाहुः सहसस्पुत्रमङ्गिरः ॥*२*॥

अथ द्वितीया। हे "अग्ने!" "अङ्गिरसः"—एतन्नामका ऋषयः "गुहा" गुहायां "हितं" निहितं निगूढं "वनेवने" वृक्षे "शिश्रियाणम्" आश्रितम् "त्वाम्" "अन्वविन्दन्" अलभन्त। "महत्" महता "सहः" सहसा बलेन युक्तः "सः" त्वं "मथ्यमानः" "जायसे" हे "अङ्गिरः"! अङ्गिरसां प्रजातिभूत! त्वां "सहसस्पुत्रम्" आहुः ॥ २ ॥

२ १ २ २ १ २ १ २ १ २
यज्ञस्य केतुं प्रथमं पुरोहित-

२ १ २र ३ १ १र
मग्निं नरस्त्रिषधस्थे समिन्धते ।

१ २ ३ २ ३ २ ३ २ ३ २ ३
इन्द्रेण देवैः सरथꣳ स बर्हिषि

२ ३ १ २र ३ १ २ ३ १ २
सीदन्नि होता यजथाय सुक्रतुः ॥*३*॥[६]

अथ तृतीया। "नरः" कर्मणां नेतारः ऋत्विजः "यज्ञस्य" यागस्य "केतुं" प्रज्ञापकं "पुरोहितं" यजमानैः पुरस्कृतम् "इन्द्रेण" "देवैः" "सरथं" देवानां तेषां साम्यत्वात् समानरथम् "अग्निं" "त्रिषधस्थे" त्रिस्थाने विहारप्रदेशे "प्रथमं"

"समिन्धते" सम्यग् दीपयन्ति। ततः "सुक्रतुः" शोभन-कर्मा "होता" देवानामाह्वाता "सः" अग्निः "बर्हिषि" बर्हिर्युक्ते तस्मिन् स्थाने "यजथाय" यज्ञाय "निषीदन्" न्यसीदत् प्रतिष्ठितोऽभवदिति यावत् ॥

"समिन्धते"-"समीधिरे"—इति पाठौ ॥ ३ ॥ [६]

१ २ २     ३ १   २र
अयं वां मित्रावरुणा सुतः सोम ऋतावृधा।

२उ ३ १ २ ३   १ २
ममेदिह श्रुतꣳ हवम् ॥*१*॥

ऋ० गृत्समद। छ० गायत्री। दे० मित्रावरुणौ वा। अथ द्वितीयतृचे प्रथमा हे "ऋतावृधा।" ऋतस्य सत्यस्य वा वर्द्धकौ। "मित्रावरुणा" हे मित्रावरुणौ। "वां" युवाभ्याम् "अयं" "सोमः" "सुतः" अभिषुतः। यस्मादेवं तस्मात् "इह" अस्मिन् यज्ञे "ममेत्" मदीयमेव "हवम्" आह्वानं "श्रुत" शृणुतम् ॥ १ ॥

१ २ १ २ १   २ १   २र ३ १
राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे।

३ १ २
सहस्रस्थूण आशाते ॥*२*॥

अथ द्वितीया। "राजानौ" ईश्वरौ दीप्यमानौ वा "अन-भिद्रुहा" अनभिद्रोग्धारौ मित्रावरुणौ "ध्रुवे" स्थिरे "उत्तमे" उत्कृष्टे "सहस्रस्थूणे" "सदसि" स्थाने "आशाते" उपविशत तावागच्छतामिति शेषः ॥ २ ॥

१ ३ १ २   ३ १ २     ३ १   २र ३ १ २
ता सम्राजा घृतासुती आदित्या दानुनस्पती।

१ २ ३ १ २
सचेते अनवह्वरम् ॥*३*॥ [७]

अथ तृतीया। "सम्राजा" सम्राजौ आसयैव सर्वेषां शास्तारौ, "घृतासुती" घृताची "तद्धामञ्छिवंघृतानावस्तु"—इति मन्त्रान्तरात्, "आदित्या" अदितेः पुत्रौ, "दानुनस्पती" 'दानुनः' धनस्य देवस्य वा 'पति' स्वामिनौ, "ता" तौ मित्रावरुणौ "अनवह्वरम्" अकुटिलं यजमानं "सचेते" हविर्भक्षणार्थं सेवेते ॥ ३ ॥ [७]

१ २ ३ २ ३ १ २ ३ १ २र
इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः।

२ १ २ ३ १ २र
जघान नवतीर्नव ॥*१*॥

ऋ० राहुगण गोतमः। छ० गायत्री। दे० इन्द्रः। अथ तृतीय तृचे—प्रथमा। अत्र शाट्यायनिन इतिहासमाचक्षते—"आथर्वणस्य दधीचो जीवतो दर्शनेन असुराः पराबभूवुः। अथ तस्मिन् स्वर्गते सति असुरैः पूर्णा पृथिव्यभवत्। अथेन्द्रस्तैरसुरैः सह योद्धुमशक्नुवंस्तमृषिमन्विच्छन् स्वर्गं गत इति शुश्राव। अथ पप्रच्छ तत्रत्यान्—'नेह किमस्य किञ्चित् परिशिष्टमङ्गमस्ति ?'—इति; तस्मा अवोचन्—'अस्त्येतदाश्वं शीर्षं, येन शिरसा अश्विभ्यां मधुविद्यां प्राब्रवीत्, तत्तु न विद्मः यत्राभवत्'—इति। पुनरिन्द्रोऽब्रवीत्-'तदन्विच्छत'—इति। तद्धान्वेषिषुस्तच्छर्य्यणावत्यनुविद्य आजह्रुः। शर्य्यणावद्वै नाम कुरुक्षेत्रस्य जघनार्द्धे सरः स्यन्दते। तस्य शिरसोऽस्थिभिरिन्द्रोऽसुरान् जघान"—इति। "अप्रतिष्कुतः" परैरप्रतिशब्दितः प्रतिकूल-शब्द रहितः इन्द्रः आथर्वणस्य "दधीचः"—

एतत्संज्ञकस्य रूपेः "अस्थभिः" पार्श्व-शिरः-सम्बन्धिभिरस्थिभिः "नवतीर्नव" नवसङ्ख्याका नवतीः दशोत्तराष्टशतसङ्ख्याकाः (८१०) तथाहि—लोकत्रयवर्त्तिनो देवान् जेतुमादावासुरी माया त्रिधा सम्पद्यते; त्रिविधा सा अतीतानागतवर्त्तमान-काल-भेदेन तत्कालवर्त्तिनो देवान् जेतुं पुनरपि प्रत्येकं त्रिगुणिता भवति—एवं नव सम्पद्यन्ते; पुनरपि उत्साहादि-शक्ति-त्रय रूपेण त्रैगुण्ये सति सप्तविंशतिः सम्पद्यते; पुनः सात्त्विकादिगुणत्रयभेदेन त्रैगुण्ये सति एकोत्तराशीतिः सम्पद्यते;—एवं चतुर्भिस्त्रिकैर्गुणितायाः मायायाः दशसु दिक्षु प्रत्येकमवस्थाने सति नवनवतयः सम्पद्यन्ते। एवंविधमायारूपाणि "वृत्राणि" आवरकाण्यसुरजातानि "जघान" हतवान् दधीचः—दधि अञ्चतीति दध्यङ्, अञ्चतेः ऋत्विगित्यादिना (३, २, ५९) क्विन्, अनिदितामिति (६, ४, २४) न-लोपः, षष्ठेयकवचने "अचः (६, ४, १३८)"—इत्यकारलोपे चाविति (६, ३, १३८) दीर्घत्वम्, उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वविधानेन तद्बाध्यते। अस्थभिः—"छन्दस्यपि दृश्यते (७, १, ७६)"—इति अनजादावपि अस्थि-शब्दस्यानङादेशः सर्वोदात्तः ॥ १ ॥

२ १ . १२ १ २उ २ १ २ ३ १ २
इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम्।

१ २ ३ १ २
तद्विदच्छर्य्यणावति ॥१२॥

अथ द्वितीया। "पर्वतेषु" पर्ववत्सु गिरिषु अपश्रितम् अपगत्य स्थितम् "अश्वस्य" अश्व-सम्बन्धि दधीचः "यत्" "शिरः" "इच्छन्" इन्द्रो वर्त्तते, "शर्य्यणावति" एतत्संज्ञके

सरसि "तत्" गिरः "विदत्" अज्ञासीत् 'ज्ञात्वा, तदाहृत्य, तदीयैः अस्थिभिः वृत्राणि जघान'—इति पूर्वस्यामृचि सम्बन्धः। इच्छन्—इषु इच्छायां तुदादित्वाच्छप्रत्ययः। विदत्—वेत्तेर्लुङि व्यत्ययेन च्लेरङादेशः। शर्य्यणावति—शर्य्यणा नामानो देशास्तेषामदूरभवं सरः शर्य्यणावत्; मध्वादिषु शर्य्यणाशब्दस्य पाठात् "मध्वादिभ्यश्च (४, २, ८६)" —इति चातुर्थिको मतुप्, "मद्वायाम् ( ८, २, ११ )"—इति मतुपो वत्वम्, मतौ "बह्वचोऽनजिरादीनाम् ( ६, ३, ११९ )" —इति दीर्घ ॥ २ ॥

३क १ २ ३ २ ३ १ २ ३क २र
अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्।
३ २ ३ १ २ ३ २
इत्था चन्द्रमसो गृहे ॥३॥ [८]

अथ तृतीया। "अत्राह" अस्मिन्नेव "गोः" गन्तु "चन्द्रमस" "गृहे" मण्डले "त्वष्टु" दीप्तस्य आदित्यस्य सम्बन्धि "अपीच्य" रात्रावन्तर्हितं स्वकीयं यत् "नाम" तदादित्यस्य रश्मय "इत्था" इत्थमनेन प्रकारेण "अमन्वत" अजानन्; उदकमये स्वच्छे चन्द्रबिम्बे सूर्य्य किरणाः प्रतिफलन्ति, तत्र प्रतिफलिता किरणाः सूर्य्ये यादृशीं सत्तां लभन्ते तादृशीं चन्द्रेऽपि वर्त्तमाना लभन्त इत्यर्थः। एतदुक्तं भवति—यद्रात्रावन्तर्हितं सौरं तेजस्तच्चन्द्रमण्डलं प्रविश्य अहनीव नैशं तमो निवार्य्य सर्वं प्रकाशयति; ईदृग्भूत तेजसा युक्तः सूर्य्य इन्द्र एव, द्वादशस्वादित्येषु इन्द्रस्यापि परिगणितत्वात्। अतोऽहोरात्रयो प्रकाशक इन्द्र एवेति इन्द्रस्तुतेः प्रतीयमानत्वादिन्द्रोदेवतेत्येतदुपपन्नं भवति। अत्र निरुक्तम्—'अथा-

प्यस्येको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यमादित्यतोऽस्य दीप्तिर्भवतीति 'सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः'—इत्यपि निगमो भवति; सोऽपि गौरुच्यते—"अत्राह गोरमन्वत"—इति (२, ६,)। "अत्रां ह गोः सममंसतादित्यरश्मयः स्वनामापीच्यमपगतमपचितमपिहितमन्तर्हितं वा (४, २५)"—इति॥ अमन्वत—'मनु अवबोधने (त०, आ०)'। अपीच्यम्—अपपूर्वाच्चिनोतेर्निपातनाद्यत्, अतएवाभिमतरूपसिद्धिः; यद्वा अपिपूर्वादञ्चतेः "ऋत्विग् (३, २, ५९)"—इत्यादिना क्विन्, "अनिदिताम् (६, ४, २४)"—इति न-लोपः, अपिगते निर्गते भवमपीच्यम् "भवे छन्दसि (४, ४, ११०)"—इति यत्, "अचः (६, ४, १३८)"—इत्यकारलोपे "चौ (६, ३, १३८)"—इति दीर्घत्वम्; 'अपीच्योऽप्रकाशः'—इति भट्टभास्करमिश्रः। इत्था—इदम्-शब्दाच्च "था हेतौ च छन्दसि (५, ३, २६)"—इति प्रकारवचने थाप्रत्ययः; यदि तत्वेदं-शब्दो नानुवर्त्तते तदानीम् "इदमस्थमुः (५, ३, २४)"—इति थमुः प्रत्ययः; "अव्ययादाप्-सुपः (२, ४, ८२)"—इति सुब्लुकं बाधित्वा "सुपां सु-लुक् (७, १, ३९)"—इत्यादिना डादेशः। चन्द्रमसः—चन्द्रमाह्लादनं मिमीते निर्मिमीते—इति चन्द्रमाः "चन्द्रेमोडित् (उ०, ४, २२७)"—इत्यसि-प्रत्ययः; दासीभारादिषु पठितत्वात् पूर्वपदप्रकृतिस्वरत्वम्; पूर्वपदञ्च "स्फायितञ्चि (,,)"—इत्यादिना रक्-प्रत्ययान्तत्वादन्तोदात्तम्॥ ३॥ [८]

१ १ २ १ १ ११ २ १ १ २ १ १ २
इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः।

२ २ ३ १ २
अभ्रादृष्टिरिवाजनि ॥*१*॥

ऋ० वसिष्ठ। छ० गायत्री। दे० इन्द्राग्नी। अथ चतुर्थतृचे—प्रथमा। हे "इन्द्राग्नी!" "इय" "पूर्व्यस्तुतिः" पूर्व्या स्तुतिः मुख्या स्तुतिः, कस्य सम्बन्धिनी? "मन्मन." स्तोतुः अस्मात् वसिष्ठात् "वां" युवाभ्यां युवयोरर्थम् "अभ्रात्" मेघात् "वृष्टिरिव" वृद्धा सती "अजनि" प्रादुर्भूता, ता शृणुतमित्युत्तरत्र सम्बन्धः ॥ १ ॥

१ १ २३ २उ ३ १ २ ३ १२ ३ १ २
शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः।
२ १ २ ३ १ २
ईशाना पिप्यतं धियः ॥*२*॥

अथ द्वितीया। हे "इन्द्राग्नी!" "जरितुः" स्तोतुः "हवम्" आह्वानं युवां शृणुतम्। श्रुत्वा च "गिरः" तदीयाः स्तुतीः "वनतं" सम्भजतम्। तथा "ईशाना" ईश्वरौ युवां "धियः" अनुष्ठितानि कर्माणि "पिप्यतं" तैस्तैः फलैः पूरयताम् ॥ २ ॥

१ २३ १ २ ३१ २ ३ १ २र
मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये।
१ २ ३ २
मा नो रीरधतं निदे ॥*३*॥ [८]

अथ तृतीया। हे "नरा!" नेतारौ! इन्द्राग्नी! "नः" अस्मान् "पापत्वाय" हीनभावाय "मा रीरधतम्" मा वशं नयतम्, तथा "अभिशस्तये" शत्रुभिः कृतायाभिशंसनाय मा रीरधतम्, तथा "निदे" निन्दकाय मा रीरधत मा वशीकुरुतम् ॥ ३ ॥ [८]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमप्राध्यायस्य तृतीय. खण्ड. ॥ ३ ॥

१ २   २ १ २   २ १ २   २ १ २
पवस्व दक्षसाधनो देवेभ्यः पीतये हरे।
२ १ २   २ २ २ १ २
मरुद्भ्यो वायवे मदः ॥*१*॥

ऋ० दृढच्युत्। छ० गायत्री। दे० सोमः। अथ चतुर्थखण्डे प्रथमतृचे—प्रथमा। हे "हरे!" हरितवर्ण! पापहर्त्तर्वा सोम! "दक्षसाधनः" दक्षो बलं तस्य साधनो "मदः" मदकरश्च त्वं "पवस्व" क्षर। किमर्थम्? "देवेभ्यः" इन्द्रादिभ्यः "पीतये" पानाय, तथा "मरुद्भ्यः" "वायवे" च पीतये पवस्व ॥ १ ॥

२ ३१ २ ३ १ २ २ २उ २ १ २ २ १
सं देवैः शोभते वृषा कविर्योनावधि प्रियः।
२ १ १ २ १
पवमानो अदाभ्यः ॥*२*॥

अथ द्वितीया। "अयं" सोमः "सं शोभते", "देवैः" सह। कीदृशः सोमः? "वृषा" वर्षकः, "कविः" क्रान्तदर्शी, "योनौ" स्थाने स्वीये "अधि" अधिष्ठितः "प्रियः" प्रियोभूतः सर्वेषां यद्वा प्रीणयिता "पवमानः" क्षरन् "अदाभ्यः" केनाप्यहिंसितश्च भवति अतएव सोमः सं शोभते ॥ २ ॥

२ १   २ २   १ २   २उ   २ १ २
पवमान धिया हितो३ऽभि योनिं कनिक्रदत्।
१ २   २ १   २र
धर्मणा वायुमारुहः ॥*३*॥ [१०]

अथ तृतीया। हे "पवमान!" सोम! "धिया" कर्मणा अध्वर्य्वादिकर्तृकेण अङ्गुल्या वा "हितः" धृतः सन् "कनिक्रदत्"

शब्दं कुर्वन् "योनि" स्थानं "द्रोणकलशं" च "अभि आरुह" आभिमुख्येन आरोहणं कुरु प्रविशेत्यर्थः । तदेवाह—"धर्मणा" कर्म्मणा "वायुं" वायुसम्बन्धिपात्रमित्यर्थः, तदारुह्य प्रविश ॥ "आरुह" "आविश"—इति पाठौ ॥ ३ ॥ [१०]

तवाहꣳ सोम रारण सख्य इन्दो दिवेदिवे ।
पुरूणि बभ्रो नि चरन्ति मामव
परिधीꣳ रति ताꣳ इहि ॥*१*॥

ऋ० मैत्रावरुणि वसिष्ठ । छ० बृहती । दे० सोम । अथ प्रगाथरूपे द्वितीयसूक्ते—प्रथमा । हे "इन्दो ।" स्यन्दमान सोम ! "तव" "सख्ये" सखि कर्म्मणि "अहं" "दिवे दिवे" अन्वहं "रारण" रमे रणेर्लिटि उत्तमे णलि रूपम । हे "बभ्रो ।" बभ्रुवर्ण सोम । "पुरूणि" बहूनि रक्षांसि "मा", तव सख्ये स्थितं "नि अव चरन्ति" नीचीनं चरन्ति बाधन्ते । ये मा बाधन्ते तान् "परिधीन्" "अति इहि" अतीत्य गच्छ जहीति यावत् ॥ १ ॥

तवाहं नक्तमुत सोम ते दिवा दुहानो बभ्र ऊधनि ।
घृणा तपन्तमति सूर्य्यं परः शकुना इव पप्तिम
॥*२*॥ [११]

अथ द्वितीया । हे "बभ्रो ।" बभ्रुवर्ण सोम ! "उत" अपि च "नक्तम्" "उत" अपि च "दिवा" अहोरात्रयो

"सख्याय" सख्यार्थं "तव" "उषनि" समीपे "अहं" रमे—इति शेषः। "ते" वयं "वृषा" दीप्त्या "तपन्तं" ज्वलन्तं "परः" परस्थानस्थितं "सूर्यं" तदात्मकं त्वाम् "अति पप्तिम" तत्र स्थितं त्वां प्राप्नुमतिपतेम। कथमिव ? शकुना इव यथा सुपर्णादयः पक्षिणः सूर्यमतिगच्छन्ति तद्वत् पतलृगतौ, अस्माच्छान्दसो लिटि "तनिपत्योश्छन्दसि (६, ४, ९९)"—इत्युपधालोपः ॥

"दुहानः"-"सख्याय"—इति पाठौ ॥ २ ॥ [११]

२ ३ १ २   ३ २उ   ३ १ २ ३ १ २
पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः ।
३ २ ३ १ २ ३ १ २
शुम्भन्ति विप्रं धीतिभिः ॥*१*॥

ऋ० बृहन्मतिः। छ० गायत्री। दे० सोमः। अथ तृतीयतृचे—प्रथमा। "पुनानः" पूयमानः "विचर्षणिः" विद्रष्टा सोमः "विश्वा" सर्वान् "मृधः" हिंसकान् शत्रून् "अभि अक्रमीत्" अतिक्रान्तवान् तं "विप्रं" मेधाविनं "धीतिभिः" कर्मभिरभिषवादिभिः स्तुतिभिर्वा "शुम्भन्ति" दीपयन्ति अलङ्कुर्वन्ति ॥ १ ॥

१   २र २ १ १२३ २ ३ २ ३ १ २ ३ २
आ योनिमरुणो रुहद्गमदिन्द्रो वृषा सुतम् ।
२ १   २र
ध्रुवे सदसि सीदतु ॥*२*॥

अथ द्वितीया। अयम् "अरुणः" अरुणवर्णः सोमः "योनिं" स्थानं द्रोणकलशम् "आरुहत्" आरोहति, ततो "वृषा" कामानां वर्षकः "इन्द्रः" "सुतम्" अभिषुतं सोमं

"गमद्" गच्छति, गत्वा "ध्रुवे सदसि" स्थिरे स्थाने द्युलोकाख्ये "सीदति" निवसति ॥

"इन्द्रोत्वपासुतम्"-"इन्द्रत्वपासुतः"—इति पाठौ ॥ २ ॥

१ २ २ २ २ १ २ २ १ २ २ १ २
नूनो रयिं महामिन्दोऽस्मभ्यꣳ सोम विश्वतः ।
१ २ २ १ २
आ पवस्व सहस्रिणम् ॥*३*॥ [१२]

अथ तृतीया । हे "सोम !" अभिषुतस्त्वं हे "इन्दो !" "नः" अस्मभ्यम् "नु" क्षिप्रं "महां" महान्तं "सहस्रिणम्" असङ्ख्यातं "रयिं" धनं "विश्वतः" "आ पवस्व" सर्वतः परिस्रव ॥ ३ ॥ [१२]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमाध्यायस्य चतुर्थः खण्डः ।

---

१ २ १ २ २ १ २ २ १ २ १ २ २ १ २
पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्य्यश्वाद्रिः
१ २ २ २ २ . १ २ २ १ २
सोतुर्बाहुभ्याꣳ सुयतो नार्वा ॥*१*॥

ऋ० मैत्रावरुण वसिष्ठः । छ० विराट् । दे० इन्द्रः ।
अथ पञ्चम-खण्डे प्रथमतृचे—प्रथमा । हे "इन्द्र !" "सोमं" "पिब", स सोमः "त्वा" त्वाम् "मन्दतु" मादयतु, हे "हर्य्यश्व !" हरिसञ्ज्ञकाश्ववन् ! इन्द्र ! "ते" त्वदर्थं "सोतुः" अभिषवकर्तुः "बाहुभ्याम्" "अर्वा" रश्मिभ्यामश्व इव "सुयतः" सुष्ठु परिगृहीतः "अद्रिः" ग्रावा "यं" सोमं "सुषाव" अभिषवं करोति, स मन्दत्विति पूर्वेण सम्बन्धः ॥१॥

२ ३ २३ २ ३ २ ३२-३१ २ ३१ २ ३ १ २
यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्य्यश्व हंसि।

१ २र
स त्वामिन्द्र प्रभूवसो ममत्तु ॥*२*॥

अथ द्वितीया। हे "हर्य्यश्व!" "इन्द्र!" "ते" तव "युज्यः" योग्यः "चारुः" समीचीनः "मदः" मदकरः "यः" सोमः "अस्ति" विद्यते "येन" च पीतेन सोमेन "वृत्राणि" आवरकादीनि राक्षसादीनि "हंसि", हे "प्रभूवसो!" प्रभूतधन इन्द्र! "त्वा" त्वां "सः" सोमः "ममत्तु" मादयतु ॥ २ ॥

२ ३ २ ३ ३ २ ३२उ
बोधा सु मे मघवन्वाचमेमां यां

३१ ३ १ १२ ३ १२
ते वसिष्ठो अर्चति प्रशस्तिम्।

३ १ २र ३ १ २
इमा ब्रह्म सधमादे जुषस्व ॥*३*॥ [१३]

अथ तृतीया। हे "मघवन्!" इन्द्र! "ते" तव "प्रशस्ति" स्तुतिरूपां "यां" वाचं "वसिष्ठः" नामर्षिः "अर्चति" वदति, "इमां" वसिष्ठस्य सम्बन्धिनीं वाचं "सु मा बोध" सुष्ठु अभियुध्यस्व किञ्च "इमा" इमानि "ब्रह्म" ब्रह्माणि, हवीरूपाण्यन्नानि "सधमादे" यज्ञे "जुषस्व" सेवस्व ॥ ३ ॥ [१३]

१ २ ३२ ३१ २३ १२
विश्वाः पृतना अभिभूतरं नरः

३१ ३ २ ३ १ २ ३ १ २ ३ १ २
सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे।

२ ३ १२ ३ २ ३ १२३१
क्रत्वे वरे स्थेमन्यामुरीमुतोग्र-

२र ३१२ ३ १ २
मोजिष्ठं तरसं तरस्विनम् ॥२१॥

ऋ० त्रिशोकः रेभो वा । छ० अति जगती । दे० इन्द्रः । अथ द्वितीय-ऋचे—प्रथमा । "विश्वाः" सर्वाः व्याप्ता वा "पृतना." पृङ् व्यायामे (तु०, आ०); व्याप्रियन्ते इति पृतनाः सेनाः परस्परं सङ्गताः सत्यः "अभिभूतरम्" शत्रूणामित्यर्थः अभिभवितारम् "इन्द्रम्" "ततक्षुः" आयुधादिभिः तीक्ष्णीचक्रुः आयुधवन्तमस्त्रवन्तञ्च चक्रुरित्यर्थः यद्वा पृतना इति संग्राम नाम (निघ० २, १७, १८); व्याप्रियन्ते अत्रेति पृतना संग्रामाः, सर्वानेव संग्रामानभिभावुकमिन्द्र "नरः" नेतारः स्तोतारः अन्योन्य सङ्गताः स्तुतिभिः तीक्ष्णमकुर्वन्, स्तुतोऽतिबलवान् भवतीति । यद्वा यष्टारो हविः प्रदानेन वीर्यवन्तं कुर्वन्तीति किञ्च स्तोतारः "राजसे" राजतेः तुमर्थे असे प्रत्ययः (३, ४, ८) आत्मनो विराजनार्थं प्रकाशनार्थं स्तूयमानमिन्द्र "जजनुः" जनयामासुः स्तोत्र-शस्त्रैः स्व यज्ञे प्रादुर्भावयन्नित्यर्थः । किञ्च "क्रत्वा" ईदृशमिन्द्रम् "आमुरीम्" शत्रूणामाभिमुख्येन मारयितारम् "उग्रम्" उद्गूर्णबलम् अत एव "ओजिष्ठम्" ओजस्वितम "तरसं" प्रवृद्धं "तरस्विन" संग्रामे शत्रुवधार्थे वेगवन्तं बलवन्तं वा एवम्भूतमिन्द्र धनार्थं स्तुवन्ति ॥

"क्रत्वेवरेस्थेमनि"-"क्रत्वावरिष्ठवरे"—इति पाठौ ॥ १ ॥

१ १ १ ३ १ २ ३१ २र १ २
नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरे ।

३ १२ ३२उ ३ १ २ ३ २ ३ १ २र
सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः॥*२

अथ द्वितीया। "नेमिम्" अरान् यथा नेमिर्व्याप्नोति तद्वदिन्द्रः सर्वं व्याप्नुते तादृशं नमनशीलमिन्द्रं "चक्षसा" दर्शनमात्रेणैव "विप्राः" मेधाविनः "अभिस्वरे" अभिस्वरेण गीताय स्तोत्राय इन्द्रविषयं स्तोत्रं कर्त्तुमित्यर्थः "नमन्ति" नमस्कुर्वन्ति। कीदृशम्? "मेषम्" इन्द्रो मेषोभूत्वा मेधातिथिं स्वर्गमनयत् तस्मात् मेधातिथेर्मेषभूतमिति यावत्। इदानीं यजमानः स्तोतॄनाह—अपि च हे स्तोतारः। "सुदीतयः" शोभनदीप्तयः "अद्रुहः" कस्याप्यद्रोग्धारः "वः" यूयं छान्दसो वसादेशः "तरस्विनः" कर्मसु स्तोत्रेषु वा त्वरायुक्ताः सन्तः इन्द्रस्य "कर्णे" श्रोत्रसमीपे "ऋक्वभिः" अर्चनयुक्तैर्मन्त्रैः यद्वा ऋचो वह्नयो येषु सन्ति तैः स्तोत्रादिभिः संस्तुतः इन्द्रो यथा युष्मदीयानि स्तोत्रादीनि शृणोति तथा सम्यगभिष्टुतेत्यर्थः॥

"अभिस्वरे"-"अभिस्वरा"—इति पाठौ॥ २॥

१ २ ३ १ २ ३ २ ३ ३ १ ३ १ २
समु रेभासो अस्वरन्निन्द्रं सोमस्य पीतये॥

१र २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
स्वःपतिर्यदी वृधे धृतव्रतो ह्योजसा समूतिभिः॥

॥*३*॥ [१४]

अथ तृतीया। "रेभासः" रेभृ शब्दे (भ्वा० आ०) शब्दयितारः स्तोतारः यद्वा, "रेभासः" कश्यप पुत्रा रेभाः एतन्नामका ऋषयः "इन्द्रम् उ" इन्द्रमेव "समस्वरन्" सम्यगशब्दयन् समस्तुवन्। किमर्थम्? "सोमस्य पीतये" सोम-

धानाय "यद्" यदा "स्वपतिः" स्वर्गस्य पालयिता धनस्य स्वामी वा इन्द्रः "वृधे" यजमानादिवर्द्धनाय भवति, तदा "धृतव्रतः" धृत कर्मेन्द्रः "ओजसा" बलेन "ऊतिभिः" मरुद्भिः पालनैर्वा सह सङ्गच्छते; स्तुतिभिर्बलं मरुद्भिः पालनैश्चेन्द्रस्य भवतीत्यर्थः ॥

"सस्तु"-"समोम्"—इति पाठौ, "स्वपतिः"-"स्वर्पतिम्"—इति च ॥ ३ ॥ [१४]

१ २र ३ २उ ३ १ २ ३ १ २
यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।
१ २ ३ १ २र ३ २ ३ १ २ ३ १ ३ १
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥*१

ऋ० पुरुहन्मा: । छ० बृहती । दे० इन्द्रः । अथ प्रगाथरूपे तृतीयसूक्ते—प्रथमा । "यः" इन्द्रः "चर्षणीनां मनुष्याणां "राजा" स्वामी, "रथेभिः" रथैः "याता" आगन्ता च, "अध्रिगु" अप्रतगमनोऽन्यैः, "विश्वासां" "पृतनानां" सेनानां "तरुता" तारकः, "यः" च "वृत्रहा" वृत्रं हतवान्, "ज्येष्ठ" गुणैर्ज्यायांसं तं महाभागमिन्द्रं "गृणे" स्तौमि ॥ १ ॥

२ ३ १ २ ३ १ ३ ३ १ २ ३ १ २ ३ १ २
इन्द्रं तᳪं शुम्भ पुरुहन्मन्नवसे यस्य द्विता विधर्तरि।
१ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २र
हस्तेन वज्रः प्रति धायि दर्शतो महां देवो न सूर्यः
॥*२*॥ [१५]

अथ द्वितीया । हे पुरुहन्मन् !" ऋषे ! त्व "तम्" "इन्द्र" "शुम्भ" हविःप्रदानादिना अलङ्कुरु । किमर्थम् ? "अवसे" रक्षणाय । एवमात्मा स्वात्मानं सम्बोध्य ब्रवीति—"यस्य"

तव "विधर्त्तरि" विधारके इन्द्रे "हिता" हितम् अस्ति,—सोमप्रमनोमाग्रम् तव यत्नून् इन्तुमुखत्वं, तदनुग्रहाय अनुयष्ट-व्वेति हैतमस्ति; तनौम्रं दर्शयति—"दर्शतः" दर्शनीयः "महान्" प्रभूतः "वज्रः" "देवो न सूर्य्यः" द्योतमानः सूर्य्य इव स्थितः, "हस्तेन" करेण "प्रति धायि" प्रतिनिहितो भवति ॥

"हस्तेन"-"हस्ताय"—इति पाठौ, "महान्देव"-"महो-देवः"—इति च ॥ २ ॥ [१५]

इति सामवेदार्थप्रकाशे छन्दआर्च्चिकस्य पञ्चमस्याध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

१ २ ३ २ ३ २ ३ १ ३२ ३क २र ३ १
परि प्रिया दिवः कविर्वयांऽसि नप्त्योर्हितः ।

३ १२ ३ १ २
स्वानैर्याति कविक्रतुः ॥*१*॥

ऋ० असित-देवलः । छ० गायत्री । दे० सोमः । अथ षष्ठे खण्डे, प्रथमर्च्चि—प्रथमा । "कविः" मेधावी "कविक्रतुः" क्रान्त-प्रज्ञः क्रान्त-कर्मा "नप्त्योः" अधिषवणफलकयोः "हितः" निहितः सोमः "दिवः" द्युलोकस्य "परि प्रिया" अति प्रियाणि "वयांसि" ग्रावृणः ॥

"स्वानैः"-"सुवानः"—इति पाठौ ॥ १ ॥

१ २ ३ २ ३ १ २ १ २ ३ २ ३ १ २
स सूनुर्मातरा शुचिर्जातो जाते अरोचयत् ।

२ १ २ १ २ ३ १ २
महान्मही ऋतावृधा ॥*२*॥

अथ द्वितीया । "जातः" उत्पन्नः "शुचिः" विशुद्धः महान् हविष्मसः "सः" सोमाख्यः "सूनुः" पुत्रः "मही" महत्यौ

"ऋतावृधा" यज्ञस्य वर्द्धयित्री "जाते" विश्वस्य जनयित्री "मातरा" आत्मनो मातरौ द्यावापृथिव्यौ "अरोचयत्" रोचयति दीपयति ॥ २ ॥

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ १
प्र प्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहः ।

३क २र ३ २ ३
वीत्यर्ष पनिष्टये ॥*३*॥ [१६]

अथ तृतीया । हे सोम ! "प्र प्र" अत्यन्तं "क्षयाय" तव निवासभूताय "अद्रुहः" अद्रुहे अद्रोग्ध्रे "पन्यसे" स्तोत्रे "जनाय" मनुष्याय "वीति" वीत्यै भक्षणाय "जुष्टः" पर्याप्तः त्वं "पनिष्टये" स्तुतये "अर्ष" अद्भं प्रति गच्छ ॥

"अद्रुहः"-"अद्रुहे"—इति पाठौ, "पनिष्टये"-"नविष्टया" —इति च ॥ ३ ॥ [१६]

२ ३ २ ३ १२ ३ १ २ ३ १ २
त्वꣳ ह्या३ङ्ग दैव्य पवमान जनिमानि द्युमत्तमः ।

२ ३ १२ ३ १ २
अमृतत्वाय घोषयन् ॥*१*॥

ऋ० शक्तिः । छ० ककुप् । दे० सोमः । अथ प्रगाथे द्वितीयसूक्ते—प्रथमा । हे "पवमान !" पूयमान ! "दैव्य" देवसम्बन्धि सोम ! "द्युमत्तमः" अतिशयेन दीप्तिमान् "त्वं हि" त्वमेव "अङ्ग" क्षिप्रं "घोषयन्" शब्दयन् शब्दं कुर्वन् "जनिमानि" देवसम्बन्धीनि जन्मान्यभिलक्ष्य "अमृतत्वाय" अमरणाय आगच्छेति शेषः ॥

'दैव्य"-"दैव्या"—इति पाठौ, "घोषयन्"-"घोषः"—इति च ॥ १ ॥

२ ३ १ २ २ १ २ ३ २उ २ १ २ ३ २
येना नवग्वा दध्यङ्पोर्णुते येन विप्रास आपिरे ।
३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ ३ २ ३ १ २
देवानाᳬं सुम्ने अमृतस्य चारुणो येन श्रवाᳬंस्याशत
॥*२*॥ [१०]

अथ द्वितीया। "नवग्वा" नवनीय-गतिः यद्वा नवभिर्मासैः सत्रयागानुष्ठानात् "दध्यङ्"—एतन्नामकः अङ्गिराः "येन" सोमेन पणिभिरपहृतानां "द्वारम्" "अपोर्णुते" अपच्छादयति विवृतमकार्षीत् "विप्रासः" तत् सुख्याः सर्वे मेधाविनोऽङ्गिरसः "येन" च सोमेन "आपिरे" तैरपहृता गाः आप्नुवन् किञ्च "देवानाम्" इन्द्रादीनां "सुम्ने" सुखे यज्ञेन सम्भजति सति "चारुणः" कल्याणस्य "अमृतस्य" उदकस्य सम्बन्धीनि "श्रवांसि" अन्नानि "येन" च सोमेन यजमानाः "आशत" व्याप्नुवत् अलभन्त ; स त्वं देवानाममरणायागच्छेति पूर्वेण सम्बन्धः ॥

"नवग्वा"-"नवग्वो"—इति पाठौ, "आशत"-"आनशुः" —इति च ॥ २ ॥ [१०]

१ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
सोमः पुनान ऊर्मिणाव्यं वारं वि धावति ।
१ २ ३ १ ३२ ३ १ २
अग्रे वाचः पवमानः कनिक्रदत् ॥*१*॥ [

ऋ० अग्निः । छ० उष्णिक् । दे० सोमः । अथ तृतीयऋचे —प्रथमा । "पुनानः" पूयमानः "सोमः" "ऊर्मिणा" स्वीयया धारया "अव्यम्" अवेः सम्बन्धिनं "वारं" पवित्रं "वि धावति" विविधं गच्छति । कीदृशः सोमः ? "पवमानः" पूतः "वाचः"

स्तोतस्य "अग्रे" "कनिक्रदत्" पुनः पुनः शब्दं कुर्वन् विधावति ॥

"अव्यम्"-"अव्ये"—इति पाठौ ॥ १ ॥

१ १ २ २ २ २ २ २ १ २ २ १ १ २
धीभिर्मृजन्ति वाजिनं वने क्रीडन्तमत्यविम्।

२ १ २ ३ २ ३ २ ३ १ २.
अभि त्रिपृष्ठं मतयः समस्वरन् ॥*२*॥

अथ द्वितीया। "वाजिनं" बलवन्तं वा 'वने' वननीये वसतीवर्याख्ये उदके "क्रीड़न्त" संक्रीडमानम् "अत्यविम्" अविशब्देन तद्रोमकृत पवित्रमभिधीयते अतिक्रान्त-पवित्रं सोमम् ऋत्विजः "धीभिः" स्तुतिभिः "मृजन्ति" शोधयन्ति यद्वा, धीभिः—अर्पलापश्छान्दसः, धीतिभिः अङ्गुलिभिः मृजन्ति किञ्च "त्रिपृष्ठं" त्रीणि पवित्राणि द्रोणकलशाधवनीयपूतभृदात्मकानि पात्राणि स्पृशतीति त्रीणि सवनानि वा स्पृशतीति स तथोक्तः, तम् सोमं "मतयः" स्तुतयः "अभि समस्वरन्" अभितः संस्तुवन्तीति ॥

"मृजन्ति"-"हिन्वन्ति"—इति पाठौ ॥ २ ॥

१ २ २ १ २ २ २ २ २ ३ २ १ २ १ २ १
असर्जि कलशाꣳ अभि मीढ्वांत्सप्तिर्न वाजयुः।

२ १ ३२ ३ १ २
पुनानो वाचं जनयन्नसिष्यदत् ॥*३*॥ [१८]

अथ तृतीया। "वाजयुः" यजमानानामन्नमिच्छन् "मीढ्वान्" सेक्ता स सोमः "कलशान्" "अभि" सद्य, कलशेषु "असर्जि" असृज्यत। तत्र दृष्टान्तः—"सप्तिर्न" यथा सर्पणशीलोऽश्वः सङ्ग्रामे सृज्यते तद्वत्। ततः "पुनानः" पूयमानः सोमं "वाच"

श्वं "जनयन्" उत्पादयन् "असिष्यदत्" पात्रेषु स्यन्दते ॥
"मीढ्वान्"-"मिल्हा"—इति पाठौ ॥ २ ॥ [१८]

२ २ २ १ २ ३ १
सोमः पवते जनिता मतीनां
२ ३ १ ३१ २ ३१ २ ३ २
जनिता दिवो जनिता पृथिव्याः ।
१ १ २र ३ १ २र
जनिताग्नेर्जनिता सूर्यस्य
३ १ २ २ १ २र
जनितेन्द्रस्य जनितोत विष्णोः ॥*१*॥

ऋ० प्रतर्दनः। छ० बृहती। दे० सोमः। अथ चतुर्थऋचे
—प्रथमा। "सोमः" अभिषूयमाणः "पवते" पात्रेषु क्षरति।
कीदृशः? "मतीनां" बुद्धीनां यद्वा, मननीयानां "जनिता"
जनयिता, "जनिता मन्त्रे (६, ४, ५३)"—इति निपातना-
णिलोपः। किञ्च "दिवः" द्युलोकस्य "जनिता" प्रादुर्भावयिता,
तथा "पृथिव्याः" "जनिता", "अग्नेः" "जनिता" प्रकाशयिता,
"सूर्यस्य" सर्वस्य प्रेरकस्यादित्यस्य "जनिता", "इन्द्रस्य"
"जनिता" तेन मदस्य जनयिता "उत" अपि च "विष्णोः"
व्यापकस्य "जनिता" जनयिता;—एतत्सर्वं सोमेऽभिषूयमाणे
भवतीति ॥ १ ॥

१ २ ३ १ २ ३ १ १ २ ३उ
ब्रह्मा देवानां पदवीः कवीना-
१ १ २ ३ २ ३ १ २
मृषिर्विप्राणां महिषो मृगाणाम्।

२ १ २र ३ १ २ ३ १ २ ३
श्येनो गृध्राणाᳫं स्वधितिर्वनानाᳫं
१ २ ३ १ ३ १ २ ३ १ २
सोमः पवित्रमत्येति रेभन् ॥*२*॥

अथ द्वितीया। "सोमः" एवंरूपो भवति—"देवानां" स्तोत्रकारिणा मृत्विजां "ब्रह्मा" ब्रह्माख्यर्त्विक्स्थानीयो भवति यद्वा, "देवानां" द्योतमानानामिन्द्रादीनां "ब्रह्मा" राजा भवति। तथा "कवीनां" कान्त-प्रज्ञानां "पदवीः" स्खलन्ति पदानि साधुत्वेन यो योजयति स पदवीः, वी गत्यादिषु (अदा०, उभ०)—इत्येतस्मात् क्विपि रूपम्, तथा "विप्राणां" मेधाविनां मध्ये "ऋषिः" भवति। यः परोक्ष पश्यति स ऋषिः "ऋषिर्दर्शनात् ( निरु० २, १, ११ )"—इति, "मृगाणां" "महिषो" भवति महिषाख्यो बलवान् राजा भवति। तथा "गृध्राणां" पक्षिविशेषाणां "श्येनः" प्रशस्यः पक्षिराजो भवति, "वनानां" वनतिर्हिंसाकर्मा हिंसकानां छेदकानां मध्ये "स्वधितिः"—एतन्नामकश्छेदकोऽसि। एवम्भावः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन कृतम् "अत्येति" अतिगच्छति ॥ २ ॥

१ २ ३ २ ३ २उ ३ २ १
प्रावीविपद्वाच ऊर्मिं न सिन्धुर्गिर
२ १ १ २ २ २
स्तोमान् पवमानो मनीषाः।
२ १ ३र ३ १ २ १ ३ २ १
अन्तः पश्यन्वृजनेमावराण्या
२ ३ १ ३र ३ २
तिष्ठति वृषभो गोषु जानन् ॥*३*॥ [१८]

अथ तृतीया। "पवमानः" सोमः "मनीषाः" मनस ईषिता हृदयङ्गमान् "प्रावीविपत्" प्रकर्षेण विपर्य्यति प्रेरयति "सिन्धुर्न" स्यन्दमान-नदीव "वाचः" शब्दस्य "ऊर्मिं न" सङ्घं यथा प्रेरयति तद्वत्। किञ्च "वृषभः" कामाना-मुदकानां वा वर्षकः सोमः "अन्तः" अन्तर्हितं वस्तुजातं "पश्यन्" "अवराणि" दुर्बलैः वारयितुमशक्यानि "इमा वृजना" इमानि बलानि "आ तिष्ठति" आसीदति। किं कुर्वन्? "गोषु जानन्" गवां जयाय जानानः सन् परबलानि प्रविशति॥

"स्तोमान्"-"स्तोमः"—इति पाठौ॥ ३॥ [१९]

इति सामवेदार्थप्रकाशे उत्तरार्च्चिकस्य पञ्चमस्याध्यायस्य षष्ठः खण्डः।

---

१ १ २ ३१२ ३१ २ ३१२
अग्निं वो वृधन्तमध्वराणां पुरूतमम्।
१ २ ३२ ३१
अच्छा नप्त्रे सहस्वते॥*१*॥

ऋ० मयोगः अग्निः वा। छ० गायत्री। दे० अग्निः। अथ तृचत्रयात्मके सप्तमे खण्डे, प्रथमतृचे—प्रथमा। "अध्वराणाम्" अहिंसानां बलिना "नप्त्रे" बन्धुं "सहस्वते" बलवन्तं विभक्तिव्यत्ययः (३, १, ८५) "वृधन्तं" ज्वालाभिर्वर्द्धमानं "पुरुतमम्" अतिशयेन बहुमग्निं हे ऋत्विजः! "वः" यूयम् "अच्छ" अभिगच्छत। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः॥ १॥

३१ २र ३ २३१२ ३२३ १२
अयं यथा न आभुवत्त्वष्टा रूपेव तक्ष्या।

२ ३उ २ १ २
अस्य क्रत्वा यशस्वतः ॥*२*॥

अथ द्वितीया। "अयम्" अग्निः "नः" अस्मान् "तष्ठा" वितर्त्तव्यानि "रूपेव त्वष्टा" रूपाणि वर्द्धकिरिव "यथा" येन प्रकारेण "आ भुवत्" आ भवति प्राप्नोति, तथैनमग्निमभिगच्छतेत्यर्थः। किञ्च वयम् "अस्य" अग्नेः "क्रत्वा" प्रज्ञानेन युक्ताः "यशस्वतः" यशस्वन्तो भवामेति शेषः ॥ २ ॥

१ २ ३र २ ३उ २ ३ १ २ १ २
अयं विश्वा अभि श्रियोऽग्निर्देवेषु पत्यते।

२उ ३ १ २
आ वाजैरुप नो गमत् ॥*३*॥ [२०]

अथ तृतीया। मनुष्याणां "विश्वाः" सर्वाः "श्रियः" सम्पदः "देवेषु" देवानां मध्ये यः "अयम् अग्निः" "अभि" गच्छति, सः अग्निः "नः" अस्मानपि "वाजैः" अन्नैः "उपागमत्" उपागच्छतु ॥ ३ ॥ [२०]

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम्।

३ १ २ ३क २र ३ १ २ ३ २ ३ १ २
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥*१*॥

ऋ० गोतमः। छं० अनुष्टुप्। दे० अग्निः। अथ द्वितीयतृचे—प्रथमा। हे "इन्द्र!" "सुतम्" अभिषुतम् "इमं" सोमं "पिब" कोष्ठयम् ? "ज्येष्ठम्" अतिशयेन प्रशस्यं "मदं" मदकरम् "अमर्त्यम्" अमारकम् सोमपानजन्यो मदो मदान्तरवत् मारको न भवतीत्यर्थः तथा "ऋतस्य" यज्ञस्य सम्बन्धिनि "सादने" गृहे वर्त्तमानाः "शुक्रस्य" दीप्तस्य

सोमस्य "धाराः" "त्वाम्" "अचरन्" आभिमुख्येन सञ्चलन्ति त्वां प्राप्तुं स्वयमेवागच्छन्तीत्यर्थः। ज्येष्ठं—प्रशस्य-शब्दादिष्ठनि "ज्य च (५, ३, ६१)"—इति ज्यादेशः। अचरन्—चर सञ्चलने (भ्वा०, प०) छान्दसो लङ् (३, ४, ६) ॥ १ ॥

२ ३ २३१ २३ २३ १ २३ १ २
न किष्ट्वद्रथीतरो हरी यदिन्द्र यच्छसे ।
२ ३१ २ ३२ ३ २ ३ १ २
न किष्ट्वानु मज्मना न किः स्वश्व आनशे ॥*२*॥

अथ द्वितीया। हे "इन्द्र!" "यद्" यस्मात् त्वं "हरी"—एतत्सञ्ज्ञावश्वौ "यच्छसे" रथे योजयसि, तस्मात् "त्वत्" त्वत्तोऽन्यः कश्चित् "रथीतरः" अतिशयेन रथवान् "नकिः" नास्ति अन्येषामीदृगश्वयुक्तरथाभावात् "त्वा" त्वाम् "अनु" सह "मज्मना" बलनामैतत् (निघ० २, ८, २३) बलेन सदृशोऽपि "न किः" नह्यस्ति "स्वश्वः" शोभनाश्वो "नः किः आनशे" न प्राप इन्द्रस्य बलाश्वयोरसाधारणत्वात् इन्द्रसदृशो बलवान् अश्ववान् लोके कश्चिदपि नास्तीत्यर्थः। न किष्ट्वत्—"युष्मत्तत्ततक्षुष्वन्तः पादम् (८, ३, १०३)"—इति षत्वम्। रथीतरः—अतिशयेन रथी; तयोरपि "ईद्रथिनः"—इति ईकारान्तादेशः। यच्छसे—यमेर्व्यत्ययेनात्मनेपदम्। स्वश्वः—बहुव्रीहावाद्युदात्तं दासीत्युत्तर-पदाद्युदात्तश्च। आनशे—"अश्नोतेश्च (७, ४, ७२)"—इति अभ्यासादुत्तरस्य नुट् ॥२॥

१ २ ३१२ ३ १ २
इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन ।
३१ २ ३१२३ १२ ३ १२
सुता अमत्सुरिन्दवो ज्येष्ठं नमस्यता सहः
॥*३*॥ [२१]

अथ तृतीया। हे ऋत्विज.। "इन्द्राय" "नूनं" चिप्रम् "अर्चत" पूजन कुरुत। एतदेव स्पष्टीक्रियते—"उक्थानि" अप्रगीत-मन्त्रसाध्यानि शस्त्राणि स्तोत्राणि च "ब्रवीतन" ब्रूत। "सुताः" अभिषुता. "इन्दव." सोमाः त्वाम् "अमत्सु" आगत सिन्द्रं मत्तं कुर्वन्तु, अनन्तर "ज्येष्ठ" प्रशस्यतमं "सहः" सहस्विन दलवन्तम् तमिन्द्रं नमस्यत नमस्कुरुत ब्रवीतन—ब्रवीतेर्लोटि "तप्तनप्तनथनाश" (७, १, ४५)"—इति तनबादेशः। अमत्सु—मदी हर्षे (भ्वा०, प्रा०) छान्दसः प्रार्थनायां लुङ्, आममानुशासनस्यानित्यत्वादिड-भावः। नमस्यत—"नमोवरिवचित्रङः (३, १, १९)"—इति क्यच्। सह.—"युगकारेकाररेफाय वक्तव्याः—इति मत्वर्थीयस्य लुक्॥ ३॥ [२१]

१ २ १२ ३ २ ३१ २ ३ १ २
इन्द्र जुषस्व प्र वहा याहि शूर हरिह।

१ २ ३१२ ३ १ २र ३ १उ ३१२
पिबा सुतस्य मतिर्न मधोश्चकानश्चारुर्मदाय॥ १

ऋ० छ० दे० सन्दिग्ध। अथ तृतीयऋचि—प्रथमा। यानि मया हवींषि दत्तानि तानि "प्र वह" "आ याहि" आगच्छ "शूर" वीर्यवन्। उपसर्गाच्छुराचि—"हरिह" अथवा हरितवर्णा हया यस्य स हरिहय, तस्य सम्बोधन क्रियते—हे हरिह! छान्दसो यकारलोपः "पिबा" "सुतस्य" सोमस्य उपसर्गाच्छराचि—"मतिर्नमधोश्चकान.", "चारु" शोभनः "मदाय" मदनाय॥ १॥

१२ ३२३ १२ ३ १२ ३ ३१ ३२
इन्द्र जठरं नव्यं न पृणस्व मधोर्दिवो न।

२ २ ३ २ ३ १ १ २ २ ३ १ २ २ १ २
अस्य सुतस्य स्वा३र्णोप त्वा मदाः सुवाचो अस्थुः ॥*२*॥

अथ द्वितीया। हे "इन्द्र!" "जठरम्" उदरं "नव्यं न" नवतरं "पृणस्व" पूरयस्व "मधोः" मधुरस्य "दिवो न" "अस्य" सोमस्य "सुतस्य" अभिषुतस्य "स्वर्ण" स्वर्गस्येव "उप त्वा" उप समीपे त्वाम् "मदाः" "सुवाचः" शोभनवाचः "अस्थुः" स्थितवन्तः ॥ २ ॥

१ २ २ १ १ २ ३ २ ३ १ २ ३ २ ३ २ १
इन्द्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न ।
२ १ २ २ ३ २ ३ १ २ ३ २ ३ २ ३ २ १ २
विभेद वलं भृगुर्न ससाहे शत्रून्मदे सोमस्य ॥*३*॥ [२२]

## इति अर्धप्रपाठकः ।

अथ तृतीया। "इन्द्रः" "तुराषाट्" तुरि सीदति यः सः तुराषाट् "मित्रो न" मित्र इव "जघान" "वृत्रं" शत्रुं "यतिर्न"—उपसर्गाचराणि "विभेद" भिन्दस्व "वलं" वलो-नाम दानवस्तं वलं "भृगुर्न" त्रीणि त्रीणि पदान्तेषु उपसर्गा-चराणि भवन्ति "ससाहे" सहितवान् "शत्रून्" "मदे" भक्षणे कृते 'सोमस्य' तथाच निविदापदे विहितस्य षोड़-शिनः। अस्य मदे जरित इत्यारभ्य बहूनि वीर्ययुक्तानि कर्माणि ॥ ३ ॥ [२२]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ५ ॥

## इति तृतीयस्यार्द्धः-प्रपाठकः।

इति श्रीमद्राजाधिराज परमेश्वर वैदिकमार्गप्रवर्त्तक श्रीवीर-बुक्क भूपाल
साम्राज्य धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये
सामवेदार्थप्रकाशे उत्तरार्चिके पञ्चमोऽध्याय ।

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ७ ॥

## षष्ठोऽध्याय आरभ्यते।

२ १ २ २ १ २ २ १
गोवित्पवस्व वसुविद्धिरण्यवि-
१ २ १ २ २ १ २ ३ १ २
द्रेतोधा इन्दो भुवनेष्वर्पितः।
• २ १ २ २ २उ
त्वꣳ सुवीरो असि सोम विश्ववित्तं
२ १ २ १ २ २ १ २र
त्वा नर उप गिरेम आसते ॥*१*॥

ऋ० सिकतानिवारी तथा पृश्नयोऽजाः। छ० जगती। दे० सोमः। तत्र, गोवित्पवस्वेति प्रथमे खण्डे प्रथमत्वचे—प्रथमा। हे "इन्दो!" सोम! त्वं "पवस्व" चर। कीदृशस्त्वं? "गोवित्" गवां लम्भकः, "वसुवित्" धनस्य लम्भकः, "हिरण्यवित्" हिरण्यस्य लम्भकः, "रेतोधा." रेत उदकं तस्य धातौषधीनां यद्वा रेतः प्रजनन सामर्थ्यं तस्य धारयिता "भुवनेषु" उदकेषु "अर्पित"; भो सोम! कीदृशस्त्वं? "सुवीरोऽसि" शोभन-

वीर्य्योऽसि भवसीति, "विश्ववित्" सर्वस्य वेत्तासि। यस्मा-देवं तस्मात् तादृशं "त्वा" त्वाम् "इमे" "नरः" नेतारः "गिरा" स्तुत्या "उपासते"॥

"नरः"-"विप्राः"—इति पाठौ॥ १॥

१ २ १ २      २ २ १
त्वं नृचक्षा असि सोम विश्वतः
१ १      २ १     २र
पवमान वृषभ ता वि धावसि।
१ १     २ १२२ १२
स नः पवस्व वसुमद्धिरण्यव-
२१    २ २ १२    २ १ २
दयं स्याम भुवनेषु जीवसे॥ *२*॥

अथ द्वितीया। भो "सोम!" त्वं "विश्वतः" सर्वेषु "भुवनेषु" "नृचक्षा असि" नृणां द्रष्टा भवसि। हे "पव-मान!" पुनान सोम! "वृषभ" अपां वर्षक! "ताः" अपः "वि धावसि" विविधं गच्छसि, स त्वं "नः" अस्माकं "पवस्व" चर किञ्च "वसुमत्" बहुभिर्वसुभिर्वासकैर्गवादि द्रव्यैर्युक्तं, तथा "हिरण्यवत्" बहुभिः हिरण्यैर्युक्तं धनम्। वयञ्च वसु-भिर्हिरण्यैश्च युक्ताः "भुवनेषु" लोकेषु "जीवसे" जीवितुं प्रभवः "स्याम" भवेम॥ २॥

२   ३ २ १    २र    ३ १ २
ईशान इमा भुवनानि ईयसे
३ १ २    ३ १ २    ३क २र
युजान इन्दो हरितः सुपर्ण्यः।

१ २ २ १२ २३उ २
तास्ते चरन्तु मधुमद्घृतं पय-
१ २ ३२ २ २ १ २
स्तव व्रते सोम तिष्ठन्तु कृष्टयः ॥*३*॥ [१]

अथ तृतीया। हे "इन्दो" सोम! "ईशानः" सर्वस्य स्वामी त्वम् "इमा" इमानि "भुवनानि" भूतजातानि "ईयसे" गच्छसि ईङ् गतौ (दि० आ०), "दिवादिभ्यः श्यन् (३, १, ६८)"—इति श्यन्। किङ्कुर्वन्? "हरितः" हरितवर्णाः "सुपर्ण्यः" सुपतनास्त्वाश्वा रथे "युञ्जान" योजयन्, "ताः" सुपर्ण्यः "ते" तव सम्बन्धिन्यः "मधुमत्" माधुर्योपेत "घृत" दीप्तं "पयः" उदकं "चरन्तु"। हे सोम। तव "व्रते" कर्मणि तिष्ठन्तु "कृष्टय" मनुष्याः सर्वे॥

"ईयसे"-"वीयसे"—इति पाठौ॥ ३॥ [१]

१ २ २ २ ३ १ २
पवमानस्य विश्ववित्प्र ते सर्गा असृक्षत।
१ १ २ २ २ १ २
सूर्यस्येव न रश्मयः॥*१*॥

ऋ० कश्यप.। छ० गायत्री। दे० सोमः। अथ द्वितीयतृचे—प्रथमा—हे "विश्ववित्!" विश्वस्य द्रष्टः सोम! "पवमानस्य" क्षरत. "ते" तव "सर्गाः" सृज्यमाना धाराः "सूर्यस्येव रश्मयः" सूर्यस्य किरणा इव प्रकाशमानाः "न"—इति सम्प्रत्यर्थः। इदानीं "प्रासृक्षत" प्रासृज्यन्त॥ १॥

१ २ २ २ २ २उ २ १ २ २ १ २
केतुं कृण्वन् दिवस्परि विश्वा रूपाभ्यर्षसि।
३ १ २
समुद्रः सोम पिन्वसे॥*२*॥

अथ द्वितीया। हे "सोम !" "समुद्रः" समुद् द्रवन्ति यस्माद्रसाः स समुद्रः स त्वं "केतुं" प्रज्ञानं "कृखन्" कुर्वन् अस्माकं "विश्वा रूपा" विश्वानि रूपाणि "दिवः" अन्तरिक्षात् "अभ्यर्षसि" अभि पवसे "पिन्वसे" नानाविधानि च धनानि अस्मभ्यं प्रयच्छसि ॥ २ ॥

२ १ २र ३ १२ ३ १२
जज्ञानो वाचमिष्यसि पवमान विधर्मणि ।

१ २ ३१ २र
क्रन्दं देवो न सूर्य्यः ॥*३*॥ [२]

अथ तृतीया। हे "पवमान !" सोम ! "देवः न सूर्य्यः" द्योतमानः सूर्य्य इव "जज्ञानः" प्रादुर्भूतस्त्वं "विधर्मणि" विधारके दशापवित्रे "क्रन्दन्" ध्वनन् "वाचम्" शब्दम् "इष्यसि" प्रेरयसि ॥

"जज्ञानः"-"हिन्वानः"—इति पाठौ, "क्रन्दन्" "अक्रान्"—इति च ॥ ३ ॥ [२]

१ २र ३ १ २ ३ १ २
प्र सोमासो अधन्विषुः पवमानास इन्दवः ।

३ २ ३ १ २
श्रीणाना अप्सु वृञ्जते ॥*१*॥

ऋ० असितो वा देवलः। छ० गायत्री। दे० सोमः। प्रसोमास इति सप्तर्चं तृतीयं सूक्तम्; तत्र, प्रथमा। "पवमानासः" पूयमानाः "इन्दवः" दीप्ताः "सोमासः" सोमाः "प्राधन्विषुः" धन्वतिर्गतिकर्मा (निघ० २, १४, ६४) प्रगच्छन्ति किञ्च "श्रीणानाः" गोभिः श्रयमाणाः "अप्सु"

वसतीवरीषु "वृजन्ते" गच्छन्ति व्रज व्रजी गतौ ( भ्वा०, प० ) सम्पृक्ता भवन्तीत्यर्थः ॥

"वृजन्ते"-"सृजन्त"—इति पाठौ ॥ १ ॥

१ १ २र २ २ २ १ २ १ १ २ १
अभि गावो अधन्विपुरापो न प्रवता यतीः ।
१ १ २र
पुनाना इन्द्रमाशत ॥*२*॥

अथ द्वितीया । "गाव." गमनशीलाः "इन्दवः" सोमाः "अभि अधन्विपु." दशापवित्रमभिगच्छन्ति । किमिव ? "प्रवता" प्रवणवता देशेन "यतीः" गच्छन्त्यः "आपः न" आप इव, पश्चात् "पुनाना" "इन्द्र" प्रशोधयितुम् आशत व्याप्नुवन् ॥ २ ॥

१ २ २ १ २र २ १ १
प्र पवमान धन्वसि सोमेन्द्राय मादनः ।
१ २ २ १ २र
नृभिर्यतो वि नीयसे ॥*३*॥

अथ तृतीया । हे "पवमान !" सोम ! "इन्द्राय" इन्द्रस्य "मादनः" मादयिता त्वं "प्रधन्वसि" प्रगच्छसि पवित्रम् । तदेवाह—"नृभिः" नेतृभिर्ऋत्विग्भिः "यतः" गृहीतः "विनीयसे" हविर्दानात् ॥

"मादनः"-"पातवे"—इति पाठौ ॥ ३ ॥

२ १ १ २र ३ १ २ २ २ २ २ २
इन्दो यदद्रिभिः सुतः पवित्रं परिदीयसे ।
२ १ १ १ २ १ २
अरमिन्द्रस्य धाम्ने ॥*४*॥

अथ चतुर्थी । हे "इन्दो !" त्वं "यद्" यदा "अद्रिभिः" ग्रावभिः "सुतः" अभिषुतः "पवित्रं" दशापवित्रं "परिदीयसे" परिगच्छसीत्यर्थः । तदा "इन्द्रस्य" "धाम्ने" स्थानाय धारकायोदराय वा "अरं" पर्य्याप्तोऽसि ॥

"परिदीयसे"-"परिधावसि"—इति पाठौ ॥ ४ ॥

१ २ २ १ १ २ १ २ २ १ २
त्वꣳ सोम नृमादनः पवस्व चर्षणीधृतिः ।

२ २ १ २ ३ १ २
सस्निर्यो अनुमाद्यः ॥*५*॥

अथ पञ्चमी । हे "सोम !" "नृमादनः" नृणां मादयिता "चर्षणीधृतिः" चर्षणीभिः ऋत्विग्भिः प्रजाभिः धृतस्त्वं "पवस्व" । "यः" त्वं "सस्निः" शुद्धः "अनुमाद्यः" स्तुत्यः स पवस्वेति समन्वयः ॥

"चर्षणीधृतिः"-चर्षणीसहे"—इति पाठौ ॥ ५ ॥

१ २ २ १ २ २ १ २ २ १ २
पवस्व वृत्रहन्तम उक्थेभिरनुमाद्यः ।

१ २ २ १ २२
शुचिः पावको अद्भुतः ॥*६*॥

अथ षष्ठी । हे सोम ! "वृत्रहन्तमः" शत्रूणामतिशयेन हन्ता त्वं "पवस्व" चर । कीदृशस्त्वम् ? "उक्थेभिः" शस्त्रैः "अनुमाद्यः" स्तुत्यः "शुचिः" शुद्धः "पावकः" अन्यस्य शोधकः "अद्भुतः" महान्, एवं महानुभावः पवस्व ॥

"वृत्रहन्तमः"-"वृत्रहन्तम"—इति पाठौ ॥ ६ ॥

१ २ २ १ २ २ १ २ २ १ २८
शुचिः पावक उच्यते सोमः सुतः स मधुमान् ।

२ १ २ २ २
देवावीरघशꣳसहा ॥ ३७ ॥ [३]

अथ सप्तमी। "सुतः" अभिषुतः "मधुमान्" माधुर्य्योपेतः "सः" सोमः "शुचिः" स्वयं शुद्धः "पावकः" शोधकश्च उच्यते तथा "देवावीः" देवानामविता तर्पयिता "अघशंसहा" अघं पापं शंसतीत्यघशंसा असुरास्तेषां हन्तेति चोच्यते॥

"सुतः समधुमान्"-"सुतस्य मध्वः"—इति पाठौ ॥७॥ [३]

इति सामवेदार्थ प्रकाशे उत्तराग्रन्थस्य पञ्चमाध्यायस्य प्रथमः खण्डः।

---

२ ३ २ ३ १ २ ३ २ २ २ १ २
प्र कविर्देववीतयेऽव्या वारेभिरव्यत।

३ १ २र ३ १ २र
साह्वान्विश्वा अभि स्पृधः ॥१॥

ऋ० असित-देवलः। छ० गायत्री। दे० सोमः। अथ द्वितीय-खण्डे—प्रकविरिति सप्तर्चं प्रथमं सूक्तम्; तत्र प्रथमा। "कविः" मेधावी सोमः "देववीतये" देवानां पानाय "अव्या वारेभिः" अविमयैर्वालैः वालैः दशापवित्रेण "अव्यत" अव्यते प्राप्यते, "साह्वान्" शत्रूणां सोढा सोमः "विश्वाः स्पृधः" सर्वान् सङ्ग्रामान् हिंसकान् वा अभिभवतीति शेषः॥

"अव्यावारेभिरव्यत"-"अव्योवारेभिरर्षति"—इति पाठौ ॥१॥

१ २र ३ २ ३ २उ ३ १ २ ३ १ २
स हि ष्मा जरितृभ्य आ वाजं गोमन्तमिन्वति।

१ २ ३ १ २
पवमानः सहस्रिणम् ॥२॥

अथ द्वितीया । "स हि ष्मा" स खलु "पवमानः" सोमः "जरितृभ्यः" स्तोतृभ्यः "गोमन्तं" "बहुभिर्गोभिर्युक्तं "सहस्रिणं" सहस्र-सङ्ख्याकं "वाजम्" अन्नम् "आ" आभिमुख्येन "इन्वति" व्याप्नोति प्रयच्छतीत्यर्थः ॥ २ ॥

१ २   १ २   ३ १ २   १ २ ३   १ २   ३ १

परि विश्वानि चेतसा मृज्यसे पवसे मती ।

१ २   ३ १ २

स नः सोम श्रवो विदः ॥*३*॥

अथ तृतीया । हे "सोम !" त्वं "चेतसा" स्वीयेनास्मदनुकूलेन चित्तेन "विश्वानि" सर्वाणि धनानि "मती" मत्या अस्मत् स्तुत्या "मृज्यसे" दशापवित्रेण शोध्यसे । ततः "पवसे" रसं चरसि । एवम्भूतः "सः" त्वं "नः" अस्मभ्यं "श्रवः" अन्नं "विदः" देहीति शेषः ॥

"मृज्यसे"-"मृशसे"—इति पाठौ ॥ ३ ॥

३क २र   १ २   २र ३ १ २   ३ १   ३ २

अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवꣳ रयिम् । १०/२

१ २   ३ २ ३ १   २

इषꣳ स्तोतृभ्य आ भर ॥*४*॥

अथ चतुर्थी । हे "सोम !" त्वं "बृहद् यशः" महतीं कीर्त्तिम् "अभ्यर्ष" अभिगमय, "मघवद्भ्यः" हविष्मद्भ्यः अस्मभ्यं "ध्रुवं" रयिं "धनं" च अभ्यर्ष । किञ्च "इषम्" अन्नं "स्तोतृभ्यः" अस्मभ्यम् "आभर" आहर ॥ ४ ॥

३   १र   २ १   १र २ ३ १ ३

त्वꣳ राजेव सुव्रतो गिरः सोमाविवेशिथ ।

२ १ २
पुनानो वह्ने अद्भुत ॥५॥

अथ पञ्चमी। हे "वह्ने!" यज्ञादेर्वोढः! "अद्भुत।" "सोम!" "सुव्रतः" सुकर्मा "पुनानः त्वं "राजा इव" "गिरः" अस्मदीयाः "स्तुतीः "आविवेशिथ" आविशसि ॥५॥

१॰ २र २ २ २१२ २ १ २ २ १२
स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः।

१ २ २ १ २
सोमश्चमूषु सीदति ॥६॥

अथ षष्ठी। "सः" सोमः "वह्निः" यज्ञादेर्वोढा "अप्सु" अन्तरिक्षे वर्त्तमानः "दुष्टरः" दुःखेन अन्यैस्तरणीयः "मृज्यमानः" शोध्यमानः "गभस्त्योः" हस्तयोः एवम्भूतः सन् "चमूषु" पात्रेषु "सीदति" ॥ ६ ॥

२ २ २ १ १र २ २ २ १ २
क्रीडुर्मखो न मंहयुः पवित्रं सोम गच्छसि।

१ २ २ २ २ १ २
दधत्स्तोत्रे सुवीर्यम् ॥७॥ [४]

अथ सप्तमी। हे "सोम!" "क्रीडुः" क्रीडनशीलस्त्वं "मंहयुः" मंहतिर्दानकर्मा (निघ० ३, २०, १०) दानेच्छुः "मखो न" दानमिव "पवित्रं" "गच्छसि"। किं कुर्वन्? "स्तोत्रे" स्तुतिकर्त्रे "सुवीर्यं" शोभन वीर्यं "दधत्" प्रयच्छन् ॥ ७ ॥ [४]

२ १ १ २ १ २ १ २ २ १ २
यवंयवं नो अन्धसा पुष्टंपुष्टं परि स्रव।

१ २ ३ १ १
विश्वा च सोम सौभगा ॥*१*॥

ऋ० अवत्सारः। छ० गायत्री। दे० सोमः। अथ यवंयव-मिति चतुर्ऋचं द्वितीयं सूक्तं; तत्र, प्रथमा। हे "सोम !" त्वं "नः" अस्मभ्यम् "पुष्टंपुष्टम्" अत्यन्तं बहुलं "यवंयवं" पुनःपुनर्युतं रसम् "अन्धसा" अन्नरूपया धारया "परिस्रव" क्षर तत्र प्रार्थयितुस्तृष्णयात्यन्तं पीड़ितत्वात् "आबाधे च (८, १, १०)"—इति द्विर्भावः। आबाधनमाबाधः पीड़ा प्रयोक्तृधर्मो नाभिधेयधर्म इत्युक्तम्। अपि च "विश्वा" विश्वानि "सौभगा" सौभगानि धनानि परिस्रव अस्मभ्यं प्रयच्छेत्यर्थः॥ १॥

२ १ २१ २३ २ ३ १२ ३ २ ३ १ १
इन्दो यथा तव स्तवो यथा ते जातमन्धसः।

२ ३ १ २ ३ १ २
नि बर्हिषि प्रिये सदः ॥*२*॥

अथ द्वितीया। हे "इन्दो" सोम! "अन्धसः" अन्नरूपस्य "तव" सम्बन्धी "स्तवः" स्तवनं स्तोत्रं तथा "ते" तव "यथा जातं" यथा प्रादुर्भूतमस्ति, तथा त्वं "प्रिये" प्रीणयितरि "बर्हिषि" अस्मद्यज्ञे "नि सदः" निषण्णो भव॥ २॥

२ १ १ ३ १ २ ३ १ १२ ३ १ २
उत नो गोविदश्ववित्पवस्व सोमान्धसा।

१ ११ २१२
मक्षूतमेभिरहभिः ॥*३*॥

अथ तृतीया। "उत" अपि च हे "सोम!" "नः" अस्माकं "गोवित्" गोमदः "अश्ववित्" अश्वप्रदश्च त्वं "मक्षुतमेभिः"

मत्तुतमैः अतिशयेन शीघ्रैः "अद्भिः" अद्भिर्हेतुभिः "अन्धसा पवस्व" अन्नरूपया धारया चर ॥ ३ ॥

२ ३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
१ यो जिनाति न जीयते हन्ति शत्रुमभीत्य ।

१ २
स पवस्व सहस्रजित् ॥*४*॥ [५]

अथ चतुर्थी । हे "सहस्रजित् !" असङ्ख्यात शत्रूणां जेतः ! सोम ! "यः" भवान् "जिनाति" शत्रून् जयति स्वयं शत्रुभिः "न जीयते" । प्रकारान्तरेण तदेवाह—"शत्रुमभीत्य" स्वयमेव शत्रुमागत्य "हन्ति" किन्तु तेन न हन्यते इति शेषः । एवम्भूतः स त्वं धारया चर ॥ ४ ॥ [५]

३ १ १ २ ३ १ २र ३ २३
यास्ते धारा मधुश्चुतोऽसृग्रमिन्द ऊतये ।

१ २ ३ २३१ २
ताभिः पवित्रमासदः ॥*१*॥

ऋ० जमदग्निः । छ० गायत्री । दे० सोमः । अथ तृचात्मके तृतीयसूक्ते—प्रथमा । भो "इन्दो !" सोम ! "ते" तव "मधुश्चुतः" मधुर-रसस्य क्षारयित्र्यः "याः" "धाराः" "ऊतये" रक्षणाय "असृग्र" सृज्यन्ते "ताभिः" धाराभिः त्वं "पवित्रम्" "आसदः" आसीद ॥ १ ॥

२ ३१२ ३ १२ ३ १ २र ३ १ २
सो अर्षेन्द्राय पीतये तिरो वाराण्यव्यया ।

१ २३ २ ३ २ ३ २
सीदन्नृतस्य योनिमा ॥*२*॥

अथ द्वितीया । हे सोम ! "सः" अभिषुतः त्वम् "अव्यया"

अविमयानि "वाराणि" वालानि "तिरः" तिरस्कुर्वन् "ऋ-तस्य" यज्ञस्य "योनिं" कारणभूतं दशापवित्रम् "आसीदन्" आभिमुख्येन उपविशन् "इन्द्राय" इन्द्रस्य "पीतये" पानाय "अर्ष" चर।

"ऋतस्य योनिमासीदन्"—"योनावनेषु"—इति पाठौ ॥२॥

१ २ ३ १ २ ३ १ २३ १ २
त्वꣳ सोम परि स्रव स्वादिष्ठो अङ्गिरोभ्यः।
३ २ ३ १ २र
वरिवोविद्घृतं पयः ॥*३*॥ [६]

अथ तृतीया। हे "सोम!" "स्वादिष्ठः" स्वादुतमः "वरि-वोवित्" अस्मदभिलषितस्य धनस्य लम्भकश्च त्वम् "अङ्गि-रोभ्यः" अङ्गिरसामर्थाय "घृतं" "दीप्तं" "पयः" क्षीरवत् सार-भूतं "परिस्रव" परिक्षर।

"त्वं सोम"—"त्वमिन्दो"—इति पाठौ ॥ ३ ॥ [६]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

१ २ १ १ २क २र ३ २ ३
तव श्रियो वर्ष्यस्येव विद्युतो-
१ २ ३ १ २ ३ १ २
ऽग्नेश्चिकित्र उषसामिवेतयः।
१ २र ३ १ २ ३ १ २ ३
यदोषधीरभिसृष्टो वनानि च
१ २ ३ १ ३ ३१ ३र ३ १ २
परि स्वयं चिनुषे अन्नमासनि ॥*१*॥

ऋ० भरुयः। छ० जगती। दे० अग्निः। अथ तृतीय-

खण्डे—प्रथमे तृचे, प्रथमा। "अग्नेः" अङ्गनादि-गुण-युक्तस्य "तव" "श्रियः" रश्मिलक्षणा विभूतयः "चिकित्रे" प्रज्ञायन्ते। तत्र दृष्टान्तः—"वर्षस्येव विद्युतः" यथा वर्षितुर्मेघस्य सम्बन्धिनो विद्युतः, "उपसामिवेतयः" यथा चोषसाम् 'एतयः' गमनशीलाः व्याप्ताः प्रकाशाः प्रज्ञायन्ते, तद्वदित्यर्थः। कदेत्याह—"यद्" "यदा" त्वम् "ओषधीः" व्रीहियवाद्याः "वनानि" अरण्यानि च अभिसृष्टोऽसृष्टः दग्धुं विसृष्ट सन् "स्वयम्" आत्मना "आसन्" आस्ये मुखे "अन्नम्" अदनीयं स्थावर-लक्षणं "परि चिनुषे" परिचिपसीत्यर्थः।

* "विद्युतोऽग्नेः"—"दियुतश्चित्रा"—इति, "उपसाबकेतव."—"उपसामिवेतयः"—इति पाठौ ॥ १ ॥

१ २ २ ३उ २ १ २
वातोपजूत इषितो वशाꣳ अनु

१ २उ १ १ २ ३ १ २
तृषु यदन्ना वेविषद्वितिष्ठसे।

१ २ २ १ २ १ २ २
आ ते यतन्ते रथ्योऽयथा पृथक्-

१ २ २ १ २ २ १ २
शर्धाꣳस्यग्ने अजरस्य धक्षतः ॥*२*॥

अथ द्वितीया। हे "अग्ने!" त्वं "यद्" यदा "वातोपजूतः" वायुना कम्पितः "वशान्" कान्तान् वनस्पतीन् "अनु" प्रति "तृषु" क्षिप्रम् "इषितः" प्रेषितश्च सन् "अन्ना" अन्नानि अदनीयानि वनस्पत्यादीनि स्थावराणि "वेविषत्" व्याप्नुवन् "वितिष्ठसे" इतस्ततो गच्छति; तदानीम् "अजरस्य" जरारहितस्य "धक्षतः" दहतः "ते" तव "शर्धांसि" तेजांसि

"यथा" "रथ्यः" रथिनः तद्वत् "आ पृथक्" पृथगायन्त गच्छन्ति।

"अजरस्य"-"अजराणि"—इति पाठौ ॥ २ ॥

२ २ ३१२ ३ १ २
मेधाकारं विदथस्य प्रसाधन-

१ १ २र ३१२ ३ १
मग्निꣳ होतारं परिभूतरं मतिम्।

१ २र ३ १ २ ३ २उ
त्वामर्भस्य हविषः समान-

३ १ २ ३ १
मित्त्वां महो वृणते नान्यं त्वत् ॥*३*॥ [७]

अथ तृतीया। "मेधाकारं" प्रज्ञायाः कर्त्तारं "विदथस्य" यज्ञस्य "प्रसाधनम्" प्रकर्षेण साधकं "होतारं" देवानामाह्वातारं "परिभूतरम्" अतिशयेन शत्रूणामभिभवितारं "मतिं" मन्तारं "यं" "त्वाम्" अग्निम्" वयमृत्विजः वृणीमहे—इति शेषः। हे अग्ने! "त्वामित्" त्वामेव "अर्भस्य" अल्पस्यास्य "हविषः" पुरोडाशादिकस्य भक्षणार्थमिति शेषः। "समानमित्" सदैव ऋत्विजः "वृणते" प्रार्थयन्ते "महः" महतः सोमात्मकस्य हविषः भक्षणार्थे त्वामेव वृणते "त्वत्" त्वत्तः "अन्यम्" अतिरिक्तं देवं "न" वृणते।

"परिभूतरं"-"परिभूतमम्"—इति छन्दोगबह्वृचानां पाठौ, "त्वामर्भस्य हविषः"-"तमिदर्भेहविषि"—इति, "इत्त्वाम्महो"-"तमिम्महो"—इति च ॥ ३ ॥ [७]

१ १ २ ३ १ २र ३ १ २
पुरूरुणा चिध्यस्त्यवो नूनं वां वरुण,।

२ ३ १ २ २ २
मित्र वꣳसि वाꣳ सुमतिम् ॥*१*॥

ऋ० उरुचक्री। छ० गायत्री। दे० मित्रावरुणौ। अथ द्वितीयतृचे—प्रथमा। हे मित्रावरुणौ! "वां" युवयोः "पुरूणा" प्रथमार्थे तृतीया (३, १, ८५) पुरोरपि बहु उरु बहुतरम् अथवा पुरु च तदुरु च पुरूरु अत्यन्तं बहुतरमित्यर्थः तादृक् "अवः" रक्षणं "नूनं" निश्चयेन "अस्ति हि" हि प्रसिद्धौ; चिदिति पूरणः हे "वरुण!" हे "मित्र!" "वां" युवयोः "सुमतिम्" अनुग्रहबुद्धिम् "वंसि" सम्भजेयम् ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ १ २
ता वाꣳ सम्यगद्रुह्वाणेषमश्याम धाम च।

३ १ २
वयं वां मित्रा स्याम ॥*२*॥

अथ द्वितीया। हे "अद्रुह्वाणा!" हे अद्रोग्धारौ! "ता" तौ प्रसिद्धौ "वां" युवां सम्यक् स्तुम इति शेषः। स्तोतारः "वयम्" "इषम्" अन्नं "धाम च" आधारम् "अश्याम" प्राप्नुयाम। हे "मित्रा!" मित्रावरुणौ! "वां" स्तोतारो वयं "स्याम" भवेम समृद्धा इति शेषः, युवाभ्यां स्वभूता वा स्याम ॥

"धामच"-"धायसे"—इति पाठौ, "मित्रा"-"रुद्रा"—इति च ॥ २ ॥

१ २ २ २ १ २ ३ १ २ २ १
पातं नो मित्रा पायुभिरुत त्रायेथाꣳ सुत्रात्रा।

३ १ २ २ ३ १ २
साह्याम दस्यूं तनूभिः ॥*३*॥ [८]

अथ तृतीया। हे "मित्रा!" मित्रावरुणौ देवौ! युवां

"नः" अस्मान् "पायुभिः" रक्षणैः "पातं" रक्षतम् । "उत" अपि च "सुत्राला" शोभनेन त्राणेन "त्रायेथां" पालयेथाम् इष्टप्राप्त्यनिष्ट-परिहार-भेदेन भेदः—स्तोत्रादि-वैकल्याच्छ-स्तोवीं त्रायेथाम् अभिमत-प्रापणेन रक्षतमित्यर्थः । वयश्च "तनूभिः" पुत्रादिभिः सहिताः स्तोयैरङ्गैर्वा "दस्यून्" शत्रून् "सह्याम" अभिभवेम ॥

"मित्रा"-"रुद्रा"—इति पाठौ, "त्रायेथां"-"त्रायेताम्" —इति, "सह्याम"-"तुर्य्याम"—इति च ॥ ३ ॥ [८]

१ २ ३ १ २ ३ १ २ ३ १ २र

उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः ।

१ २ १ २ ३ २

सोममिन्द्र चमू सुतम् ॥*१*॥

ऋ० कुरुसुतिः । छ० गायत्री । दे० इन्द्रः । अथ तृतीय-त्वचे—प्रथमा । हे "इन्द्र !" त्वं "पीत्वा" "ओजसा" बलेन "सह" "उत्तिष्ठन्" "शिप्रे" हनू "अवेपयः" अकम्पयः मदा-वेगादिति भावः । किं पीत्वा ? "चमू" चम्वोरधिषवण-फलकयोः "सुतम्" अभिषुतम् "सोमम्" ॥

"पीत्वा"-"पीत्वी"—इति पाठौ ॥ १ ॥

१२ २ १ २ ३ १ २र

अनु त्वा रोदसी उभे स्पर्धमानमददेताम् ।

१ २ १ २ ३ १ २

इन्द्र यद्दस्युहाभवः ॥*२*॥

अथ द्वितीया । हे "स्पर्धमान" शत्रुभिः सह स्पर्द्धाङ्कर्वाण ! इन्द्र ! "त्वा" त्वाम् "अनु लक्ष्य "उभे रोदसी" उभे अपि

द्यावापृथिव्यौ "मदेतां" हृष्येताम् "यद्" यदा "दस्युहा भवः" मनुष्यां हन्ता भवसि, तदा मदेतामिति सम्बन्धः ॥

"यद्वैमानमदेतां"-"क्ष्यमाणमक्षेताम्"—इति पाठौ ॥२॥

१ २ ३ १ २ ३१ ३२ ३ १२
वाचमष्टापदीमहं नवस्रक्तिमृतावृधम् ।

१ २ १ २३क ३२
इन्द्रात्परितन्वं ममे ॥३॥ [८]

अथ तृतीया। "अष्टापदीम्" अष्टाभिर्दिग्भिर्विदिग्भि-श्चाष्टापदीं, "नवस्रक्तिम्" उपरिस्थितेनादित्येन नवस्रक्तिम् आसु दिक्षु व्याप्तामित्यर्थः, "ऋतावृधं" यज्ञस्य वृद्धिं कुर्वन्तीं, "वाचं" स्तुतिमयीं, परिपूर्णात् "तन्वं तनूं" न्यूनां सतीम् "अहम्" "परि ममे" न्यूनेयत्तां करोमीत्यर्थः। कात्स्न्येन स्वरूपं स्तुत्वा विपर्यीकर्तुमशक्यत्वादिति भावः ॥

"ऋतावृधम्"-"ऋतास्पृशम्"—इति पाठौ ॥ ३ ॥ [८]

१ २ १ २ ३ २ १ ३२
इन्द्राग्नी युवामिमे३ऽभि स्तोमा अनूषत ।

१ २ ३ २
पिबतᳪ शम्भुवा सुतम् ॥१॥

ऋ० भरद्वाजः। छ० गायत्री। दे० इन्द्राग्नी। अथ चतुर्थ-तृचे—प्रथमा। हे "इन्द्राग्नी!" "युवाम्" "इमे" "स्तोमाः" स्तोतारः "अभ्यनूषत" अभिष्टुवन्ति। हे "शम्भुवा!" सुखस्य भावयिताराविन्द्राग्नी! "सुतम्" अभिषुतम् अस्मदीय सोम "पिबतम्" ॥ १ ॥

२ ३ १ २ ३ १ ३ ३ १ २ ३ १ २
या वाᳪ सन्ति पुरुस्पृहो नियुतो दाशुषे नरा ।

१ २ ३ २ ३ १ २
इन्द्राग्नी ताभिरा गतम् ॥*२*॥

अथ द्वितीया। हे "नरा!" नेतारौ! "इन्द्राग्नी!" "वां" युवयोः स्वभूताः "पुरुस्पृहः" पुरुभिर्बहुभिः स्पृहणीयाः "दाशुषे" हवींषि दत्तवते यजमानार्थम् उत्पन्नाः "नियुतः" अश्वाः "सन्ति" हे इन्द्राग्नी! "ताभिः" "नियुद्भिः" सह "आगतम्" आगच्छतम् ॥ २ ॥

१ २ १ २ २ २ ३ १ ३२ ३ २
ताभिरा गच्छतं नरोपेदꣳ सवनꣳ सुतम्।

१ २ ३ १ २
इन्द्राग्नी सोमपीतये ॥*३*॥ [१०]

अथ तृतीया। हे "नरा!" नेताराविन्द्राग्नी! सूयतेऽभिसूयत इति सवनः सोमः "इदं सवनम्" इमं सोमं "सुतम्" अभिषुतम् "उप" प्रति यद्वा, इदं प्रातःसवनम् उप अस्मिन् सवने सुतमभिषुतं सोमं प्रति "ताभिः" नियुद्भिः आगच्छतम्। किमर्थम्? "सोमपीतये" अस्य सोमस्य पानार्थम् ॥ ३ ॥ [१०]

इति सामवेदार्थप्रकाशे उत्तरार्चिकस्य पञ्चमाध्यायस्य तृतीयः खण्डः।

---

१ २ ३ १ १ ३ २ ३२ ३ १ २
अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत्।

२ ३ २ ३ २ ३ २
सीदन्योनौ वनेष्वा ॥*१*॥

ऋ० भृगु-जमदग्निः। छ० गायत्री। दे० सोमः। अथ चतुर्थ-खण्डे, प्रथम-ऋचे—प्रथमा। हे "सोम!" पव-

मान्। "द्युमत्तमः" अतिशयेन दीप्तिमान् "वनेषु" अरण्येषु मध्ये "योनौ" स्वकारण-भूते पर्वतादिस्थाने "आसीदन्" सर्वतो गच्छंस्त्वं "द्रोणानि" प्रयोगबाहुल्यापेक्षमेतत् बहुवचनम् द्रोणकलशान् "अभि" लक्ष्य "रोरुवत्" पुनः पुनः भृशं वा शब्दं कुर्वन् "अर्षा" आगच्छ दशापवित्रमध्याद्विर्गतः सोमः अविच्छिन्न-धारया द्रोणकलशे पतन् शब्दं करोति खलु ॥

"योनौ वनेष्वा"-"श्येनोमयोनिमा"—इति पाठौ ॥ १ ॥

२ १ १२ २ १ २ १ २ २ १ २
अप्सा इन्द्राय वायवे वरुणाय मरुद्भ्यः ।

१ २ २ १ २
सोमा अर्षन्तु विष्णवे ॥*२*॥

अथ द्वितीया। "अप्सा" वसतीवरी-नामधेयानामपां सम्भक्तारः वनषण सम्भक्तौ (भ्वा, प०); जनसनेति (३,२, ६७,) विट्, आत्वं विड्वनोरिति (६, ४, ४१,) तादृशाः "सोमाः" "अर्षन्तु" द्रोणकलशमागच्छन्तु। किमर्थम्? "इन्द्राय" सर्वदेवानां प्रथमत एव इन्द्रः सोमान् पिबति, तस्मात् तदनु वायुरुक्तः तस्मै च "वायवे", तदनन्तरं वरुणः सोमान् पिबति तस्मै च "वरुणाय", ततो "मरुद्भ्यः" एतन्नामकेभ्यो देवेभ्यः, "विष्णवे" सर्वजगद्व्यापिने एतन्नामकाय देवाय च,—एतेभ्यः सर्वेभ्यः सोमा आगच्छन्त्वित्यर्थः ॥

"सोमा अर्षन्तु"-"सोमो अर्षति"—इति पाठौ ॥ २ ॥

१ २ १ १ २ ३ १ २ ३ २ १ २ २ १ २
इषं तोकाय नो दधदस्मभ्यꣳ सोम विश्वतः ।

१ २ ३ १ २
आ पवस्व सहस्रिणम् ॥*३*॥ [११]

अथ तृतीया। हे "सोम!" त्वं "नः" अस्माकं "तोकाय" पुत्राय "इषम्" अन्नं "दधद्" विदधद् प्रयच्छन् "सहस्रिणं" सहस्रसङ्ख्याकं धनं "विश्वतः" सर्वतः "अश्व्यं" च "आपवस्व" आ प्रापय अस्मभ्यं पुत्राय च अन्न-धनादिकं प्रयच्छेत्यर्थः ॥ ३ ॥ [११]

१ २ २ २ ३ १ ३ १ २ २ १ २ १ २
सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम्।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अश्वयेव हरिता याति धारया मन्द्रया याति धारया
॥*१*॥

ऋ० गौतमः। छ० बृहती। दे० सोमः। अथ प्रमाथरूपे द्वितीयसूक्ते—प्रथमा। "सोतृभिः" अभिषवकृद्भिः ऋत्विग्भिः "स्वानः" अभिषूयमाणः "सोमः" "अवीनां" "स्नुभिः" "मांसस्नूनासुपसंख्यानम् (६, १, ६३)"—इति सानु-शब्दस्य स्नु भावः समुच्छ्रितैर्वालैः पवित्रैः "अधि याति" अधिकं गच्छति। "उ"—इति प्रसिद्धौ। "अश्वया इव" वड़वया इव "हरिता" हरित-वर्णया धारया "याति" "मन्द्रया" मदकारिण्या द्रोणकलशमधिगच्छति ॥

"ष्वाणः"-उसुवाणः"—इति पाठौ ॥ १ ॥

२ २उ ३ १ २ ३ १ २ ३ १ २
अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः।
२ २उ ३ १ २ ३ १ २र
समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशते
॥*२*॥ [१२]

अथ द्वितीया। "गोमान्" गोयुक्तः सोमः "अनूपे" निम्ने-

देशे कलशे "गोभिः" गोविकारैः चीरादिभिः सह "अश्वाः" चरन्ति। तदेवोच्यते—"सः" सोमः आत्मनो मिश्रणार्थं "दुग्धाभिः गोभिः" सह "अश्वाः" चरति चरतेर्लुङि रूपम्। किञ्च "समुद्रं न" यथा समुद्रमुदकानि गच्छन्ति तद्वत् "संवरणानि" सम्भजनीयानि रसरूपाणि अन्नानि द्रोणकलशम् "अग्मन्" गच्छन्ति गमेर्लुङि च्लेर्लुकि रूपम्। किञ्च "मन्दी" मदकरः सोमः "मदाय" मदार्थं "तोशते" हन्यते अभिषूयते तोशतिर्वधकर्मा (निघ० २, १८, २८)॥ २॥ [१२]

१ २ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु।

१ २ ३ १ २ ३
तन्नः पुनान आ भर॥ १॥

ऋ० असित-देवलौ वा। छ० गायत्री। दे० सोमः।
अथ तृतीय तृचे—प्रथमा। हे "सोम!" "यत्" "चित्रं" चायनीयम् "उक्थ्यम्" स्तुत्यं "दिव्यं" दिवि भवं "पार्थिवं" पृथिवी-सम्बन्धञ्च यत् "वसु" धनमस्ति "तत्" "नः" अस्मभ्यम् "पुनानः" पूयमानः सन् "आभर" आहर॥ १॥

१ २ ३ १ २ ३ २ ३ २ १ २ ३ १ २
वृषा पुनान आयूंषि स्तनयन्नधि बर्हिषि।

३ २ ३ उ ३ १ २
हरिः सन्योनिमासदः॥ २॥

अथ द्वितीया। हे सोम! "आयूंषि" यजमानादीनामृत्विजां जीवितकालान् "पुनानः" शुद्धान् कुर्वन् "वृषा" कामानां वर्षकस्त्वं "स्तनयन्" शब्दं कुर्वन् "अधि बर्हिषि" अधीति सप्तम्यर्थानुवादी आस्तीर्णे दर्भे "हरिः सन्" हरितवर्णः सन् "योनिं" स्वकीयं स्थानम् "आसदः" आसीद॥

"आयूंषि"-"आयुःषु"—इति पाठौ, "आसदः"-"आसदत्"—इति च ॥ २ ॥

२ १ १२ २ १ २ ३ १ २
युवꣳ हि स्थः स्वःपती इन्द्रश्च सोम गोपती ।

३ १ २ ३ १ २
ईशाना पिप्यतं धियः ॥*३*॥ [१३]

अथ तृतीया। हे "सोम!" त्वम् "इन्द्रश्च" "युवं हि" युवां खलु "स्वःपती" सर्वस्य स्वामिनौ "स्थः" भवथः। तथा "गोपती" गवां पालकौ "ईशाना" ईश्वरौ सन्तौ "धियः" अस्मदीयानि कर्माणि "पिप्यतम्" प्याययत ॥

"युवंहिस्थःस्वःपती"—"युवंहिस्थःस्वर्पती"-इति पाठौ ॥३॥ [१२

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

२ ३ १ २ ३ १२ ३ १ २र
इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।

२उ ३ २ ३ २ ३ १ २र
तमिन्महत्स्वाजिपूतिमर्भे हवा-

३ १ २र३ १ २
महे स वाजेषु प्र नोऽविषत् ॥*१*॥

ऋ० गोतमः। छ० पंक्तिः। दे० इन्द्रः। अथ पञ्चमखण्डे प्रथमं तृचे—प्रथमा। "वृत्रहा" वृत्रस्यावरकस्य वृष्टिनिरोधकस्य मेघस्यासुरस्य वा हन्ता। यद्वा, आवरकाणां शत्रूणां हन्ता, "इन्द्रः" "मदाय" हर्षार्थं "शवसे" बलनामैतत् (निघ० २, ८, ३) बलार्थंच "नृभिः" यज्ञस्य नेतृभिः ऋत्विग्भिः "वृधे" स्तोत्र-शस्त्र-रूपाभिः स्तुतिभिः प्रवर्द्धितो

बभूव। स्तुत्या हि देवता प्राप्त-बला सती प्रवर्द्धते। "तम् इत्" तमेवेन्द्रम् "महत्सु" प्रभूतेषु "आजिषु" संग्रामेषु "ऊतिं" रक्षां कुर्वन्तमिति शेषः। "हवामहे" अस्माकं रक्षणाय आह्वयामहे। "उत" अपि च "ईम्" एनम् एवम्भूतमिन्द्रम् "अर्भे" अल्पे संग्रामे हवामहे अस्माभिराहूतः स चेन्द्रः "वाजेषु" संग्रामेषु "नः" अस्मान् "प्राविषत्" प्रावतु प्रकर्षेण रक्षतु॥ "ऊतिमर्भे"—"ऊतेमर्भे"—इति पाठौ॥ वावृधे—वृधेः कर्मणि लिट् तुजादित्वादभ्यासस्य दीर्घत्वम्। नृभिः—"साविकाच (६, १, १६८)"—इति प्राप्तस्य विभक्त्युदात्तत्वस्य "नृचान्यतरस्यां (६, १, १८४)"—इति प्रतिषेधः। हवामहे—ह्वयतेर्लेटि "ह्वः (६, १, ३३)"—इत्यनुवृत्तौ "बहुलञ्छन्दसि (६, १, ३४)"—इति सम्प्रसारणम्, शपि गुणावादेशौ। अविषत्—अवरक्षणे (भ्वा, प०) लेट्यडागमः, "इतश्च लोपः (३, ४, ९७)—इति इकारलोपः, "सिब्बहुलं लेटि (३, १, ३४)—इति सिप्, तस्यार्द्धधातुकत्वात् वलादिलक्षण इट्॥ १॥

१ २ १ २ १ २उ २ १ २ १ २
असि हि वीर सेन्योऽसि भूरि परादृदिः।

१ २ ३ १ २ ३ १ ३ २र
असि दभ्रस्य चिद्वृधो यजमानाय

३ १ २र ३ १ २
शिक्षसि सुन्वते भूरि ते वसु॥*२*॥

अथ द्वितीया। हे "वीर!" शत्रु-क्षेपण-कुशलेन्द्र! त्वं "सेन्यः असि" सेनार्हो भवसि, त्वमेकोऽपि सेना-सदृशो भवसीत्यर्थः। "हि" यस्मादेवं तस्मात् प्रभूतं शत्रूणां धनं "परादृदिः" परादाता शत्रूणां पराङ्मुखं यथा भवति तथा

आदाता "असि" भवसि "दभ्रस्य चित्" अल्पस्य नामैतत् अल्पस्यापि तव स्तोतुः "वृधः" वर्द्धयितासि, तथा "यजमानाय" यागं कुर्वते "सुन्वते" सोमाभिषवं कुर्वते पुरुषाय "शिक्षसि" अपेक्षितं धनं ददासि शिक्षतिर्दानकर्मा ( निघ० ३, २०, ८१ यस्मात् "ते" तव "वसु" धनं "भूरि" बहुलं प्रचयं धनं विद्यते तस्मात् ददासीति भावः ॥ प्रवाददिः—डु दाञ् दाने ( जुहो० उ० ) "आदृगमहन जन ( ३, २, १७१ )"—इति कि-प्रत्ययः; लिड्वद्भावाद द्विर्वचने ह्रस्वत्वम्, "आतो लोप इटि च ( ६, ४, ६४ )"—इत्याकारलोपः । वृधः—वृधेरन्तर्भावितण्यर्थादिगुपध लक्षणः कः । सुन्वते—"शतुरनुमः ( ६, १, १७३ )"—इति विभक्तेरुदात्तत्वम् ॥ २ ॥

२ ३ १ २ २ ३ १ २ ३ १ २ ३ १ २

यदुदीरत आजयो धृष्णवे धीयते धनम् ।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २

युङ्क्ष्वा मदच्युता हरीकं हनः कं वसौ

२ १ १ २ ३ १ २

दधोऽस्मां इन्द्रवसौ दधः ॥ ३ ॥ [१४]

अथ तृतीया । अत्रेदमाख्यानम्—'रहूगण पुत्रो गोतमः कुरु-सृञ्जयानां राज्ञां पुरोहित आसीत्, तेषां राज्ञां परैः सह युद्धे सति स ऋषिः अनेन सूक्तेन इन्द्रं स्तुत्वा स्वकीयानां जयं प्रार्थयामास'—इति । तस्य च तत्पुरोहितत्वं वाजसनेयिभिराम्नातम्—"गोतमो ह वै राहूगण उभयेषां कुरु-सृञ्जयानां पुरोहित आसीत्"—इति । "यत्" यदा "आजयः" संग्रामाः "उदीरते" उद्गच्छन्ति उत्पद्यन्ते तदानीं "धनं" धनं "धृष्णवे" यो धृष्णुः धर्षयिता शत्रूणां जेता भवति तस्मै

"धीयते" निधीयते, जयतो धनं भवतीत्यर्थः। हे इन्द्र! त्वं तादृशेषु युद्धेषु प्रवृत्तेषु "मदच्युता" शत्रूणां मदस्य गर्वस्य च्यावयितारौ "हरी" त्वदीयावश्वौ "युक्ष्व" स्व-रथे योजय, योजयित्वा च कञ्चिद्राजानं तव परिचरणमकुर्वन्तं "हनः" हन्याः कञ्चन त्वां परिचरन्तं "वसौ" वसुनि धने "दधः" स्थापय॥ उदीरते—ईरगतौ (आ०) आदादिकः, "अनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वे (६, १, १८६) धातुस्वर एव शिष्यते, "यद्वृत्तान्नित्यम् (८, १, ६६)"—इति निघातप्रतिषेधः। धना—"सुपां सुलुक् (७, १, ३९)"—इति डादेशः। युङ्क्ष्वा—युजिर् योगे (रु० उभ०), अन्तर्भावित ण्यर्थाल्लोटि "बहुलञ्छन्दसि (२, ४, ७३)"—इति विकरणस्य लुक्, "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति संहितायां दीर्घत्वम्। हनः—हन्तेर्लिटि सिप्यडागमः, हनश्च दधश्च चार्थप्रतीतेः "चादिलोपे विभाषा (८, १, ६३)"—इति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः। वसौ—लिङ्गव्यत्ययः। दधः—दध धारणे (भ्वा० आ०) लेटि व्यत्ययेन परस्मैपदम्॥ २॥ [१४]

२ १ २ १ २ ३ १ २ ३ २ ३क २र
स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्य्यः।
१ २र ३ १ २ ३ १ २ ३ १ २
या इन्द्रेण सयावरीर्वृष्णा मदन्ति
२ ३ १ २ ३ १ २ ३ १ २
शोभया वस्वीरनु स्वराज्यम्॥ ०१०॥

ऋ० गोतमः। छ० पंक्तिः। दे० इन्द्रः। अथ द्वितीयतृचे—प्रथमा। "स्वादोः" स्वादुभूतस्य रसयुक्तस्य "इत्था विषू-

वत:" इत्यमनेन प्रकारेण सर्वयज्ञेषु व्याप्तियुक्तस्य "मध्व:" मधो: मधुररसस्य सोमस्य "क्रियाग्रहणं कर्त्तव्यम् (१, ४, ३२ वा० )"—इति कर्मण: सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी। एवंविधं सोमं "गौर्य्य:" गौरवर्णा गाव: पिबन्ति। या गाव: "शोभथा:" वचन-व्यत्यय: इन्द्रेण सह शोभन्ते "वृष्णा" कामाभिवर्षकेन्द्रेण "सयावरी:" सह यान्त्यो गच्छन्त्य: सत्य: "मदन्ति" हृष्टा भवन्ति। ता इन्द्रपीतस्य सोमस्य शेषं पिबन्तीत्यर्थ:। "वस्वी:" पय:-प्रदानेन निवासकारिण्य: ता गाव: "स्वराज्यं" स्वस्येन्द्रस्य यत् "राज्यं" राजत्वं तदनु लक्ष्या-वस्थिता इति शेष:। विभूवत:—विपृक्त व्याप्तौ (जु० उभ०) अस्मादौणादिक: कुप्रत्यय: ततो मतुप् छन्दसीरिवसौ मतुप् (६, १, १७६)"—इति मतुप उदात्तत्वम्, "अन्येषामपि दृश्यते (६, ३, १३७)"—इति संहितायां दीर्घ:, व्यत्ययेन मतोर्वत्वम्। मधो:—"जसादिषु छन्दसि वा वचनम् (१, ४, ७)"—इति "घेर्ङिति (७, ३, १११)"—इति गुणाभावे-यणादेश:। गौर्य्य:—"षिद्गौरादिभ्यश्च (४, १, ४१)"—इति ङीष्, जसि यणादेशे "उदात्तस्वरितयोर्यण: (८, २, ४)"—इति परस्यानुदात्तस्य स्वरितत्वम्। सयावरी:—या प्रापणे (अदा० प०) "आतोमनिन् (३, २, ७४)"—इति वनिप्, "वनोरच (४, १, ७)"—इति ङीब्रेफौ। मदन्ति—मदी हर्षे (दि० प०), श्यनि प्राप्ते व्यत्ययेन (३, १, ८५) शप्। वस्वी:—"वस निवासे (भ्वा० प०) शृस्वृस्निहि (उ०, १, १०)"—इत्यादिना वसे रुप्रत्यय:, "धान्ये नित् (उ० १, ६)"—इत्यनुवृत्तेराद्युदात्तत्वम्, "वोतो गुणवचनात् (४४, ४, १)"—इत्यत्र "गुणवचनात् ङीवाद्युदात्तार्थम् (४, १, ४४ भा०)"—इति वचनात् वसुशब्दात् ङीपि यणादेश:, जसि "वाच्छ-

न्दसि (६, १, १०१)"—इति पूर्वसवर्णदीर्घत्वम्। स्वराज्यम्—"श्रकर्मधारये राज्यम् (६, २, १३०)"—इत्युत्तरपदाद्युदात्तत्वम् ॥ १ ॥

१ २ २ ३२ १ २ २ १ २
ता अस्य पृशनायुवः सोमं श्रीणन्ति पृश्नयः

२ १ २र ३१२ १ २
प्रिया इन्द्रस्य धेनवो वज्रं

२ १ २३ १२ ११ २ १.१
हिन्वन्ति सायकं वस्वीरनु स्वराज्यम् ॥*२*॥

अथ द्वितीया। "ताः" पूर्वोक्ताः "अस्य" इन्द्रस्य "पृशनायुवः" स्पर्शनकामाः पृश्नयः नानावर्णाः गावः इन्द्रेण पातव्यं "सोम" पयसा "श्रीणन्ति" मिश्रीकुर्वन्ति, "इन्द्रस्य" "प्रियाः" प्रीतिहेतुभूताः "ताः" "धेनवः" "सायकं" शत्रूणामन्तकारकं "वज्रम्" आयुधं "हिन्वन्ति" शत्रुषु प्रेरयन्ति इन्द्रो यथा शत्रुषु वज्रं प्रेरयति तथेन्द्रस्य मदमुत्पादयन्तीत्यर्थः। अन्यत् पूर्ववत्। हिन्वन्ति हिवि प्रीणनार्थः (भ्वा० प०), इदित्वान्नुम्। सायकं—षो अन्तकर्मणि (दि० प०), ण्वुल्यात्वे युगागमः ॥२॥

१ २१ ११२ १२ २२ २ १२
ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः।

२ १ २ ३१ १ २१
व्रतान्यस्य सश्चिरे पुरूणि पूर्व-

१ २ २३ १२ ३१ २
चित्तये वस्वीरनु स्वराज्यम् ॥*३*॥ [१५]

अथ तृतीया। "प्रचेतसः" प्रकृष्टज्ञानाः "ताः" गावः "अस्य" इन्द्रस्य "सहः" बलं "नमसा" स्वकीयेन पयोरूपेण

वेन "सपर्यन्ति" परिचरन्ति "पुरूणि" बहूनि "अस्य" इन्द्रस्य "व्रतानि" शत्रुवधादि-रूपाणि वीर्य्य-कर्माणि "सश्चिरे" सेविरे ज्ञातव्यतया इत्यर्थः। किमर्थम्? "पूर्वचित्तये" युयुत्सूनां शत्रूणां पूर्वमेव प्रज्ञापनाय अनेन युध्यमाना वृत्रादयः सर्वे मरणं प्राप्ताः किमर्थं भवद्भिः प्राणास्त्यज्यन्त इति तेषां बोधनायेत्यर्थः। अन्यत्पूर्ववत्। पूर्वचित्तये-चिती सञ्ज्ञाने (भ्वा० प०), भावे क्तिन्, मन्क्तिव्याख्यानेत्यादिना पूर्वपदान्तोदात्तत्वम्॥ २॥ [१५]

१ २ ३ १ २र ३ १ २र ३ २
असाव्यꣳशुर्मदायाप्सु दक्षो गिरिष्ठाः।
३ २उ ३ १ २
श्येनो न योनिमासदत्॥*१*॥

ऋ० जमदग्निः। छ० गायत्री। दे० सोमः। अथ षष्ठे खण्डे, प्रथमतृचे—प्रथमा। "गिरिष्ठाः" पर्वतजातः "अंशुः" सोमः "मदाय" मदार्थम् "असावि" अभिषुतः "अप्सु" वसतीवरीषु "दक्षः" प्रवृद्धश्च भवति। किञ्च "श्येनो न" यथा श्येनः पक्षी वेगेनागत्य स्थानमासीदति तद्वदयं सोमः "योनिं" स्वकीयं स्थानम् "आसदत्" आसीदति॥ १॥

३ १ २र २ ३ १ २ ३ १ २र ३ २
शुभ्रमन्धो देववातमप्सु धौतं नृभिः सुतम्।
१ २ ३ २ ३ १ २
स्वदन्ति गावः पयोभिः॥*२*॥

अथ द्वितीया। यत् "देववातं" देवैः प्रार्थितं "शुभ्रं" शोभनम् "अन्धः" अन्नरूपं "नृभिः" नेतृभिः "सुतम्" अभिषुतम् "अप्सु" वसतीवरीषु "धौतं" शोधितं सोमं

"गावः" पयसः "पयोभिः" आशिरैः "स्वदन्ति" स्वादयन्ति ॥

"धौतसुत"-"धुतःसुतः"—इति पाठौ ॥ २ ॥

२ ३ २ २ १ २र २ १ २ ३ १ २
आदीमश्वं न हेतारमशूशुभन्नमृताय ।

२ ३ १ २ २ १ १
मधो रसꣳ सधमादे ॥*३*॥ [१६]

अथ तृतीया । "आत्" अनन्तर "हेतारं" प्रेरकम् "ईम्" एनं "मधोः" मधुरस्य सोमस्य 'रस" "सधमादे" यज्ञे "अमृताय" अमरत्वाय "अशूशुभन्" ऋत्विजः शोभयन्ति । तत्र दृष्टान्तः—"अश्वं न" यथा प्रेरका अश्वं सग्रामे शोभयन्ति तद्वत् ॥

"हेतार"-"हेतारः"—इति पाठौ, "मधोः"-मध्वः"—इति च ॥ ३ ॥ [१६[

२ १ २ १ २१र २ १ २ १ १ २ २ १
अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम् ।

१ २र २ १ १
वि कोशं मध्यमं युव ॥*१०॥

ऋ० ऊर्द्धसद्म. । छ० गायत्री । दे० सोमः । अथ प्रगाथरूपे द्वितीय-सूक्ते—प्रथमा । हे "इषस्पते" अन्नस्य पते । "देव !" स्तोतव्य सोम ! "द्युम्नं" द्योतमान "बृहत्" प्रभूत "यशः" अन्नरूप "देवयु" देवान् कामयमान हविर्लक्षण त्वदीय रसम् "अभि दिदीहि" अस्मभ्यमाभिमुख्येन प्रकाशय प्रयच्छेत्यर्थः । यद्वा, हे सोम ! यशोऽन्न देवयु देवानिच्छन्तं यजमानमभिलक्ष्य प्रकाशय । आमन्त्रितस्याविद्यमानवत्त्वेन (८, १, १८) पदादित्वादनिघातः ।

किञ्च "मध्यमम्" अन्तरिच-स्थितं "कोशं" मेघं "वियुव" इष्यर्थं विगमय विश्लेषय ॥

"देवयु"-"देवयुः"—इति पाठौ ॥ १ ॥

१ २ २क २र २ २ २,२उ २ २ २ १ २
आ वच्यस्व सुदच चम्वोः सुतो विशां वह्निर्न विश्पतिः

१ २ १ १ २ २ १ २ २उ २ १ २ १ १ २
वृष्टिं दिवः पवस्व रीतिमपो जिन्वन् गविष्टये धियः

॥*२*॥ [१७]

अथ द्वितीया। हे "सुदच!" शोभन बल! "चम्वोः" अधिषवण-फलकयोः "सुतः" अभिषुतः त्वं "वह्निः न विश्पतिः" सर्वासां प्रजानां वोढ़ा राजेव "विशां" प्रजानां वोढ़ा सन् "आ वच्यस्व" आगच्छ कलशमापवस्व वचेर्गत्यर्थस्य व्यत्ययेन श्यनि रूपम्। किञ्च त्वम् "अपः" अपाम् उदका-दीनां "रीतिं" व्याप्तां गतिं वृष्टिं "दिवः" द्युलोकात् "पवस्व" क्षर। किं कुर्वन्? "गविष्टये" गामात्मन इच्छते यजमानाय "धियः" कर्माणि "जिन्वन्" प्रेरयन् ॥

"अपोजिन्वन्"-"अपाञ्जिन्व"—इति पाठौ ॥ २ ॥ [१७]

१ १ २र २ १ २ २ २ २ २ २ १ २
प्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम्।

१ २ १ २ २ १ २ २ १ २ २ २
विश्वा परि प्रिया भुवदध द्विता ॥*१*॥

ऋ० पर्वतनारदौ। छ० उष्णिक्। दे० सोमः। अथ चतोऽष्टचे—प्रथमा। "प्राणा" ते अनितेः प्रानचि-"बहुलञ्छन्दसि (२, ४, ७३)"—इति विकरणस्य लुक्, "सुपां सुलुग् (७, १, ३८)"—इति सुप आकारादेशः यष्टस्य

प्रापयिता चेष्टयिता "मह्वीनां" महतीनां मंहनीयानां वा अपां "शिशुः" पुत्र-स्थानीयः सोमः "ऋतस्य" यज्ञस्य "दीधितिं" प्रकाशकं धारकं वा स्वीयं रसं "हिन्वन्" प्रेरयन्, "विश्वा" सर्वाणि "प्रिया" प्रियाणि हवींषि "परिभुवत्" परिभवति व्याप्नोति। "अध" अपि च "द्विता" द्विधा भवति दिवि च पृथिव्याञ्च वर्त्तत इत्यर्थः ॥

"प्राणा"-"क्षाया"—इति पाठौ ॥ १ ॥

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २र ३ १
उप त्रितस्य पाष्योऽरभक्त यद्गुहा पदम्।

३ १ २ ३ १ २र ३ १ २ ३ १
यज्ञस्य सप्त धामभिरध प्रियम् ॥*२॥

अथ द्वितीया। "त्रितस्य एतन्नामकस्य ऋषेस्तोतुर्मम यज्ञे "गुहा" गुहायां हविर्द्धाने वर्त्तमानयोः "पाष्योः" पोषणवद्वयोः अधिषवणफलकयोः "पदं" स्थानं सोमः "यत्" यदा "उप अभक्त" समभजत। "अध" अनन्तरं "यज्ञस्य" "धामभिः" च धारकैः "सप्त" सप्तभिश्छन्दोभिः गायत्र्यादिभिः "प्रियम्" प्रीणयितारं सोमम् "अभि" स्तुवन्ति ऋत्विजः अपि वा सप्त सर्पयन्तीलैवसतीवर्य्यादिभिरुदकैः सोममभिपुष्णन्ति ॥ २ ॥

१ २ ३ १ २ ३ १ २ ३ १ २र ३ १
त्रीणि त्रितस्य धारया पृष्ठेष्वैरयद्रयिम्।

१ २ ३ १ २ ३ २ ३ १ २
मिमीते अस्य योजना वि सुक्रतुः ॥*३*॥ [१८]

अथ तृतीया। सोमः "त्रितस्य" मम यज्ञस्य स्वभूतानि "त्रीणि" सवनानि धारया आत्मीयया "वि धारया"। "किञ्च

पृष्ठेषु" सामसु "रयिं" दातारमिन्द्रम् "ऐरयत्" आयमतु "सुक्रतुः" शोभन-यज्ञः स्तोता "अस्य" इन्द्रस्य "योजना" संयोजनादीनि स्तोत्राणि "वि मिमीते" करोति यस्मादेवं तस्मादिन्द्रं सामसु रयलित्यर्थः ॥

"ऐरयत्"—"एरया"—इति पाठौ ॥ ३ ॥ [१८]

१ २ ३ १ २ ३ १ ३ १ २ ३ १
पवस्व वाजसातये पवित्रे धारया सुतः ।
१ २ ३ १ २ ३ १ ३ ३ १
इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तरः ॥*१*॥

ऋ० रेभः। छ० अनुष्टुप्। दे० सोमः। अथ चतुर्थे-तृचे—प्रथमा। हे "सोम!" "सुतः" अभिषुतः त्वम् "इन्द्राय" "विष्णवे" च अन्येभ्यो मित्रादिभ्यः "देवेभ्यः" "मधुमत्तरः" अतिशयेन माधुर्य्यापितः सन् "वाजसातये" अन्न-लाभाय "पवित्रे" "धारया" "पवस्व" चर ॥

"वाजसातये"-"वाजसातमः"—इति पाठौ, "मधुमत्तरः"-"मधुमत्तमः"—इति च ॥ १ ॥

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
त्वाᳫं रिहन्ति धीतयो हरिं पवित्रे अद्रुहः ।
३ १ ३ २उ ३ २ ३ १ २ ३ १ २
वत्सं जातं न मातरः पवमाना विधर्मणि ॥*२*॥

अथ द्वितीया। हे "पवमान!" पूयमान सोम! "विधर्मणि" विविधं हविषां धारके यज्ञे "अद्रुहः" द्रोह-वर्जिताः "धीतयः" अङ्गुलयः धीतय इति अङ्गुलिनाम (निघ० २, ५, ७) "हरिं" हरितवर्णं "पवित्रे" स्थितं "त्वां" "रिहन्ति" लिहन्ति निष्पीड़नार्थं स्पृशन्तीत्यर्थः। तत्र दृष्टान्तः—"वत्सं

जातं न मातरः"; 'मातरः' मातृ-भूता गावः उत्पन्नं 'वत्सं' यथा 'लिहन्ति' तद्वत् ॥

"धीतयः"-"मातरः"—इति पाठौ, "मातरः"-"धेनवः"—इति च ॥ २ ॥

१ २र ३ १ २र
त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे ।

१ २ ३ १ २ २ १ ३ १
प्रति द्रापिममुञ्चथाः पवमान महित्वना ॥*३*॥[१८]

अथ तृतीया। हे "महिव्रत" महाकर्मन् सोम! "त्वं" "द्यां" द्युलोकं "पृथिवीं च" "अति जभ्रिषे" अत्यन्तं बिभर्षि डुभृञ् धारणपोषणयोः (त० उ०), तस्य छान्दसे लिटि (३, ४, ६) सर्वविधीनां छन्दसि वैकल्पिकत्वात् अत्र इडागमः। अन्तरिक्षे सोमात्मना, पृथिव्यां लता-रूपेणेति एव लोकद्वयवर्त्तित्वम्। हे "पवमान!" चरन्! त्वं "महित्वना" महत्त्वेन युक्तः सन् "द्रापिं" कवचं "प्रति अमुञ्चथाः" प्रतिमुञ्चसि संवृणोषि ॥ ३ ॥ [१८]

१ २ ३ १ २ ३ १ २ ३
इन्दुर्वाजी पवते गोन्योघा

२ ३ १ ३ २ ३ २ ३ १ २
इन्द्रे सोमः सह इन्वन्मदाय ।

२ ३ १ ३ १ २ ३ १ २र ३
हन्ति रक्षो बाधते पर्य्यरातिं

१ २ ३ ३ २ ३ २ ३ १ २
वरिवस्कृण्वन्वृजनस्य राजा ॥*१*॥

ऋ० मन्युः। छ० त्रिष्टुप्। दे० सोमः। अथ पञ्चमखण्डे—प्रथमा। "इन्दुः" क्षरण-शीलः "सोमः" "वाजी"

बलवान् "गोन्योघा" गमनशील-नीचीनाग्र-रस-सङ्घातः "इन्द्रे" "सचः" बलकरं रसम् "इन्वन्" प्रेरयन् सोमः "मदाय" अस्य मदार्थं "पवते" चरति। किञ्च "रक्षः" राक्षस-कुलं "हन्ति" हिनस्ति। किञ्च "अरातिं शत्रुं "परि बाधते" परितः संहरति। कीदृशः ? "वरिव" वरणीयं धनं "कृण्वन्" स्तोतृणां कुर्वन् "वृजनस्य" बलस्य "राजा" ईशिता सोम इति॥ "अरातिम्"-"आरातीः"—इति पाठौ ॥ १ ॥

२ ३ १ ४ ३ १ २ ३ २
अध धारया मध्वा पृचान-

२ १ २र १ ३ १ २
स्तिरो रोम पवते अद्रिदुग्धः ।

२ ३ १ २ ३ १ २ ३ २
इन्दुरिन्द्रस्य सख्यं जुषाणो

३ १ ३ १ २ ३ १ २र
देवो देवस्य मत्सरो मदाय ॥५२॥

अथ द्वितीया। "अध" अथ अनन्तरम् "अद्रि-दुग्धः" ग्रावभिर्दुग्धोऽभिषुतः सोमः "मध्वा" मदकारिण्या "धारया" "पृचानः" देवान् सम्पर्चयन् "रोम" अवि-रोमभिः कृतं पवित्रं "तिरः" तिरस्कृत्य व्यवधायकं कृत्वा "पवते" कलशेषु चरति। किञ्च "इन्द्रस्य" "सख्यं" सखिभावं कर्म वा "जुषाणः" सेवमानो "देवः" द्योतमानः "मत्सरः" मदकारः "इन्दुः" सोमः "देवस्य" इन्द्रस्य "मदाय" मदार्थं "पवते" चरति ॥ २ ॥

२ ३ २ १ २ ३ २
अभि व्रतानि पवते पुनानो

२ ३ ३ २उ ३ १ २ ३ १
देवो देवान्त्स्वेन रसेन पृञ्चन् ।

२ ३१२ ३१ ३र २ ३ २
इन्दुर्धर्माण्यृतुथा वसानो दश

१२ ३ २ ३ १ २
क्षिपो अव्यत सानो अव्ये ॥*३*॥ [२०]

अथ तृतीया। "धर्माणि" धारकाणि "व्रतानि" कर्माणि "ऋतुथा" ऋतौ काले "वसानः" आच्छादयन् "इन्दुः" सोमः "पुनानः" पूयमानः सन् "अभि पवते" कलशानभिलक्ष्य चरति। कीदृशः? "देवः" संक्रीडन-शीलः "स्वेन" आत्मीयेन "रसेन" इन्द्रादीन् "पृञ्चन्" सम्पर्चयन् संयोजयन्। तमिमं सोमं "दश" दशसङ्ख्याकाः "क्षिपः" अङ्गुलि-नामैतत् (निघ० २, ५, २) कर्मार्थं प्रेर्य्यन्त इति तत्सङ्ख्याका अङ्गुलयः "सानो" समुच्छ्रिते "अव्ये" अवि भवे पवित्रे "अव्यत" गमयन्ति यदा, तत्र पवित्रे पूयमानं सोमम् अव्यत गच्छन्ति। वी गत्यादिषु (अदा० प०) लङि व्यत्ययेनात्मनेपदम्॥

"व्रतानि"-"प्रियाणि"—इति पाठौ॥ ३॥ [२०]

इति सामवेदार्थप्रकाशे उत्तरग्रन्थस्य षष्ठाध्यायस्य षष्ठः खण्डः।

---

१ २ ३ १ २ ३ १ २
आ ते अग्न इधीमहि द्युमन्तं देवाजरम्।

२ ३ २ ३ १ २ ३ २ ३ १
यद्ध स्या ते पनीयसी समिद्दीद-

३ १ २ ३र ३ २ ३ १ २
यति द्यवीषं स्तोतृभ्य आ भर ॥*१*॥

ऋ० वसुश्रुतः ययो वा। छ० पंक्तिः। दे० अग्निः। अथ सप्तमे खण्डे, प्रथम-सूक्ते—प्रथमा। हे "अग्ने!" "द्युमन्तं"

दीप्तिमन्तम् "अजरम्" अजीर्णम् "ते" त्वाम् "आ" सर्वतः "इधीमहि" दीपयामः। "यत् ह" यदा खलु "ते" तव "स्या" सा "पनीयसी" स्तुत्या "समित्" दीप्तिं "द्यवि" द्युलोके "दीदयति" दीप्यते तदा हे अग्ने! "स्तोतृभ्यः" अस्मभ्यम् "इषम्" अन्नम् "आभर" आहर॥ १॥

१ २ १ २ ३ १ २ ३ १ २
आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते।

१ २ ३ २ ३ १ २ ३ १ २ ३
सुश्चन्द्र दस्म विश्पते हव्यवाट्

१ २ ३ १२ ३ २ ३ १ २
तुभ्यं हूयत इषं स्तोतृभ्य आ भर॥*२*॥

अथ द्वितीया। हे "ज्योतिषस्पते!" दीप्तेः स्वामिन्! अग्ने! "शुक्रस्य" दीप्तस्य "ते" तुभ्यम् "ऋचा" मन्त्रेण सह "हविः" "आ" आभिमुख्येन "हूयते"। हे "सुश्चन्द्र!" सुष्ठाह्लादक! शोभनहिरण्य! वा, हे "दस्म!" शत्रूणामुपक्षयितः!। शिष्टं गतम्॥

"ज्योतिषः"-"शोचिषः" इति पाठौ॥ २॥

१ २२ २ १ २ १ १ २
ओभे सुश्चन्द्र विश्पते दर्वी श्रीणीष आसनि।

३ १ २ १ २ २ १ २
उतो न उत्पुपूर्या उक्थेषु शवस-

३ १ २ ३ २ ३ १ २
स्पत इषं स्तोतृभ्य आ भर॥*३*॥ [२१]

अथ तृतीया। हे "सुश्चन्द्र!" शोभनाह्लादक! शोभनहिरण्य! वा, अग्ने! "उभे" "दर्वी" दर्व्यौ हविःपूर्णे जुहू-

प्रभृतौ "आसनि" आस्ये "आ योगीपे" आश्यसि पचसि वा "उतो" अपि च "नः" अस्मान् "उक्थेषु" यागेषु "उत् पुपूर्याः" उत्पूरय फलैः। हे "शवसस्पते!" बलस्य पालयितः!! इयमित्यादि गतम् ॥ ३ ॥ [२१]

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २
इन्द्राय साम गायत विप्राय बृहते बृहत्।
३ १ २ ३ १ २ ३ १ २
ब्रह्मकृते विपश्चिते पनस्यवे ॥*१*॥

ऋ० नृमेधः। छ० उष्णिक्। दे० इन्द्रः। अथ तृतीयतृचे—प्रथमा। हे उद्गातारः! "इन्द्राय" "बृहत्" एतन्नामकं साम "गायत" उच्चरत। कीदृशाय? "विप्राय" मेधाविने "बृहते" महते "ब्रह्मकृते" वृष्टिद्वारा हविर्लक्षणस्यान्नस्य कर्त्रे "विपश्चिते" विदुषे "पनस्यवे" स्तुतिमिच्छते ॥

"ब्रह्मकृते"-"धर्मकृते"—इति पाठौ ॥ १ ॥

१ २ ३ १ २ ३ १ २र
त्वमिन्द्राभिभूरसि त्वꣳ सूर्य्यमरोचयः।
३ १ २ ३ १ २ ३ १ २
विश्वकर्म्मा विश्वदेवो महाꣳ असि ॥*२*॥

अथ द्वितीया। हे "इन्द्र!" "त्वम्" "अभिभूः" शत्रूणाम् अभिभविता "असि" भवसि किञ्च "त्वम्" "सूर्य्यम्" आदित्यम् "अरोचयः" तेजोभिरदीपय, किञ्च "विश्वकर्मा" विश्वस्य कर्त्तासि "विश्वदेवः" सर्वदेवश्चासि तथा च यजुर्ब्राह्मणम्—"अग्निं वा अन्वन्या देवता इन्द्रमन्वन्या" इति यतो "महान्" सर्वाधिकोऽसि ॥ २ ॥

२ २ ३ १ २ ३ २ १ २ ३ २ ३ २
विभ्राजं ज्योतिषा स्वा३रगच्छो रोचनं दिवः ।
३ १ २ २ १ २
देवास्त इन्द्र सख्याय येमिरे ॥*३*॥ [२२]

अथ तृतीया। हे "इन्द्र!" त्वं "ज्योतिषा" तेजसा "दिवः" आदित्यस्य "रोचनं" प्रकाशकम् अधिकरणत्वेन "स्वः" स्वर्गं "विभ्राजत्" प्रकाशयन् "अगच्छः" अप्राप्नोः, किञ्च "देवाः" सर्वाः "ते" तव "सख्याय" मित्रत्वाय "येमिरे" त्वं समात्मानं नियमितवन्तः अस्माकम् इन्द्रः सखा यथा स्यादिति सर्वे देवाः प्रयत्नमकार्षुरित्यर्थः ॥ ३ ॥ [२२]

१ २ ३ १ २ ३ १ २ ३ १ २
असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि । ॥
१ २ ३ १२ ३ २ ३ १ २ ३ १ २
आ त्वा पृणक्त्विन्द्रियꣳ रजः सूर्य्यो न रश्मिभिः॥ १

ऋ० गोतमः। छ० अनुष्टुप्। दे० इन्द्रः। अथ तृतीयतृचे—प्रथमा। हे "इन्द्र!" "ते" त्वदर्थं "सोमः" "असावि" अभिषुतोऽभूत्। हे "शविष्ठ" अतिशयेन बलवन्! अतएव "धृष्णो" शत्रूणां धर्षयितः! इन्द्र! "आगहि" देवयजनदेशमागच्छ, आगतञ्च "त्वा" त्वाम् "इन्द्रियं" सोमपानेनोत्पन्नं प्रभूतं सामर्थ्यम् "आ पृणक्तु" आपूरयतु। "रजः" अन्तरिक्षं "रश्मिभिः" किरणैः "सूर्य्यो न" यथा सूर्य्यः पूरयति तद्वत्। शविष्ठः—शवस्विन् शब्दादिष्ठनि विन्मतोर्लुक्, "टेः (६, ४, १५५)"—इति टिलोपः, पादादित्वान्निघाताभावः (८, १, १८)। गहि—गमेर्लिटि "बहुलञ्छन्दसि (२, ४, ७३)"—इति शपो लुक्, अनुदात्तोपदेश (६. ४, ३७)"—इत्यादिना

अनुनासिक-लोपः, तस्य असिद्धवत्त्वाभात् (६, ४, १२)"— इत्यसिद्धत्वाड्डेर्लुगभावः ॥ १ ॥

१ २     ३ १ २ ३ २ ३ १ २ ३ १ २
आ तिष्ठ वृत्रहन्नथं युक्ता ते ब्रह्मणा हरी ।

३ २ ३ १२ ३ २२ १ २     ३ १ २
अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना ॥*२॥

अथ द्वितीया। हे "वृत्रहन्!" यत् णां हन्तः! त्वं! "रथम्" "आ तिष्ठ" आरोह। यस्मात् "ते हरी" त्वदीयौ अश्वौ "ब्रह्मणा" स्तोत्रलक्षणेन मन्त्रेण "युक्ता" रथेऽस्माभिर्योजितौ "सुपां सुलुग् (७, १, २९)"—इत्याकारः तस्मात् त्वं रथमातिष्ठ। "ते मनः" त्वदीयं मनश्च "ग्रावा" अभिषवार्थं प्रवृत्तः पाषाणः "वग्नुना" वचनीयेनाभिषवशब्देन "वृचेर्गश्च (उ० ३, ३३)"—इति नु-प्रत्ययो गकारश्चान्तादेशः "अर्वाचीनम्"—अस्मदभिमुखं "सुकृणोतु" सुष्ठु करोतु ॥२॥

२ ३ १ २९   २ ३ १
इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् ।

१ २     ३ १ २९ ३ १ ३ १ २
ऋषीणाꣳ सुष्टुतीरुप यज्ञं च मानुषाणाम् ॥*३* [२३]

इति तृतीयप्रपाठकः ।

---

अथ तृतीया। "अप्रतिधृष्टशवसं" केनाप्यधर्षितबलमहिंसितबलमित्यर्थः "इन्द्रमित्" इन्द्रमेव "ऋषीणां" वसिष्ठादीनां "मानुषाणाम्" अन्येषां मनुष्याणाञ्च "सुष्टुतीः" शोभनाः स्तुतीः "यज्ञञ्च" "हरी" अश्वौ "उप वहतः" समीपं प्रापयतः। यत्र यत्र स्तुवन्ति यत्र यत्र यजन्ते तत्र सर्वत्र

न्द्रमश्वौ प्रापयत इत्यर्थः। मानुपाणाम् "मनोर्जातौ (४, १, १६११)"—इति मनु-शब्दादञ् षुगागमश्च ॥
ऋषीणां सुष्टुती:"-"ऋषीणाञ्च स्तुती:"—इति पाठौ ॥२॥ [२३]

इति सामवेदार्थ-प्रकाशे उत्तरार्चिकस्य पञ्चमाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ६ ॥

इति श्रीमद्राजाधिराज परमेश्वर-वैदिकमार्गप्रवर्त्तक श्रीवीर-बुक्क-भूपाल-
साम्राज्य धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये
सामवेदार्थप्रकाशे उत्तरार्चिके षष्ठोऽध्यायः।

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ७ ॥

## अथ चतुर्थप्रपाठकः।

सप्तमोऽध्याय आरभ्यते।

१ २३ १ २ ३ १ २ ३ ३
ज्योतिर्यज्ञस्य पवते मधु प्रियं
३ २ ३१ २ ३ २ ३ १ २
पिता देवानां जनिता विभूवसुः।
३ ३ ३ १ २ ३ १ २ ३क २र
दधाति रत्नꣳ स्वधयोरपीच्यं
३ १ २ ३ २ ३ ३ १ २र
मदिन्तमो मत्सर इन्द्रियो रसः ॥*१*॥

ऋ० सिकतानिवारि-ऋषिगणः। छ० जगती। दे० सोमः। तत्र प्रथमखण्डे,—प्रथम-तृचे—प्रथमा। "यज्ञस्य" अग्निष्टोमादेः "ज्योतिः" दीपकः सोमः "प्रियम्" इन्द्रादीनां

प्रियभूतं "मधु" मधुरसं "पवते" पूयते दशापवित्रेण शोध्यत इत्यर्थः। रसो विशेष्यते—"पिता" पालकः "जनिता" फलस्य उत्पादकः "विभूवसुः" प्रभूतधनः तेन सम्पादयितुं शक्यत्वात् तादृशः सोमरसः "स्वधयोः" "स्वधा"—इति द्यावापृथिव्योर्नाम (निघ० ३, ३०, १) "अपीच्यम्"—इति चान्तर्हितस्य (निघ० ३, २५, ६) द्यावापृथिव्योर्मध्येऽन्तर्हितं "रत्नं" रमणीयं धनं "दधाति" स्थापयति यजमानेषु। स एव पुनर्विशेष्यते—"रसः" रसयिता "मदिन्तमः" मादयितृतमः "मत्सरः" स सोमः "इन्द्रियः" इन्द्रेण जुष्टः इन्द्रिय-वर्द्धको वा॥ १॥

२ १ २ १ २ १ २ ३क २र १
अभिक्रन्दन् कलशं वाज्यर्षति

१ २ ३ १ २ १ २ १ २
पतिर्दिवः शतधारो विचक्षणः।

१ २ ३ १ २ १ २
हरिर्मित्रस्य सदनेषु सीदति

१ २ ३ २ १ २ ३ १ २
मर्मृजानोऽविभिः सिन्धुभिर्वृषा॥*२*॥

अथ द्वितीया। सोमः "वाजी" वेजनवान् यद्वा, अश्वसदृशः "अभिक्रन्दन्" अभितः शब्दं कुर्वन् "कलशं" द्रोणकलशम् "अर्षति" गच्छति। कीदृशः "दिवः" द्योतमानस्य अन्तरिक्षस्य दशापवित्रलक्षणस्य "पतिः" पालकः स्वामी यद्वा द्युलोकस्य स्वामी दिवि हि सोम उत्पन्नः "तृतीयस्यामितो दिवि सोम आसीत्"—इति श्रुतेः "शतधारः" परिमित धारोपेतः "विचक्षणः" विशेषेण द्रष्टा "हरिः" हरितवर्णः सोमरसः "मित्रस्य" मित्रवर्त्तितकस्य यज्ञस्य "सदनेषु"

तृचे—प्रथमा। "वाजिनः" बलवन्तः "शुक्रासः" दीप्ताः "आशवः" वेगवन्तश्च "सोमासः" सोमाः "गव्यया" यजमानस्य गवेच्छया तथा "अश्वया" अश्वेच्छया तथा "वीरया" वीराः पुत्र-भृत्यादयः तेषामिच्छया "प्र असृक्षत" प्रासृज्यन्त रसात्मना विसृज्यन्ते ॥ १ ॥

१ ११ २ १ २२ १२ २ १२
शुम्भमाना ऋतायुभिर्मृज्यमाना गभस्त्योः ।

१२२ १२ २ १२
पवन्ते वारे अव्यये ॥*२*॥

अथ द्वितीया। "ऋतायुभिः" यज्ञेच्छुभिः अध्वर्यु-प्रभृतिभिः "शुम्भमानाः" अलङ्क्रियमाणाः "गभस्त्योः" हस्तयोः हस्ताभ्यां "मृज्यमानाः" शोध्यमानाः "वारे" वाले दशापवित्रे। कीदृशे? "अव्ये" अविमये "पवन्ते" पूयन्ते ॥ २ ॥

२ २२ १ २ २ २२१ २ १२ १ २ २
ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा ।

१२१ १ १२
पवन्तामान्तरिक्ष्या ॥*३*॥ [२]

अथ तृतीया। "ते" सोमाः अभिपूयमानाः "दाशुषे" हविःप्रदात्रे यजमानाय "विश्वा" सर्वाणि "वसु" वासकानि गवादि-धनानि "आपवन्तां" सर्वतः क्षरन्तु। विश्वं त्वुक्तं कथं वसूनां विश्वत्वमिति? उच्यते—"दिव्यानि" दिवि भवानि "पार्थिवा" पृथिवी-सम्बद्धानि "अन्तरिक्ष्या" अन्तरिक्षाणि अन्तरिक्षे भवानि एव मुक्तप्रकारेण विश्वानीत्यर्थः ॥ ३ ॥ [२]

१ १ २१ १२ २ १२ २ २ २
पवस्व देववीरति पवित्रं सोम रंह्या ।

१ २ ३ १ २र
इन्द्रमिन्दो वृषा विश ॥*१*॥

ऋ० मेधातिथिः। छ० गायत्री। दे० सोमः। पवस्वेति-द्यर्च्चे तृतीये सूक्ते—प्रथमा। हे सोम! "देववीः" देव-कामः त्वं "रंह्या" वेगेन "पवित्रं" यथा भवति "अति-पवस्व" अतिचर। किञ्च हे "इन्दो!" "वृषा" सेचकस्त्वं इन्द्रम् "आविश" प्रविश ॥ १ ॥

१ २ ३ २ ३ १ २ २ १ ३ १ २
आ वच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः।

१ २र ३ १ २
आयोनिं धर्णसिः सदः ॥*२*॥

अथ द्वितीया। हे "इन्दो!" सोम! "वृषा" सेवका-भीष्टदाता वर्षकः "द्युम्नवत्तमः" यशस्वितमः "धर्णसि" धर्त्ता त्वं "महि" महत् "प्सरः" पानीयम् "अन्धः" अन्नम् "आव-च्यस्व" अस्मान् प्रति आगमय किञ्च "योनिं" स्वकीयं स्थानम् "आसदः" आसीद च ॥ २ ॥

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अधुक्षत प्रियं मधु धारा सुतस्य वेधसः।

३ १ २ ३ १ २
अपो वसिष्ट सुक्रतुः ॥*३*॥

अथ तृतीया। "सुतस्य" अभिषुतस्य "वेधसः" अभि-लषितस्य विधातुर्यस्य "सोमस्य" "धारा" "प्रियं" प्रीतिकरं "मधु" अमृतम् "अधुक्षत" दुग्धे। स "सुक्रतुः" सुकर्मा सोमः "अपः" "वसतीवरीः" "वसिष्ट" आच्छादयति ॥ ३ ॥

३ १ २ ३ १ २र ३ १ २
महान्तं त्वा महीरन्वापो अर्षन्ति सिन्धवः ।
१ २र ३ १ २
यद्गोभिर्वासयिष्यसे ॥४॥

अथ चतुर्थी । हे सोम । त्वं "यद्" यदा यत्र "गोभिः" गोविकारैः पयोभिः "वासयिष्यसे" आच्छादयिष्यसे, तदा "महान्तं" गुणैः प्रवृद्धं "त्वा अनु" त्वाम्प्रति "सिन्धवः" स्यन्दमानाः "महीः" महत्यः "आपः" "अर्षन्ति" गच्छन्ति ॥ ४ ॥

२ २ ३ १ २ ३ १ ३ १ २ ३ २
समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः ।
१ २ ३ १ २ ३ २
सोमः पवित्रे अस्मयुः ॥५॥

अथ पञ्चमी । "समुद्रः" समुद्द्रवन्ति अस्माद्रसा इति समुद्रः "विष्टम्भः" "दिवः" स्वर्गस्य "धरुणः" धर्त्ता च "अस्मयुः" अस्मत्-कामः "सोमः" "अप्सु" उदकेषु "मामृजे" समृज्यते पवित्रेऽभिषिच्यते चेत्यर्थः ॥ ५ ॥

१ २ ३ २ ३ १ २ ३ ३ १ २र ३ २
अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।
१ २र
सं सूर्येण दिद्युते ॥६॥

अथ षष्ठी । "वृषा" कामानां वर्षकः "हरिः" हरितवर्णः "महान्" सर्वोत्तमः "मित्रः न" यथा सखा तद्वत् "दर्शतः" दर्शनीयः यः सोमः "अचिक्रदत्" शब्दं करोति । सोऽयं सोमः सूर्येण सह "सन्दिद्युते" समित्येकीभावे सूर्येण सह द्योतत इत्यर्थः ॥

"रोचते"—इति बह्वृचानां पाठः ॥ ६ ॥

२ १ २ २ १ २ २ १ २ २ १ २
गिरस्त इन्द्र ओजसा मर्मृज्यन्ते अपस्युवः ।

२ १ २ ३ १ २
याभिर्मदाय शुम्भसे ॥*७*॥

अथ सप्तमी । हे "इन्दो !" "ते" तव "ओजसा" बलेन "अपस्युवः" कर्मेच्छा-सम्बन्धिन्यः ताः "गिरः" स्तुतयः "मर्मृज्यन्ते" शोध्यन्ते । "याभिः" "गीर्भिः" त्वं मदाय "चरन्" "शुम्भसे" अलङ्क्रियसे ॥ ७ ॥

१ २ १ २ ३ १ २ २ १ २
तं त्वा मदाय घृष्वय उ लोककृत्नुमीमहे ।

१ २ १ २ ३ २
तव प्रशस्तये महे ॥*८*॥

अथ अष्टमी । "लोककृत्नु" लोकस्य कर्त्तारं "तं त्वा" सोमं "घृष्वये" शत्रूणां घर्षण-शीलाय "मदाय" "ईमहे" याचामहे । हे सोम । पातमिति शेषः । किमर्थम् ? इति, उच्यते—"तव" "महे" महते "प्रशस्तये" प्रशंसनाय ॥ ८ ॥

३ १ २ २ १ २ २ १ २ ३ २ १ २
गोपा इन्दो नृपा अस्यश्वसा वाजसा उत ।

२ १ ३ १ २ १ २
आत्मा यज्ञस्य पूर्व्यः ॥*९*॥

अथ नवमी । हे "इन्दो !" क्रियमाण-सोम ! "यज्ञस्य" ज्योतिष्टोमादेः "पूर्व्यः" पुराणः नित्यः आत्मा स्वरूपभूतः सोमस्य यज्ञस्वरूपत्वं प्रसिद्धम् । तादृशस्त्वं "गोपाः" अस्मभ्यं गवां दाता "असि" भवसि, "नृपा" नृणां पुत्र-भृत्यादीनां दाताऽसि, "अश्वसाः" अश्वानां दाता चासि, "उत" अपि च "वाजसा" अन्नानां दाता चासि ॥ ९ ॥

१ २ २ १ २ १ २ २ १ १ १ १ २
अस्मभ्यमिन्दविन्द्रियं मधोः पवस्व धारया ।

३ १ २ ३ १
पर्जन्यो वृष्टिमाँ३ इव ॥*१०॥ [३]

अथ दशमी । हे "इन्दो !" सोम ! "इन्द्रियम्" इन्द्रेण जुष्टम् इन्द्रियस्य वीर्यस्य वा वर्द्धकं रसं "मधोः" मदकरस्य अन्नस्य "धारया" "पर्जन्योवृष्टिमां इव" यथा वर्षवान् पर्जन्यो मेघः तथा "अस्मभ्यं" मेधातिथिभ्यः "पवस्व" चर ॥ १० ॥

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥ [३]

---

१ २ १ १ २ १ ११ २ २ २ १ २
सना च सोम जेषि च पवमान महि श्रवः ।

१ २ ३ १ २
अथा नो वस्यसस्कृधि ॥*१*॥

ऋ० हिरण्यस्तूपः । छ० गायत्री । दे० सोमः । अथ द्वितीय-खण्डे—सनाचेति-दशर्चे प्रथमे सूक्ते, प्रथमा । हे "महिश्रवः !" महदन्न ! "पवमान" सोम ! "सन" अस्मद्यागे यजनीयान् देवान् भज "जेषि च" याग-विघ्नकारिणो राक्षसांश्च जय । "अथ" देवान् प्राप्य राक्षसांश्च जित्वा अनन्तर "नः" अस्मान् "वस्यसः" श्रेयसः "कृधि" कुरु श्रेयोऽस्मभ्यं देहीत्यर्थः ॥ १ ॥

२ ३ २ ३ १ २ १ २ १ २ ३ १ २
सना ज्योतिः सना स्वा३र्विश्वा च सोम सौभगा ।

१ २ ३ १ २
अथा नो वस्यसस्कृधि ॥*२*॥

अथ द्वितीया। हे सोम! त्वं "ज्योतिः" तेजः "सन" अस्मभ्यं प्रयच्छ। अपि च "स्वः" स्वर्गं "सन" अस्मभ्यं देहि। "विश्वा" विश्वानि "सौभगा" सौभाग्यानि "च" सन सिद्धमन्यत्॥ २॥

१ २ १ २ ३ २उ ३ १ २ ३ १ २
सना दक्षमुत क्रतुमप सोम मृधो जहि।

१ २ ३ १ २
अथा नो वस्यसस्कृधि ॥*३*॥

अथ तृतीया। हे सोम! त्वं "दक्षं" बलं "सन" अस्मभ्यं देहि, "उत" अपि च "क्रतुं" यज्ञं सन, "मृधः" हिंसकान् शत्रून् "अप जहि" मारय। सिद्धमन्यत्॥ ३॥

१ २ १ २ ३ २ ३ १ २ ३ १ २
पवीतारः पुनीतन सोममिन्द्राय पातवे।

१ २ ३ १ २
अथा नो वस्यसस्कृधि ॥*४*॥

अथ चतुर्थी। हे "पवीतारः!" सोमस्य शोधयितारः ऋत्विजः! "सोमं" "पुनीतन" पावयत दशापवित्रेण शोधयत किमर्थम्? "इन्द्राय पातवे" इन्द्रस्य पानाय। गतमन्यत्॥ ४॥

१ ९२ ३ १ २ ३ १ ३ १ २ २३ १ २
त्वꣳ सूर्ये न आ भज तव क्रत्वा तवोतिभिः।

१ २ ३ १ २
अथा नो वस्यसस्कृधि ॥*५*॥

अथ पञ्चमी। हे सोम! त्वं "तव क्रत्वा तव ऊतिभिः" त्वत्कर्तृकाभिः रक्षाभिश्च "नः" अस्मान् "सूर्ये" "आ भज" प्रापय। सिद्धमन्यत्॥ ५॥

२ ३ १ ३ २ ३ १ ३ १ २ २ १ २
तव क्रत्वा तवोतिभिर्ज्योक् पश्येम सूर्य्यम्।

१ २ ३ १ २
अथा नो वस्यसस्कृधि ॥*६*॥

अथ षष्ठी। हे सोम! "तव" "क्रत्वा" प्रज्ञानेन "तव ऊतिभिः" पालनैश्च "ज्योक्" चिरं पश्येम सूर्यं पश्यामः द्रक्ष्यामः। सिद्धमन्यत् ॥ ६ ॥

३क २र ३ १ २ ३ १ २ ३ २
अभ्यर्ष स्वायुध सोम द्विबर्हसꣳ रयिम्।

१ २ ३ १ २
अथा नो वस्यसस्कृधि ॥*७*॥

अथ सप्तमी। हे "स्वायुध!" शोभनायुध सोम! त्वं "द्विबर्हसं" द्वयोर्द्यावापृथिव्योः स्थानयोः परिदृढं "रयिं" धनम् "अभ्यर्ष" स्तोतॄन् अभिगमय। सिद्धमन्यत् ॥ ७ ॥

१ २ ३ १ २ ३ १ २ ३ १ २ २ १ २
अभ्या३र्षानपच्युतो वाजिंत्समत्सु सासहिः।

१ २ ३ १ २
अथा नो वस्यसस्कृधि ॥*८*॥

अथ अष्टमी। हे सोम! "समत्सु" संग्रामेषु "अनपच्युतः" शत्रुभिरनाहतः "सासहिः" शत्रूणामभिभविता त्वम् "अभ्यर्ष" अभिगच्छ चर। गतमन्यत् ॥ ८ ॥

२ ३१२ ३ १२ ३ १ २
त्वां यज्ञैरवीवृधन् पवमान विधर्मणि।

१ २ ३ १ २
अथा नो वस्यसस्कृधि ॥*९*॥

अथ नवमी । हे "पवमान !" शोध्यमान सोम ! त्वां "विधर्मणि" विविधफलस्य धारके यज्ञे "यज्ञैः" यज्ञ-साधनैः "स्तोत्रैः" "अवीवृधन्" यजमाना वर्द्धयन्ति । गतमन्यत् ॥९॥

२ १ २ ३ १ २ २ ३ १ २ ३ २ ३ १ २
रयिं नश्चित्रमश्विनमिन्दो विश्वायुमा भर ।

१ २ ३ १ २
अथा नो वस्यसस्कृधि ॥१०॥ [४]

अथ दशमी । हे "इन्दो !" यागेषु क्लिद्यमान सोम ! त्वं "चित्रं" नानाविधम् "अश्विनम्" अश्ववन्तञ्च "विश्वायुं" सर्व-गामिनं "रयिं" धनं "नः" अस्मभ्यम् "आ भर" आहर । गत-मन्यत् ॥१०॥ [8]

१ २ ३ १ १ २ ३ १ २ ३ १ ३२
तरत्स मन्दी धावति धारा सुतस्यान्धसः ।

१ २ ३ २ १ २
तरत्स मन्दी धावति ॥१॥

ऋ० उचथ्यः । छ० गायत्री । दे० सोमः । तरत्समन्दीति चतुर्ऋचे द्वितीयसूक्ते—प्रथमा । "मन्दी" देवानां हर्षकारः स सोमः "तरत्" स्तोतॄन् पाप्मनः सकाशात् तारयन् "धावति" दशापवित्रादधः क्षरति । तदेव दर्शयति—"सुतस्य" अभि-षुतस्य "अन्धसः" देवानामन्नात्मकस्य सोमस्य धारा धाव-तीति । पुनरपि तदेवात्यन्तादरार्थं "तरत्समन्दीधावति"—इति । यद्वास्या ऋचो यास्केनोक्तोऽर्थो द्रष्टव्यः, यथाथा—"तरति स पापं सर्वं मन्दीयं स्तौति धावति गच्छत्यूर्द्धां गतिं धारसुतस्यान्धसो धाराभिषुतस्य सोमस्य मन्त्रपूतस्य वाचा सुतस्य (निरु० १३, ६)"—इति ॥ २ ॥

२ १ १ २ १ २ ३ १ २ ३ १ २
उस्रा वेद वसूनां मर्तस्य देव्यवसः।
१ २ २ ३ १ २
तरत्स मन्दी धावति ॥*२*॥

अथ द्वितीया। "वसूनां" धनानाम् "उस्रा" उत्सरणशीला प्रदात्री "देवी" द्योतमाना स्तूयमाना वा यस्य सोमस्य धारा "मर्तस्य" मनुष्यं यजमानम् "अवसः" रक्षितुं "वेद" जानाति। सिद्धमन्यत् ॥ २ ॥

१ १ २ २ २ १ २ २ १ २
ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे।
१ २ २ ३ १ २
तरत्स मन्दी धावति ॥*३॥

अथ तृतीया। "ध्वस्रयोः पुरुषन्त्योः" ध्वस्रः कश्चिद्राजा तथा पुरुषन्तिश्च, तयोरुभयोरवेतरयोग-विवक्षया द्विवचनं द्रष्टव्यं "सहस्राणि" धनानां सहस्राणि "आ दद्महे" वयं प्रतिगृह्णीमः। तदस्माभिः प्रतिग्रहीतं धनमुत्तममस्त्विति ऋषिः सोमं प्रार्थयत इति सोमस्य स्तुतिः। सिद्धमन्यत् यथा अवत्सार एतयोर्धनानि प्रतिजग्राह एवं तरन्त-पुरुमीढौ प्रतिजगृहतुः। तथा च शाट्यायनकम्—'अथ ह वै तरन्त-पुरुमीढौ वैदर्भौ ध्वस्रयोः पुरुषन्त्योः बहु प्रतिगृह्य गरगिराविव मेनाते तौ ह स्माहुर्यथा मात प्रतिगृह्णात तावकामयेतामसातत्वा विविद सातं स्यादात्तमिवैव न प्रतिग्रहीतमिति भावे तच्चतुर्ऋचमपश्यतान्तरेण मत्वैतां तयोर्वेतयोरसातं सातमभवदात्तमिवैव न प्रतिग्रहीतं स यः प्रतिगृह्य कामयेत"—इत्यादि ॥ ३ ॥

१ २र १ १ २ १ १ २ १ २ २ १ २
आ ययोस्त्रिंशतं तना सहस्राणि च दद्महे।

२ ३ २ ३ १ २
तरत्स मन्दी धावति ॥*४*॥ [५]

अथ चतुर्थी। "ययोः" धस्त-पुरुषन्त्योः "त्रिंशतं" त्रीणि शतानि सहस्राणि च "तना" वस्त्राणि "आ दद्महे" वयं "प्रतिग्टह्णीमः" तयोरस्माभिः प्रतिग्टहीतं तत् सर्वम् अप्रतिग्टहीतमस्त्विति सोमम् ऋषिः प्रार्थयत इति सोमस्यैव स्तुतिः। गतमन्यत् ॥ ४ ॥ [५]

१ १ २र १ १ २र २ २
एते सोमा असृचत गृणानाः शवसे महे।

१ २ २ २ १ २
मदिन्तमस्य धारया ॥*१॥

ऋ० जमदग्निः। छ० गायत्री। दे० सोमः। एते सोमा इति ढचं तृतीयं सूक्तम्—तत्र, प्रथमा। "मदिन्तमस्य" देवानां मादयितृतमस्य रसस्य सम्बन्धिन एते सोमा अभिषुताः सन्तः "गृणानाः" स्तूयमानाः "महे" महते "शवसे" अस्माकं बलाय धारया "असृचत" गच्छन्ति ॥ १ ॥

२ १ २र २ १ २ २ १ २ २ १ २
अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि।

२ १ २ २ १ २
सनद्वाजः परि स्रव ॥*२*॥

अथ द्वितीया। हे सोम! "वीतये" देवानां भक्षणाय "नृम्णा" नृम्णानि धनवत् प्रियतराणि "गव्यानि" गो-सम्बन्धीनि क्षीरादीनि "पुनानः" पूयमानः सन् "अभ्यर्षसि" अभिगच्छसि। हे सोम! "सनद्वाजः" दीयमानान्नः त्वं "परि" परितः "स्रव" दशापवित्रादधः क्षर ॥ २ ॥

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
उत नो गोमतीरिषो विश्वा अर्षं परिष्टुभः ।

३ २ ३ १ २
गृणानो जमदग्निना ॥३॥ [६]

अथ तृतीया। "उत" अपि च हे सोम ! "जमदग्निना" जमदग्नि-नाम्ना ऋषिणा मया "गृणानः" स्तूयमानः त्वं "नः" अस्माकं "गोमतीः" गोभिर्युक्तानि "परिष्टुभः" परितः स्तोतव्यानि सर्वाणि "इषः" अन्नानि देहीत्यर्थः ॥ ३ ॥ [६]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

३ १उ २ ३ १ २ ३ १ २ २
इमꣳ स्तोममर्हते जातवेदसे

१ २ ३ १ २ ३ १ २
रथमिव सं महेमा मनीषया ।

३ १उ २ १ २ ३ १ १र
भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने

३ १ १र ३ १ १र
सख्ये मा रिषामा वयं तव ॥१॥

ऋ० कुत्सः । छ० जगती । दे० अग्निः । इमं स्तोममिति-तृतीयखण्डे—प्रथम-तृचे, प्रथमा । "अर्हते" पूज्याय "जात-वेदसे" जातानामुत्पन्नानां वेदित्रे, जात-प्रज्ञाय जात-धनाय वा अग्नये "मनीषया" निश्चितया बुद्ध्या "इमम्" एतत्सूक्तरूपं स्तोमं "रथमिव" यथा तक्षा रथं संस्करोति तथा "सम्महेम" सम्यक् पूजितं कुर्मः । अस्याग्नेः "संसदि" सम्भजने "नः" अस्माकं "प्रमतिः" प्रकृष्टा बुद्धिः "भद्रा हि" कल्याणी समर्था खलु भवतस्तया बुद्ध्या स्तुम इत्यर्थः। हे "अग्ने !" "तव सख्ये"

अस्माकं त्वया सह सखित्वे सति वयं "मारिषाम" हिंसिता न भवामः अस्मान् रक्षेत्यर्थः। "अर्हते"—अर्ह पूजायाम् (भ्वा० प०) "अर्हः प्रशंसायामिति (३, २, १३३) लटः शत्रादेशः, शपः पित्त्वादनुदात्तत्वम् (३, १, ४), शतुश्चादुपदेशात्सार्वधातुक-स्वरेणाद्युदात्तत्वम् (६, १, १८६)। महे—मह पूजायाम् (भ्वा० प०)। रिषाम—रिष हिंसायां (भ्वा० प०) व्यत्ययेन शः (३, १, ८५)। तव—"युष्मदस्मदोर्ङसि (६, १, २११)"—इत्याद्युदात्तत्वम् ॥ १ ॥

१ २ ३ १  २ ३ २  ३ १  २
भरामेध्मं कृणवामा हवीꣳषि ते
३ १ २ ३ १ २  ३ २
चितयन्तः पर्वणापर्वणा वयम् ।
२ ३ २  ३ १  २ ३ १
जीवातवे प्रतराꣳ साधया धियो-
३२ ३ १  ३२  ३ १ ३२
ऽग्ने सख्ये मा रिषामा वयं तव ॥*२*॥

अथ द्वितीया। हे "अग्ने!" त्वदागार्थम् "इध्मम्" इन्धनसाधनम् एकविंशति-द्रव्यात्मकं समित्समूहं "भराम" सम्भराम सम्पादयाम। तदनु "ते" तुभ्यं "हवींषि" चरुपुरोडाशादिलक्षणान्यस्मानि वयं "कृणवाम" करवाम। किङ्कुर्वन्तः? "पर्वणा पर्वणा" प्रतिपत्प्रभावत्ताभ्यां दर्शपूर्णमासाभ्यां "चितयन्तः" त्वां प्रज्ञापयन्तः। स त्वं "जीवातवे" अस्माकं जीवनोपधाय चिरकालावस्थानाय "धियः" कर्माणि अग्निहोत्रादीनि "प्रतरां" प्रकृष्टतरं "साधय" निष्पादय। अन्यत् समानम्॥ चितयन्तः—चिती सञ्ज्ञाने (भ्वा० प०) सञ्ज्ञापूर्वस्य विधे-

रनित्यत्वात् लघूपध-गुणाभावः। पर्वणा—"नित्यवीप्सयोः (८, १, ४)"—इति वीप्सायां द्विर्भावः, "तस्य परमाम्रेड़ितम् (८, १, २)"—इति परस्याम्रेड़ित-सञ्ज्ञायाम् अनुदात्तत्वम् (८, १, १८)। प्रतरां—तरबन्तात् प्रशब्दात् क्रियाप्रकर्षे वर्त्तमानात् "किमेत्तिङव्ययाद्याम्वद्रव्ये (५, ४, ११)"—इत्यामु-प्रत्ययः ॥ २ ॥

१ २ १ २ २ १ २ १ २ २
प्रकेम त्वा समिधं साधया

१ २ १ २ १ १ २ १ १ २ १ १ १
धियस्त्वे देवा हविरदन्त्याहुतम्।

१ २ २ १ १२१ २ १
त्वमादित्याꣳ आ वह तान् ह्यूश्म-

१२ २ १ १२ २ १ १२
स्यग्ने सख्ये मा रिषामा वयं तव ॥*३*॥ [७]

अथ तृतीया। हे अग्ने! "त्वा" त्वां "समिधं" सम्यगिद्धं कर्त्तुं "प्रकेम" शक्ता भूयास्म। त्वञ्च "धियः" अस्मदीयानि दर्शपूर्णमासादीनि कर्म्माणि "साधय" निष्पादय। त्वया हि सर्वं निष्पद्यन्ते यस्मात् "त्वे" त्वयि अस्मावाहुतम् ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकं हविः देवा "अदन्ति" भक्षयन्ति, तस्मात्त्वं साधयेत्यर्थः। अपि च त्वम् "आदित्यान्" अदितेः पुत्रान् सर्वान् देवान् "आवह" अस्मद् यज्ञार्थमानय। तान् हि इदानीं वयम् "उश्मसि" कामयामहे। अन्यत् पूर्ववत् ॥ प्रकेम—शकॢ शक्तौ (स्वा० प०), "लिङ्याशिष्यङ् (३, १, ८६), अदुपदेशात्सार्वधातुकानुदात्तत्वे (६, १, १८६) अङ एव स्वरः शिष्यते। समिधम्—ञि इन्धी दीप्तौ (रु० आ०)

अस्मात् सम्पदादिलक्षणं कर्मणि क्विप्। त्वे—सुपांसुलुगिति (७, १, ३९) सप्तम्येकवचनस्य शे-आदेशः। उश्मसि—वश कान्तौ (अदा० प०), "इदन्तोमसि (७, १, ४६), अदादिभ्यश्शपोलुक् (२, ४, ७२), ग्रहिज्येत्यादिना सम्प्रसारणम् (६, १, १६) ॥ ३ ॥ [७]

१ २ ३ २ १ १ २ ३ १ २ ३ १ १ २

प्रति वाꣳ सूर उदिते मित्रं गृणीषे वरुणम्।

३ १ २ ३ १ २

अर्य्यमणꣳ रिशादसम् ॥*१*॥

ऋ० वशिष्ठः। छ० गायत्री। दे० आदित्यः। अथ द्वितीय-तृचे—प्रथमा। हे मित्रावरुणौ! "मित्रं" त्वां "वरुणं" च "वां" युवां "रिशादसं" शत्रूणामत्तारम् "अर्य्यमणं" च "प्रति" प्रत्येकं "गृणीषे" स्तुवे। कदा? इति, उच्यते—"सूरे" सूर्य्ये देवे "उदिते" सति प्रातरित्यर्थः ॥ १ ॥

२ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

राया हिरण्यया मतिरियमवृकाय शवसे।

३ १ २२ ३ १ २

इयं विप्रा मेधसातये ॥*२*॥

अथ द्वितीया। "हिरण्यया" हित-रमणीयेन "राया" धनेन सहितया "अवृकाय" अहिंस्राय "शवसे" अस्माकं बलाय "इयम्" इदानीं क्रियमाणा "मतिः" स्तुतिर्भवत्विति शेषः॥ हिरण्यया—इत्यत्र सुपां सुलुगिति (७, १, ३९) तृतीयैकवचनस्य याजादेशः किञ्च हे "विप्राः" मन्त्राः! "इयम्" एव स्तुतिः "मेधसातये" यज्ञ-लाभाय च भवतु ॥२॥

१ २ १ २ २ ३ २ ३ २ ३ १ २
ते स्याम देव वरुण ते मित्र सूरिभिः सह ।
१ २ ३ क २ र
इषꣳ स्वश्च धीमहि ॥*३*॥ [८]

अथ तृतीया। हे "देव वरुण!" "ते" तव स्तोतारः "स्याम" सम्प्रदा भवेम। न केवलं वयमेव यजमानाः किन्तु "सूरिभिः" स्तोतृभिः ऋत्विग्भिः सह ; तथा हे "मित्र!" देव ! "ते" वयं "सूरिभिः" सह "स्याम" भवेम। किञ्च "इषम्" अन्नं "स्वश्च" दर्शकस्य "धीमहि" धारयामहे ॥३॥ [८]

१ २ उ ३ १ २ ३ २ ३ १ २ ३ ३ १ २ ३ २ ३ र
भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः ।
१ २ ३ १ ३ र
वसु स्पार्हं तदा भर ॥*१*॥

ऋ० विश्वोकः। छ० गायत्री। दे० इन्द्रः। अथ द्वचात्मके तृतीय-सूक्ते—प्रथमा। हे इन्द्र ! त्वं "विश्वाः" सर्वाः "द्विषः" द्वेष्टीः शत्रुसेनाः "अप भिन्धि" विदारय। तथा "बाधः" हिंसकान् "मृधः" संग्रामान् त्वं "परि जहि" परिभावय। हे सोम ! वासकेन्द्र ! "स्पार्हं" स्पृहणीयं द्वेष्टीणां "वसु" धनं यदस्ति "तत्" "आभर" ॥१॥

१ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
यस्य ते विश्वमानुषग्भूरेर्दत्तस्य वेदति ।
१ २ ३ १ ३ र
वसु स्पार्हं तदा भर ॥*२*॥

अथ द्वितीया। हे इन्द्र! "ते" त्वां विभक्ति-व्यत्ययः

(२, १, ८५) "दत्तस्य" दत्तं "भूरि" बहु "यस्य" यत् धनम् सर्वत्र कर्मणि षष्ठी वेदितव्या। "विश्वं" सर्वं तद्धनम् "आनुषक्"—इति आनुपूर्व्या सततं सर्वो मनुष्यो "वेदति" जानाति तत् "स्पार्हं" स्पृहणीयं "वसु" "आभर" ॥ २ ॥

१२ १ १ २ २ ३१ ३२ ३ १२

यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम्।

१२ ३ १ ३२

वसु स्पार्हं तदा भर ॥*३*॥ [८]

अथ तृतीया। हे "इन्द्र!" त्वया च "वीळौ" दृढे परैः कम्पयितुमशक्ये "यत्" धनं "पराभृतं" विन्यस्तं, "यत्" च "स्थिरे" स्वयमचले पराभृतं, "यत्" च "विपर्शाने" विमर्शन-क्षमे पराभृतं, तत् "स्पार्हं" स्पृहणीयं "वसु" "आ भर" आहर ॥ ३ ॥ [८]

३ १ २ ३उ ३ १ २ ३ २ ३ १ २ ३ १ २

यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्मसु।

१ २ ३ ३ २

इन्द्राग्नी तस्य बोधतम् ॥*१*॥

ऋ०श्यावाश्वः। छं०गायत्री। दे०इन्द्राग्नी। अथ तृचात्मकं चतुर्थं सूक्तम्—तत्र, प्रथमा। हे "इन्द्राग्नी!" युवां "यज्ञस्य" ज्योतिष्टोमादेः "ऋत्विजा स्थः" ऋत्विजौ ऋतौ काले काले यष्टव्यौ भवथः। अतो "वाजेषु" संग्रामेषु कर्मसु यज्ञात्मकेषु च "सस्नी" संस्नातौ शुद्धौ सन्तौ "तस्य" तं मां हे इन्द्राग्नी! बोधतम् अथवा तस्य मम स्तुतिं जानीतम् ॥ १ ॥

३ १ २ ३ १ २ ३ १ ३२

तोशासा रथयावाना वृत्रहणापराजिता।

१ २ ३ १ २
इन्द्राग्नी तस्य बोधतम् ॥*२*॥

अथ द्वितीया। हे "इन्द्राग्नी!" "तोशासा" शत्रून् हिंसन्तौ, "रथयावाना" रथेन गच्छन्तौ, "वृत्रहणा" वृत्रस्य हन्तारौ "अपराजिता" केनाप्यपराजितौ "तस्य" तं मां "बोधतम्" ॥ २ ॥

१ २ ३ २ १ १२ ३ १ २ ३ १ २
इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः।

१ २ ३ १ २
इन्द्राग्नी तस्य बोधतम् ॥*३*॥ [१०]

अथ तृतीया। हे "इन्द्राग्नी!" "वां" युवाम् उद्दिश्य "नरः" यज्ञस्य नेतारः "अद्रिभिः" ग्रावभिः "मदिरं" मदकरं "मधु" सोमात्मकम् अमृतम् "अधुक्षन्" अपूरयन्। शिष्टमन्यत् ॥ ३ ॥ [१०]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमाध्यायस्य तृतीयः खण्डः।

---

१ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः।

१ २ ३ १ २ ३ १ २
अर्कस्य योनिमासदम् ॥*१*॥

ऋ० काश्यपः। छ० गायत्री। दे० सोमः। अथेन्द्रायेन्दो मरुत्वत इति चतुर्थखण्डे—तृचात्मके प्रथम-सूक्ते प्रथमा। हे "इन्दो!" सोम! "मधुमत्तमः" अतिशयेन मधुमान् त्वम् "अर्कस्य" अर्चनीयस्य यज्ञस्य "योनिम्" स्थानम्

"आसदम्" उपवेष्टुम् "मरुत्वते" "इन्द्राय" इन्द्रार्थम् "पवस्व" क्षर ॥ १ ॥

२ ३ १ २ ३ २ ३ १२ ३ २
तं त्वा विप्रा वचोविदः परिष्कृण्वन्ति धर्णसिम् ।
१ २ ३ १ २
सं त्वा मृजन्त्यायवः ॥*२*॥

अथ द्वितीया । हे सोम ! "तं" पवमानं "त्वा" त्वाम् "धर्णसिं" धर्त्तारं "विप्राः" प्राज्ञाः "वचोविदः" स्तोतारः "परिष्कृण्वन्ति" अलंकुर्वन्ति । अपि च "त्वा" "त्वाम्" "आयवः" मनुष्याः "सम् मृजन्ति" सम्यक् शोधयन्ति ॥ २ ॥

१ २ ३ १ २ ३ १ २र ३ १ २
रसं ते मित्रो अर्य्यमा पिबन्तु वरुणः कवे ।
१ २ ३ १ २
पवमानस्य मरुतः ॥*३*॥ [११]

अथ तृतीया । हे "कवे !" क्रान्तकर्मन् सोम ! "पवमानस्य" चरतः "ते" तव रसं "मित्रः" "अर्य्यमा" च "वरुणः" च "मरुतः" च एते सर्वे देवाः "पिबन्तु" ॥ ३ ॥ [११]

३ १ २ ३ २ ३र
मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि ।
३ २ ३२ ३ १ २ ३ २ ३ २ ३ २ ३क २र
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥*१*

ऋ० वसिष्ठः । छ० बृहती । दे० सोमः । मृज्यमानेति प्रगाथात्मकं द्वितीयं सूक्तम्—तत्र प्रथमा । हे "सुहस्त्या !" हस्ते भवा हस्त्या अङ्गुलयः शोभनाङ्गुलिक सोम ! "मृज्य-

मानः" शोध्यमानः त्वं "समुद्रे" अन्तरिक्षे कलशे वा "वाचं" शब्दम् "इन्वसि" प्रेरयसि। किञ्च हे "पवमान!" पूयमान सोम! "विशङ्ग" हिरण्यैः पिशङ्गवर्णं "बहुलं" प्रभूतं "पुरुस्पृहं" बहुभिः स्पृहणीयं "रयि" धनम् "अभ्यर्षसि" स्तोतृणामभि चरसि प्रयच्छसि ॥ १ ॥

१ २उ १ १२ १२ ३ १ २ ३ १ २
पुनानो वारे पवमानो अव्यये वृषो अचिक्रदद्वने।
२ १ २ ३ १ २र ३ १ २
देवानाᳬ सोम पवमान निष्कृतं गोभिरञ्जानो अर्षसि ॥२॥ [१२]

अथ द्वितीया। "अयं" सोमः "वृषः" वृषभसदृशः सन् "पुनानः" अभिषूयमाणः सर्वं शोधयतु "अव्यये" अविमये "वारे" वाले पवित्रे "पवमानः" पूयमानः सन् "वने" वननीये "उदके" काष्ठे कलशे वा "अचिक्रदत्" शब्दमकरोत्। अथ प्रत्यक्षवादः। हे "सोम! पवमान!" त्वं "गोभिः" गव्यैः क्षीरादिभिः "अञ्जानः" अज्यमानः सन् "निष्कृतं" संस्कृतं देवानां स्थानम् "अर्षसि" गच्छसि ॥ २ ॥ [१२]

१ २ ३ २उ ३ १ २ ३ २ १ १ २
एतमु त्यं दश क्षिपो मृजन्ति सिन्धुमातरम्।
१ २ ३ १ २
समादित्येभिरख्यत ॥१॥

ऋ० अमहीयुः। छ० गायत्री। दे० सोमः। एतमुत्यमिति द्वचात्मकं तृतीयं सूक्तम्—तत्र प्रथमा। "सिन्धुमातरं" यस्य सोमस्य सिन्धवो नद्य मातरो भवन्ति। "त्वं"

तम् "एतम्" इमम् सोमं "दश क्षिपः" दशसङ्ख्याका अङ्गुलयो "मृजन्ति" शोधयन्ति । अपि च सोऽयम् "आदित्येभिः" आदित्यैः "समज्यत" सङ्गच्छते ॥ १ ॥

१ १२ २ ३ २ ३ १ २ ३ १ २ १ २ ३ १
समिन्द्रेणोत वायुना सुत एति पवित्र आ ।

१ २र ३ १ २
सꣳ सूर्यस्य रश्मिभिः ॥*२*॥

अथ द्वितीया । "सुतः" अभिषुतः सोमः "पवित्रे" "इन्द्रेण" "समम् एति" सङ्गच्छते । "उत" अपि च "वायुना" समेति "सूर्यस्य" "रश्मिभिः" किरणैरपि समेति ॥ २ ॥

२ ३ १२ ३ १२ ३१ २ ३ १२
स नो भगाय वायवे पूष्णे पवस्व मधुमान् ।

१ २ ३ १ २र
चारुर्मित्रे वरुणे च ॥*३*॥ [१३]

अथ तृतीया । हे सोम ! "मधुमान्" मधुररसः "चारुः" कल्याण-रूपश्च सोऽभिषुतः त्वं "नः" अस्माकम् यज्ञे "भगाय" भगाख्याय देवाय "वायवे" "पूष्णे" च "मित्रे" मित्राय देवाय "वरुणाय" च "पवस्व" चर ॥ ३ ॥ [१३]

इति सामवेदार्थप्रकाशे उत्तरारण्यस्य प्रथमस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

३ १ २ ३ १ २ ३ २ ३ १ २
रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।

३ २ ३ १ ३ १ २
क्षुमन्तो याभिर्मदेम ॥*१*॥

ऋ० शुनःशेपः । छ० गायत्री । दे० सोमः । अथ पञ्चमे

षष्ठे—रेवतीर्न-इति त्र्यृचात्मकं प्रथमं सूक्तम्—तत्र, प्रथमा। "द्युमन्तः" अन्नवन्तः "याभिः" गोभिः सह "मदेम" हृष्येम "इन्द्रे" "सधमादे" अस्माभिः सह हर्षयुक्ते सति, "नः" अस्माकं ता गावः "रेवतीः" चौराण्यादि-धनवत्यः "तुविवाजाः" प्रभूत बलाय "सन्तु" ॥ रेवतीः—रयि-शब्दात् मतुपि "रयेर्मतौ बहुलम् (६, १, ३४ वा० )"—इति सम्प्रसारणम्, परपूर्वत्वे, "छन्दसीरः ( ८, २, १५ )"—इति मतुपो वत्वम्, "वाच्छन्दसि (६, १, १०६ )"—इति पूर्वसवर्णदीर्घः, "रे-शब्दाच्च मतुप उदात्तत्वं वक्तव्यम् (६, १, १७६ वा० )"—इति रे-शब्दादुत्तरस्यापि भवतीति पूर्वमेवोक्तम्। सधमादे—मद इति योगे चौरादिकः, सह मादयतीति सधमादः "सधमादस्थयोश्छन्दसि (६, ३, ९६ )"—इति सह-शब्दस्य सध आदेशः, पचाद्यदिना (६, २, १४४ )—उत्तर-पदान्तोदात्तत्वे प्राप्ते "परादिश्छन्दसि बहुलम् (६, २, १९९ )"—इति उत्तरपदाद्युदात्तत्वम्। तुविवाजाः—बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (८, २, १)। द्युमन्तः—द्यु श्रु द्रु क्षु शब्दे (अदा० प०), अस्मात् क्विपि तुगभावश्छान्दसः, "ह्रस्वनुड्भ्यां मतुप् (६, १, १७६ )"—इति मतुप उदात्तत्वम्। मदेम—मदी हर्षे (दि० प०), व्यत्ययेन शप्, यदुपदेशात् सार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वम्, ततो धातुस्वरः शिष्यते ॥ १ ॥

२ १ २ १ २ १ २ १ २ १ २ १ २ १ २ १ १
आ घ त्वावां त्मना युक्ता स्तोतृभ्यो धृष्णवीयानः।

२ १उ १ २ १उ २र
ऋणोरक्षं न चक्र्योः ॥०२०॥

अथ द्वितीया। हे "धृष्णो!" धार्ष्ट्ययुक्तेन्द्र। "त्वावान्"

त्वत्सदृशो देवताविशेषः, "त्मना" आत्मना अस्मदनुग्रह-बुद्ध्या युक्तः "ईयानः" अस्माभिर्याच्यमानः "स्तोतृभ्यः" स्तोतृणामनुग्रहाय तदभीष्टमर्थं "घ" अवश्यम् "आ ऋणोः" आनीय प्रक्षिपतु। तत्र दृष्टान्तः—"चक्रोः" रथस्य चक्रयोः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत्॥ त्वावान् वतुप्प्रकरणे "युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम् (५, २, ८४ वा०)" —इति वतुप् "प्रत्ययोत्तर-पदयोश्च (७, २, ९८)"—इति मपर्यन्तस्य त्वादेशः, "आ सर्वनाम्नः (६, ३, ९१)"—इति दकारस्यात्वं, वतुपः पित्त्वादनुदात्तत्वे (३, १, ४) प्रातिपदिक स्वरः शिष्यते। त्मना—"मन्त्रेष्वाङ्यादेरात्मनः (६, ४, १४१)"—इत्याकार-लोपः। धृष्णो—ञि धृषा प्रागल्भ्ये, "त्रसिगृधि-धृषि क्षिपेः क्नुः", आमन्त्रितानुदात्तत्वम्। ईयानः-ईङ् गतौ, (दि० आ०) छन्दसि लिट् (३, २, १०५), तस्य "लिटः कानज्वा (३, २, १०६)"—इति कानजादेशः, "अचिश्नु धातु (६, ४, ७७)"—इत्यादिना इयङादेशः, "चितः (६, १, १६३)"—इत्यन्तोदात्तत्वम्। ऋणोः—ऋणु गतौ (तना० उ०) लङि व्यत्ययेन तिपः सिपि (३, १, ८५), "इतश्च (३, ४, १००)"—इतीकारलोपः, "तनादिकृञ्भ्य उः (३, १, ७९)",—सार्वधातुकगुणः (७, ३, ८४), "बहुलं छन्दस्यमाङ्योगेऽपि"—इत्यडागमाभावः, विकरण-स्वरेणान्तोदात्तत्वम्। अक्षम्—"अक्षस्यादेवनस्य (फि० २, १२)"—इत्याद्युदात्तत्वम्। चक्रोः—यकारस्यैकारश्छान्दसः (३, १, ८५)" ॥ २ ॥

१ २र ३ १ ३र ३ २

आ यद्दुवः शतक्रतवा कामं जरितॄणाम्।

१ २उ ३ १ २र
ऋग्मोरक्षं न शचीभिः ॥३॥ [१४]

अथ तृतीया। हे "शतक्रतो!" इन्द्र! "यत्" "दुवः" धनं कामितार्थरूपम् स्तोतृभिः प्राप्तव्यमस्ति तं कामं "जरितृणां" स्तोतृणामनुग्रहाय "आ ऋग्मोः" आनीय प्रक्षिपसि। तत्र दृष्टान्तः—"शचीभिः" कर्मभिः शकटोचित-व्यापारविशेषैः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत्॥ शचीभिः—शची-शब्दः शार्ङ्गरवादित्वात् (४, १, ७३) ङीबन्तत्वादाद्युदात्तः (३, १, ३)॥ ३॥ [१४]

१ २ ३ १ २ ३ १ २ २ ३ १ २
सुरूपकृत्नुमूतये सुदुघामिव गोदुहे।

१ २ ३ १ २
जुहूमसि द्यविद्यवि ॥१॥

ऋ०मधुच्छन्दः। छ० गायत्री। दे० इन्द्रः। सुरूपकृत्नुमिति त्र्यात्मकं द्वितीयं सूक्तम्, तत्र, प्रथमा। "सुरूपकृत्नुं" शोभनरूपोपेतस्य कर्मणः कर्त्तारमिन्द्रम् "ऊतये" अस्मद्रक्षणार्थम् "द्यविद्यवि" प्रतिदिनं "जुहूमसि" आह्वयामः॥ द्यो-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः (फि० १, १), "नित्यवीप्सयोः (८, १, ४)"—इति द्विर्भावः, "तस्यपरमाम्रेडितम् (८, १, २) "अनुदात्तञ्च (८, १, ३)"—इति द्वितीयस्यानुदात्तत्वम्। जुहूमसि—इत्यत्र "इदन्तोमसि (७, १, ४६)"—इति इकार आगमः, प्रत्यय-स्वरेण (३, १, ३) इकार उदात्तः आम्नाने दृष्टान्तः—"गोदुहे" गोधुगर्थं गां दोग्धीति गोधुक्; सत्सु द्विषेत्यादिना (३, २, ६१) क्विप्, कृदुत्तरप्रकृतिस्वरत्वम् (६, २, १३९) "सुदुघाम् इव" सुष्ठु-दोग्ध्री गामिव यथा

लोके यो दोग्धा तदर्थं तस्य आभिमुख्येन दोहनीयां गामा-ह्वयन्ति-तद्वत् सुष्टु दुग्धे इति सुदुघा, "दुहः कब्घश्च (३, २, ७०)"—इति कप्प्रत्ययः हकारस्य च घकारः, कित्वाद् गुणा-भावः (१, १, ५), कपः पित्त्वादनुदात्तत्वे धातुस्वरेणोकार उदात्तः (६, १, १६२) ॥ १ ॥

१ २ ३ २ ३ १ १ २ १ २
उप नः सवना गहि सोमस्य सोमपाः पिब ।

३ २उ १ २ १ १ २
गोदा इद्रेवतो मदः ॥ २ ॥

अथ द्वितीया। हे "सोमपाः" सोमस्य पातरिन्द्र! सोमं पातुं "नः" अस्मदीयानि "सवना" सवनानि त्रीणि "उप" समीपे "आ गहि" आगच्छ सवना—सुयते सोम एष्विति सवनानि सुपो डादेशः (७, १, ३९) टिलोपश्च (६, ४, १४३), "ञिति (६, १, १९७)"—इति प्रत्ययात् पूर्वस्याकारस्य उदात्तत्वम्। गहि—इत्यत्र गमेः "बहुलञ्छन्दसि (२, ४, ७३)"—इति शपो लुक्, ङित्त्वादनुदात्तोपदेशेत्यादिना (६, ४, ३७) मकार-लोपः, "अतो हेः (६, ४, १०५)"—इत्याभीय-शास्त्रीये लुकि कर्त्तव्ये "असिद्धवदत्राभात् (६, ४, २२)"—इति आभाच्छास्त्रीयो मकार-लोपोऽसिद्धवद् भवति। आगत्य च "सोमस्य" सोमं "पिब", "रेवतः" धन-वतः तव "मदः" हर्षः "गोदा इत्" गोप्रद एव, त्वयि हृष्टे सति अस्माभिर्गावो लभ्यन्त इत्यर्थः ॥ २ ॥

१ २ ३ १ २ ३ १ २ ३ २
अथा ते अन्तमानां विद्याम सुमतीनाम् ।

३ २ १ २ ३ १ २
मा नो अति ख्य आगहि ॥ ३ ॥ [१५]

अथ तृतीया। "अथ" सोमपानानन्तरं हे इन्द्र! "ते" तव "अन्तमानाम्" अन्तिकतमानामतिशयेन तव समीपवर्त्तिनां "सुमतीनां" शोभन मति युक्तानां शोभन प्रज्ञानां पुरुषाणां मध्ये स्थित्वा "विद्याम" वयं त्वां जानीयाम यद्वा, सुमतीनां शोभन-बुद्धीनां कर्मानुष्ठान-विषयाणां लाभार्थमित्यध्याहारः बहुव्रीहिपक्षे पूर्वपद-प्रकृति-स्वरापवादो "नञ्सुभ्याम् (६, २, १७२)"—इत्युत्तर पदान्तोदात्तः। कर्मधारय-पक्षेऽपि अव्यय-पूर्वपद-प्रकृति-स्वरापवाद-कृत्स्वरेणान्तोदात्तत्वैव (६, २, १३८)। अतो मतुपि ह्रस्वादन्तोदात्ताच्च सुमति शब्दात् परस्य नामो "नामन्यतरस्याम् (६, १, १७७)"—इत्युदात्तत्वम्। त्वमपि "नः" अस्मान् "अति" अतिक्रम्य "माख्यः" अन्येषां त्वत्स्वरूप मा प्रकथयः ख्या प्रकथने (अदा० प० )—इत्यस्य लुङि "अस्यतिवक्तिख्यातिभ्योऽङ् (३,१,५२)"। आगहि—गमेः शपो लुकि ङित्त्वादनुदात्तोपदेशेति (६,४,३७) मकार-लोपस्यासिद्धवद्त्राभादिति (६, ४, २२) असिद्धवद्भावात् "अतो हेः (६,४,१०५)"—इति लुङ् न भवति॥३॥ [१५]

२ १ २र २ १ २ २ ३ १ १ २'
उभे यदिन्द्र रोदसी आपप्राथोषा इव।
१ १ २ १ १ २ २ १ २ २ २
महान्तं त्वा महीनाꣳ सम्राजं चर्षणीनाम्।
२ १ २र २ १ २र
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत्॥*१॥

ऋ० मान्धाता। छ० महापङ्क्तिः। दे० इन्द्रः। उभे यदिन्द्र रोदसीति-त्र्यचात्मकं तृतीयं सूक्तं; तत्र प्रथमा। हे "इन्द्र।" "उभे" "रोदसी" द्यावापृथिव्यौ "यत्" यः त्वम्

"आ पप्राथ" स्वतेजसा आपूरयसि-प्रा पूरणे, आदादिकः (५०) छान्दसो लिट् (३, २, १०५) "उषा इव" यथा उषाः स्व-भासा सर्वं जगदापूरयति तद्वत् त्वं "महीनां" महतां देवानामपि "महान्तम्" अधिकं "चर्षणीनां" मनुष्याणामपि "सम्राजम्" ईश्वरम् इन्द्रं "त्वा" त्वाम् "देवी" देवनशीला "जनित्री" साधु-जनयित्री अदितिः "अजीजनत्" अतः कारणात् सा "भद्रा" कल्याणी प्रशस्ता "जाता" जनेर्ण्यन्तात् साधुकारिणि तृन् (३, २, १३४), "जनिता मन्त्रे (६, ४, ५३)"—इति इडादौ णि-लोपो निपात्यते, ऋन्नेभ्य इति ङीप् (४, १, ५) ॥ १ ॥

१ २　३ १ २ ३ २　३ २　३ १ २
दीर्घं ह्यङ्कुशं यथा शक्तिं बिभर्षि मन्तुमः।
१ २　　३ १ २ ३ १ २　३ १ २
पूर्वेण मघवन्पदा वयामजो यथा यमः।
३ २　३ १ २　　३ १ २　३ १ २
देवीजनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥*२*॥

अथ द्वितीया। "दीर्घम्" आयतम् "अङ्कुशं" सृणिं "यथा बिभर्षि" एव मायतां "शक्तिं" हे "मन्तुमः!" मन्तु ज्ञाने, तद्वन्। "मतुवसो रुः (८, ३, १)"—इति सम्बुद्धौ नकारस्य रुत्वम् हे इन्द्र! बिभर्षि धारयसि। डु भृञ् धारण-पोषणयोः जौहोत्यादिकः, श्लौ "भृञामित् (७, ४, ७६)"—इत्यभ्यासस्य त्वम् हे "मघवन्" धनवन्निन्द्र! यथा "पूर्वेण" देहस्य पूर्वभागे वर्त्तमानेन "पदा" पादेन "अजः" छागः "वयां" शाखां आकर्षति तथा पूर्वोक्तया शक्त्या आक्रम्यामः शत्रून् नियच्छसि—यमेर्लंट्यडागमः, "बहुलं छन्दसि (२, ४, ७३)"—इति शपो लुक्। गतमन्यत् ॥ २ ॥

१ २ २ १ २र २ १
अव स्म दुर्हणायतो मर्त्तस्य तनुहि स्थिरम् ।
२ १ २र २ २ ३ २ २ ३ १ २
अधस्पदं तमीं कृधि यो अस्मा अभिदासति ।
३ १ २र ३ १ २र
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत्
॥ ३ ॥ [१६]

अथ तृतीया । "दुर्हणायतः" दुःखप्रद हरणमाचरतः "मर्त्तस्य" मनुष्यस्य शत्रोः "स्थिरं" दृढं बलम् "अव तनुहि" अवततं नीचीनं कुरु । "स्म"—इति पूरकः । "तम्" शत्रुम् "ईम्" एनम् अधस्पदं पादयोरधस्ताद्वर्त्तमानं "कृधि" कुरु । "यः" शत्रुः "अस्मान्" "अभिदासति" उपक्षिपति । समानमन्यत् ॥ ३ ॥ [१६]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

१ २ ३ १ २ ३ २ २ ३ ३ १ २
परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् ।
१ २ ३ १ २
मदेषु सर्वधा असि ॥ १ ॥

ऋ० असितो देवलः वा । छ० गायत्री । दे० सोमः । अथ षष्ठे खण्डे—परिस्वान इति तृचात्मके प्रथमं सूक्तम्, तत्र, प्रथमा । अयं "सोमः" "पवित्रे" दशापवित्रे "पर्यक्षरत्" परितः क्षरति । कीदृशः सन् ? "स्वानः" शब्दायमानः "सुवानः"—इति बह्वृचानां पाठः सूयमानः "गिरिष्ठाः" गिरिस्थायी ग्रावसु वर्त्तमान इत्यर्थः । हे सोम ! स त्वं "मदेषु" मादकेषु सोमेषु "सर्वधा असि" सर्वस्य धाता दाता च भवसि ॥ १ ॥

२उ    ३ २    ३ २उ  ३  २   ३  १    २र
त्वं विप्रस्त्वं कविर्मधु प्र जातमन्धसः ।

१ २       ३  १    २
मदेषु सर्वधा असि ॥*२ ॥

अथ द्वितीया। हे सोम! "त्वं" "विप्रः" विविधं प्रीणयिता विप्रसदृशो वा त्वञ्च "कविः" मेधावी, अतस्त्वम् "अन्धसः" अन्नात् जातं "मधु" मधुरसं प्रयच्छसीति शेषः ॥ २ ॥

१     २र   ३ १ २       ३ १ २     ३ १ २
त्वे विश्वे सजोषसो देवासः पीतिमाशत ।

१ २       ३  १  २
मदेषु सर्वधा असि ॥*३*॥ [१७]

अथ तृतीया। हे सोम! "त्वे" त्वयि "पीतिं" पानं "विश्वे देवासः" सर्वे देवाः "सजोषसः" समान प्रीतयः सन्तः "आशत" प्राप्नुवन् ॥ ३ ॥ [१७]

१ २ ३ १    २र३ २  ३ १ २ ३ १         २र
स सुन्वे यो वसूनां यो रायामानेता य इडानाम्।

१ २  ३    २    ३ २
सोमो यः सुचितीनाम् ॥*१*॥

ऋ० ऋणवः। छ० गायत्री। दे० सोमः। ससुन्वे-इति-प्रगाथात्मकं द्वितीयं सूक्तम्, तत्र, प्रथमा। "सः" सोमः "सुन्वे" अभिषुवे ऋत्विग्भिः, यः सोमः वसूनां धनानाम् "आनेता", यश्च "रायां" रान्ति प्रयच्छन्ति क्षीरादिकमिति रायो गावः तेषां मानेता, यश्च "इडानाम्" अन्नानाञ्च, यश्च सोमः "सुचितीनां" सुनिवासानां शोभन-मनुष्य-युक्तानां च्ह्हाणाम् आनेता विद्यते, सोऽभिषुतोऽभूदिति ॥ १ ॥

१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ १ १ २
यस्य त इन्द्रः पिबाद्यस्य मरुतो यस्य वार्यमणा भगः।
१ २र ३ १ २र ३ १ २ ३ २ १ १ २ १ १
आ येन मित्रावरुणा करामह एन्द्रमवसे महे ॥२॥ [१८]

अथ द्वितीया। हे सोम! "यस्य" प्रसिद्धस्य "ते" तव रसम् "इन्द्रः" "पिबात्" पिबति पा पाने (भ्वा० प०); लेट्यडागमः "यस्य" यस्य सोमं "मरुतः" पिबन्ति, "वा" अपि च "अर्यमणा" एतन्नामकेन देवेन सह "भगः" देवः "यस्य" यं सोमं पिबति, "येन" सोमेन "मित्रावरुणा" मित्रावरुणौ वयम् "आ करामहे" अभिमुखीकुर्महे। तथा "महे" महते "अवसे" रक्षणाय येन च सोमेन "इन्द्रम्" अभिमुखीकुर्महे, तं त्वामभिषुणोमीत्यर्थः ॥ २ ॥ [१८]

१ २ ३ १ २ ३ १ २ १ १ २
तं वः सखायो मदाय पुनानमभि गायत।
१ २ ३ २ १ २ ३ १ २
शिशुं न हव्यैः स्वदयन्त गूर्त्तिभिः ॥१॥

ऋ० पर्वतनारदौ। छ० उष्णिक्। दे० सोमः। तं व इति द्व्यात्मकं तृतीयं सूक्तम्; तत्र, प्रथमा। हे "सखायः!" ऋत्विजः! "वः" यूयं "मदाय" देवानां मदार्थं "पुनानं" पूयमानं तं सोमम् "अभि गायत" अभिष्टुत। "तम्" इमं सोमं "शिशुं न" शिशुमिव अलङ्कारैः क्षीरादिभिश्च स्वादूकुर्वन्ति, तद्वत् "हव्यैः" हविभिः मिश्रणैः "गूर्त्तिभिः" स्तुतिभिश्च "स्वदयन्त" स्वादूकुर्वन्ति ॥ १ ॥

१ २ १ १ २ ३ १ २ ३ १ २ ३ १ २
सं वत्स इव मातृभिरिन्दुर्हिन्वानो अज्यते।

१ १ २र २ २ २ १ १
देवावीर्मदो मतिभिः परिष्कृतः ॥*२*॥

अथ द्वितीया। "हिन्वानः" प्रेर्यमाणः "इन्दुः" सोमः वसतीवरीभिः "समज्यते" सम्यक् सिक्तो भवति। तत्र दृष्टान्तः—"वत्स इव" वत्सो यथा "मातृभिः" गोभिः समक्तो भवति, तद्वत्। कीदृशः? "देवावीः" देवानां रक्षकः, "मदः" मदकरः "मतिभिः" स्तुतिभिः "परिष्कृतः" अलङ्कृतः भूषणार्थे "सम्पर्युपेभ्यः (६, १, १३७)"—इति सुडागमः, "परिनिविभ्यः (८, ३, ७०)"—इति सुटः षत्वम् ॥ २ ॥

१ १ २र २ १ २ २ १ २र १ १ १
अयं दक्षाय साधनोऽयꣳ शर्धाय वीतये।

१ १ १ २ २ १ २ १ २
अयं देवेभ्यो मधुमत्तरः सुतः ॥*३*॥ [१८]

अथ तृतीया। "अयं" सोमः "दक्षाय" बलाय वर्द्धनाय वा "साधनः" साधयिता भवति, तथा "अयं" सोमः "शर्धाय" बलाय "वीतये" देवानां भक्षणार्थं च भवति, "सुतः" अभिषुतः, "अयं" सोमः "देवेभ्यः" इन्द्रादिभ्यः "मधुमत्तरः" अतिशयेन माधुर्य्ययुक्तो भवति अत्यन्त मदकरो भवतीति वा ॥ ३ ॥ [१८]

१ १ २ १ २ २ १ १ २ १ २
सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः।

१ १ २ १ २ २ १ १ ३क २र २ १ २
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥*१*॥

ऋ० मनुः। छ० अनुष्टुप्। दे० सोमः। सोमाःपवन्त इति-त्र्यचात्मकं चतुर्थं सूक्तम्; तत्र, प्रथमा। "गातु-

वित्तमाः" अतिशयेन मार्गस्य लम्भकाः "इन्दवः" दीप्ताः "सोमाः" "पवन्ते अस्मभ्यम्" अस्मदर्थं चरन्ति आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः, "स्वानाः" सुवानाः अभिषूयमाणाः "अरेपसः" पाप-रहिताः, अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः स्वर्गप्रापका वा ॥ १ ॥

२ १ १ २ २ २ २ १ २ २ १ २
ते पूतासो विपश्चितः सोमासो दध्याशिरः ।
१ २ १ २ २ २ १ २ १ १ २ २ २ २
सूरासो न दर्शतासो जिगत्नवो ध्रुवा घृते ॥*२*॥

अथ द्वितीया। "पूताः" पवित्रेण परिपूताः, "विपश्चितः" मेधाविनः, "दध्याशिरः" दध्यामिश्रणाः, "घृते" वसतीवर्याख्ये उदके "जिगत्नवः" गमन-शीलाः "ध्रुवाः" तत्र स्थैर्येण वर्त्तमानाः "ते" "सोमासः" सोमाः "सूरासः न" सूर्या इव "दर्शतासः" पात्रेषु सर्वदर्शनीया भवन्ति ॥ २ ॥

२ २ १ १ २ १ १ २ १ २र १ १
सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि ।
१ १ २ १ १ २ २ २ १ २ २ १ २
इषमस्मभ्यमभितः समस्वरन्वसुविदः ॥*३*॥ [२०]

अथ तृतीया। "गोः" अनडुहः "अधित्वचि" अधिषवण-चर्मणि "चिताना" ज्ञायमाना "अद्रिभिः" ग्रावभिः विविधैः "सुष्वाणासः" सूयमानाः "वसुविदः" वसुनो लम्भकाः "एते" सोमाः अस्मभ्यम् "इषम्" अन्नम् अभितः "समस्वरन्" सम्यक् शब्दयन्ति प्रयच्छन्तीति यावत् ॥३॥[२०]

२ १  १ २  १  २ १  २र
अया पवा पवस्वैना वसूनि
२ १ २ २  १ २ २  १ २
माऽश्चत्व इन्दो सरसि प्रधन्व ।
१ १ २ १ २  २ २  २  १ १
ब्रध्नश्चिदस्य वातो न जूतिं
२ २ १ २  २ १ २ २  २ १
पुरुमेधाश्चित्तकवे नरं धात् ॥ ५१४ ॥

ऋ० कुत्सः। छ० त्रिष्टुप्। दे० सोमः। अयायापवेति-ऋचात्मकं पञ्चमं सूक्तम्, तत्र, प्रथमा। हे सोम! "अया" अनया "पवा" पवमानया "धारया" "एना" एनानि "वसूनि" धनानि "पवस्व" क्षर। पवा—पूञ् पवने (क्र्या० प०) "अन्येभ्योऽपि दृश्यन्ते (३, २, १७८)"—इति क्विप् प्रत्ययः, आर्द्धधातुक-लक्षणो गुणः, "नायिकाच (६, १, १६८)"—इति तृतीयाया उदात्तत्वम्। तथा हे "इन्दो!" त्वं "मांश्चत्वे" मन्यमानानां चातके "सरसि" उदके वसतीवर्याख्ये "प्रधन्व" प्रगच्छ। "यस्य" सोमस्य शोधने सति "ब्रध्नश्चित्" सर्वेषां प्रज्ञापको मूलभूतो वा आदित्योऽपि "वातः न" वायुरिव "जूतिं" वेगं प्राप्तः सन् किञ्च "पुरुमेधश्चित्" बहुविध-यज्ञ इन्द्रोऽपि "तकवे" तकतिर्गति-कर्मसु पठितः (निघ० २, १४ ६८), अस्मादौणादिक उन् प्रत्ययः। सोम गच्छत; मह्यं "नरं" कर्मनेतारं पुत्रं "धात्" ददातु प्रयच्छतु। स त्वं प्रधन्वेति पूर्वेण सम्बन्धः॥

"यस्य"-"अव"—इति पाठौ, "जूतिं"-"जतः"—इति, "धात्"-"दात्"—इति च॥ १॥

७ ११ २ १ १२ १ २ २१ २ २ २ २ १ २ २ २
उत न एना पवया पवस्वाधि श्रुते श्रवाय्यस्य तीर्थे ।

२ १ २ १ २ २ १ १र
षष्टिꣳ सहस्रा नैगुतो वसूनि

१ २उ २ १ २ २ १ २
वृचं न पक्वं धूनवद्रणाय ॥*२*॥

अथ द्वितीया। हे सोम। "उत" अपि च "श्रवाय्यस्य" सर्वैः श्रवणीयस्य तव "श्रुते" प्रसिद्धे यज्ञे, षष्ठ्यर्थे चतुर्थी श्रुत शब्दस्य "तीर्थे" स्थाने "नः" अस्माकं सम्भूते यज्ञे "एना" अनया "पवया" पूयमानया "धारया" अधिकं "पवस्व" क्षर। "नेगुतः" नीचीनं गच्छति न-शब्दायत्त इति निगुतः शत्रवः, तेषां हन्तृत्वेन सम्बन्धी सोऽयं सोमः "षष्टि" षष्टि-सङ्ख्याकानि "सहस्रा" सहस्राणि "वसूनि" धनानि "रणाय" मधूनां जयार्थं धनवत् अस्मानकम्पयत् प्रायच्छदिति यावत्। कथमिव? "वृचं न पक्वं" पक्व-फलं वृच यथा कम्पयति फलार्थी, तद्वत् ॥ २ ॥

१ २ १ २ २ २ २ १ २ २ १
महीमे अस्य वृष नाम शूषे

१र २ १ २ २ १ २
माꣳश्चत्वे वा पृशने वा वधत्रे ।

१ २ २ १ २ २ २ २ २ २ २ २
अस्वापयन्निगुतः स्नेहयच्चापामित्राꣳ

२ २ १ २ २ २
अपाचितो अचेतः ॥*३*॥ [२१]

अथ तृतीया। "महो" महते प्रभूते "वृषनाम" वृषां

सुलुगिति ( ७, १, ३९ ) सुपो लुक् इपनामनी वर्षण-नमने, शराणां वर्षणं, शत्रूणां नमनम्, "इमे" एते द्वे कर्मणी "अस्य" सोमस्य "शूषे" सुखकरे भवतः ; ये च कर्मणी "आंयत्वे" अन्ननामैतत् ( निघ० १, १४, १८ ) अन्नेः क्रियमाणे युद्धे तत्साध्यत्वाद् युद्धमिह लक्ष्यते "वा" अपि वा "पृतने" सङ्ग्राम-साध्ये बाहु-युद्धे "वधत्रे" शत्रूणां हिंसन-शीले भवतः। सोऽयं "निशुतः" नीचैः शब्दायमानान् शत्रून् "अस्वापयत्" असूषुपत् अवधीदित्यर्थः। किञ्च "स्रेदयत्" प्राद्रवयत् संग्रा-माच्छत्रून्। अथ प्रत्यक्षः। हे सोम! स त्वम् "अमित्रान्" शत्रून् "अपाचेन" अपगमय। तथाच "अपाचितः" अग्नि-चयनं मकुर्वतः नास्तिकांश्च "इतः" अस्मच्छकाशात् अपाचेत अपगमय अञ्चुनिर्गतिकर्मा ( भ्वा० प० ) ॥ ३ ॥ [२१]

इति सामवेदार्थप्रकाशे छन्दआर्च्चिकस्य सप्तमप्रपाठकस्य षष्ठः खण्डः।

---

१ २     २    १   १ २     १ २ १ २    २ १ २     १क २र
अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्यः
॥*१*॥

ऋ० बन्धुः। छ० द्विपदा-विराट्। दे० अग्निः। अथ सप्तम-खण्डे—प्रथमदृचे, प्रथमा। हे "अग्ने!" "वरूथ्यः" वरणीयः सम्भजनीयः। यद्वा, वरूथैः परिधिभिर्हितः त्वं "नः" अस्माकम् "अन्तमः" अन्तिकतमः "भुवः" भव। "उत" अपि च "त्राता" रक्षकः "शिवः" सुखकरश्च भव ॥

"भुवः"-"भव"—इति पाठौ ॥ १ ॥

१ २ ३ १ २र ३ १ २ २ १ १ २ १ २
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दाः ॥*२*॥

अथ द्वितीया। "वसुः" वासकः "अग्निः" सर्वेषामग्रणीः "वसुश्रवाः" व्याप्तान्नश्च "अच्छ" आभिमुख्येन "नक्षि" अस्मान् व्याप्नुहि। "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "रयिं" पश्वादिलक्षणं धनं "दाः" अस्मभ्यं देहि॥

"द्युमत्तमः"-"द्युमत्तमम्"—इति पाठौ॥ २॥

१ २८ ३ १ २ ३ १ २ २ १ २
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥*३*॥ [२२]

अथ तृतीया। हे "शोचिष्ठ" अतिशयेन शोचिष्मन्! "दीदिवः" स्वतेजोभिर्दीप्ताग्ने! "तं" त्वां "सुम्नाय" सुखाय: सुम्नमिति सुखनामैतत् (निघ० ३, ६, १७) तदर्थं "सखिभ्यः" समानख्यातिभ्यः पुत्रेभ्यः सुखार्थञ्च "नूनम्" "ईमहे" याचामहे॥ ३॥ [२२]

३ २उ ३ १ २ ३ १ २ ३ १ २ ३ २
इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः॥*१

ऋ० आप्त्यः। छ० द्विपदा त्रिष्टुप्। दे० विश्वेदेवाः। अथ द्वितीय तृचे—प्रथमा। "इमा" इमानि परिदृश्यमानानि भुवनानि "नु" क्षिप्रं "सीषधेम" साधयेम वशीकरवाम। "कम्"—इति पूरकः यद्वा, इमानि सर्वाणि भूतजातानि अस्मभ्यं कं सुखं सीषधेम साधयन्तु; पुरुषव्यत्ययः (३,१,८५) "इन्द्रश्च" "विश्वे" सर्वे अन्ये "देवाः च" स्तुत्या प्रीत्या "इमम्" अर्थम् साधयन्तु।

"सीषधेम"-"सीषधाम"—इति पाठौ॥ १॥

२ १ २ ३क २र ३ १ २ ३ १ २र ३ १ २
यज्ञं च नस्तन्वञ्च प्रजां चादित्यैरिन्द्रः सह सीषधातु ॥•२•॥

अथ द्वितीया। "नः" अस्माकं "यज्ञं" ज्योतिष्टोमादि-
कञ्च यागं "तन्वं" शरीरञ्च "प्रजां" पुत्रादिकाञ्च "आदित्यैः"
अदिति-पुत्रैः अन्यैर्देवैः सह वर्तमानः "इन्द्रः" "सीषधातु"
साधयतु ॥

"सहसीषधातु"-"सहचौसपानि"—इति पाठौ ॥ २ ॥

२ ३उ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत् ॥•३•॥ [२३]

अथ तृतीया। "आदित्यैः" अदिति-पुत्रैः मित्रादिभिः
"मरुद्भिः" च "सगणः" गण-सहितः "इन्द्रः" "अस्माकम्"
अस्मभ्यम् "भेषजानि" औषधानि "करत्" करोतु ॥

"भेषजाकरत्"-"भूलवितातनूनाम्"—इति पाठौ ॥३॥ [२३]

१ २र
प्र वोऽर्चोप० ॥ [२४]

इति अर्द्धप्रपाठकः।

---

ऋ० सम्पात ऋषिः। छ० द्विपदा-त्रिष्टुप्। दे० उषा।
अथैकर्गात्मकं सूक्तं प्रवोर्चोपेति, चतुरक्षरात्मिका काचिदिय-
मियूपा; यथा बह्वृचानां "भद्रयो अपिवातयमनः"—इत्यक

एव पाद ऋगात्मकस्य तद्वत्। हे ऋत्विग्यजमानाः! "वः" यूयम् "उप" समीपे "प्राञ्चं" प्रकर्षेणेन्द्रं पूजयत ॥ १ ॥ [२४]

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ७ ॥

## इति चतुर्थस्यार्द्धः-प्रपाठकः।

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-
साम्राज्य धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये
सामवेदार्थप्रकाशे उत्तराग्रन्थे सप्तमोऽध्यायः ॥७॥

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे, तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ८ ॥

## अथाष्टमाध्याय आरभ्यते।

१ २र ३ १ २ ३ २ ३ २ ३ २ ३ १ २
प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति।
१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३क २र ३ १ २
महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन्

॥०१०॥

ऋ० अषित-देवलौ। छ० गायत्री। दे० सोमः। तत्र, प्रकाव्यमिति प्रथमे खण्डे—द्वादशर्चे प्रथमे सूक्ते—प्रथमा। "उशनेव" एतन्नामक ऋषिरिव "काव्यं" कवि-कर्म स्तोत्रं "ब्रुवाणः" उच्चारयन् "देवः" स्तोता "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि "प्र विवक्ति" प्रकर्षेण ब्रवीति। यद्य. परि-

भाषणे ( षष्ठा० प० ) व्यत्ययेन विकरणस्य शुः ( ३, १, ३८ ), "बहुलम्छन्दसि ( ७, ४, ७८ )"—इत्यभ्यासस्येत्वम्, "मन्द्रिव्रतः" प्रभूतकर्मा, "शुचिबन्धुः"। बध्नन्ति मवूनिति बन्धूनि तेजांसि बलानि वा। दीप्ततेजस्कः, "पावकः" पापानां शोधकः, "वराहः" वरश्च तदहश्च वराहः "राजाहः सखिभ्यष्टच् ( ५, ४, ८१ )"—इति टच् समासान्तः ; तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान् ; अर्श आदित्वान्मत्वर्थीयोऽच् ( ५, २, १२७ ) तादृशः सोमः "रेभन्" रेभनं शब्दं कुर्वन्, "पदा" पदानि पात्राणि "अभ्येति" अभिगच्छति ; यद्वा, यथा कश्चन वराहः पदा पादेन भूमिं विक्रममाणः शब्दं करोति तद्वत् ॥ १ ॥

१ १　　२ ३१ २ ३ २उ ३ २उ　२ ३ २

प्र हꣳसासस्तृपला वग्नुमच्छामादस्तं वृषगणा अयासुः ।

२　२ ३ १ २　३　१ २

आङ्गोषिणं पवमानꣳ सखायो

३ १ २ ३ १　२र　३ २

दुर्मर्षं वाणं प्र वदन्ति साकम् ॥*२*॥

अथ द्वितीया । "हंसासः" शत्रुभिर्हन्यमाना हंसा इव आचरन्तो वा "तृपलाः" एतन्नामका ऋषयः "अमात्" शत्रूणां बलात् त्रासिताः सन्तः "तृपला" तृपलं सुपां सुलुगिति सोराकारादेशः ( ७, १, ३९ )। तृपल-शब्दः क्षिप्रवाची, तदुक्तं यास्केन—"तृप्रप्रहारी क्षिप्रप्रहारी ( निरु० नै० ५, १२ )"—इति क्षिप्रं प्रहारिणं "वग्नुम्" अभिषवशब्दम् "अच्छ" अभिलक्ष्य "अस्तं" यज्ञगृहं "प्रायासुः" प्रायासिषुः प्रगच्छन्ति। ततः "सखायः" स्तुत्य-स्तोतृत्वः समयेन सम्बन्धेन सखिभूताः स्तोतारः "आङ्गोषिणं" सर्वैः

भिगन्तव्यं यद्वा, अक्नोपियं स्तोतारं, "दुर्मर्यं" मनुभिः दुर्धर्षं दुःसहम्; एवंविधं "पवमान" सोमम् उद्दिश्य "वाणं" वाद्यविशेषं "साकं" सह एव"प्र वदन्ति" प्रवादयन्ति तदुपलक्षितं गानं कुर्वन्तीत्यर्थः ॥ २ ॥

१ २ १ २ १ २उ
स योजत उरुगायस्य जूतिं
२ १ २ २ १ २र
वृथा क्रीडन्तं मिमते न गावः।
२ १ २ २ १ २ २ २ २ २ १ २ २ १ २ १ २
परीणसं कृणुते तिग्मशृङ्गो दिवा हरिर्ददृशे नक्तमृज्रः
॥*३*॥

अथ तृतीया। "सः" सोमः "उरुगायस्य" बहुभिः स्तुत्यस्य आत्मनः "जूतिं" गतिं "योजते" युनक्ति अन्तरिक्षे प्रेरयति। "वृथा क्रीडन्तम्" अनायासेन विहरन्तं गच्छन्तं सोमं "गावः" अन्ये गन्तारः "न मिमते" न परिच्छिन्दन्ति मातुं न शक्नुवन्ति इत्यर्थः। किञ्च "तिग्मशृङ्गः" शृणन्ति हिंसन्ति तमांसीति शृङ्गाणि तेजांसि तीक्ष्ण-तेजस्कः "परीणसं" बहुनामैतत् ( निघ० ३, १, ७ ) बहुविधं तेजः "कृणुते" करोतु अन्तरिक्षे वर्त्तमानो यः सोमः "दिवा" अहनि "हरिः" हरितवर्णः "ददृशे" दृश्यते न प्रकाशत इत्यर्थः, "नक्तं" रात्रौ तु "ऋज्रः" ऋजुगामी विस्पष्टः प्रकाशयुक्तो दृश्यते ॥ ददृशे —दृशेः कर्मणि लिटि रूपम् ॥ ३ ॥

१ २ २ १ १२ २ १ २ २ १ २२ १ २
प्र स्वानासो रथा इवार्वन्तो न श्रवस्यवः।
१ २ २ १ २
सोमासो राये अक्रमुः ॥*४*॥

अथ चतुर्थी। "स्वानासः" अभिषव-वेलायामुपरवेषु शब्दं कुर्वन्तः "सोमासः" सोमाः "रथा इव" यथा शब्दं कुर्वन्तो रथाः तथा, "अर्वन्तो न" यथा शब्दं कुर्वन्तो अश्वाः तथा, "श्रवस्यवः" शत्रुभ्यः सकाशादन्नमिच्छन्तो "राये" यजमानानां धनाय "प्राक्रमुः" प्रगच्छन्ति ॥ ४ ॥

१ २ ३ १ २ २ ३ १ २र
हिन्वानासो रथा इव दधन्विरे गभस्त्योः ।

१ २ ३ १ २
भरासः कारिणामिव ॥*५*॥

अथ पञ्चमी। "रथा इव" युद्धदेशं प्रति यथा रथाः तथा "हिन्वानासः" यागदेशं प्रति गच्छन्तः सोमाः ऋत्विजां "गभस्त्योः" बाह्वोः "दधन्विरे" धीयन्ते। तत्र दृष्टान्तः— "भरासः" भराः "कारिणामिव" यथा भारवाहानां बाह्वोर्धीयन्ते तद्वत् ॥ ५ ॥

१ २ २ १ २र २ १ २ ३ १ २
राजानो न प्रशस्तिभिः सोमासो गोभिरञ्जते ।

१ २उ २ २ २ १ २
यज्ञो न सप्त धातृभिः ॥*६*॥

अथ षष्ठी। "सोमासः" सोमाः "प्रशस्तिभिः प्रशस्ताभिः स्तुतिरूपाभिः वाग्भिः "राजानो न" यथा राजानः "सप्तधातृभिः" सप्त-होत्राभिः "यज्ञो न" यथा च यज्ञः तथा "गोभिः" गोविकारैः पयोभिः "अञ्जते" अज्यते संस्क्रियत इति ॥६॥

१ २ २ ३ २ १ २ ३ १ २ ३ १ २ २ २
परि स्वानास इन्दवो मदाय बर्हणा गिरा ।

१ १ २ १ २
मधो अर्षन्ति धारया ॥*७*॥

अथ सप्तमी। "स्नानासः" सुवानाः अभिषूयमाणाः "इन्दवः" सोमाः "बर्हणा" महत्या "गिरा" स्तुति-रूपया वाचा युक्ताः सन्तः "मदाय" मदार्थं "मधोः" मधुर-रसस्य "धारया" "परि अर्षन्ति" परितो गच्छन्ति ॥

"परिस्रानासः"—"परिसुवानासः"—इति पाठौ, "मधोः" "सुताः"—इति च ॥ ७ ॥

२ १ २ २ १ २ ३ १ २ ३ २ ३ २ १ २
आपानासो विवस्वतो जिन्वन्त उषसो भगम्।

१ २ ३ २ ३ २
सूरा अण्वं वि तन्वते ॥*८*॥

अथ अष्टमी। "विवस्वतः" दीप्तिमतः इन्द्रस्य "आपानासः" "आपानभूताः "उषसः" "भगं" शोभां "जिन्वन्तः" प्रेरयन्तः "सूराः" सरन्तः सोमाः "अण्वं वि तन्वते" अभिनव-वेलायां सुपर्वसु शब्दं कुर्वन्ति ॥

"जिन्वन्तः"-"जनम्"—इति पाठौ ॥ ८ ॥

१ २ ३ २ २ २ ३ १ २ २ ३ १
अप द्वारा मतीनां प्रत्ना ऋण्वन्ति कारवः।

२ १ १ २ २ ३ २
वृष्णो हरस आयवः ॥*९*॥

अथ नवमी। "मतीनां कारवः" स्तुतीनां कर्त्तारः "प्रत्नाः" पुराणाः "वृष्णः" सेचकस्य सोमस्य "हरसः" आहर्त्तारः "आयवः" मनुष्याः ऋत्विजः "द्वारा" यज्ञस्य द्वाराणि "अप ऋण्वन्ति" विवृण्वन्ति ॥ ९ ॥

२ १ २ २ १ २ २ १ २
समीचीनास आशत होतारः सप्तजानयः।

१ १ २ ‍र ३ १ २
पदमेकस्य पिप्रतः ॥*१०*॥

अथ दशमी। "समीचीनासः" समीचीनाः "जामयः" जाति-सदृशाः "एकस्य" सोमस्य "पदं" स्थानं "पिप्रतः" पूरयन्तः "सप्त होतारः" यज्ञे "आशत" व्याप्नुवन्ति ॥
"आश्नत"-"आसत"—इति पाठौ, "जानयः"-"नामयः" —इति च ॥ १०॥

२ ३ १ २ २ १ १ १ २ १ २ १ २ १ २
नाभा नाभिं न आ ददे चक्षुषा सूर्य्यं दृशे।

२ १ २ ‍र ३ १ २
कवेरपत्यमा दुहे ॥*११*॥

अथैकादशी। "नाभिं" यज्ञस्य नाभिभूतं सोमं "नः" अस्माकं "नाभा" नाभौ अहम् "आददे" सोमं पीत्वा नाभिस्थाने करोमीत्यर्थः। किमर्थम्? "चक्षुषा" "सूर्य्यं" "दृशे" द्रष्टुम्। किञ्च, "कवेः" क्रान्त-कर्मणः सोमस्य "अपत्यम्" अंशम् "आ दुहे" आ पूरयामि ॥
"चक्षुषा सूर्य्यन्दृशे"—"चक्षुश्चित्सूर्य्ये सचा"—इति पाठौ ॥११॥

२ २ १ २ २ २ ३ १ २ ३ २ ३ १ २ १ २
अभि प्रियं दिवस्पदमध्वर्युभिर्गुहा हितम्।

१ २ २ १ २
सूरः पश्यति चक्षसा ॥*१२*॥ [१]

अथ द्वादशी। "सूरः" सुवीर्य्यः इन्द्रः "चक्षसा" चक्षुषा "दिवः" दीप्तस्य आत्मनः "प्रियं पदम्" अध्वर्युभिः "गुहा"

गुहायां हृदये "हितं" निहितं पीतं सोमम् "अभि पश्यति" ॥

"प्रियम्"-"प्रिया"—इति पाठौ ॥ १२ ॥

इति सामवेदार्थ प्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

१ १ २ १ २ . २ १ २र २ १ २ १ १ २
असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः ।

१ १ २ ३ १ २
विदाना अस्य योजना ॥ १ ॥

ऋ० जमदग्नि-असित-देवलाः । छ० गायत्री । दे० सोमः ।
अथ द्वितीयखण्डे असृग्रमिति द्वादशर्चं प्रथमं सूक्तम् ; तत्र प्रथमा । "अस्य" अनेन यजमानेन कृतान् "योजना" तद्देवता योग्यान् सम्बन्धान् "विदानाः" जानन्तः "सुश्रियः" शोभन-श्रयणाः "इन्दवः" सोमाः "धर्मन्" कर्मणि "ऋतस्य" यज्ञस्य "पथा" मार्गेन "असृग्रम्" हविर्दानात् सृज्यन्ते ॥

"योजना"-"योजनम्"—इति पाठौ ॥ १ ॥

१उ २ १ २. ३ १ २ ३ २ १ २र
प्र धारा मधो अग्रियो महीरपो वि गाहते ।

१ २ ३ २ ३ १ २
हविर्हविःषु वन्द्यः ॥ २ ॥

अथ द्वितीया । "हविःषु" हविषां मध्ये "वन्द्यः" स्तुत्यः "हविः" हविरात्मकः यः सोमः "महीः" महतीः "अपः" वसतीवरीः "विगाहते", तस्य "मधोः" सोमस्य "अग्रियः" मुख्या धाराः प्रपतन्तीत्यर्थः ॥

"मधो"-"म..."—इति पाठौ ॥ २ ॥

२ ३ २ ३ १ २ ३ १ २र ३ १ २
प्र युजा वाचो अग्रियो वृषो अचिक्रदद्वने।
२ ३ २ ३ १ २ ३ २
सद्माभि सत्यो अध्वरः ॥ ३ ॥

अथ तृतीया। "अग्रियः" हविषां मध्ये मुख्यः सोमः "युजा" युक्ताः "वाचः" प्रकरोतीत्यर्थः। एतदेव दर्शयति- "वृषः" कामानां वर्षकः "सत्यः" सत्यभूतः "अध्वरः" हिंसा-वर्जितः सोमः "सद्म" यज्ञस्थलं "अभि" प्रति "वने" उदके अचिक्रदत् शब्दं करोतीत्यर्थः॥

"वृषो अचिक्रदत्"—"वृषावचिक्रदत्"—इति पाठौ ॥ ३ ॥

३ २ ३ १ २ ३ २ ३ १ २ ३ १ ३२
परि यत्काव्या कविर्नृम्णा पुनानो अर्षति।
१२ ३ १ २
स्वर्वाजी सिषासति ॥ ४ ॥

अथ चतुर्थी। "कविः" क्रान्तकर्मा सोमः "नृम्णा" नृम्णानि बलानि "पुनानः" शोधयन् "काव्या" काव्यानि कवि-कर्माणि स्तोत्राणि "यद्" यदा "परि अर्षति" परि-गच्छति, तदा "स्वः" स्वर्गं "वाजी" बलवान् अन्नवान्वेन्द्रः "सिषासति" याग प्रत्यागन्तुं स्वकीयं बल मभ्यक्तुमिच्छति॥

"पुनानः"-"पवमानः"—इति पाठौ ॥ ४ ॥

१ २ ३ १२ १ २ ३ १ २
पवमानो अभि स्पृधो विशो राजेव सीदति।
१ २ ३ १ २ ३ १ २
यदीमृण्वन्ति वेधसः ॥ ५ ॥

अथ पञ्चमी। "यद्" यदा "ईम्" एनं सोमं "वेधसः"

कर्मणां कर्त्तारः ऋत्विजः "ऋषन्ति" प्रेरयन्ति, तदा "पवमानः" चरन्नेव सोमः "स्पृधः" स्पर्द्धमानान् याग-विघ्नकारिणः राक्षसादीन् "अभिसीदति" नाशयितुमभिगच्छति। तत्र दृष्टान्तः—"विशः राजा-इव" यथा राजा विशः स्पर्द्धमानान् मनुष्यान् नाशयितुमभिगच्छति तद्वत् ॥ ५ ॥

१ १ २-२ १ २ ३ २उ ३ १ २
अव्या वारे परि-प्रियो हरिर्वनेषु सीदति ।

३ १ २ ३ २
रेभो वनुष्यते मती ॥*६*॥

अथ षष्ठी। "हरिः" हरितवर्णः "प्रियः" देवानां प्रियतम एव सोमः "वनेषु" उदकेषु सम्पृक्तः "अव्याः" अवेः "वारे" वाले "परि सीदति" किञ्च "रेभः" अभिषव-वेलायाम् उपरवेषु शब्दं कुर्वन् "मती" मत्या स्तुत्या "वनुष्यते" सेव्यते ॥ ६ ॥

२ ३ १ २र ३-१ २ ३ १ २र
स वायुमिन्द्रमश्विना साकं मदेन गच्छति ।

१ २ १, २ ३ १ २
रणा यो अस्य धर्मणा ॥*७*॥

अथ सप्तमी। "यः" यजमानः "अस्य" सोमस्य "धर्मभिः" कर्मभिः क्रयणाभिषवादिभिः "रण" रमते, "सः" यजमानः "वायुम्", "इन्द्रम्", "अश्विना" अश्विनौ च "मदेन" "साकं" सह "गच्छति" प्राप्नोति ॥ ७ ॥

२ ३१ २र३ ३ २ ३ १ २ ३ १ २
आ मित्रे वरुणे भगे मधोः पवन्त ऊर्मयः ।

३ १ २ ३ १ २
विदाना अस्य शक्मभिः ॥*८*॥

अथाष्टमी। येषां यजमानानां "मधोः" सोमस्य "ऊर्मयः" तरङ्गाः "मित्रावरुणा" मित्रावरुणौ देवौ "भगं" भगाख्यं देवञ्च प्रति "पवन्ते" चरन्ति, ते यजमानाः "अस्य" सोमस्य इदं सोमं "विदानाः" जानन्तः "शर्मभिः" सुखैः सङ्गच्छन्त इति शेषः॥ ८॥

२ १ १     १ २उ    १   १ २    २ ३ १ २

अस्मभ्यꣳ रोदसी रयिं मध्वो वाजस्य सातये।

१ १   १ २ ३ १   १

श्रवो वसूनि सं जितम्॥*९*॥

अथ नवमी। हे "रोदसी" द्यावापृथिव्यौ। युवां "मध्वः" देवानां मादयितुः "वाजस्य" सोमात्मकस्यान्नस्य "सातये" लाभाय "अस्मभ्यं" "रयिं" धनं "श्रवः" अन्नञ्च "वसूनि" वासकान्यन्यान्यपि पश्वादीनि "सञ्जितं" सञ्जयन्तं प्रयच्छत-मित्यर्थः॥ ९॥

२ १   १ २    १ २ ३   १ २ १   १ २

आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे।

२ १ १   २ १ १ २

पान्तमा पुरुस्पृहम्॥*१०*॥

अथ दशमी। हे सोम। यष्टारो वयं "ते" तव सम्भूतं "दक्षं" बलम् "अद्य" अस्मिन् यागदिने "आ" आभिमुख्येन "वृणीमहे" सम्भजामहे। कीदृशम्? "मयोभुवं" सुखस्य भावकम् "वह्निं" धनादीनां प्रापकम् "पान्तं" शत्रुभ्यो रक्षकम् "पुरुस्पृहं" बहुभिः स्पृहणीयं कामानाम्॥ १०॥

२   १ १    १२ २ १उ    १ १    २ ३ १ १

आ मन्द्रमा वरेण्यमा विप्रमा मनीषिणम्।

१ २ ३ १ २ ३१ २ २
पान्तमा पुरुस्पृहम् ॥*११*॥

अथैकादशी। हे सोम! "मन्द्रं" मदकरं स्तुत्यं वा त्वाम् "आ वृणीमहे" "वरेण्यं" सर्वैर्वरणीयं सम्भजनीयञ्च; किञ्च "विप्रं" मेधाविनं त्वां तथा "मनीषिणं" मनस ईषा मनीषा तद्वन्तं स्तुतिमन्तं वा त्वामावृणीमहे प्रत्येकं विशेषणापेक्षया आ-इत्युपसर्गः सतः; किञ्च "पान्तं" सर्वेषां रक्षकम् "पुरुस्पृहं" बहुभिः स्पृहणीयं च त्वां सम्भजामहे ॥ ११ ॥

१ २ १ २३ १ २ १ १ २ २ २
आ रयिमा सुचेतुनमा सुक्रतो तनूष्वा।

१ २ १ २ २ १ २
पान्तमा पुरुस्पृहम् ॥*१२*॥ [२]

अथ द्वादशी। हे "सुक्रतो!" शोभन-प्रज्ञ! सोम! त्वदीयं "रयिं" धनम् वयम् "आ" वृणीमहे। किञ्च "सुचेतुनम्" चिती सञ्ज्ञाने (भ्वा० प०) भावे औणादिक उन् प्रत्ययः सुज्ञानञ्च। किञ्च "तनूषु" अस्मत्पुत्रेषु च धनं सुज्ञानञ्च त्वम् "आ" विधेहि यद्वा पुत्रार्थं वयमावृणीमहे। तथा "पान्तं" सर्वस्य रक्षकं "पुरुस्पृहं" बहुभिर्यष्टृभिः काम्यमानं त्वां सम्भजामहे ॥ १२ ॥ [२]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

२ १ २ २ १ २ २ १ २ २ १
मूर्धानं दिवो अरतिं पृथिव्या

२ २ २ १३ २ २ २ १
वैश्वानरमृत आ जातमग्निम्।

२ १ २ २ ३ १ २ ३ १ २
कविꣳ सम्राजमतिथिं जनाना-
१ २ २ १ २ ३ १
मासन्नः पात्रं जनयन्त देवाः ॥*१*॥

ऋ० भरद्वाजः। छ० त्रिष्टुप्। दे० वैश्वानरः अग्निः। अथ तृतीय-खण्डे, प्रथम-तृचे-प्रथमा। "मूर्द्धानं" शिरोभूतं, कस्य? "दिवः" द्युलोकस्य, "पृथिव्याः" प्रथितायाः भूमेः "अरतिं" गन्तारम् यद्वा, गन्तव्यं स्वामिनं, "वैश्वानरं" विश्वेषां नराणां सम्बन्धिनम्, "ऋते" ऋतमिति सत्यस्य यज्ञस्य वा नाम (निघ० ३,७,६)। निमित्त-सप्तम्येषा (२,३,३६ वा०) ऋतनिमित्तम् "आ" आभिमुख्येन जातं छान्दसावुत्पन्नं "कविं" क्रान्तदर्शिनं "सम्राजं" सम्यग्राजमानं "जनानां" यजमानानाम् "अतिथिं" हविर्वहनाय सततं गन्तारं यद्वा, अतिथिवत् पूज्यम्। "आसन्" आसनि द्वितीयार्थे सप्तमी (३,१,८५)। अग्नि-लक्षणेनास्येन हि देवा हवींषि भुञ्जते "नः" अस्माकं "पात्रं" पातारं रक्षकं वैश्वानरमग्निं "देवाः" स्तोतारः ऋत्विजः देवाः वा "आ जनयन्त" यज्ञाभिमुख्येन अजीजनन् अरण्योः सकाशात् उपपादयन्॥

"आसन्नःपात्रम्"-"आसन्नापात्रम्"—इति पाठौ॥१॥

१ १२ ३ १ २ ३ १
त्वां विश्वे अमृत जायमानꣳ
१ २ ३ १ २ ३ १ २२
शिशुं न देवा अभि सं नवन्ते।

२ ३ १ २   २ १ २ ३ १ २   ३ २ ३ १   ३२
तव क्रतुभिरमृतत्वमायन्वैश्वानर यत्पित्रोरदीदे: ॥२॥

अथ द्वितीया। हे "अमृत!" मरण-रहिताग्ने! "विश्वे देवा:" स्तोतार: "जायमानम्" अरण्योः सकाशात् उत्पद्यमानं त्वां "शिशुं न" पुत्रमिव "अभि सं नवन्ते" अभिसस्तुवन्ति यद्वा, दीव्यन्तीति देवा रश्मय: ते सर्वे जायमानं ...अभिनवन्ते अभिगच्छन्ति, यथा पितर: पुत्रमभिगच्छन्ति, अ... — हे वैश्वानर अग्ने! "यद्" यदा "पित्रो:" पालयित्रोः द्यावा-पृथिव्यो...मध्ये "अदीदे:" दीप्यसे, तदानीं "तव" त्वदीयैः "क्रतुभि:" कर्मभि: ज्योतिष्टोमादिभिर्यागै: "अमृतत्वम्" देवत्वम् "आयन्" यजमाना: प्राप्नुवन्ति ॥ २॥

१ २ ३ १ २   ३ २
नाभिं यज्ञानाᳫं सदनᳫं
३ १   ३ १ २ ३ १ २ १   ३२
रयीणां महामाहावमभि सं नवन्त।
२ ३ १२   ३ १ २   ३ १ २   ३ १ १   ३ २
वैश्वानरᳫं रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवा: ॥३॥[३]

अथ तृतीया। "नाभिं यज्ञानां", "सदनं रयीणां" धनानां स्थानमेकनिलयं "महां" महान्तम् "आहावम्" आहूयन्ते अस्मिन्नाहुतय इत्याहावः तादृशम्; यद्वा हव्युदकधाराणामाहावस्थानीयमेवम्भूतम् अग्निम् "अभि सं नवन्त" स्तोतार: सम्यक् स्तुवन्ति। तथा "वैश्वानर" विश्वेषां नराणां सम्बन्धिनम् अध्वराणां यज्ञाना "रथ्य" रथिनं, यथ

रथो स रथं नयति तद्वन्नेतारं रहितारं गमयितारम् "यज्ञस्य" "केतुं" प्रज्ञापकम् एवंविधमग्निं "देवाः" स्तोतार ऋत्विजो देवा एव वा "जनयन्त" जनयन्ति मन्थनेनोत्पादयन्ति ३ [३]

१ २ ३ १ २ ३ १२ ३ २ ३२
प्र वो मित्राय गायत वरुणाय विपा गिरा।

१ २ ३१ ३२
महिक्षत्रावृतं बृहत् ॥*१*॥

ऋ० यजतः। छ० गायत्री। दे० मित्रावरुणौ। अथ द्वितीय-तृचे प्रथमा। हे मदीया ऋत्विजः! "वः" यूयमित्यर्थः। "मित्राय" "वरुणाय" "विपा" व्याप्तया "गिरा" स्तुत्या "गायत" स्तुतिं कुरुत स्तुत्या स्तुतेत्येतत् पाकं पचतीतिवत्। हे "महिक्षत्रौ" प्रभूत-बलौ युवाम् "ऋतं" यज्ञं "बृहत्" महत् अपि प्रशस्तं स्तुत्यर्थमागच्छतमिति शेषः। अथवा "महत्" प्रभूतम् "ऋतं" स्तोत्रं शृणुतमिति शेषः॥१॥

३ १ २ १ २ १ २ ३ २ १ ३२
सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च।

३२ ३१२ २ १
देवा देवेषु प्रशस्ता ॥*२*॥

अथ द्वितीया। "या" यौ "मित्रश्च" "वरुणश्च" परस्परापेक्षया च-शब्दः "उभा" उभौ "सम्राजा" सम्राजानौ सर्वस्य स्वामिनौ "घृतयोनी" उदकस्योत्पादकौ "देवा" द्योतमानौ "देवेषु" मध्ये "प्रशस्ता" प्रकर्षेण स्तुतौ तौ स्तुत्या गायतेति पूर्वेणान्वयः॥ २॥

१ २ ३ १ १ ३ १ २ २ ३ १ २
ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य।

१ २ ३ २ ३१२
महि वां चत्रं देवेषु ॥१३॥ [४]

अथ तृतीया। "ता" तौ देवौ "नः" अस्मदर्थं "पार्थिवस्य" पृथिवीसम्बद्धस्य "दिव्यस्य" दिवि भवस्य च "महः" महतः "रायः" धनस्य "शक्तं" समर्थम्, भवतं दातुमिति शेषः। हे देवौ! "वां" युवयोः "महि" महत् पूज्यं "चत्रं" बलं देवेषु प्रसिद्धं, स्तुम इति शेषः॥ ३॥ [४]

१ २र ३ २ ३२ ३ १ २
इन्द्रा याहि चित्रभानो सुता इमे त्वायवः।

१ २ ३ १ २ ३ १ २
अण्वीभिस्तना पूतास॥*१*॥

ऋ० मधुच्छन्दाः। छ० गायत्री। दे० इन्द्रः। अथ तृतीय-तृचे—प्रथमा। "चित्रभानो!" हे विचित्र-दीप्ते! "इन्द्र!" अस्मिन् कर्मणि "आयाहि" आगच्छ। "सुताः" अभिषुताः "इमे" सोमाः "त्वायवः" त्वां कामयमाना वर्त्तन्ते। "अण्वीभिः" अङ्गुलिनामैतत् (निघ० २, ५, २) ऋत्विजामङ्गुलिभिः सुता इत्यन्वयः। किञ्च, ते सोमाः "तना" नित्यं "पूतासः" शुद्धाः दशा-पवित्रेण शोधितत्वात्॥ १॥

१ २र ३ २ ३ १ २र ३ १ २
इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः।

३ २ ३ १ २ ३ १
उप ब्रह्माणि वाघतः॥*२*॥

अथ द्वितीया। हे "इन्द्र!" त्वम् "आयाहि" अस्मिन् कर्मणि आगच्छ। किमर्थम्? "वाघतः" ऋत्विङ्नामैतत्

(निघ० ३, १८, ३) ऋत्विजः "ब्रह्माणि" वेद-रूपाणि स्तोत्राणि "उप" एतुम्। कीदृशस्त्वम् ? "धिया" अस्मदीयया प्रज्ञया "इषितः" प्राप्तः, अस्मद्भक्त्या प्रेरित इत्यर्थः। "विप्रजूतः" यथा यजमान-भक्त्या प्रेरितः तथान्यैरपि विप्रैः मेधाविभिः ऋत्विग्भिः प्रेरितः। कीदृशस्य ? "वाघतः ?" "सुतावतः" अभिषुतसोमयुक्तस्य ॥ २ ॥

१ २र २ १ २ २ १२ १ २
इन्द्रा याहि तू तुजान उप ब्रह्माणि हरिवः।

२ १ २ २ १ २
सुते दधिष्व नश्चनः ॥*३*॥ [५]

अथ तृतीया। हरि-शब्दः इन्द्र-सम्बन्धिनोरश्वयोर्नामधेयम् "हरी इन्द्रस्य, लोहितोऽग्नेः (नि० १, १५, १-२)"—इति तदीयाश्व-नामत्वेन पठितत्वात् हे "हरिवः !" अश्वयुक्तेन्द्र ! त्वं "ब्रह्माणि" आनेतुम् "आ याहि"। कीदृशस्त्वम् ? "तूतुजानः" त्वरमाणः। आगत्य च अस्मिन् "सुते" सोमाभिषव युक्ते कर्मणि "नः" अस्मदीयं "चनः" अन्ननामैतत् (निरु० नै० ६, १६) हविर्लक्षणमन्नं "दधिष्व" धारय स्वीकुर्वन्त्वित्यर्थः ॥ ३ ॥ [५]

१ २ २ २ २ ३ २ ३ २ २ ३ २ २
तमीडिष्व यो अर्चिषा वना विश्वा परिष्वजत्।

२ १ ३ २ २ २ २ १
कृष्णा कृणोति जिह्वया ॥*१*॥

ऋ० भरद्वाजः। छ० गायत्री। दे० इन्द्राग्नी। अथ चतुर्थ-दृचे—प्रथमा। हे स्तोतः ! "तम्" अग्निम् "ईडिष्व" स्तुहि, "यः" अग्निः "अर्चिषा" ज्वालारूपेण तेजसा

"विश्वा" सर्वाणि "वना" वनान्यरण्यानि "परिष्वजत्" परिष्वजति परितो वेष्टयति, अथ तानि वनानि "जिह्वया" ज्वालया दग्ध्वा "कृष्णा" कृष्णवर्णानि "कृणोति", तमीड़िष्वेति सम्बन्धः ॥ १ ॥

१ १२ १ २ १ २ १२ २र १ २ १ २
य इद्ध आविवासति सुम्नमिन्द्रस्य मर्त्यः ।

३ १ २ २ ३ १ २ ३ १
द्युम्नाय सुतरा अपः ॥*२*॥

अथ द्वितीया। "यः" "मर्त्यः" मनुष्यः "इद्धे" दीप्ते अग्नौ "सुम्नं" सुखकरं हविः "इन्द्रस्य" चतुर्थ्यर्थे षष्ठी (२, ३, ६२) इन्द्राय "आविवासति" परिचरति प्रयच्छति, तस्य मर्त्यस्य "द्युम्नाय" द्योतमानायान्नाय तदर्थं "सुतराः" सुखेन तरणीयाः "अपः" उदकानि वृष्ट्यात्मकानि, इन्द्रः करोत्विति शेषः ॥ २ ॥

१ २ १ २ ३ १ २ ३ २ ३ २ ३ १ २
ता नो वाजवतीरिष आशून्पिपृतमर्वतः ।

१ २ ३ १ २ ३ १ २
एन्द्रमग्निं च वोढवे ॥*३*॥ [६]

अथ तृतीया। हे इन्द्राग्नी ! "ता" तौ युवां "वाजवतीः" अन्नवतीः "इषः" इष्यमाणाः "वृष्टीः" यद्वा, वाजो बलं तद्वतीः इषः अन्नानि "आशून्" शीघ्रगान् "अर्वतः" अश्वांश्च "नः" अस्मभ्यं "पिपृतम्" पूरयतम् प्रयच्छतम्। किमर्थम् ? "इन्द्रम्" "अग्निं च" "आ वोढवे" आ समन्तात् वोढुं हविर्भिः प्रापयितुम् ॥ ३ ॥ [६]

इति सामवेदार्थप्रकाशे उत्तराचिकस्य चतुर्थप्रपाठकस्य तृतीयः खण्डः ।

१ २ ३ १ २ ३ १ २ ३ २उ
प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं

३ २ ३ १ ३र ३ १ २
सखा सख्युर्न प्र मिनाति सङ्गिरम्।

१ २ ३ २ ३ १ २ ३ १ २
मर्य्य इव युवतिभिः समर्षति सोमः

३१ २ ३१ २ २ २
कलशे शतयामना पथा ॥४१॥

ऋ० सिकतानिवारी ऋषिगणः। छ० जगती। दे० इन्द्रः। अथ चतुर्थ-खण्डे, प्रथम-त्चे—प्रथमा। "इन्दुः" सोमः "इन्द्रस्य" "निष्कृतं" संस्कृतं स्थानमुदरं "प्रो अयासीत्" प्रैव गच्छति ; गत्वा च "सखा" सखिभूतः "सख्युः" इन्द्रस्य "सङ्गिरं" सम्यग् गिरणाधारभूतम् उदरं "न" "प्र मिनाति" हिनस्ति, किञ्च "मर्य्य इव युवतिभिः" मर्त्तो यथा तरुणीभिः स्त्रीभिः सह सङ्गतो भवति तद्वदयमपि सोमो युवतिभिर्मिश्रणशीलाभिर्वसतीवरीभिरद्भिः सह "समर्षति" सङ्गच्छते अभिषव-काल-पश्चात् सोमः "शतयामना" अनेक-यामनसाधन-वित्तोपेतेन "पथा" मार्गेण दशापवित्र-सम्बन्धिना "कलशे" द्रोणकलशे गच्छतीति शेषः। यद्वैकमेव वाक्यम्—यथा मर्य्यो मर्त्यो युवतिभिः सह सङ्गच्छते एवं कलशे शत-यामना पथा सङ्गच्छते ॥

"शतयामना"—"शतयाम्ना"—इति पाठौ ॥ १ ॥

१ २ ३ १ ३ १ २ ३ १ २
प्र वो धियो मन्द्रयुवो विपन्युवः

३ १ २ ३ १ २
पनस्युवः संवरणेष्वक्रमुः।

१ २ १ २ २क २र २ २ २ २
हरिं क्रीडन्तमभ्यनूषत स्तुभोऽभि

२ २ ३ २ २ १ २
धेनवः पयसेदशिश्रयुः ॥ २ ॥

अथ द्वितीया। हे सोमाः! "वः" युष्माकं "धियः" ध्यातारः "मन्द्रयुवः" मदकरं अन्नं कामयमानाः "पनस्युवः" स्तुतिं कामयमानाः "विपन्यवः"—स्तोत्र नामैतत् स्तोतारः "संवरेषु" वणकाटा-वरणोपेतेषु याग-प्रदेशेषु "प्राक्रमुः" प्रक्रमन्ते। तदेवाह—"स्तुभः" स्तोतारः "हरिं" हरितवर्णं "क्रीडन्तं" क्रीडनशीलं सोमम् "अभ्यनूषत" अभिष्टुवन्ति "धेनवः" अपि "पयसा" क्षीरेण क्षीरेणैव "इत्" इमं सोमम् अभिलक्ष्य "अशिश्रयुः" अधिकं श्रीणन्ति॥

"संवरणेषु"-"संवनेषु"—इति पाठौ, "हरिक्रीडन्त"-"सोमम्मनीषां"—इति च, "पयसेदशिश्रयुः"-"पयसेमभिश्रयुः"—इति च॥ २॥

१ २ ३ १ २ ३ २ २ १ २ २ ३
आ नः सोम संयतं पिप्युषीमिषमिन्दो

१ २ २ १ २ २ १ २
पवस्व पवमान ऊर्मिणा।

२ ३ १ २ २ २उ ३ १ १
या नो दोहते त्रिरहन्नसश्चुषी

३ १ २र २ १ २ २ १ २
क्षुमद्वाजवन्मधुमत्सुवीर्य्यम् ॥ ३ ॥ [७]

अथ तृतीया। हे "इन्दो"! दीप्त! "सोम!" "पवमानः" त्वं "नः" अस्माकं "संयतं" संग्रहीतं "पिप्युषीं"

प्रवहम् "वृषम्" अन्नम् "ऊर्मिणा" प्रवाह-रूपेण तदीयेन रसेन "पवस्व" प्रयच्छेत्यर्थः। "या" इद् "नः" अस्माकम् "अह्न्" अहनि अह्नः "त्रिः" त्रिषु सवनेषु "असश्चुषी" अप्रतिबन्धौ "दोहते।" किम्? "द्युमत्" शब्दोपेतं सर्वत्र सूयमाणं "वाजवत्" बलवत् "मधुमत्" माधुर्योपेतं "सुवीर्य्यं" शोभन-सामर्थ्यं पुत्रं दोहते। तां मिथं पवस्वेति समन्वयः॥

"ऊर्मिणा"-"अभियम्"—इति पाठौ॥ ३॥ [७]

१ २ १ २र ३१२ ३१ २ ३ १ २
न किष्टं कर्मणा नशद्यश्चकार सदावृधम्।
३१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २र
इन्द्रं न यज्ञैर्विश्वगूर्त्तमृभ्वसमधृष्टं धृष्णुमोजसा॥*१

ऋ० पुरुहन्मा। छ० बृहती। दे० इन्द्रः। अथ नकिरिति प्रगाथरूपे द्वितीयसूक्ते—प्रथमा। "तं" जनम् अन्यो मर्पको जनः "कर्मणा" हननादि-व्यापारेण "नकिः नशत्" नैव व्याप्नोति, "यः" "इन्द्रं चकार" इन्द्र मिवानुकूलं यज्ञैः साधनैश्चकार। कीदृश मिन्द्रम्? "सदावृधं" सर्वदा वर्द्धकं, "विश्वगूर्त्तं" सर्वैस्तुत्यम्, "ऋभ्वसं" महान्तम् "ओजसा" ओयेन बलेन "अधृष्टं" अन्यैरनभिभूतम् "धृष्णुं" शत्रूणामभिभवनशीलम्॥

"धृष्णुमोजसा"—"धृष्णवोजसम्—इति पाठौ॥ १॥

१ २ ३१ २र ३ १ २र ३ १ ३ २ ३ १ २
अषाढमुग्रं पृतनासु सासहिं यस्मिन्महीरुरुज्रयः।
२ ३ २ ३ १ ३ २ ३ १ २ ३ १ २
सं धेनवो जायमाने अनोनवुर्द्यावः क्षामीरनोनवुः॥*२॥ [८]

ऋ० ऐश्वरयः धिष्ण्यः। छ० द्विपदा। दे० सोमः।
अथ प्रवाजीति ऋचात्मकं द्वैपदं द्वितीयं सूक्तं—तत्र प्रथमा।
"वाजी" बलवान् वेगवान् वा "सहस्रधारः" बहुधारायुक्तः
सोमः "अव्यम्" अविमयं "वारं" वालं पवित्रं "तिरः"
व्यवधायकं कुर्वन् "प्राचाः" विविधं प्रचरति चरतेर्लुङि
रूपम् ॥

"प्रवाजी"-"प्रसुवानः"—इति पाठौ ॥ १ ॥

१ २क २र ३ १ २ ३ १ २ ३ १ २र ३ २
स वाज्यचाः सहस्ररेता अद्भिर्मृजानो गोभिः श्रीणानः ॥*२*॥

अथ द्वितीया। "सः" सोमः "अचाः" चरति। कीदृशः?
"सहस्ररेतः" बहुरेतस्कः "बहूदकः" "अद्भिः" वसतीवरीभिः
"मृजानः" मृज्यमानः "गोभिः" गोविकारैः क्षीरादिभिः
"श्रीणानः" श्रियमाणः ॥ २ ॥

१ २ ३ १-२ ३ १ २र ३ १ २र ३ २
प्र सोम याहीन्द्रस्य कुक्षा नृभिर्येमाणो अद्रिभिः सुतः ॥*३*॥ [१०]

अथ तृतीया। हे "सोम!" "नृभिः" ऋत्विग्भिः
"येमानः" नियम्यमानः "अद्रिभिः" ग्रावभिः "सुतः" अभि-
षुतः "इन्द्रस्य" "कुक्षा" सप्तम्या डादेशः (७, १, ३९) कुक्षौ
उदरभूते कलशे वा "प्रयाहि" प्रकर्षेण गच्छ संहितायां
येमान इत्यत्र पत्वम् ॥ ३ ॥ [१०]

२र ३ १ २ ३ १ २ ३ १ २ ३ २
ये सोमासः परावति ये अर्वावति सुन्विरे।

२ ३ १ २ ३ १ २
ये वादः शर्य्यणावति ॥१॥

ऋ० वारुणिः भृगुः वा जामदग्निः। छ० गायत्री। दे० सोमः। अथ येसोमासइति तृचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। एतदादिभ्यामृग्भ्यामिन्द्रार्थं सर्वत्र सोमाभिषवोऽस्तीत्याह —"ये" "सोमासः" "परावति" विप्रकृष्टेऽतिदूरे देशे "ये" वा "अर्वावति" अन्तिके देशे "सुन्विरे" अभिषूयन्ते "ये वा" "शर्य्यणावति" कुरुक्षेत्रस्य जघनार्द्धे शर्यणावत्संज्ञकं मधुर-रस-युक्तं सोमवत् सरोऽस्ति। "अदः" अस्मिन् सरसि सुरसा ये सोमा इन्द्रायाभिषूयन्ते। ते अस्माकमभिमत-फलं ददात्विति वक्ष्यमाणेन सम्बन्धः॥ १॥

१ २ ३ १ २ ३ १ २ ३ १ ३ २ ३ क २ र
य आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानाम्।

३ १ २ १ २ ३ १ २
ये वा जनेषु पञ्चसु ॥२॥

अथ द्वितीया। "ये" वा सोमाः "आर्जीकेषु" ऋजीकानामदूरभवाः आर्जीका देशास्तेषु तथा "कृत्वसु" कृत्वान इति देशाभिधानम्, तेषु कर्मवत्सु देशेषु च; किञ्च "पस्त्यानां" सरस्वत्यादीनां नदीनां "मध्ये" समीपे च ये सोमा अभिषूयन्ते "ऋषयो वै सरस्वत्यां सत्रमासतेत्यादिषु नदीतीरे यज्ञकरणस्य श्रवणात्; किञ्च "जनेषु पञ्चसु" निषाद-पञ्चमाश्चत्वारो वर्णाः पञ्चजनास्तेषु च "ये वा" सोमा अभिषुताः। ते सोमा अस्माकमभिमत-फलं ददात्वित्युत्तरेण सम्बन्धः॥२॥

१ २ ३ १ २ ३ २ १ २ ३ १ २ ३ १ २ ३ १ २
ते नो वृष्टिं दिवस्परि पवन्तामा सुवीर्य्यम्।

१ २ ३ २ ३ १ २
स्वाना देवास इन्दवः ॥३॥ [११]

अथ तृतीया। "स्वानाः" सुवानाः तत्र चाव अभिपूयमाणाः "देवासः" देवाः दीपनशीलाः स्तुत्या वा "इन्दवः" "प्रष्टेषु" चमसेषु चरन्तः, "ते" सोमाः "नः" अस्माकं "दिवस्परि" परि-शब्दः पञ्चमी-द्योतकः, अन्तरिक्षादादित्याद्वा "वृष्टिम्" "अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते। आदित्याज्जायते वृष्टिः (म० १ अ०)"—इति वृष्टि-कारणत्वात् किञ्च "सुवीर्य्यम्" शोभन-वीर्य्योपेतम् पुत्रञ्च धनादिकं वा "आ पवन्ताम्" प्रापयन्तु। यजमानः सोमेनाभिमतफलानि प्राप्नोति खलु ॥

"स्वानाः"-"सुवानाः"—इति पाठौ ॥ ३ ॥ [११]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य पञ्चमः खण्डः ॥५॥

---

२ १ २ १ १२ ३ १ २ ३ १ २
आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात्।

१ २ २ १ २ ३ २
अग्ने त्वां कामये गिरा ॥१॥

ऋ० वत्सः। छ० गायत्री। दे० अग्निः। अथ षष्ठे खण्डे आतेवत्सइति दृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। हे "अग्ने!" "वत्सः" ऋषिः "ते" तव "मनः" "परमाच्चित्" उत्कृष्टादपि "सधस्थात्" द्युलोकात् "आ यमत्" आयमन्ति आगमयन्ति। केन साधनेन? "त्वा" "कामये" कामया अभिलपन्त्या "गिरा" स्तुत्या "कामये"—इत्यत्रापि शेषं पूर्ववत्। यद्वा त्वां कामये अभिलषामि ॥

"-"कामया"—इति पाठौ ॥ १ ॥

३ २उ ३ २उ ३ २ ३ २ ३ १ २ ३ १
पुरुत्रा हि सदृङ्ङसि दिशो विश्वा अनु प्रभुः।
३ १ २
समत्सु त्वा हवामहे ॥*२*॥

अथ द्वितीया। हे अग्ने! "पुरुत्रा हि" बहुषु हि देशेषु त्वं "सदृङ् असि" समान-द्रष्टा भवसि अतएव "विश्वाः" सर्वा दिश "अनु" लक्ष्य "प्रभुः" ईश्वरो भवसि। ईदृशं "त्वा" त्वां "समत्सु" संग्रामेषु रक्षणार्थं "हवामहे" आह्वयामहे॥

"दिशः"-"विदिशः"—इति पाठौ॥ २॥

१ ० १ १ २र ३ १ २
समत्स्वग्निमवसे वाजयन्तो हवामहे।
१ १ ३ १ २
वाजेषु चित्रराधसम्॥*३*॥ [१२]

अथ तृतीया। "समत्सु" समदेषु संग्रामेषु "वाजयन्तः" बलमिच्छन्तो वयम् "अवसे" रक्षणार्थम् "अग्निं हवामहे।" कीदृशम्? "वाजेषु" संग्रामेषु "चित्रराधसम्" याचनीय-धनम्॥ ३॥ [१२]

१ २ ३ १ २ ३ १ २ ३ १ २
त्वं न इन्द्रा भर ओजो नृम्णꣳ शतक्रतो विचर्षणे।
२ ३ १ २ ३ १ २
आ वीरं पृतनासहम्॥*१*॥

ऋ० नृमेधः। छ० गायत्री। दे० इन्द्रः। अथ द्वितीय-तृचे—प्रथमा। हे "शतक्रतो!" बहुकर्मन्! "विचर्षणे" विद्रष्टः इन्द्र! त्वं "नः" अस्मभ्यम् "ओजः" बलं "नृम्णं"

धनं च "आ भर" आहर। "वीरं" वीर्योपेतम् "पृतनासहं" सेनानामभिभवितारं त्वाम् "आ" याचामहे इति शेषः॥

"आभरओजः"-"आहृतामोजः"—इति पाठौ॥ १॥

१ २र ३ १ १ २ २ ३ १ २ ३ १ २

त्वꣳ हि नः पिता वसो त्वं माता शतक्रतो बभूविथ।

१ २ ३ १ २

अया ते सुम्नमीमहे ॥*२*॥

अथ द्वितीया। हे "वसो!" वासयितः! "शतक्रतो!" बहुकर्मन्निन्द्र! त्वं "नः" अस्माकं "पिता" पितृवत् पालको "बभूविथ" भव। "त्वं" "माता" मातृवद्धारकश्च बभूविथ। अथ च वयं "ते" तव सम्भूतं "सुम्नं" सुखम् "ईमहे" याचामहे॥ २॥

१ २ ३ २ ३ १ २

त्वाꣳ शुष्मिन्पुरुहूत वाजयन्तमुप ब्रुवे सहस्कृत।

१ २ ३ १ २

स नो रास्व सुवीर्य्यम् ॥*३*॥ [१२]

अथ तृतीया। सहसा बलेन स्तोतृभिर्युक्तः अतः सहस्कृतः हे "सहस्कृत!" इन्द्र! स्तुत्या हि देवताया बलं वर्द्धते, तस्य सम्बोधनम्—"शुष्मिन्" अतएव बलवन्! "पुरुहूत"! पुरुभिर्बहुभिर्यजमानैराहूतेन्द्र! "वाजयन्तं" बलमिच्छयन्तं त्वाम् "उपब्रुवे" उपस्तौमि। "सः" त्वं "नः" अस्मभ्यं "सुवीर्य्यं" धनं "रास्व" देहि॥

"सहस्कृत"-"शतक्रतो"—इति पाठौ॥ ३॥ [१२]

१ २ १ २उ १ २ १

यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः।

२ ३ १ २ ३ १ २
राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥*१*॥

ऋ० भौमः अत्रिः। छ० अनुष्टुप्। दे० इन्द्रः। अथ तृतीयतृचे—प्रथमा। हे "अद्रिवः!" वज्रवन्! "चित्र"! चायनीयेन्द्र! "त्वादातं" त्वया दातव्यं यद्धनं "मे" मम "इह" अस्मिंल्लोके "नास्ति", हे "विदद्वसो!" लब्धधनेन्द्र! "नः" अस्मभ्यम् "उभया हस्तौ" उभाभ्यां हस्ताभ्यां तद् "राधः" "आभर" आहर॥

"मह्य"-"मेहना"—इति छन्दोगानां बह्वृचानां पाठौ ॥१॥

१ २८२ १२३ १२ ३१ २र
यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर।

३ २ ३ १२ ३१ २र ३१२
विद्याम तस्य ते वयमकूपारस्य दावनः ॥*२*॥

अथ द्वितीया। हे इन्द्र! "यत्" "द्युक्षम्" अन्नं "वरेण्यं" वरणीयं "मन्यसे" "तत्" द्युक्षम् "आभर" अस्मभ्यम्। "ते", तव सम्बन्धिनो "वयं" "तस्य" तादृशस्योक्तलक्षणस्य "अकूपारस्य" अकुत्सितः पारो अन्तो यस्य तादृशस्यान्नस्य "दावनः" दानस्य "विद्याम" स्याम॥

"दावनः"-"दावने"—इति पाठौ ॥ २ ॥

१२ ३२ ३१२ ३३ १२ ३१२१
यत्ते दित्सु प्रराध्यं मनो अस्ति श्रुतं बृहत्।

३१२१ २ ३१ २र ३१२
तेन दृढ़ा चिदद्रिव आ वाजं दर्षि सातये ॥*३*॥ [१४]

इति चतुर्थः प्रपाठकः।

अथ तृतीया। हे इन्द्र! "ते" तव "दित्सु" "प्रराध्यं"

प्रकर्षेण स्तुत्यं "श्रुतं" "बृहत्" महत् यत् "मनः" "अस्ति", "तेन" मनसा हे "अद्रिवः!" वज्रवन्निन्द्र! "इदाचित्" इदमपि "वाजम्" अन्नम् "आ दर्षि" आदारयसि, "सातये" अस्मत्सम्भजनाय लाभाय वा ॥

"दिद्यु"-"दिद्युत्"—इति पाठौ ॥ ३ ॥ [१४]

इति सामवेदार्थप्रकाशे उत्तरग्रन्थस्य अष्टमस्याध्यायस्य षष्ठः खण्डः।

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ८ ॥

इति श्रीमद्राजाधिराज परमेश्वर वैदिकमार्गप्रवर्तक श्रीवीरबुक्क भूपाल-साम्राज्य धुरन्धरेण मायणाचार्येण विरचिते माधवीये साम-वेदार्थ प्रकाशे उत्तरग्रन्थे अष्टमोऽध्यायः ॥ ८ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ९ ॥

अथ पञ्चमः प्रपाठकः।

नवमोऽध्याय आरभ्यते।

१ २   ३ १   २ ३ १ २
शिशुं जज्ञानꣳ हर्यतं मृजन्ति
३ २   ३   १ २ ३ १ २   ३ १ २
शुम्भन्ति विप्रं मरुतो गणेन।
३ २ ३ २   २र   ३ १   २र
कविर्गीर्भिः काव्येन कविः सन्त्सोमः
३ २ ३ १ २ ३   १ २
पवित्रमत्येति रेभन् ॥ *१* ॥

ऋ० प्रतर्दनः । छ० त्रिष्टुप् । दे० सोमः । तत्र, शिशुं-जज्ञानमिति प्रथम-खण्डे तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा । "शिशुम्" इदानीमुत्पन्नत्वाच्छिशुवत्तिष्ठन्तम् यद्वा, पापान्वित-मकुर्वन्तं विनाशयन्तम् "जज्ञानम्" प्रादुर्भूतम् अतएव "हर्य्यतं" हर्य्य गतिकान्त्योः (भ्वा० प० )। भृमृ-दृशीत्यादिना अतच् । सर्वैः काम्यमानं सोमं "मृजन्ति" मरुतः शोधयन्ति । किञ्च "विप्रं" मेधाविनं सोमं "गणेन" आत्मीयेन समसङ्ख्याकेन "शुम्भन्ति" अलङ्कुर्वन्ति । ततः "कविः" क्रान्तप्रज्ञः सोमः "काव्येन" कवि-कर्मणैव "कविः" शब्दयितव्यः सन् शब्दायमानः "गीर्भिः" स्तुतिभिः सह "पवित्रम्" "अत्येति" अतीत्य गच्छति ॥

"विप्रम्"—इति छन्दोगाः, "वह्निम्"—इति बह्वृचाः पठन्ति ॥ १ ॥

१ २ २ १ २ २ २ १ २
ऋषिमना य ऋषिकृत्स्वर्षाः

१ १ २ १ १ २ १ १
सहस्रनीथः पदवीः कवीनाम् ।

२ १ २ १ २ २ १ १२ २ १
तृतीयं धाम महिषः सिषासन्त्सोमो

१ २ १ २ १ २ २ १
विराजमनु राजति ष्टुप् ॥*२*॥

अथ द्वितीया । "ऋषिमनाः" सर्वदर्शनशीलमनस्कः, अतएव "ऋषिकृत्" सर्वस्य दर्शनकर्त्ता प्रकाशनस्य कर्त्ता "स्वर्षाः" सर्वस्य सूर्य्यस्य वा सम्भक्ता "सहस्रनीथः" नीथा स्तुतिः बहुविध-स्तुतिकः "कवीनां" क्रान्त-प्रज्ञानां मध्ये

"पदवीः" स्खलितानां पदानां साधुत्वेन संयोजयिता यः सोमो विद्यते स "महिषः" महान् पूज्यो वा सोमः "तृतीयं धाम" द्युलोकं "सिषासन्" सम्भक्तुमिच्छन् "स्तुप्" स्तूयमानः सन् "विराज" विशेषेण राजन्तं दीप्यमानमिन्द्रम् "अनुराजति" प्रकाशयति ॥ २ ॥

२ २ २१ २१२ २१२
चमूषच्छ्येनः शकुनो विभृत्वा

२ २२ १ २र २ १२
गोविन्दुर्द्रप्स आयुधानि बिभ्रत् ।

२ १२ १ २र २२ ३२३
अपामूर्मिं सचमानः समुद्रं तुरीयं

१ २ ३१ २
धाम महिषो विवक्ति ॥*३*॥ [१]

अथ तृतीया। "चमूषत्" चमन्ति भक्षयन्त्यत्रेति चम्वः चमसास्तेषु सीदन् यद्वा, चम्वौ अधिषवणफलके तयोर्वर्त्तमानः "श्येनः" शंसनीयः "शकुनः" शक्तेः सामर्थ्यकारी "विभृत्वा" हरतेरातोमनिन्क्वनिब्विचश्चेत्यादिना ( ३, २, ७४ ) क्वनिप् पात्रेषु विहरणशीलः "गोविन्दुः" यजमानानां गवां लम्भकः विन्दुरिच्छुरिति उ प्रत्ययान्तत्वेन निपातितः "द्रप्सः" धारयन् "अपाम्" उदकानाम् "ऊर्मिं" प्रेरकं "समुद्रम्" अन्तरिक्षनामैतत् ( निघ० १, ३ ) अन्तरिक्षं "सचमानः" सेवमानः "महिषः" महान् य एवंविधः सोमः स "तुरीयं" चतुर्थं धाम चान्द्रमसं स्थानं "विवक्ति" सेवते सूर्य्यलोकस्योपरि चन्द्रमसो लोको विद्यत इति यमः पृथिव्या अधिपतिः समावर्त्ति-

त्यादिभिः चन्द्रमा नक्षत्राणामधिपतिः समावत्वित्यमन्त्रैर्मन्त्रे-
प्रयिते ॥ २ ॥ [१]

२ १ २र ३ २ ३ १ २र ३ १ २
एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन् ।

१ २ ३क २र
वर्धन्तो अस्य वीर्य्यम् ॥ १ ॥

ऋ० असित-देवलौ । छ० गायत्री । दे० सोमः । एते-
सोमा इति नवर्चे द्वितीय सूक्ते, तत्र प्रथमा । "एते" अभि
षुता इमे सोमाः "अस्य" इन्द्रस्य "वीर्य्यं" शक्तिं "वर्द्धन्तः"
वर्द्धयन्तः "इन्द्रस्य" "कामं" काम्यं "प्रियं" प्रीतिकरं "सम-
भ्यक्षरन्" अभ्यवर्षन् अभिपवन्ते ॥ १ ॥

२ १ २ ३ २ ३ १ २ ३ २ ३ १ २
पुनानासश्चमूषदो गच्छन्तो वायुमश्विना ।

१ २ ३ १ २
ते नो धत्त सुवीर्य्यम् ॥ २ ॥

अथ द्वितीया । हे सोमाः । "पुनानास." पुनाना
अभिषूयमाणाः "चमूषदः" चमसेषु सीदन्त गच्छन्तः
"वायुम्" "अश्विना" अश्विनौ च "गच्छन्तः" प्राप्नुवन्तः ते
यूयं "नः" अस्मभ्यं "सुवीर्य्यं" शोभन-वीर्य्यं "धत्त" प्रय-
च्छत ॥

"धत्त"-"धान्तु"—इति पाठौ ॥ २ ॥

२ १ ३ १ २ ३ १ २र
इन्द्रस्य सोम राधसे पुनानो हार्दि चोदय ।

१ २ ३ १ २ ३ १ २
देवानां योनिमासदम् ॥ ३ ॥

अथ तृतीया। हे सोम! "पुनानः" पूयमानस्त्वं "राधसे इन्द्रस्य" इन्द्रस्य संराधनाय "हार्दि"—इति हृदय-सम्बन्धि स्थानं "चोदय" प्रेरय। अहमपि "देवानामृ इन्द्रादीनां "योनिं" स्वर्गाख्यं स्थानम् "आसद" प्राप्तवान् यद्वा, देवानां यजन-साधनं यज्ञाख्यं स्थानं प्राप्तवानस्मि॥

"देवानाम्"-"ऋतस्य"—इति पाठौ॥ ३॥

२ १ ० ३ २३ १ २ ३ १ २ ३२ ३१२
मृजन्ति त्वा दश क्षिपो हिन्वन्ति सप्त धीतयः।

२३ १२
अनु विप्रा अमादिषुः॥*४*॥

अथ चतुर्थी। हे सोम! "त्वा" त्वां "दश" दशसङ्ख्याकाः "क्षिपः" अङ्गुलिनामैतत् (२, ५, ३,) अङ्गुलयः "मृजन्ति" शोधयन्ति। ततः "सप्त" सप्तसङ्ख्याकाः "धीतयः" होत्रकाय त्वां "हिन्वन्ति" स्व स्व व्यापारैः प्रीणयन्ति। तथा "विप्राः" मेधाविनः स्तोतारश्च त्वाम् "अनु अमादिषुः" अनुमादयन्ति॥ ४॥

३१२ ३ १ २ ३ १ २ ३ १ २र १क २र
देवेभ्यस्त्वा मदाय कꣳ सृजानमति मेष्यः।

१ २र
सं गोभिर्वासयामसि॥*५*॥

अथ पञ्चमी। हे सोम! "कं" सुखभूतं "त्वा" त्वां "देवेभ्यः" देवानां "मदाय" मदार्थं "गोभिः" गोविकारैः पयोभिः "सवासयामः" सञ्छादयामः। कीदृशम्? "मेष्यः" अवेर्लोमानि दशापवित्ररूपेण "अति सृजानम्" अत्यन्तं सृजन्तं दशापवित्ररूपेषु अवेर्लोमसु वर्त्तमानमित्यर्थः॥ ५॥

१ २ ३ २ ३ १ २ २र ३ १ २र
पुनानः कलशेष्वा वस्त्राण्यरुषो हरिः।

२ ३ १ २
परि गव्यान्यव्यत ॥*६*॥

अथ षष्ठी। "पुनानः" पूयमानः "कलशेषु" द्रोणकलशेषु आसिच्यमानः "अरुषः" आरोचमानः "हरिः" हरितवर्णः सोमः "गव्यानि" गो-सम्बन्धीनि पयःप्रभृतीनि "वस्त्राणि" वासांसि "परि अव्यत" पर्याच्छादयति ॥ ६ ॥

१ २ १ १ २ ३ २उ १ २ ३ १ २
मघोन आ पवस्व नो जहि विश्वा अप द्विषः।

१ २ १ २ ३ १ २
इन्दो सखायमा विश ॥*७*॥

अथ सप्तमी। हे "इन्दो" सोम! "मघोनः" धनवतः "नः" अस्मान् "आ" आभिमुख्येन "पवस्व" क्षर। "विश्वा" विश्वान् "द्विषः" द्वेष्टॄन् "अप जहि" मारय च "सखायं" मित्रभूतमिन्द्रम् "आविश" प्राप्नुहि ॥ ७ ॥

१ १ २ २ १ २र २ १ २
नृचक्षसं त्वा वयमिन्द्रपीतꣳ स्वर्विदम्।

१ १ २ ३ १ २र
भक्षीमहि प्रजामिषम् ॥*८*॥

अथाष्टमी। हे सोम! "नृचक्षसं" नृणां द्रष्टारं "स्वर्विदं" सर्वज्ञम् "इन्द्रपीतं" त्वा सेवमाना वयं "प्रजां" पुत्रादिकाम् "इषम्" अन्नञ्च "भक्षीमहि" भजेम ॥ ८ ॥

२ १ ३ १ २र ३ १ २ ३ १ २र
वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्या अधि।

१ २ ३ १ २
सह्रो नः सोम पृत्सु धा. ॥ ९ ॥ [२]

अथ नवमी। हे "सोम।" त्वं "दिव" द्युलोकाद् "वृष्टिं" वर्षं "परिस्रव" परितो वर्षं, "पृथिव्या अधि" अधीति सप्तम्यर्थानुवादो "द्युम्नम्" अन्नञ्च-उत्पादयेति शेषः। "नः" अस्माकं "सह" बलं "पृत्सु" संग्रामेषु "धा" धेहि ॥९॥ [२]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

१ २ २ १ २ ३ १ २ १ १ २
सोम पुनानो अर्षति सहस्रधारो अत्यविः।

२ १ २ ३ २ २
वायोरिन्द्रस्य निष्कृतम् ॥ १ ॥

ऋ० असित देवलौ। छ० गायत्री। दे० सोमः। अथ द्वितीये खण्डे—सोम पुनान इति नवर्चं सूक्तम्, तत्र प्रथमा। अयं "पुनानः" पावकः "सोमः" "अर्षति" गच्छति। कीदृशोऽयम्? "सहस्रधारः" अपरिमितधारः "अत्यविः" अवि अव्दन तल्लोमान्युच्यन्ते, अवेर्लोमभिर्निष्पादितं दशापवित्रमित्यर्थः, तदतिक्रम्य गच्छतीत्यत्यविः। किमर्थम्? "वायोः" "इन्द्रस्य" च पानायेति शेषः। किम्प्रति? "निष्कृतम्" निरत्नेपं समित्येतन्मिश्चर्यं संस्कृतं पात्रं प्रति ॥ १ ॥

१ २ २ १ २ ३ १ २ २
पवमानमवस्यवो विप्रमभि प्र गायत।

१ २ ३ १ २
सुष्वाणं देववीतये ॥ २ ॥

अथ द्वितीया। हे "अवस्यवः" रक्षणकामाः! उद्गा

वादयो यूयं "पवमानं" शोधकं "विप्रं" विशेषेण देवानां प्रीणयितारं विप्रवद् बुद्धं वा अथवा विप्रइति मेधाविनामसु (निघ० ३, १५,१,) मेधाविनम् "देववीतये" देवपानाय "सुष्वाणम्" अभिषूयमाणं सोमम् "अभि" आभिमुख्येन "प्रगायत" प्रकर्षेण स्तुत ॥ २ ॥

१ २ ३ १ २ ३ १ २ ३ १ २
पवन्ते वाजसातये सोमाः सहस्रपाजसः ।

३ २ ३ १ २
गृणाना देववीतये ॥ ३ ॥

अथ तृतीया। "पवन्ते" क्षरन्ति "सोमाः"। किमर्थम्? "वाजसातये" अन्नस्य लाभाय। कीदृशाः? "सहस्रपाजसः" बहुबलाः नृणां बलप्रदा इत्यर्थः "गृणानाः" कर्मणि कर्त्तृप्रत्ययः (३, १, ८५) स्तूयमानाः। पुनः किमर्थम्? "देववीतये" देवानां वीतिर्गतिः प्राप्तिलक्षणं वा यस्मिन् स देववीतिः यज्ञः, तदर्थम् यज्ञसिद्धिः साक्षात् प्रयोजनं तद्द्वारा वाज-लाभ इति ॥ ३ ॥

१ २ ३ १ २ ३ १ २ ३ १ २र
उत नो वाजसातये पवस्व बृहतीरिषः ।

३ १ २ ३ १ २
द्युमदिन्दो सुवीर्य्यम् ॥ ४ ॥

अथ चतुर्थी। हे "इन्दो"! "द्युमत्" दीप्तिमत् "सुवीर्य्यं" शोभन-वीर्य्यं सामर्थ्यञ्च "पवस्व" क्षर, शोभन-सामर्थ्योपेता धाराः पवस्वेत्यर्थः। "उत" अथवा "नः" अस्माकं "वाजसातये" सङ्ग्रामाय "बृहतीः" "इषः" द्युमत् सुवीर्य्यं सम्पादयितुं पवस्वेति योज्यम् ॥ ४ ॥

१ २ ३ २उ ३ २ ३ १ २ ३ १ २
अत्या हियाना न हेतृभिरसृग्रं वाजसातये ।
२उ ३ १ २ ३ १ २
वि वारमव्यमाशवः ॥*५*॥

अथ पञ्चमी। "वाजसातये" संग्रामाय "हियानाः" प्रेर्यमाणाः "अत्याः" शीघ्रं धावन्ति तद्वत् "हेतृभिः" प्रेरकैः प्रेर्यमाणाः "आशवः" शीघ्रगामिनः सोमाः "वाजाय" अन्नलाभाय "अव्यं" "वारं" वालं दशापवित्रं "अत्यसृग्रम्" व्यतिसृजन्ते ॥ ५ ॥

१ २ ३ १ २ ३ १ ३२३ २ ३ १ २
ते नः सहस्रिणंᳪ रयिं पवन्तामा सुवीर्य्यम् ।
२ ३ २ ३ १ २
स्वाना देवास इन्दवः ॥*६*॥

अथ षष्ठी। "ते" "इन्दवः" सोमाः "नः" अस्माकं "सहस्रिणं" सहस्रसङ्ख्यायुक्तं "रयिं" धनं "सुवीर्य्यं" च "आ पवन्ताम्"। कीदृशास्ते ? "स्वानाः" सुवानाः स्तूयमानाः "देवासः" द्योतनादि-गुणकाः ॥

"सानाः"-"सुवानाः"—इति पाठौ ॥ ६ ॥

१ २ ३ २ ३ १ २ ३ २ ३ २उ ३ १ २
वाश्रा अर्षन्तीन्दवोऽभि वत्सं न मातरः ।
२ ३ २र
दधन्विरे गभस्त्योः ॥*७*॥

अथ सप्तमी। "वाश्राः" शब्दयन्तः "इन्दवः" सोमाः "अभ्यर्षन्ति" पात्रं प्रति। वाश्राः शब्दकारिण्यो "मातरः" मातृ-

भूता गावः "वत्सं न" वत्सं यथा प्रत्यागच्छन्ति तद्वत् तएव "गभस्त्योः" बाह्वोः "दधन्विरे" ध्रियन्ते च ॥

मातरः"-"धेनवः"—इति पाठौ ॥ ७ ॥

१ २ १ २ २ १ २र २ १ २
जुष्ट इन्द्राय मत्सरः पवमानः कनिक्रदत्।

१ २ २ २ २ २
विश्वा अप द्विषो जहि ॥*८*॥

अथाष्टमी। "इन्द्राय" "जुष्टः" पर्य्याप्तः सोमो भवतीति शेषः। "मत्सरः सोमः मन्दतेः तृप्तिकर्म्मणः"—इति निरुक्तम् "पवमानः" पूयमानः तादृशः सोमः "कनिक्रदत्" "विश्वाः द्विषः" सर्वानस्माकं द्वेष्टॄन् "अप जहि" ॥

"पवमानः"-"पवमाना"—इति पाठौ ॥ ८ ॥

३ १ २ १ २ २ १ २ २ १ २
अपघ्नन्तो अराव्णः पवमानाः स्वर्दृशः।

१ २ ३ १ २
योनावृतस्य सीदत ॥*९*॥ [३]

अथ नवमी। हे "पवमानाः!" "अराव्णः" अदानान् यजमानाम् "अपघ्नन्तः" हिंसन्तः "स्वर्दृशः" सर्वस्य द्रष्टारश्च यूयम् "ऋतस्य योनौ" यज्ञस्य स्थाने "सीदत"। अथ सोम-पानार्थमुत्तलक्षणा देवा ऋतस्य योनौ सीदतेति योज्यम् ॥ ९ ॥ [ ३ ]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

१ २ २ १ २ ३ २ २ २ २ १ २
सोमा असृग्रमिन्दवः सुता ऋतस्य धारया।

विद्वान् सोमः "गौरी अधि" गौर्य्यामधि अधीति सप्तम्यर्थानुवादः, माध्यमिकायां वाचि गौरी गान्धर्वीति वाङ्नामैतत् ( निघ० १,११,५-६ ) "श्रितः" निवसति ॥ ३ ॥

२ १ २र २ २ १ १ २
दिवो नाभा विचक्षणोऽव्यावारे महीयते।

२ १ २ १ १ २ २ २
सोमो यः सुक्रतुः कविः ॥*४*॥

अथ चतुर्थी। "यः" "सुक्रतुः" सुप्रज्ञः "कविः" क्रान्तकर्मा "विचक्षणः" विद्रष्टा स "सोमः" "दिवः" अन्तरिक्षस्य "नाभा" नाभौ नाभिभूते "अव्याः" अवेः "वारे" वाले "महीयते" पूज्यते ॥ ४ ॥

१ २र २ १ २ २ १ २ २ २ ३ १ २
यः सोमः कलशेष्वा अन्तः पवित्र आहितः।

२उ १ १ २
तमिन्दुः परि षस्वजे ॥*५*॥

अथ पञ्चमी। "यः" सोमः "कलशेषु" कुम्भेषु आस्ते, यश्च "पवित्रे" पवित्रस्य "अन्तः" मध्ये "आ हितः" निहितः, "तं" त्वामंशभूतं सोमम् "इन्दुः" तदभिमानो यो देवः "परिषस्वजे" प्रविशति ॥ ५ ॥

२उ ३ १ २ ३ १ २र ३ १ २
प्र वाचमिन्दुरिष्यति समुद्रस्याधि विष्टपि।

२ ३ १ २ ३ १ २
जिन्वन् कोशं मधुश्चुतम् ॥*६*॥

अथ षष्ठी। "इन्दुः" सोमः उन्दी क्लेदने ( रु० प० )— इत्यस्य रूपम् क्लेदनवांश्च "मधुश्चुतं" मधुनश्च्यावकं द्रोण-

कलशं "जिन्वन्" प्रीणयन् पूरयन्नित्यर्थः। समुद्रस्यान्तरिक्षस्य "अधिविष्टपि" विष्टपे स्थाने "वाचं" "प्रेष्यति" प्रेरयति ; पवित्रे पूयमानः शब्दं करोतीत्यर्थः ॥ ६ ॥

१ २ २ २ ३ १ २ ३ २ ३ १ २ ३ १ २
नित्यस्तोत्रो वनस्पतिर्धेनामन्तः सबर्दुघाम् ।

३ १ ३२ ३ १
हिन्वानो मानुषा युजा ॥१०७०॥

अथ सप्तमी। "नित्यस्तोत्रः" सन्ततस्तोत्रः "वनस्पतिः" वनानां स्वामी, सोमः "मानुषा" मानुषाणि "युजा" युक्तानि अहोनैकाहात्मकानि "हिन्वानः" प्रीणयन् "सबर्दुघाम्" अमृतसदृशानि प्रियवचनानि दोग्ध्रीम् "अन्तः" स्तोतॄणां मध्ये स्थितां "धेनां" स्तुतिरूपां वाचं स्थापयितेति शेषः ॥ धेनामन्तःसबर्दुघाम्"—"धीनामन्तःसबर्दुघः"—इति पाठौ ॥ ७ ॥

१ २ ३ १ २ १ २
आ पवमान धारय रयिꣳ सहस्रवर्चसम् ।

३ १ २ ३ १ २
अस्मे इन्दो स्वाभुवम् ॥१०७१॥

अथाष्टमी। हे "पवमान" ! पूयमान ! पुनान ! वा "इन्दो" ! सोम ! त्वं "सहस्रवर्चसं" बहुदीप्तिं "स्वाभुवम्" शोभन भवनं "रयिं" धनम् "अस्मे" अस्मासु "धारय" प्रक्षिपेत्यर्थः ॥ ८ ॥

३ १ २ ३ १ २ ३ १२ ३ २ ३२ ३ १
अभि प्रिया दिवः कविर्विप्रः स धारया सुतः ।

१ २ ३ १-२

सोमो हिन्वे परावति ॥*९*॥ [४]

अथ नवमी। "कविः" क्रान्तकर्मा, "सुतः" अभिषुतः, सोमः "परावति" विप्रकृष्टे देशे स्थितः सन् "विप्रः" मेधावी "न" "धारया" स्वस्य धारया "दिवः" द्युलोकस्य "प्रिया" प्रियाणि स्थानानि "अभि" लक्ष्य "हिन्वे" प्रेरयति ॥

"दिवःकविः" "दिवस्पतिः"—इति पाठौ, "हिन्वेपरावति" "हिन्वेपरानो अर्षति"—इति च, "सुतः" "कविः"—इति च ॥ ९ ॥ [४]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य तृतीयः खण्डः।

---

२ ३ १ २ ३ १ २ ३ १ २ ३ २

उत्ते शुष्मास ईरते सिन्धोरूर्मेरिव स्वनः।

३ १ २ ३ २

वाणस्य चोदया पविम् ॥*१*॥

ऋ० जमदग्निः। छ० गायत्री। दे० सोमः। अथ उत्ते-शुष्मासइति चतुर्थे खण्डे—विद्यमानं पञ्चर्चं सूक्तं, तत्र प्रथमा। हे सोम! "ते" तव "शुष्मासः" शुष्मा वेगाः "उत् ईरते" उद्गच्छन्ति। तत्र दृष्टान्तः—"सिन्धोः" समुद्रस्य "ऊर्मेरिव" यथा तरङ्गात् "स्वनः" ध्वनिः उद्गच्छति तद्वत्। स त्वं "वाणस्य" विस्पष्टस्य नादस्य शततन्त्रीकस्य वीणा-विशेषस्य "पविं" शब्दनामैतत् (निघ० १, ११) शब्दं "चोदय" प्रेरय, वेगेन स्यन्दमानस्त्वं विस्पष्ट-वाण शब्द-सदृशं शब्दं कुर्वित्यर्थः ॥ १ ॥

२ २ २ १ २ २ १ २र २ १ २
प्रसवे त उदीरते तिस्रो वाचो मखस्युवः ।
२उ २ २ २ १ २
यदव्य एषि सानवि ॥ २ ॥

अथ द्वितीया। हे सोम! "ते" तव "प्रसवे" सति "मखस्युवः" यज्ञमिच्छतो यजमानस्य "तिस्रो वाचः" ऋग्यजुःसामात्मकानि त्रीणि वाक्यानि "उदीरते" उद्गच्छन्ति। कदेत्यत आह—"यद्" यदा "सानवि" उच्छ्रिते "अव्ये" अविमये पवित्रे पवित्रम् "एषि" गच्छसि ॥ २ ॥

२ २ २ १ १ २ ३१ २र २ १ २
अव्या वारैः परि प्रियꣳ हरिꣳ हिन्वन्त्यद्रिभिः ।
१ २ २ १ २
पवमानं मधुश्चुतम् ॥ ३ ॥

अथ तृतीया। "प्रियं" देवानां प्रीतिकरं "हरिं" हरितवर्णं "अद्रिभिः" ग्रावभिः अभिषुतं "मधुश्चुतं" मधुनो रसस्य च्यावयितारं "पवमानं" सोमम् "अव्याः" अवेः "वारैः" वालैः "परि हिन्वन्ति" ऋत्विजः परिप्रेरयन्ति ॥ ३ ॥

१ १ २ ३ २ १ १
आ पवस्व मदिन्तम पवित्रं धारया कवे ।
२ १ ३ १ २३ १ २
अर्कस्य योनिमासदम् ॥ ४ ॥

अथ चतुर्थी। हे "मदिन्तम!" मादयितृतम! "कवे"! क्रान्तकर्मन्! सोम! "अर्कस्य" अर्चनीयस्य इन्द्रस्य "योनिम्" उदरभूतं स्थानम् "आसदं" प्राप्तुं "पवित्रम्" अतीत्य "धारया" सम्पातेन "आ पवस्व" आभिमुख्येन क्षर ॥ ४ ॥

१ २     २ ३१ २   २ २ २१ २
स पवस्व मदिन्तम गोभिरञ्जानो अक्तुभिः ।

१ २   २ १ २
एन्द्रस्य जठरं विश ॥१५॥ [५]

अथ पञ्चमी। हे 'मदिन्तम!' मादयितृतम! सोम! "अक्तुभिः" अञ्जनसाधन भूतैः "गोभिः" गोविकारैः पयोभिः "अञ्जानः" अज्यमानः संस्तूयमानः स त्वं "पवस्व" चरत। "अनन्तरम्" "इन्द्रस्य" "जठरम्" उदरम "आविश" प्रविश॥ "एन्द्रस्य जठरं विश"—"इन्द्र इन्द्राय पीतये"—इति पाठौ ॥ ५ ॥ [५]

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

१ २  ३ १   २र  ३ १ २   ३ २३ २
अया वीती परि स्रव यस्त इन्दो मदेष्वा ।

२ १. ७  २ १  २र
अवाहन्नवतीर्नव ॥१॥

ऋ० असहीयुः। छ० गायत्री। दे० सोमः। अथ पञ्चमखण्डे—अयावीतीति तृचात्मकम् प्रथमं सूक्तम्, तत्र प्रथमा। हे "इन्दो!" सोम! "अया" अनेन रसेन "वीती" वीत्यै इन्द्रस्य भक्षणाय "परिस्रव" परिचर। कोदृशेन रसेनेत्यत आह—"ते" तव "यः" रसः "मदेषु" संग्रामेषु "नवतीर्नव" नवनवतिसङ्ख्याकाः शत्रुपुरीः "अवाहन्" जघान। इमं सोमरसं पीत्वा मत्तः सन्निन्द्र उक्तसङ्ख्याकाः शत्रुपुरीः जघानेति कृत्वा रसो जघानेत्युपचारः ॥ १ ॥

१ १ २ २ २ १ २२ १ २ २ ११
पुरः सद्य इत्थाधिये दिवोदासाय शम्बरम् ।

१ २ २ २ २२ १२
अध त्यं तुर्वशं यदुम् ॥*२*॥

अथ द्वितीया। "सद्यः" एकस्मिन्नेवाहनि "पुरः" शत्रूणां पुराणि सोमरसः अपाहन्। "इत्था धिये" सत्यकर्मणे "दिवोदासाय" राज्ञे "शम्बरं" शत्रु-पुराणां स्वामिनम् "अध" अथ अनन्तरं "त्यं" तं "तुर्वशं" तुर्वशनामानं राजानं दिवोदासशत्रुं "यदुम्" यदुनामकञ्च राजानमवाहन्। अत्रापि सोमरस पीत्वा मत्तः सन्निन्द्रः सर्वमेतदकार्षीदिति सोमरसे कर्तृत्वमुपचर्य्यते ॥ २ ॥

१ २ १ १ २ १ १ २र १ १ १
परि नो अश्वमश्वविद्गोमदिन्दो हिरण्यवत् ।

१ १ २ २ २ १ १
क्षरा सहस्रिणीरिषः ॥*३*॥ [६]

अथ तृतीया। हे सोम ! "अश्ववित्" अश्वस्य लम्भकः त्वं "नः" अस्माकम् "अश्वं" "गोमत्" गोयुक्तं "हिरण्यवत्" हिरण्योपेतं पश्वादि-धनञ्च "परि क्षर"। अपि च "सहस्रिणीः" बहूनि "इषः" अन्नानि क्षर ॥

"परिनः"-"परिणः"—इति पाठौ ॥ ३ ॥ [ ६ ]

२ १ २ २ २उ १ २ २ १२
अपघ्नन् पवते मृधोऽप सोमो अराव्णः ।

२ २ १ २ २ २
गच्छन्निन्द्रस्य निष्कृतम् ॥*१*॥

ऋ० असितः। छ० गायत्री। दे० सोमः। अथ

त्र्यचात्मके द्वितीय-सूक्ते—तत्र प्रथमा। "सोमः" "मृधः" हिंसकान् शत्रून् "अपघ्नन्" मारयन् "अरावणः" सतो सत्वां धनानामदातृं श्च "अव" घ्नन् "इन्द्रस्य" "निष्कृतं" स्थानं "गच्छन्" प्राप्नुवन् "पवते" धारया चरति ॥ १ ॥

१ २ २ १ २र३ १ २ २ १ २र
मह्रो नो राय आ भर पवमान जही मृधः।

१ २ ३ २३ १ २
रास्वेन्दो वीरवद्यशः ॥*२*॥

अथ द्वितीया। हे "पवमान!" "इन्दो"! सोम! "नः" अस्माकं "मह्रः" महान्ति "रायः" धनानि "आ भर" आहर "मृधः" हिंसकान् शत्रून् "जहि" मारय "वीरवत्" पुत्राद्युपेतं "यशः" कीर्त्तिञ्च "रास्व" अस्मभ्यं देहि ॥ २ ॥

१ २ ३२ ३ २७ २ ३ ३ १ २ ३ १ २
न त्वा शतं च न ह्रुतो राधो दित्सन्तमा मिनन्।

१ २३ १ २ ३ १ २
यत्पुनानो मखस्यसे ॥*३*॥ [७]

अथ तृतीया। हे सोम! "राधः" धनं दित्सन्तम्" आदातुमिच्छन्तं "त्वा" त्वां "शतञ्चन" बहवोऽपि "ह्रुतः" हिंसका शत्रवः "न आमिनन्" न हिंसन्ति। कदा? इत्यत्राह—"यद्" यदा "पुनानः" पूयमानः त्वं "मखस्यसे" धनं धातुमिच्छसि ॥ ३ ॥ [७]

२ १ २ २ १ २ ३ २ ३ २ ३ १ २
अया पवस्व धारया यया सूर्य्यमरोचयः।

१ २ ३र ३ २
हिन्वानो मानुषीरपः ॥*१*॥

ऋ० निध्रुविः। छ० गायत्री। दे० सोमः। अथ त्यृचात्मके तृतीय-सूक्ते—प्रथमा। हे सोम! "मानुषीः" मनुष्याणां हितानि "अपः" उदकानि "हिन्वानः" प्रेरयन् त्वं "यया" "धारया" "सूर्य्यम्" "अरोचयः" प्रकाशयसि तया "अया" अनया धारया "पवस्व" चर॥ १॥

१ २ ३ २ ३ १ २ ३ १ २ २ १ २र

अयुक्त सूर एतशं पवमानो मनावधि।

३ १ २ ३ १ २

अन्तरिक्षेण यातवे॥*२*॥

अथ द्वितीया। "पवमानः" पूयमानः सोमः "मनावधि" मनुर्मनुष्यस्तस्मिन् मनुष्य इत्यर्थः। "अन्तरिक्षेण" "यातवे" गन्तुं "सूरः" प्रेरकस्यादित्यस्य "एतशम्" अश्वनामैतत् ( निघ० १, १४, १० ) अश्वं "अयुक्त" युङ्क्ते॥ २॥

३ १उ २ १ २ ३२ ३२ ३ १ २

उत त्या हरितो रथे सूरो अयुक्त यातवे।

१ २ ३ २ १ २ ३ २

इन्दुरिन्द्र इति ब्रुवन्॥*३*॥ [८]

अथ तृतीया। "उत" अपि च "इन्दुः" सोमः "इन्द्र इति ब्रुवन्" "त्याः" तान् "हरितः" हरितवर्णान् अश्वान् "सूरः" सूर्य्यस्य "रथे" "यातवे" गन्तुम् "अयुक्त" युनक्ति॥

"रथे"-"दश"—इति पाठौ॥ ३॥ [८]

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य पञ्चमः खण्डः॥ ५॥

२ १ २ ३२३ १ २ ३ २ ३
अग्निं वो देवमग्निभिः सजोषा

१ २ ३१ २ ३ १ २
यजिष्ठं दूतमध्वरे कृणुध्वम् ।

१ ३र ३ १ २ ३ ३ ३ १ २ ३ १ २ ३ २
यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः
॥ *१ *॥

ऋ० वसिष्ठः । छ० त्रिष्टुप् । दे० अग्निः । अथ षष्ठे खण्डे—अग्निर्वदति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। हे देवाः ! "वः" यूयं "देवं" द्योतमानम् "अग्निम्" "अध्वरे" कौटिल्य रहिते यज्ञे "दूतं" कृणुध्वं" कुरुत। कीदृशम् ? "अग्निभिः" अन्यैः "सजोषा" सजोषसम् द्वितीयार्थे प्रथमा (३, १, ८५) "यजिष्ठं" यष्टृतमं "यः" अग्निः देवोऽपि सन् "मर्त्येषु" "निध्रुविः" नितरां ध्रुवस्तिष्ठति। कीदृशः ? "ऋतावा" यज्ञवान् सत्यवान् वा "तपुर्मूर्द्धा" तापकं तेजः "घृतान्नः पावकः" शोधकं तमग्निं दूतं कृणुध्वमिति योजना ॥ १ ॥

२ ३ २ ३ १ ३र ३ २ ३ १ ३ २ ३१२३ १ २
प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्व्यस्थात्।

१ २ ३ २ ३ १ २ ३ १ ३र
आदस्य वातो अनु वाति शोचिरध

३ १ २ ३ १ २
स्म ते व्रजनं कृष्णमस्ति ॥*२*॥

अथ द्वितीया। "यवसे" घासे "अविष्यन्" भक्षयन् "प्रोथत्" शब्दं कुर्वन् सञ्चरन् वा "अश्वो न" अश्व इव

"मह्नः" महतः "संवरणात्" निरोधात् दावरूपोऽग्निः "यदा" "व्यस्थात्" संवृतेषु वृक्षेषु वितिष्ठते, "आत्" तदा "अस्य" अग्नेः "शोचिः" अर्चिः "अनु वातः वाति।" अथ प्रत्यक्षस्तुतिः—"अध" अथानन्तरं हे अग्ने! "ते" तव "व्रजन" वर्त्म "कृष्णमस्ति"। "स्म"—इति पूरणम् ॥२॥

१ २र १ १ २ २ ३उ २ १ २ ३ १ २ १ २
उदस्य ते नवजातस्य वृष्णोऽग्ने चरन्त्यजरा इधानाः।
२ २ १ २ ३ २ ३ १ २ १
अच्छा द्यामरुषो धूम एषि
२ ३ १ २ ३ १२२ २ ३ २
सं दूतो अग्न ईयसे हि देवान् ॥*३*॥ [६]

अथ तृतीया। हे "अग्ने!" "नवजातस्य" नूतन-प्रादुर्भूतस्य "वृष्णः" वर्षितुः "यस्य" "ते" तव "अजरा" जरा रहिता ज्वाला "इधानाः" इध्यमाना या "उच्चरन्ति" उद्गच्छन्ति। हे "अग्ने।" "अरुषः" आरोचमानः "धूमः" धूमयुक्तः "दूतः" त्वं "द्यामच्छ" द्युलोकं प्रति "समेषि" सम्यग् गच्छसि, पश्चात् तत्रत्यान् "देवान्" इन्द्रादीन् "ईयसे हि" प्राप्नोषि खलु, यद्वा, हे अग्ने! त्वदीयो यो धूमः द्युलोकं प्रति एषि गच्छति, पुरुषव्यत्ययः; त्वमपि देवान् प्राप्नोषि॥

"एषि"-"एति"—इति पाठौ ॥ ३ ॥ [६]

१ २र ३ २ ३ २ ३ १ २
तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे।
१ २र ३ १ २
स वृषा वृषभो भुवत् ॥*१*॥

ऋ० सुकक्षः श्रुतकक्षो वा। छ० गायत्री। दे० इन्द्रः। अथ तमिन्द्रमिति त्र्यृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। यजमाना आहुः—"तं" पूर्वोक्तम् "इन्द्रं" "वाजयामसि" वाजयामः सोमेन स्तुतिभिः "वाजवन्तं" बलवन्तं कुर्मः। किमर्थम्? "महे" महान्तं "वृत्राय" अपामावरकं वृत्रासुरं "हन्तवे" हन्तुं सोमपानेन मत्तः स्तुतिभिः वा स्तुतः सन्, वृत्रहन्तवे वाजयामसि—वाजवन्तं करोतीत्यर्थे "तत्करोतीति (३, १, २५ वा०) णिच्, "णाविष्ठवत् (३, १, २५ वा० )"—इति णेरिष्ठवद्भावात् "टेः (६, ४, १५५)"—इति टि-लोपः, "विन्मतोर्लुक् (५, ३, ६५)"—इति मतुपो लुक्। "वृषा" धनानां सेक्ता दाता "सः" इन्द्रः "वृषभः" अस्माकं स्तोतॄणां सोमस्य दातॄणां धनादि सेचको दाता "भुवत्" भवतु ॥ १ ॥

२ ३ १ २र ३ १ २र ३ १ ३र ३ २
इन्द्रः स दामने कृत ओजिष्ठः स बले हितः।
२ ३ ३ २उ ३ २
द्युम्नी श्लोकी स सोम्यः ॥*२*॥

अथ द्वितीया। "सः" इन्द्रः "दामने" स्तोतृभ्यः धनादि-दानायैव "कृतः" प्रजापतिना सृष्टः। किञ्च "ओजिष्ठः" ओजस्वितमः "सः" एवेन्द्रः "बले" बलवति सोमे प्रजापतिना सृष्टिकाले निहितः सोम-पानार्थञ्च निहित इत्यर्थः। "द्युम्नी" द्युम्नं द्योततेर्यशो वान्नं वेति (निरु० नै० ५, ५) यास्कोक्तत्वात् यशस्वी अन्नवान् वा अतएव "श्लोकी" श्लोकः स्तुतिः तद्वान् "सः" इन्द्रः "सोम्यः" सोमार्हो भवति ॥

"बले"-"मदे"—इति पाठौ ॥ २ ॥

२ ३उ २ १ ३र २ १ २ २ १ २
गिरा वज्रो न संभृतः सबलो अनपच्युतः ।

२ २ ३ १ ३र
ववक्ष उग्रो अस्तृतः ॥३॥ [१०]

अथ तृतीया। "गिरा" स्तुतिलक्षणया वाचा स्तोतृभिः "सम्भृतः" उत्पादितः तीक्ष्णीकृतः। तत्र दृष्टान्तः—"वज्रोन" वज्र आयुधं तत्कर्तृभिः शितधारो यथा भवति तीक्ष्णीक्रियते तद्वत् स्तोतृभिः स्तुत्या सम्भृतः अतएव "सबलः" बलसहितः तस्मात् "अनपच्युतः" परैरप्रच्युतः अनभिगतइत्यर्थः, तादृशः "उग्रः" महान् "अस्तृतः" युद्धे शत्रुभिरहिंसित इन्द्रः "ववक्षे" स्तोतृभ्यो धनादिकं वोढुमिच्छति ॥

"उग्र."-"ऋष्व:"—इति पाठौ ॥ ३ ॥ [ १० ]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य षष्ठः खण्डः ॥६॥

---

१ २ ३ १ २ ३ १ ३र ३ २ ३ १ २
अध्वर्यो अद्रिभिः सुतꣳ सोमं पवित्र आ नय ।

३ १ २ ३ १ २
पुनाहीन्द्राय पातवे ॥१॥

ऋ० उचथ्यः। छ० गायत्री। दे० सोमः। अथ सप्तमखण्डे—अध्वर्योअद्रिभिरिति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। हे "अध्वर्यो!" "अद्रिभिः" ग्रावभिः "सुतम्" अभिषुतं "सोमं" "पवित्रे" "आनय" प्रापय। एवदेव दर्शयति—"इन्द्राय" इन्द्रस्य "पातवे" पानाय "पुनाहि" पुनीहि पावय ॥

"आनय" "आसृज"—इति पाठौ, "पुनाहि" पुनीहि"—इति च ॥ १ ॥

२३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
तव त्य इन्दो अन्धसो देवा मधोर्व्याशत ।

१ २ ३ १ २
पवमानस्य मरुतः ॥ २ ॥

अथ द्वितीया। हे "इन्दो"! सोम! "तव" सम्बन्धिनं "मधोः" मदकरस्य "पवमानस्य" पूयमानम् "अन्धसः" अन्नं तव कर्मणि षष्ठी (२, १, २५) "त्ये" ते इमे "देवाः" इन्द्रादयो "मरुतश्च" एवम्भूतमन्नं "व्याशत" व्याप्नुवन्तीत्यर्थः॥ "व्याशत" "व्यश्नुत"—इति पाठौ॥ २॥

३ १ २ ३ १ २ ३ १ २ ३ ३ १ २ ३ १ २
दिवः पीयूषमुत्तमꣳ सोममिन्द्राय वज्रिणे ।

३ २ ३ १ २
सुनोता मधुमत्तमम् ॥ ३ ॥ [११]

अथ तृतीया। हे अध्वर्यवः! यूयं "मधुमत्तमम्" अतिशयेन माधुर्योपेतं "दिवः" द्युलोकस्य "पीयूषम्" अमृतभूतम् "उत्तमं" श्रेष्ठ "सोम" "वज्रिणे" वज्रवते "इन्द्राय" "सुनोत" अभिषुणुत॥ ३॥ [ ११ ]

१ २ ३ १ २ ३ २ ३ १ २ ३ २
धर्ता दिवः पवते कृत्व्यो रसो

१ २ ३ १ २ ३ २ ३ १ २
दक्षो देवानामनुमाद्यो नृभिः ।

१ २ ३ २उ ३ १ २र ३
हरिः सृजानो अत्यो न सत्वभि-

२ ३ १ २ ३ २
र्वृथा पाजाꣳसि कृणुषे नदीष्वा ॥ १ ॥

ऋ० कविः। छ० जगती। दे० सोमः। धर्त्तादिव- इति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। "धर्त्ता" सर्वस्य धारकः सोमः "दिवः" अन्तरिक्षात् अन्तरिक्षस्थितात् दशापवित्रात् "पवते" पूयते। कीदृशः सोमः? "कृत्व्यः" कर्त्तव्यः शोध्य इत्यर्थः। "रसः" रसात्मकः। "देवानां" "दक्षः" बलप्रदः यद्वा, दक्षः प्रवर्द्धनीयो देवानामर्थाय। तथा "नृभिः" नेतृभिः ऋत्विग्भिः "अनुमाद्यः" अनुमादनीयः स्तुत्यो वा। शेषः प्रत्यचकृतः। "हरिः" हरितवर्णः। "सत्वभिः" प्राणिभिः अस्मदादिभिः "सृजानः" सृज्यमानः "अत्यो न" अश्वइव स यथा शिक्षितोऽनायासेन गच्छति तद्वत् "वृथा" अप्रयत्नेन "पाजांसि" बलानि स्वीयानि "कृणुषे" कुरुते "नदीषु" वसतीवरीषु ताभिरित्यर्थः॥

"कृणुषे" "कृणुते"—इति पाठौ॥ १॥

१ २ १ २ ३ १ ३ २ १ २ ३ २
शूरो न धत्त आयुधा गभस्त्योः स्वा३ः-

१ २ ३ १ २र
सिषासन्रथिरो गविष्टिषु।

१ २ ३ १ २ ३ १ २ ३ २ ३
इन्द्रस्य शुष्ममीरयन्नपस्युभि-

१ २ ३ १ २ ३ १ २
रिन्दुर्हिन्वानो अज्यते मनीषिभिः॥२॥

अथ द्वितीया। अयं सोमः "गभस्त्योः" हस्तयोः "आयुधा" आयुधानि "शूरो न" शूर इव "धत्ते" धारयति, "स्वः" स्वर्गं सुखसाधनं यज्ञं वा "सिषासन्" सम्भक्तुमिच्छन् "रथिरः" रथवान् रथादिनप्रत्ययः "गविष्टिषु" यजमानस्य गवामेषणेषु सत्सु यजमानो ग्रहं गोसम्भजनाय रथवानित्यर्थः। "इन्द्रस्य"

"शुष्म" बलम् "ईरयन्" प्रेरयन् "इन्दुः" सोमः देवः "अपस्युभिः" कर्मेच्छुभिः "मनीषिभिः" मेधाविभिः स्तुभिः ऋत्विग्भिः "हिन्वानः" प्रेर्यमाणः "अज्यते" गोभिः ॥ २ ॥

१ २     ३ १ २     ३ १ २
इन्द्रस्य सोम पवमान ऊर्मिणा

३ १ २     ३ १ ३ १     २
तविष्यमाणो जठरेष्वा विश ।

१ २     ३ २ ३ १ ३ १ २ ३   ३ २
प्र नः पिन्व विद्युदभ्रेव रोदसी धिया

३ २ ३     १ २   ३ १ २
नो वाजाँ उप माहि शश्वतः ॥*३*॥ [१२]

अथ तृतीया। हे "सोम !" "पवमान" ! पूयमान ! त्वं "तविष्यमाणो" वर्द्धिष्यमाणः सन् "इन्द्रस्य" जठरेषु" "ऊर्मिणा" प्रभूतया धारया "आ विश" जठरप्रदेशस्य बाहुल्यात् बहुवचनम् "नः" अस्मदर्थं "विद्युत्" "अभ्रेव" अभ्राणीव च यथा अभ्राणि दोग्धि तद्वत् "प्र पिन्व" धुक्ष्व "रोदसी" द्यावापृथिव्यौ किञ्च "धिया" कर्मणा "नः" अस्मभ्यं "शश्वतः" बहुनामैतत् (निघ० ३, १, ५) बहून् "वाजान्" अन्नान् "उप" समीपे "माहि" निर्माहि ॥

"माहि"-"मासि"—इति पाठौ, "नः"-"न"—इति च ॥ ३ ॥ [१२]

१ २ ३   २उ ३ १ २क २र   ३ २ ३ १ २
यदिन्द्र प्रागपागुदग्न्यग्वा हूयसे नृभिः ।

१ २ ३ १   २र   ३ २ ३ १   २   ३ १ २
सिमा पुरू नृपूतो अस्यानवेऽसि प्रशर्ध तुर्वशे

॥*१*॥

ऋ० देवातिथिः। छ० बृहती। दे० इन्द्रः। अथ प्रगाथरूपे तृतीयसूक्ते—प्रथमा। हे "इन्द्र!" "यद्" यदि "प्राक्" प्राच्यां दिशि वर्त्तमानैः सप्तम्यां प्राक्शब्दात् विहितस्यास्तातेः "अञ्चेर्लुगिति (५, ३, ३०) लुक्, यदि वा "अपाक्" प्रतीच्यां दिशि वर्त्तमानैः, यदि वा "उदक्" उदीच्यां दिशि वर्त्तमानैः यदि वा "न्यक्" नीच्यां दिशि अधस्ताद्वर्त्तमानैः "न्यधी च (६, २, ५३)"—इति प्रकृतिस्वरत्वम्, "उदात्तस्वरितयोर्यणः (८, २, ४)"—इति परस्यानुदात्तस्य स्वरितत्वम्; एवम्भूतैः "नृभिः" स्तोतृभिः त्वं "हूयसे" स्वस्य कार्य्याय आहूयसे "सिम" श्रेष्ठ इन्द्र! सिम इति वै श्रेष्ठमाचक्षते इति वाजसनेयकम्। यद्यप्येवं बहुभिराहूयसे तथापि "आनवे" अनुर्नाम राजा तस्य पुत्रे राजर्षौ "पुरु" बहुलं "नृपूतः" नृभिस्तदीयैः स्तोतृभिः प्रेरितः "असि" भवसि राज्ञो हितकरणे त्वां स्तोतारः प्रीणयन्तोत्यर्थः पु प्रेरणे, अस्मात् कर्मणि निष्ठा "तृतीया कर्मणि (६, २, ४८)"—इति पूर्वपदप्रकृतिस्वरत्वम् अपि च हे "प्रशर्द्ध!" प्रकर्षेण शर्द्धयितरभिभवितरिन्द्र! "तुर्वशे"—एतत्संज्ञके राजनि नृपूतोऽसि नृभिः प्रेरितोऽसि भवति ॥ १ ॥

२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
यदा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा।
१ २ ३ १ २ ३ १ २ ३ १ २ ३१ २ ३ १ २
कण्वासस्त्वा स्तोमेभिर्ब्रह्मवाहस इन्द्रा यच्छन्त्या गहि

॥ ८२४ ॥ [१३]

अथ द्वितीया। "यदा" यद्यपि "रुमे" रुमादिषु चतुर्षु

राजसु हे "इन्द्र!" त्वं "सचा" सह "मादयसे" माद्यसि तथापि "ब्रह्मवाहसः" ब्रह्मणां स्तोत्राणां वोढ़ारः अथवा अन्नानां वोढ़ारः "कण्वासः" कण्वगोत्रा ऋषयः "स्तोमेभिः" स्तोत्रैः स्तोत्रसमूहैः सह "इन्द्र!" त्वाम् "आयच्छन्ति" आयमयन्ति अतस्त्वम् "आगहि" शीघ्रमागच्छ गमेर्लोटि छान्दसः ( २, ४, ७३ ) शपो लुक् ॥

"स्तोमेभिर्ब्रह्मवाहसः"—"ब्रह्मभिः स्तोमवाहसः"—इति पाठौ ॥ २ ॥ [१२]

२ १ २	२ १ २	२ १ २	१२ ३१	१र
उभयꣳ शृणवच्च न इन्द्रो अर्वागिदं वचः ।

२१ २	२१२ १ २	२ १	१र२ १ २
सत्राच्या मघवांत्सोमपीतये धिया शविष्ठ आ गमत्

॥*१*॥

ऋ० भर्गः। छ० बृहती। दे० अग्निः। अथ प्रगाथे चतुर्थसूक्ते—प्रथमा। "उभयं" स्तोत्रात्मकं शस्त्रात्मकञ्चो-भयविधम् "इदं" "वचः" "अर्वाग्" अस्मदभिमुखम् इन्द्रः "शृणवत्" शृणोतु तच्च "मघवान्" धनवान् इन्द्रः "सत्राच्या" अस्माकं सह अञ्चत्या "धिया" युक्तः सन् "शविष्ठ." अति-शयेन बलवान् "सोमपीतये" सोमस्य पानाय "आगमत्" आगच्छतु ॥ १ ॥

२उ	२ १ २	२१	२र, ३ १ २	३ १ २
तꣳ हि स्वराजं वृषभं तमोजसा धिषणे निष्टतक्षतुः ।

३ २ ३ १ २	३ १	२र	३
उतोपमानां प्रथमो नि षीदसि

१ २ ३	२ ३ १२
सोमकामꣳ हि ते मनः ॥*२*॥ [१३]

अथ द्वितीया। "तं हि" तं खल्विन्द्रं "स्वराजं" स्वयमेव राजमानो "धिषणे" द्यावापृथिव्यौ "वृषभं" जगदुपकारकं वृष्टेर्वर्षकम् "ओजसा" बलेन "निष्टतक्षुः" सञ्चरतः "उत" अपि च यस्मादेवं तस्मात् हे इन्द्र! उपमानभूतानामन्येषां देवानां मध्ये "प्रथमः" मुख्यः सन् "निषीदसि" वेद्यां सोमकामं "हि" खलु ते मनः॥

"ओजसा" "ओजसः"—इति॥ २॥ [१४]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य सप्तमः खण्डः॥ ७॥

---

१२ २१२३१ २र ३ १२
पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः।
१२ २र२ १२ .
वायुमा रोह धर्मणा॥१॥

ऋ० त्रिभुविः। छ० गायत्री। दे० सोमः। अथाष्टमखण्डे—तृचात्मके प्रथमसूक्ते—प्रथमा। हे सोम! "देवः" द्योतमानः त्वं "पवस्व" धारया चर। अपि च "ते" तव "मदः" मदकरः रसः "आयुषक्" तम् "इन्द्रं" प्रति "गच्छतु" अपि च त्वं "वायुं" "धर्मणा" धारकेण रसेन "आरोह" प्राप्नुहि॥

"देवः"-"देव"—इति पाठौ॥ १॥

१२ ३ १ २ ३१ २ ३१ २
पवमान नि तोशसे रयिꣳ सोम श्रवाय्यम्।
१२ ३१ २र
इन्दो समुद्रमा विश॥२॥

अथ द्वितीया। हे "पवमान!" "इन्दो!" "सोम!

त्वं "यवाय्यं" अवणीयं "रयिं" शत्रूणां धनं "नि तोशसे" अतितरां पीड़यसि स त्वं "समुद्रं" द्रोणकलशम् "आ विश" प्रविश ॥

"इन्दो":"प्रियः"—इति पाठौ ॥ २ ॥

१ १ २ ३ २ २
अपघ्नन्पवसे मृधः० ॥*३*॥ [१५]

अपघ्नन् पवसे मृध इति तृतीया। ऋचः प्रतीकमिदम् ॥ सा च छन्दस्याम्नाता (६, ९, १, ६—प्रथमभागे) व्याख्याता च ॥ ३ ॥ [१५]

१ १ २ २ १ २
अभी नो वाजसातमम्० ॥*१*॥

ऋ० अम्बरीषः ऋजिश्वोवा। छ० अनुष्टुप्। दे० सोमः। अथ तृतीयसूक्ते तृचात्मके—अभीनोवाजसातममिति प्रतीकम्, सा चाम्नाता (६, २, १, ५—प्रथमभागे) व्याख्याता च ॥ १ ॥

२ ३ २ २ १ २र ३ १ २ २ १ २
वयं ते अस्य राधसो वसोर्वसो पुरुस्पृहः।
१ १र २ १ २र २ १ २
नि नेदिष्ठतमा इषः स्याम सुम्ने ते अध्रिगो ॥*२*॥

अथ द्वितीया। हे "वसो" वासयितः! सोम! "अस्य" एतादृशस्य "ते" तव "राधसः" धनस्य "पुरुस्पृहः" बहुभिः स्पृहणीयस्य "वसोः" वासकस्य त्वदीयदीयमानस्य वयं नितरां "नेदिष्ठतमाः" अत्यन्तमन्तिकतमाः "स्याम" भवेम ॥ २ ॥

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
परि स्य स्वानो अक्षरदिन्दुरव्ये मदच्युतः।

२ ३ २ ३ १ २ ३ २ ३ १ १८ ३ २
धारा य ऊर्ध्वो अध्वरे भ्राजा न याति गव्ययुः

॥*३*॥ [१६]

अथ तृतीया। "गव्ययुः" गोकामः यद्वा चौरादिं कामयमानः "ऊर्द्धः" समुच्छ्रितः सर्वेषां मुख्यो "यः" सोमः "भ्राजा न" यथा भ्राजमानया दीप्त्या अन्तरिक्षे गच्छति तद्वत्-दीप्त्या सह "अध्वरे" यज्ञे "धारा" स्वकीयया धारया "याति" गच्छति "स्वानः" सुयानः अभिषूयमाणः सः "इन्दुः" सोमः "मदच्युतः" मदार्थं वेदैः प्रेरितः सन् "अव्ये" अविभवे पवित्रे "पर्य्यचरत्" परितः चरति॥

"अचरत्" "अचाः"—इति पाठौ॥ ३॥ [१६]

१ २ ३ १ २ ३ २
पवस्व सोम महान्त्समुद्रः

३ २ ३ १ २ १ २ ३ १ ३८
पिता देवानां विश्वाभि धाम॥*१*॥

ऋ० ऋणः त्रसदस्युः वा। छ० द्विपदा पंक्तिः। दे० पवमानसोमः। अथ तृतीयसूक्ते—प्रथमा। हे "सोम!" "महान्" देवेभ्यो दीप्यमानत्वेन महत्वयुक्तः, "समुद्रः" समुन्दनः यस्मात् समुद्रवन्ति तादृशः, "पिता" सर्वेषां पालयिता त्वं "देवानां" "विश्वा" विश्वानि सर्वाणि "धाम" धामानि शरीराणि "अभि" लक्ष्य "पवस्व" चर॥ १॥

२ १ २ ३ १ २
शुक्रः पवस्व देवेभ्यः सोम

२ १ २ ३ १ ३८ ३ १ २
दिवे पृथिव्यै शं च प्रजाभ्यः॥*२*॥

अथ द्वितीया। हे "सोम!" शुक्रो" दीप्तः त्वं "देवेभ्यः" देवार्थं "पवस्व" क्षर। किञ्च "दिवे पृथिव्यै" च द्यावापृथिवीभ्याञ्च ततः "प्रजाभ्यः च" "शं" सुखं कुरु॥

"प्रजाभ्यः" "प्रजायै"—इति पाठौ॥ २॥

१ २ २ १ २ २ १ २ १ २
दिवो धर्तासि शुक्रः पीयूषः

२ १ २२ ३ १ २
सत्ये विधर्मन्वाजी पवस्व ॥३॥ [१७]

अथ तृतीया। हे सोम! "शुक्रः" दीप्तः "पीयूषः" पातव्यः त्वं "दिवः" द्युलोकस्य "धर्ता" धारकः "असि", "वाजी" बलवान् स त्वं "सत्ये" सत्यभूते "विधर्मन्" विधर्मणि विविधानि कर्माणि ऋत्विजो कुर्वन्ति यस्मिन्; यद्वा, विविधं सोमादिहविषां धारकेऽस्मिन् यज्ञे "पवस्व" क्षर॥ ३॥ [१७]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य अष्टमः खण्डः॥ ८॥

---

१ २ ३ १ २ १ २ ३ १ २ १ २
प्रेष्ठं वो अतिथिꣳ स्तुषे मित्रमिव प्रियम्।

२ ३ २ ३ १ २र
अग्ने रथं न वेद्यम् ॥१॥

ऋ० उशनाः। छ० गायत्री। दे० अग्निः। अथ नवमखण्डे—प्रेष्ठं इति तृचात्मकं सूक्तम्, तत्र प्रथमा। हे "अग्ने!" "वः" त्वां पूजार्थं बहुवचनम् "स्तुषे" स्तौमि अनुसुग्नेति शेषः। कीदृशम्? प्रेष्ठम्" अस्माकं स्तोतॄणां धनदानेन प्रियतमम्। "अतिथिं" सर्वैरतिथिवत् पूज्यं यद्वा, अत सातत्यगमने (भ्वा० प०) ऋतन्यञ्चि (उ० ४,

२ )"—इत्यादिना यतेरियन्। सततं देवानां हविः प्रदातुं गच्छन्तम् "मित्रमिव" सखायमिव "प्रियं" स्तोतुः प्रीणनकरं "रथं न" रथमिव "वेद्यं" वेद्यो धनं धनहितं लाभहेतुं यथा स्वाभिमतलाभाय आश्रयन्ते धनलाभहेतुं रथम् ; यद्वा, यथा रथेन धनं लभते तद्वत् स्तोतारोऽनेन धनं लभन्ते, तादृश-धनलाभकारणम्। हे अग्ने! तस्मै हितं वेद्यं त्वां कामं सिध्यर्थम् अहं स्तोता स्तौमीति सम्बन्धः॥

"अग्ने" "अग्निम्"—इति पाठौ॥ १॥

२ १ २ १ २ २ २ २ २ २ १ २ २ १
कविमिव प्रशꣳस्यं यं देवास इति द्विता।

१ २र २ २
नि मर्त्येष्वादधुः॥*२*॥

अथ द्वितीया। हे "देवासः!" देवाः इन्द्रादयः! "यम्" अग्निं "मर्त्येषु" मनुष्येषु "इति" वक्ष्यमाणप्रकारेण "द्विता" द्विधा "न्यादधुः" गार्हपत्याहवनीयात्मकत्वेन द्विधा निहित-वन्तः। तत्र दृष्टान्तः—"कविमिव" "प्रशंस्यं" प्रशंसनार्हं क्रान्तकर्माणं पुरुषं यथा द्विधा कार्य्यद्वये अन्यो नियोजयति तद्वत् यद्वा दिवि पृथिव्यां च निहितवन्तः, भूमौ तु हविरा-हरणार्थं दिवि तु हविः प्रदानार्थमिति द्वैधं निधानं कृतवन्त इत्यर्थः। तमग्निं स्तुषे इति पूर्वेण सम्बन्धः॥

"प्रशंस्यं" "प्रचेतसः"—इति पाठौ॥ २॥

१ २ २ २ २ १ २ २ १ २र
त्वं यविष्ठ दाशुषो नॄꣳः पाहि शृणुही गिरः।

१ १ २ २ २ १ २र
रक्षा तोकमुत त्मना॥*३*॥ [१८]

अथ तृतीया। हे "यविष्ठ !" युवतम ! यद्वा, यौतेस्तृ-जन्तस्य इष्ठनि रूपं देवानां हविषां मिश्रयितृतम ! इन्द्र ! त्वं "दाश्वषः" हविर्दत्तवतः "नॄन्" कर्मणां नेतॄन् यजमानान् "पाहि" धनानां दानेन रक्ष नॄन्पाहीत्यत्र संहितायां "नॄन्पे (८, ३, १०)"—इति नकारस्य रुत्वम्, "अत्रानुनासिक (८, ३, २)"—इति पूर्वस्यानुनासिकः। किञ्च, "गिरः" त्वद्विषयाः स्तुतीः "शृणुहि" अवहितः सन् शृणु। "उत" अपि च "त्मना" आत्मनैव "तोकम्" अस्मदीयं "तनयं" पुत्रं "रक्ष" पालय त्मनेति सर्वत्र सम्बध्यते—आत्मना स्वयमेव रक्ष, त्वदन्यं पालयितारं न विन्दामः त्वमेवास्मदीयम् ॥

"शृणुही" "शृणुधि"—इति पाठौ ॥ ३ ॥ [१८]

१ २ ३ १ २
एन्द्र नो गधि प्रिय सत्राजिदगोह्य ।

२ ३उ १ २ १ २ ३१ २र ३ २
गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥*१*॥

ऋ० नृमेधः। छ० उष्णिक्। दे० इन्द्रः। अथ दृचात्मके द्वितीयसूक्ते—प्रथमा। हे "प्रिय !" स्तोतॄणां प्रीणनकर ! "सत्राजित्" महतां शत्रूणां जेतः ! "हे "अगोह्य" ! केनापि गूहितुमशक्य ! "इन्द्र !" "गिरिर्न" पर्वत इव "विश्वतः" सर्वतः "पृथुः" पृथुतमः "दिवः" स्वर्गस्य "पतिः" ईश्वरस्त्वं "नः" अस्मान् "आगधि" आगच्छ ॥

"प्रियसत्राजिदगोह्य" "प्रियःसत्राजिदगोह्यः"—इति पाठौ, "विश्वतःपृथु" "विश्वतस्पृथुः"—इति च ॥ १ ॥

३ १ २र ३२ ३१२ १ २
अभि हि सत्य सोमपा उभे बभूथ रोदसी ।

१ २र २ ३ २ १ २र ३ २
इन्द्रासि सुन्वतो वृधः पतिर्दिवः ॥*२*॥

अथ द्वितीया। हे सत्य! "सोमपाः" सोमस्य पातः! "इन्द्र!" यस्त्वम् "उभे" "रोदसी" द्यावापृथिव्यौ "अभि बभूथ" सामर्थ्येनाभि भवसि स त्वं "सुन्वतः" सोमाभिषवं कुर्वतः यजमानस्य "वृधः" वर्धकः "असि"। "दिवः" स्वर्गस्यापि "पतिः" ईश्वरोऽसि ॥ २ ॥

१ २र २ १ २ २ ३ २ १ २र
त्वꣳ हि शश्वतीनामिन्द्र धर्ता पुरामसि।

३ १उ २ ३ २ ३ १ २र ३ २
हन्ता दस्योर्मनोर्वृधः पतिर्दिवः ॥*३*॥ [१८]

अथ तृतीया। हे इन्द्र!" "त्वं" "शश्वतीनां बह्वीनां "पुरां" शत्रुनगरीणां "धर्त्ता असि हि" दारयिता भवसि खलु। किञ्च, "दस्योः" यथाकालस्योपक्षेपयितुरसुरस्य "हन्ता" असि घातको भवसि "मनोः" मनुष्यस्य यागादि कुर्वतो "वृधः" वर्धयासि। "दिवः" स्वर्गस्यापि "पतिः" ईश्वरोऽसि ॥ ३ ॥ [१८]

३ २ ३ १ २र ३ १ २र
पुरां भिन्दुर्युवा कविरमितौजा अजायत।

३ १ १ २ ३ २ ३ २ ३ २र १ २१
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥*१*॥

ऋ० जेताः। छ० उष्णिक्। दे० इन्द्रः। अथ त्र्यात्मके तृतीय सूक्ते—प्रथमा अयम् "इन्द्रः" उच्यमानगुणयुक्तो "अजायत" सम्पन्नः। कीदृग्गुणकः? इति तदुच्यते—"पुराम्" असुरपुराणां "भिन्दुः" भेत्ता "युवा" कदाचिदपि वली-

पलितादिवावेक्यरहितः "कविः" मेधावी "अमितौजाः" प्रभूतबलः विश्वस्य कर्मणः कृत्स्नस्य ज्योतिष्टोमादेः "धर्त्ता" पोषकः "वज्री" यजमानरक्षणार्थं सर्वदा वज्रयुक्तः "पुरुष्टुतः" बहुविधे तत्तत्कर्मणि स्तुतः ॥ भिन्दुः—भिदिर् विदारणे (रु० प०), कुरित्यनुवृत्तौ "छभिदिव्यधिगृधिधृषिभ्यः (उ० १,२३)"—इति कुप्रत्ययः, तस्य "छन्दस्युभयथा (३,४,११७)" —इति सार्वधातुकसञ्ज्ञायां "रुधादिभ्यः श्नम् (३, १, ७८)" नित्त्वादन्त्यादचः परो भवति, "श्नसोरल्लोपः (६, ४, १११)" अनुस्वारपरसवर्णौ "अचः परस्मिन् पूर्वविधौ (१, १, ५७)" —इति प्राप्तस्य स्थानिवद्भावस्य "न पदान्तेत्यादिना (१, १, ५८) निषेधः । युवा—यु मिश्रणामिश्रणयोः (अदा० प० ) "कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः (उ० १, १५४)"— इति कनिन् नित्त्वादाद्युदात्तः (६, १, १९७) । कविः— कु शब्दे (अदा० प० ) "अचइरिति (उ० ४, १३८) इः प्रत्ययस्वरः (३, १, ३) । अमितः—अमितशब्दस्याव्ययपूर्वपदप्रकृतिस्वरत्वम् (८, २, १) "बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन" तदेव शिष्यते । विश्वस्य—"अशूप्रुषीत्यादिना (उ० १, १४८) क्वन्, नित्त्वादाद्युदात्तः (६,१, १९७) । कर्मणः—"अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)"—इति मनिन् नित्स्वरः (६, १, १९७) । धर्त्ता—तृच्, चित्त्वादन्तोदात्तः (६, १, १६५) । वज्री—मत्वर्थीय इनी (५, २, ११२), प्रत्ययस्वरः । पुरुष्टुतः—"स्तुतस्तोमयोश्छन्दसि (८, ३, १०५)"—इति षत्वम्, बहुषु प्रदेशेषु स्तुतः "थाथघञ्क्ताजबित्रकाणाम् (६,२,१४४)" —इत्यन्तोदात्तत्वम्, तृतीयासमासे हि थाथादिस्वरापवादः, "तृतीया कर्मणि (६, २, ४८)"—इति पूर्वपदप्रकृतिस्वरः स्यात् ॥ १ ॥

२ ३२३ २ ३१ २ ३ १२
त्वं वलस्य गोमतोऽपावरद्रिवो विलम्।
२ ३ १ २र ३ १ २
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥ २ ॥

अथ द्वितीया।—वलनामकः कश्चिदसुरो देवसम्बन्धिनीर्गा अपहृत्य कस्मिँश्चिद् विले गोपितवान् तदानीमिन्द्रस्तद्विलं समावृत्य तस्माद् विलाद् गाः निःसारयामास, तदिदमुपाख्यान-मिन्द्रो वलस्य वलमौर्णोदित्यादि ब्राह्मणेषु मन्त्रान्तरेषु च प्रसि-द्धम्, तदेतद्धृदि निधायायं मन्त्रः प्रवर्त्तते—हे "अद्रिवः!" वज्र-युक्तेन्द्र! त्वं "गोमतः वलस्य" गोभिर्युक्तस्य वलनामकस्यासुरस्य सम्बन्धि "विलम्" "अपावः" स्वसैन्यमुखेनापावृतवानसि। तदानीं "तुज्यमानासः" बलेन हिंस्यमानाः "देवाः" "अबि-भ्युषः" त्वद्दयया रक्षया बलादभीताः सन्तः "त्वामाविषुः" प्राप्तवन्तः। अपेत्यस्य निपातत्वादाद्युदात्तत्वम् (फि० ४, १२)। अवः—वृञ् वरणे (स्वा० उ०), लङ् सिप्, "इतश्च लोपः (३, ४, ९७)", "स्वादिभ्यः श्नुः (३, १, ७३)", तस्य बहुलञ्छन्दसि (२, ४, ७६)"—इति लुक्, गुणो रपरत्वम्, हल्ङ्यादिलोपः, विसर्जनीयः, अडागमः। अद्रिवः—अद्रि-रस्यास्तीति मतुप्, "छन्दसीरः (८, २, १५)"—इति वत्वम्, सम्बोधने "उगिदचामिति नुम् (७, १, ७०), हल्ङ्याप् संयोगान्तलोपो, "मतुवसो रुः सम्बुद्धौ छन्दसि (८, ३, १)" —इति रुत्वम्। विल—"नब्विषयस्यानिसन्तस्येत्याद्युदात्तत्वम् (फि० २, ३)। अबिभ्युषः—ञि भी भये (जुहो० प०) लिङ् द्विर्भावः, अभ्यासस्य ह्रस्वजश्त्वे, "क्वसुश्च (३, २, १०७)" —इति लिटः क्वस्वादेशः, क्रादिनियमात्, प्राप्त इट् "वस्वे-काजाद्घसाम् (७, २, ६७)"—इति नियमान्निवर्त्तते, जसि

सर्वनामस्थानेऽपि व्यत्ययेन भत्वाद् वसोः सम्प्रसारणम्, पर-पूर्वत्वम्, "शासिवसिघसीनाञ्च (८, ३, ६०)"—इति षत्वम्, "अचि श्नुधात्वित्यादिना (६, ४, ७७) शासमियङादेशं बाधित्वा "एरनेकाचः (६, ४, ८२)"—इति यणादेशः, नञ्-समासः, अव्ययपूर्वपदप्रकृतिस्वरत्वम्। तुज्यमानासः—तुजि-र्हिंसार्थात् परस्य कर्मणि लटः स्थाने शानच्, "सार्वधातुके यक् (३, १, ६७)"—इति यक् तस्माददुपदेशाद्दुत्तरस्य लसार्वधातुकस्यानुदात्तत्वम् (६, १, १८६), यक एव प्रत्यय-स्वरः शिष्यते। भायिषुः—भय रक्षणादिषु, अस्माद् मत्यर्था-लुङो झिस्तस्य "सिजभ्यस्तविदिभ्यश्च (३, ४, १०९)"—इति जुस्, सिच इडागमः, "आड़जादीनाम् (६, ४, ७२)"—इत्याड़ागमः, आदेशप्रत्यययोः (८, ३, ५९)"—इति षत्वम् ॥ २ ॥

२ ३ १ २ ३ १ २ ३ १ १र
इन्द्रमीशानमोजसाभि स्तोमैरनूषत।
२ ३ १ १ २ ३ १ २ ३ २ ३ २ ३ १ २
सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥ *३* ॥ [२०]

इति अर्द्धप्रपाठकः ॥

अथ तृतीया। "स्तोतारः" "ओजसा" बलेन "ईशानं" जगतो नियामकम् "इन्द्रम्" स्तोमैः" विप्रादिभिः "अभ्यन-षत" सर्वत्र स्तुवन्ति। "यस्य" इन्द्रस्य "रातयः" धनदानानि "सहस्रं" सहस्रसङ्ख्योपेतानि सन्ति "उत वा" अथवा "भूयसीः" सहस्रसङ्ख्याकाः अभ्यधिकाः "सन्ति"। तमिन्द्र-मिति पूर्वत्रान्वयः ॥

"स्तोमैः" "स्तोमाः"—इति पाठौ ॥

इन्द्रम्—"ऋज्रेन्द्रेत्यादिना रन् (उ० २, २८) नित्त्वादाद्युदात्तः (६, १, १९७)। ईशानम्—लटः शानच् (३, २, १२४), "अदिप्रभृतिभ्यः शपः (२, ४, ७२)—इति धातोरनुदात्तेत्त्वात् तास्यनुदात्तेदित्यादिना (६, १, १८६) शानचोऽनुदात्तत्वम्। ओजसा—नब्विषयत्वादाद्युदात्तः (फि० २, ३)। स्तोमैः—अर्त्तिस्तुस्वित्यादिना (उ० १, १३७) मन् प्रत्ययः, नित्त्वादाद्युदात्तः (६, १, १९७)। अनूषत—णु स्तुतौ; "णो नः (६, १, ६५), लङ्य्यवयेन, झः, तस्य अदादेशः, "चुः सिच् (३, १, ४४), अस्य धातोः कुटादित्वेन सिचो ङित्त्वाद् (१, २, १) गुणाभावः, इड़भावश्छान्दसः, अडागमः। सहस्र—"कर्दमादीनाञ्च (फि० ३, ११)"—इति द्वितीयाक्षरमुदात्तम्। रातयः—"मन्त्रे वृषेत्यादिना (३, ३, ९६) क्तिन उदात्तः। उत—प्रातिपदिकस्वरः (फि० १, १)। वा—चादिरनुदात्तः (फि० ४, १६)। सति—प्रत्ययाद्युदात्तत्वम्, (३, १, ३), "तिङतिङः (८, १, २८)"—इति निघातो न भवति "यद्वृत्तान्नित्यम् (८, १, ६६)"—इति प्रतिषेधात्, सद्भि व्यवहितेऽपि भवतीत्युक्तम्। भूयसीः—बहुत्वादतिशयेन बह्व्यः भूयस्यः, अत्र विभक्तस्य बहुत्वस्य सन्निधिवशात् उपपदत्व-प्रतीतेर्द्विवचनं विभज्योपपदे तरबीयसुनाविति बहुशब्दादीयसुन्, "बहोर्लोपो भू च बहोः (६, ४, १५८)"—इति इकारलोपः, बहोर्भू इत्यादेशश्च, ईयसुनो नित्त्वादाद्युदात्तश्च, "उगितश्च (४, १, ६)"—इति ङीप्॥ २॥ [२०]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य नवमः खण्डः।

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ९ ॥

## इति पञ्चमस्यार्द्धः प्रपाठकः ॥

इति श्रीमद्राजाधिराज परमेश्वर वैदिकमार्गप्रवर्त्तक श्रीवीरबुक्क भूपाल-
साम्राज्य धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये साम
वेदार्थ प्रकाशे उत्तरायन्थे नवमोऽध्यायः ॥ ९ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १० ॥

## दशमोऽध्याय आरभ्यते।

१ १   २ १ २ ३ १   २र
अक्रान्त्समुद्रः प्रथमे विधर्मं
१ १ २ ३ १   २र   ३ २
जनयन्प्रजा भुवनस्य गोपाः।
१ २ ३ २ ३ २ ३ २ ३ १ २
वृषा पवित्रे अधि सानो अव्ये
३ १   २र   ३ १   २र
बृहत्सोमो वावृधे स्वानो अद्रिः ॥ १ ॥

ऋ० पराशरः। छ० त्रिष्टुप्। दे० सोमः। तत्र अक्रान्त्समुद्रइति द्वचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। "समुद्रः" यस्मादापः सन्द्रवन्ति स समुद्रः अपां वर्षकः, "गोपाः" स्वामित्वेन सर्वस्य रक्षकः सोम "प्रथमे" विस्तृते "भुवनस्य" उदकस्य "वि धर्मन्" विधारकेऽन्तरिक्षे प्रजाः "जनयन्" उत्पादयन् "अक्रान्" सर्वमभिक्रामति क्रमतेर्लुङि तिपीड़-

भावे हृदौ च क्तायां सिज्लोपे मकारस्य "मोनो धातोः (८, २, ६४)"—इति नकारे रूपम्; "वृषा" कामानां वर्षिता, "स्वानः" अभिपूयमाणः, "अद्रिः" आदरणशीलः, "मः" "सोमः अधिकं "सानौ" समुच्छ्रिते अविमये पवित्रे प्रभूतं "वक्षुधे" वर्द्धते ॥

"गोपाः"-"राजा"—इति पाठौ, "अद्रिः"-"इन्दुः"—"वृहत्" इति च ॥ १ ॥

१ २ २ २ ३ २ ३ १ २ २
मत्सि वायुमिष्टये राधसे नो
१ २ ३ १ २र ३ १ २
मत्सि मित्रावरुणा पूयमानः ।
१ २ ३ २ १ २ ३ १ २ ३ २उ
मत्सि शर्धो मारुतं मत्सि देवान्
२ १ २ ३ १ २
मत्सि द्यावापृथिवी देव सोम ॥*२*॥

अथ द्वितीया । हे सोम ! त्वं वायुं "मत्सि" मादय । किमर्थम् ? "नः" अस्माकम् "इष्टये" ईषणीयाय अन्नाय "राधसे" धनाय च । तथा पवित्रेण पूयमानस्त्वं "मित्रावरुणा" मित्रावरुणौ च "मत्सि" तर्पयसि । किञ्च "मारुतं" मरुतां स्वभूतं शर्धो बलञ्च मत्सि । तथा "देवान्" इन्द्रादीन् "मत्सि" हर्षय । हे "देव !" स्तोतव्य ! हे सोम ! "द्यावापृथिव्यौ" च "मत्सि" मादय । एतान् हर्षयुक्तान् कृत्वा अस्मभ्यं धनं प्रयच्छेत्यर्थः ॥

"राधसेन."-"राध सेच"—इति पाठौ ॥ २ ॥

२१ २र २१२ २ १
महत्तत्सोमो महिषश्चकारापां

२र २२
यद्गर्भोऽवृणीत देवान्।

१२३ २३ १२ ३ १
अदधादिन्द्रे पवमान ओजो-

२र २१२ १ २ १ १
ऽजनयत्सूर्ये ज्योतिरिन्दुः ॥*३*॥ [१]

अथ तृतीया। "महिषः" महान् पूज्यो वा सोमः "महत्" प्रभूतं तत् कर्म "चकार" अकरोत्। किन्तत् कर्म? "अपां गर्भः" उदकानां गर्भभूतः जनयितृत्वाज्जन्यत्वाच "सः" सोमः "देवान्" "अवृणीत" समभजत—इति यत् तत् कृतवानिति। किञ्च, "पवमानः" पूयमानः सोमः "ओजः" तत्पानेन जन्यं बलम् "इन्द्रे" "अदधात्"। तथा "इन्दुः" "सूर्ये" "ज्योतिः" तेजः अजनयत्॥ ३॥ [१]

३२३१ २र ३१ २
एष देवो अमर्त्यः पर्णवीरिव दीयते।

३१ २ २र ३ १२
अभि द्रोणान्यासदम् ॥*१*॥

ऋ० शुनःशेपः। छ० गायत्री। दे० सोमः। अथै-षदेवइति दृचं द्वितीयं सूक्तम्, तत्र प्रथमा। "देवः" द्योतमानः "अमर्त्यः" मरणरहितः "एषः" सोमः "द्रोणानि" द्रोणकलशान् "अभि" लक्ष्य "आसदम्" आसत्तुम् आसदनार्थम् "पर्णवीरिव" यथा पक्षी तथा वेगेन "दीयते" गच्छति॥

"दीयते"-"दीयति"—इति पाठौ॥ १॥

२ १ २र २ १ २ २ २ २१ २र
एष विप्रैरभिष्टुतोऽपो देवो वि गाहते ।
२ २ १ २ २ १ २
दधद्रत्नानि दाशुषे ॥*२*॥

अथ द्वितीया। "विप्रैः" मेधाविभिः स्तोतृभिः "अभिष्टुतः" आभिमुख्येन स्तुतः "देवः" द्योतमानः "एषः" सोमः "दाशुषे" हविषां प्रदात्रे यजमानाय "रत्नानि" रमणीयानि धनानि "दधत्" धारयत् प्रयच्छत्। "अपः" वसतीवरीः "वि गाहते" प्रविशति ॥ २ ॥

२ १ २र २ १ २ २ २ १ २ २ १ २
एष विश्वानि वार्य्या शूरो यन्निव सत्वभिः ।
१ २
पवमानः सिषासति ॥*३*॥

अथ तृतीया। "पवमानः" पूयमानः "शूरः" वीरः "एषः" सोमः "विश्वानि" सर्वाणि "वार्य्या" वरणीयानि धनानि "सत्वभिः" बलैः "यन्निव" गच्छन्निव "सिषासति" अस्मदर्थं सम्भक्तुमिच्छति ॥ ३ ॥

१ २ २१ २ २ २
एष देवो रथर्यति पवमानो दिशस्यति ।
२ १ २ २ २
आविष्कृणोति वग्वनुम् ॥*४*॥

अथ चतुर्थी। "पवमानः" पवमानः सोमो "देवः" "रथर्यति" अस्मदीयं यागं प्रत्यागमनाय रथं कामयते। 'दिशस्यति' आगत्य चाभ्यभमभिलषितं प्रयच्छति। 'वग्वनु" शब्दम् 'आविष्कृणोति' अभिषूयमाणः प्रकटयति।

"दिशस्यति"-"दयस्यति"—इति पाठौ ॥ ४ ॥

२ २ ३१ २३ २ ३ १२ २ १ २
एष देवो विपन्युभिः पवमान ऋतायुभिः ।
२ ३ १ २
हरिर्वाजाय मृज्यते ॥*५*॥

अथ पञ्चमी। "पवमानः" चरन् "एषः" "सोमः" "देवः" "विपन्युभिः" स्तोतृभिः "ऋतायुभिः" यज्ञकामैः सत्यकामैर्वा "हरिः" अश्व इव "वाजाय" संग्रामार्थं "मृज्यते" स्तुतिभिरलङ्क्रियते ॥ ५ ॥

१ २ ३ २ ३ २ ३ २ ३ १ २
एष देवो विपा कृतोऽतिह्वराꣳसि धावति ।
१ २ ३ १ २
पवमानो अदाभ्यः ॥*६*॥

अथ षष्ठी। "विपा"—अङ्गुलिनामैतत् (निघ० १, ५, ८) अङ्गुल्या "कृतः" अभिषुतः "एषः" सोमः "देवः" "पवमानः" चरन् "अदाभ्यः" केनाप्यहिंसितव्य सन् "ह्वरांसि" शत्रून् "अति धावति" हन्तुमभिगच्छति ॥ ६ ॥

३ १र २ १ २ ३ १ २र ३ १ २
एष दिवं वि धावति तिरो रजाꣳसि धारया ।
१२ ३ १ २
पवमानः कनिक्रदत् ॥*७*॥

अथ सप्तमी। "धारया" "पवमानः" चरन्, "एषः" सोमः, "कनिक्रदत्" अभिपूयमाणः शब्दं कुर्वन्, "रजांसि" लोकान् "तिरः" तिरस्कुर्वन् यज्ञात् "दिवं" स्वर्गं प्रति "वि धावति" ॥ ७ ॥

३ १र २ १ २ ३ २उ ३ १ २
एष दिवं व्यासरत्तिरो रजाꣳस्यस्तृतः ।

१ २      २ २
पवमानः स्वध्वरः ॥*८*॥

अथाष्टमी। "पवमान" चरन्, "एषः" सोमः, "स्वध्वरः" सुयज्ञः "अ स्तृत" केनाप्यहिंसितः सन्, "रजांसि" लोकान् "तिरः" तिरस्कुर्वन् यज्ञात् "दिवं" प्रति "व्यासरत्" विहरति गच्छति ॥ ८ ॥

२ २   २ १ २   १   १    २ २   २ १ २   २ १
एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः।

१ २   २ १ २
हरिः पवित्रे अर्षति ॥*९*॥

अथ नवमी। "हरिः" हरितवर्णः, "देवः" द्योतमानः "एषः" सोमः, "प्रत्नेन" पुराणेन "जन्मना" जननेन "देवेभ्यः" देवार्थं "सुतः" अभिषुतः सन् "पवित्रे" स्थातुम् "अर्षति" गच्छति ॥ ९ ॥

१ २   २   १   २   २ १   २ २   २   २ १ २ १ २
एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः।

१ २     २ २
धारया पवते सुतः ॥*१०*॥ [२]

अथ दशमी। "एष उ स्यः" एष च स सोमः "पुरुव्रतः" बहुकर्मा "जज्ञानः" जायमान एव "इषः" अन्नानि "जनयन्" उत्पादयन् "सुतः" अभिषुतः "धारया" "पवते" क्षरति ॥ १० ॥ [२]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थे दशमस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥

१२ २२ २ २ २ २३ १२ २१ २
एष धिया यात्यण्व्या शूरो रथेभिराशुभिः ।

२ ३ १ २ ३ २
गच्छन्निन्द्रस्य निष्कृतम् ॥*१*॥

ऋ० असितदेवलौ । छ० गायत्री । दे० सोमः । अथ द्वितीये खण्डे—एषधियेत्यष्टर्चं सूक्तम्, तत्र प्रथमा । "एषः" सोमः "शूरः" विक्रान्तः "अण्व्या" अङ्गुल्या अभिषुतः "धिया" कर्मणा अतिगच्छति । कीदृशम् ? इति उच्यते—"इन्द्रस्य निष्कृतं" स्थानं स्वर्गाख्यं प्रति "आशुभिः" शीघ्रगामिभिः "रथेभिः" रथैः "गच्छन्" इन्द्रेण रथेऽवस्थाप्य स्वस्थानं नयनाङ्गुल्या अभिषूयमाणः सन् होमद्वारा अग्निं गच्छतीत्यर्थः ॥ १ ॥

२२ ३१ २ २२ ३१२
एष पुरु धियायते बृहते देवतातये ।

१ २ ३ २ ३ १ २
यत्रामृतास आशत ॥*२*॥

अथ द्वितीया । "एषः" सोमः "पुरु" बहुलं, "धियायते" धियं कर्म इच्छति धीशब्दात् याकारोपजनः (७, १, ३८)। यद्वा द्वितीयार्थे तृतीया, (२, १, ८५) छान्दसमलुक् । कस्मै ? "बृहते" महते "देवतातये" यज्ञाय "यत्र" यस्मिन् यज्ञे "अमृतासः" अमृताः देवाः "आशत" व्याप्नुवन्ति तदर्थम् ॥

"आशत" "आसत"—इति पाठौ ॥ २ ॥

२१ २ ३ १२ ३१ १ २ ३ १२
एतं मृजन्ति मर्ज्यमुप द्रोणेष्वायवः ।

२ २ २ १ २र
प्रचक्राणं महीरिषः ॥*३*॥

अथ तृतीया। "आयवः" मनुष्याः ऋत्विजः "एतं" सोमं "मर्त्यम्" "उप सृजन्ति" निष्पीड़यन्तीत्यर्थः। कुत्र? "द्रोणेषु" द्रोणकलशेषु। कीदृशम्? "महीः इषः" महान्त्यन्नानि "प्रचक्राणं" कुर्वाणं प्रभूततरमन्नाविणमित्यर्थः॥ ३॥

२ १ २ १ २र ३ २ ३ १ २ ३ १
एष हितो वि नीयतेऽन्तः शुन्ध्यावता पथा।

१ २ ३ १ ३ १ २
यदी तुञ्जन्ति भूर्णयः॥*४*॥

अथ चतुर्थी। "एषः" सोमः "हितः" निहितः हविर्धाने "वि नीयते" तस्मात् स्थानात् आहवनीयं प्रति "अन्तः" तयोर्मध्यदेशे "शुन्ध्यावता" शुद्धिमता "पथा" मार्गेण "यदि" यदा "तुञ्जन्ति" प्रयच्छन्ति देवेभ्यः "भूर्णयः" भरणशीलाः अध्वर्य्वादयः; तदा विनीयत इति समन्वयः॥

"शुन्ध्यावता" "शुभ्रावता"—इति पाठौ॥ ४॥

२ १ २ १ २ ३ २ २ १ २ १ १ २
एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः।

२ १ १ २ ३ १ २
पतिः सिन्धूनां भवन्॥*५*॥

अथ पञ्चमी। "एषः" सोमः "रुक्मिभिः" अध्वर्य्वादिभिः सह "ईयते" गच्छति। कीदृश एषः? "वाजी" वेगवान् "शुभ्रेभिः दीप्तैः अंशुभिर्विशिष्टः अथवा रुक्मिभिरित्येतदप्यंशुविशेषणम् "सिन्धूनां" स्यन्दमानानां रसानां "पतिः" "भवन्" नीयत इति॥ ५॥

२१ २र २ १ २ ३ १ २ ३ २ १ २
एष शृङ्गाणि दोधुवच्छिशीते यूथ्यो३ वृषा ।

३ १ २र ३ १ २
नृम्णा दधान ओजसा ॥*६*॥

अथ षष्ठी। "एषः" सोमः "शृङ्गाणि" शृङ्गवदुन्नतान् अंशून् अभिषवकाले "दोधुवत्" धुनोति "यूथ्यः" यूथार्हो यूथपतिः "वृषा" वृषभः यथा "शिशीते" तीक्ष्णे शृङ्गे धुनोति तद्वत्। कीदृशः? "ओजसा" बलेन "नृम्णा" नृम्णानि धनानि "दधानः" अस्मदर्थं धारयन् ॥ ६ ॥

११ २र १ १ २र ३ ३ १ २र
एष वसूनि पिब्दनः परुषा ययिवाँ अति ।

२३ १ २
अव शादेषु गच्छति ॥*७*॥

अथ सप्तमी। "वसूनि" आच्छादकानि रक्षांसि "पिब्दनः" पीड़यन् "एषः" सोमः "परुषा" पर्वणा "अति" अतिक्रम्य "ययिवान्" गच्छन् "शादेषु" शातनीयेषु रक्षःसु "अव गच्छति" ॥

"पिब्दनः" "पिब्दना"—इति पाठौ ॥ ७ ॥

२१२ २उ ३ २३ १ २ ३ १ २
एतमु त्यं दश क्षिपो हरिं हिन्वन्ति यातवे ।

३ १ २ १ २
स्वायुधं मदिन्तमम् ॥*८*॥ [३]

अथाष्टमी। "हरिं" हरितवर्णं "त्यं" तम् "एतम्" एतमेव सोमं "दश क्षिपः" दशसङ्ख्याका अङ्गुलयः "यातवे"

गमनाय "हिन्वन्ति" प्रेरयन्ति। कीदृशमेनम्? "स्वायुधं" शोभनायुधं "मदिन्तम" मादयितृतम रक्षोहननप्रदर्शनाय स्वायुधशब्दश्रवणम्॥

"हरिं हिन्वन्ति यातवे" "मृजन्ति सप्त धीतयः"—इति पाठो॥८॥[३]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य द्वितीयः खण्डः॥२॥

---

२१ २ ३उ १ २उ २ १ २
एष उ स्य वृषा रथोऽव्या वारेभिरव्यत।
१ २ १ २ २ १ २
गच्छन्वाजꣳ सहस्रिणम्॥*१*॥

ऋ० रहूगणः। छ० गायत्री। दे० सोमः। अथ तृतीयखण्डे—एष उस्येति षड्चं सूक्तम्, तत्र प्रथमा। "स्यः" सः प्रसिद्धः "एषः" अभिषुतः सोमः "वृषा" वर्षिता "रथः" रंहणस्वभावः "अव्यावारेभिः" अवेर्वारेभिः अवेर्वालैः दशापवित्रेण "अव्यत" द्रोणकलशं प्रति गच्छति "वाजम्" अन्नम् "सहस्रिणं" सहस्रसङ्ख्याकं यजमानाय प्रदातुं "गच्छन्" द्रोणकलशं प्रविशन्नस्यतीत्यर्थः॥

"अव्यावारेभिरव्यत" "अव्योवारेभिरर्षति"—इति पाठो॥१॥

२१ ३ १ २ १ १ २ १ २ २ १ २
एतं त्रितस्य योषणो हरिꣳ हिन्वन्त्यद्रिभिः।
२ ३ १ २ ३ १ २
इन्दुमिन्द्राय पीतये॥*२*॥

अथ द्वितीया। "एतम्" "इन्दुं" क्रियमाणं "हरिं" हरितवर्णं सोमं "त्रितस्य" एतन्नामकस्य ऋषेः "योषणः" अङ्गुल्यः

"अद्रिभिः" अभिषवपाषाणैः "हिन्वन्ति" प्रेरयन्ति । किमर्थम् ? "इन्द्राय" इन्द्रस्य "पीतये" पानाय ॥ २ ॥

२ १ २र ३ २ १ २उ ३ १ २

एष स्य मानुषीष्वा श्येनो न विक्षु सीदति ।

१ २ ३ १उ ३ १ २

गच्छं जारो न योषितम् ॥*३*॥

अथ तृतीया। "स्यः" सः "एषः" सोमः "मानुषीषु" "विक्षु" प्रजासु "श्येनो न" श्येन इव शीघ्रमागम्य यजमानरूपासु अनुग्रहेण "आ" आगत्य "सीदति"। पुनः क इव ? "योषित" "गच्छन्" अभिगच्छन् "जारो न" जार इव स यथा सङ्केतितः तस्याः कामपूरणाय गूढगतिः गच्छति तद्वदित्यर्थः॥ ३ ॥

१२उ ३ १ ३ १र ३ १ २र

एष स्य मद्यो रसोऽव चष्टे दिवः शिशुः ।

१उ ३ २ ३ १ २

य इन्दुर्वारमाविशत् ॥*४*॥

अथ चतुर्थी। "स्यः" सः "एषः" "मद्यः" मदनिमित्तः "रसः" "अवचष्टे" सर्वमेव पश्यति "दिवः शिशुः" द्युलोकस्य पुत्रः तत्तोत्पन्नत्वात् पुत्रत्वमस्य। "यः" "इन्दुः" दीप्तः सोमः "वारं" दशापवित्रम् "आविशत्" आविशति स एष इति ॥४॥

२२उ ३ १ २ ३ १ २र ३ २

एष स्य पीतये सुतो हरिरर्षति धर्णसिः ।

२ ३ १ २ ३ २ ३ २

क्रन्दन्योनिमभि प्रियम् ॥*५*॥

अथ पञ्चमी। "एषः" "स्यः" सः सोमः "पीतये" पानाय "सुतः" अभिषुतः "हरिः" हरितवर्णः "धर्णसिः" धारकः

"प्रिय" स्वप्रियभूत "योनि" स्थान द्रोणकलशं "क्रन्दन्" शब्द यन् "अभ्यर्षति" अभिगच्छति ॥ ५ ॥

१ २उ २ ३ २ १२ ३ १ २ ३ १२
एत त्यं हरितो दश मर्मृज्यन्ते अपस्युवः ।

१ २ १ २ ३ १ २
याभिर्मदाय शुम्भते ॥*६*॥ [४]

अथ षष्ठी। "एत" "त्य" तं सोमम् अध्वर्यो "दश" "हरित" हरणस्वभावा अङ्गुलय "अपस्युव" कर्मेच्छव सत्य "मर्मृज्यन्ते" शोधयन्ति। "याभि" अङ्गुलिभिरिन्द्रस्य "मदाय" "शुम्भते" दीप्यते शोध्यत इत्यर्थं, तमेतमिति सम्बन्ध ॥ ६ ॥ [४]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य तृतीय खण्ड ॥३॥

---

३ १ २ ३ २ १ २ ३२ ३ १ २३ २ ३ १
एष वाजी हितो नृभिर्विश्वविन्मनसस्पति ।

२ १ २ १ १ २
अव्यं वारं वि धावति ॥*१*॥

ऋ० प्रियमेध । छ० गायत्री। दे० साम । अथ चतुर्थ खण्डे—एषवाजो इति पञ्चर्च सूक्तम, तत्र प्रथमा। "एष" सोम, "वाजी" वेजनशील, "हित" अध्वर्युणा पात्रे निहित धृत, "विश्ववित्" सर्वज्ञ, "मनस" स्तोतस्य "पति" स्वामो अथवा सोमस्य मनोऽभिमानित्वात् मनस स्वामित्वम्, "चन्द्रमा मनो भूत्वा हृदय वा विशत"—इति श्रुति ताहृ शोऽसो "अव्य वार" अविसम्बन्धिन वाल दशापवित्र "वि धावति विविध गच्छति ॥

"अव्यम्" "अव्य"—इति पाठो ॥ १ ॥

१ १ ३ १ २ ३ १ २ ३ १ २ ३ २

एष पवित्रे अक्षरत्सोमो देवेभ्यः सुतः ।

३ २ ३ १ ३ २

विश्वा धामान्याविशन् ॥*२*॥

अथ द्वितीया । "एषः" सोमः "देवेभ्यः" देवार्थं "सुतः" अभिषुतः सन् पवित्रे "अक्षरत्" स्रवन् "विश्वा" सर्वाणि "धामानि" देवशरीराणि "आ विशन्" प्रविशन् प्रवेष्टुमित्यर्थः ॥ २ ॥

१२ ३१ २ ३२ ३ १२ ३२

एष देवः शुभायतेऽधि योनावमर्त्यः ।

२ ३ २३१ २

वृत्रहा देववीतमः ॥*३*॥

अथ तृतीया । "एषः" सोमः "देवः" "शुभायते" । कुत्र ? "अधियोनौ" स्वीये स्थाने । कीदृश एषः ? "अमर्त्यः" अमरणधर्मा "वृत्रहा" शत्रुहन्ता "देववीतमः" अतिशयेन देवानां कामयिता ॥ ३ ॥

१ २उ ३ १ २ ३१ २ ३ १ २ ३२

एष वृषा कनिक्रदद्दशभिर्जामिभिर्यतः ।

२ १ ३२

अभि द्रोणानि धावति ॥*४*॥

अथ चतुर्थी । "वृषा" कामानां वर्षिता "एषः" सोमः "कनिक्रदत्" शब्दं कुर्वन् "दशभिः" "जामिभिः" अङ्गुलिभिः "यतः" धृतः "द्रोणानि" द्रुममयानि पात्राणि "अभि धावति" अभिगच्छति ॥ ४ ॥

१ १ २र २ ३ १ २ ३ २ ३ १ २
एष सूर्य्यमरोचयत्पवमानो अधि द्यवि ।

३ १ २ ३ १ २र
पवित्रे मत्सरो मदः ॥*५*॥

अथ पञ्चमी। "पवमानः" पूयमानः "एषः" सोमः "अधि द्यवि" द्युलोके स्थितं "सूर्य्यं" "रोचयत्" रोचयति। कीदृशः ? "पवित्रे" स्वयं दशापवित्रे स्थितः, "मत्सरः" मदहेतुं मासं, "मदः" हृष्टः ॥

"अधिद्यवि। पवित्रे मत्सरोमदः"—"विचर्षणि। विश्वा धामानि विश्ववित्"—इति पाठौ ॥ ५ ॥

२ १ २र ३ १ २ ३ १ २
एष सूर्य्येण हासते संवसानो विवस्वता ।

१ २ ३ १ २र
पतिर्वाचो अदाभ्यः ॥*६*॥ [५]

अथ षष्ठी। "एषः" सोमः "संवसानः" सर्वमप्याच्छादयन् "विवस्वता" दीप्तिमता "सूर्य्येण" "हासते" परित्यज्यते पवित्र इति शेषः। कीदृशः ? "वाचः स्तुतिलक्षणायाः "पतिः" पालकः स्वामी वा "अदाभ्यः" केनाप्यहिंस्यः ॥६॥[५]

इति सामवेदार्थप्रकाशे उत्तरार्चिकस्य दशमस्याध्यायस्य चतुर्थः खण्डः ॥४॥

---

१ १ २ ३ २ १ २ ३ १ २ १ २
एष कविरभिष्टुतः पवित्रे अधि तोशते ।

३ २उ ३ १ २
पुनानो घ्नन्नप स्रिधः ॥*१*॥

ऋ० नृमेधः। छ० गायत्री। दे० सोमः। अथ पञ्चमखण्डे—एष कविरिति षडृच सूक्तम्,—तत्र प्रथमा। "एषः"

सोमः "कविः" मेधावी "अभिष्टुतः" अभितःस्तुतः "पवित्रे अधि" दशापवित्रे अधि दशापवित्रमतीत्य "तोशते" यद्यपि तोशतिर्वधकर्मा तथापि हनने गतिसद्भावात् अत्र गतिमात्रे वर्त्तते गच्छतीत्यर्थः अथवा "पवित्रे अधि" छन्नालिने "तोशते" हन्यते पीड्यत इत्यर्थः किङ्कुर्वन् ? "पुनानः" पूयमानः "द्विषः" शत्रून् "अपघ्नन्" अपगमयन् ॥

"द्विषः" "स्त्रिधः"—इति पाठौ ॥ १ ॥

१ २ २र ३ १ २ ३ १ २र
एष इन्द्राय वायवे स्वर्जित्परि षिच्यते ।
१ २ ३ ३ १ २
पवित्रे दक्षसाधनः ॥*२*॥

अथ द्वितीया । "एषः" सोमः "स्वर्जित्" स्वर्गस्य सर्वस्य वा जेता "इन्द्राय" "वायवे" च "पवित्रे" "परिषिच्यते" परिस्राव्यते । कीदृश एषः ? "दक्षसाधनः" बलकारी ॥२॥

३ १र २ ३ १ २ ३ २ ३ १ २र ३ २
एष नृभिर्विनीयते दिवो मूर्धा वृषा सुतः ।
२ ३ १ २ ३ २
सोमो वनेषु विश्ववित् ॥*३*॥

अथ तृतीया । "एषः" सोमः "नृभिः" कर्मनेतृभिः ऋत्विग्भिः "विनीयते" विविधं नीयते । कीदृशः ? "दिवः" द्युलोकस्य "मूर्द्धा" शिरोवत् प्रधानभूतः "वृषा" अभिमतवर्षकः "सुतः" अभिषुतः । कुत्र नीयते ? "वनेषु" वननीयेषु पात्रेषु वनसम्भूतद्रुमविकारेषु वा पात्रेषु "विश्ववित्" सर्वज्ञ एष इति समन्वयः ॥ ३ ॥

२ ३ २ ३ २ २ ३ २ २ २
एष गव्युरचिक्रदत्पवमानो हिरण्ययुः ।

१ २ २ १ २र

इन्दुः सत्राजिदस्तृतः ॥४॥

अथ चतुर्थी। "एषः" सोमः "पवमानः" पूयमानः "अचिक्रदत्" शब्दं करोति। कथम्भूतः सन्? "गव्युः" अस्माकं गा इच्छन् "हिरण्ययुः" हिरण्यानीच्छन् "इन्दुः" दीप्तः सन्, "सत्राजित्" महतः शत्रोरसुरादेर्जेता, "अस्तृतः" स्वयमन्यैरहिंस्यश्च सन् ॥ ४ ॥

१ २उ ३क २र २ १ २ २ २ २ २ २

एष शुष्म्यसिष्यददन्तरिक्षे वृषा हरिः।

१ २उ २ २ २ १

पुनान इन्दुरिन्द्रमा ॥५॥

अथ पञ्चमी। "शुष्मी" बलवान् सोमः "अन्तरिक्षे" दशापवित्रे "असिष्यदत्" स्यन्दते। कीदृश एषः? "वृषा" वर्षकः, "हरिः" हरितवर्णः, "पुनानः" पूयमानः, "इन्दुः" दीप्तः, स एव "इन्द्रम्" इन्द्रञ्चापि; गच्छतीति शेषः। "आ" —इति चार्थे ॥ ५ ॥

२ २ ३ १ २ २ १ २ २ १ २

एष शुष्म्यदाभ्यः सोमः पुनानो अर्षति।

२ १ २ २ २

देवावीरघशंसहा ॥६॥ [६]

अथ षष्ठी। "एषः" सोमः "शुष्मी" बलवान् "अदाभ्यः" अदम्भनीयः अहिंसनीयः "पुनानः" पूयमानः "अर्षति" गच्छति "देवावीः" देवानामविता "अघशंसहा" अघान् शंसन्तीत्यघशंसाः तेषां वा हन्ता ॥ ६ ॥ [६]

इति सामवेदार्थ प्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

२ ३२ ३ २३ २३ १ २ ३१ २
स सुत: पीतये वृषा सोम: पवित्रे अर्षति।
२ १ २र ३ २
विघ्नन्रक्षांसि देवयु: ॥*१*॥

ऋ० रहुगण:। छ० गायत्री। दे० सोम:। अथ षष्ठे खण्डे—ससुत:पीतय इति षडृचं सूक्तम्, तत्र प्रथमा। "स:" सोम: "पीतये" इन्द्रादिपानाय "सुत:" अभिषुत: "वृषा" वर्षण: सन् "पवित्रे" "अर्षति" गच्छति। किङ्कुर्वन्? "रक्षांसि" "निघ्नन्"। "देवयु:" देवकाम:। स इत्यन्वय: ॥१॥

२ ३ १ २ ३ १ २र ३ १
स पवित्रे विचक्षणो हरिरर्षति धर्णसि:।
१ २उ ३ १ २
अभि योनिं कनिक्रदत् ॥*२*॥

अथ द्वितीया। "स:" सोम: "विचक्षण:" पश्यति कर्म्मेतत् (निघ० ३, ११, ३) सर्वस्य द्रष्टा "हरि:" हरितवर्ण: सोम: "धर्णसि:" सर्वस्य धारक: "पवित्रे" "अर्षति" गच्छति, पश्चात् "कनिक्रदत्" शब्दं कुर्वन् "योनिं" स्थानं द्रोणकलशम् "अभि" गच्छति ॥ २ ॥

१ ३ १ १ २ २ ३ १ २र २ १ २
स वाजी रोचनं दिव: पवमानो वि धावति।
३ १ २र ३ १ २
रक्षोहावारमव्ययम् ॥*३*॥

अथ तृतीया। "स:" "वाजी" वेजनवान् अन्नवान् वा य: "दिव:" "रोचनं" रोचक: "पवमान:" पूयमान: "विधा

"द्रोणानि" द्रोणकलशान् "अभि धावति" अभिगच्छति। किङ्कुर्वन्? "इन्द्राय" इन्द्रं "मंहयन्" स्वकीयरसेन पूजयन्॥

"मंहयन्" "मंहना"—इति पाठौ॥ ६॥ [७]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य षष्ठः खण्डः॥ ६॥

—o—

१ २ ३ १ २ १ १२ ३ १ २ ३ १ २
य: पावमानीरध्येत्यृषिभिः संभृतꣳ रसम्।
२३ २ ३ १ २ ३ १ २ ३ १ २
सर्वꣳ स पूतमश्नाति स्वदितं मातरिश्वना॥१॥

ऋ० पवित्रः। छ० अनुष्टुप्। दे० पवमान्य ऋचः। अथ सप्तमखण्डे—यः पावमानीरिति षडृचं सूक्तम्, तत्र प्रथमा। "यः" जनः "पावमानीः पवमानदेवताकाः सर्वा ऋचः तद्रूपं "ऋषिभिः" सूक्तद्रष्टृभिः मधुच्छन्दःप्रभृतिभिः "सम्भृतं" सम्पादितं "रसं" वेदसारभूतं पावमानं सूक्तसङ्घं यः "अध्येति", "सः" जनः "सर्वं" भोज्यजातं "पूतं" परिशुद्धमेव "अश्नाति" भक्षयति कथमस्य पूतत्वम्? तत्राह—स्वस्वामनात् प्रागेव "मातरिश्वना" मातरि अन्तरिक्षे श्वसितीति मातरिश्वा वायुः, स च पवित्रमेव 'पवित्रं च वायुना "स्वदितं" स्वादूकृतं परिपूतमेवान्नं यस्मात् स नरोऽश्नाति॥१॥

१ २३ ३ १ २र २ १ २ २ २ १
पावमानीर्यो अध्येत्यृषिभिः संभृतꣳ रसम्।
१ २ १ २ २ १ २ १ १२ ३ १
तस्मै सरस्वती दुहे क्षीरꣳ सर्पिर्मधूदकम्॥२॥

अथ द्वितीया। "यः" ब्राह्मणः "पावमानीः" पवमानदेवताका ऋचः "ऋषिभिः" मधुच्छन्दःप्रभृतिभिर्मन्त्रद्रष्टृभिः

वति"। कीदृशः? "रक्षोहा" रक्षसां हन्ता, "अव्ययं वारं" दशापवित्रम् अतोत्य विधावति विविधं गच्छति॥

"रोचनं" "रोचना"—इति पाठौ॥ ३॥

१ २ ३क २ १ २ ३ १२
स वित्स्याधि सानवि पवमानो अरोचयत्।

३ १ ३ १ २ ३१
जामिभिः सूर्यं सह॥४॥

अथ चतुर्थी। "सः" सोमः "वित्स्य" महर्षेः "अधिसानवि" समुच्छ्रिते यज्ञे अधीति सप्तम्यर्थानुवादी "पवमानः" पूयमानः "जामिभिः" प्रबुद्धैः बन्धुभूतैर्वा सुतेजोभिः "सह" सहितः सन् "सूर्यम्" "अरोचयत्" प्रकाशितवान्॥ ४॥

१ २३ १ २२ ३ १ ३ ३ १ ३२
स वृत्रहा वृषा सुतो वरिवोविददाभ्यः।

२ ३ १ २
सोमो वाजमिवासरत्॥५॥

अथ पञ्चमी। "सः" सोमः "वृत्रहा" अवृणां हन्ता "वृषा" वर्षकः "सुतः" अभिषुतः "वरिवोवित्" यष्टृधनस्य लम्भकः "अदाभ्यः" अन्यैरहिंसनीयः; एवङ्गुणः सन् "वाजमिव" संग्राममश्व इव "असरत्" गच्छति कलशम्॥ ५॥

२ ३ १ २ १ २३ २ १ ३२
स देवः कविनेषितो३ऽभि द्रोणानि धावति

२ ३ १ २ ३ १ २
इन्दुरिन्द्राय मंहयन्॥६॥ [७]

अथ षष्ठी। "सः" सोमः "देवः" "इन्दुः" क्षियमाणः "कविना" आक्रान्तप्रज्ञेनाध्वर्युणा "इषितः" प्रेरितः सन्

"द्रोणानि" द्रोणकलशान् "अभि धावति" अभिगच्छति । किङ्कुर्वन् ? "इन्द्राय" इन्द्रं "मंहयन्" स्वकीयरसेन पूजयन् ॥ "मंहयन्" "मंहना"—इति पाठौ ॥ ६ ॥ [७]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य षष्ठः खण्डः ॥ ६ ॥

—o—

१ २ ३ २ ३ १ २र ३ १ २ ३ १ २
य: पावमानीरध्येत्यृषिभि: संभृतꣳ रसम् ।
२ १ २ ३ १ २ ३ १ २ ३ १ २
सर्वꣳ स पूतमश्नाति स्वदितं मातरिश्वना ॥*१*॥

ऋ० पवित्रः। छ० अनुष्टुप्। दे० पवमान्यं ऋचः। अथ सप्तमखण्डे—यः पावमानीरिति षडृचं सूक्तम्, तत्र प्रथमा। "यः" जनः "पावमानीः पवमानदेवताकाः सर्वा ऋचः तद्रूपं "ऋषिभिः" सूक्तद्रष्टृभिः मधुच्छन्दःप्रभृतिभिः "सम्भृतं" सम्पादितं "रसं" वेदसारभूतं पावमानं सूक्तसङ्घं यः "अध्येति", "सः" जनः "सर्वं" भोज्यजातं "पूतं" परिशुद्धमेव "अश्नाति" भक्षयति कथमस्य पूतत्वम् ? तत्राह—स्वस्यागमनात् प्रागेव "मातरिश्वना" मातरि अन्तरिक्षे श्वसितीति मातरिश्वा वायुः, स च पवित्रमेव पवित्रेण वायुना "स्वदितं" स्वादूकृतं परिपूतमेवात्र पश्चात् स नरोऽश्नाति ॥१॥

१ २३ ३ १ २र ३ १ २३ १ २
पावमानीर्यो अध्येत्यृषिभि: संभृतꣳ रसम् ।
२ ३ १ २ ३ १ २ ३ २३ ३ १ २
तस्मै सरस्वती दुहे क्षीरꣳ सर्पिर्मधूदकम् ॥*२*॥

अथ द्वितीया। "यः" यो ब्राह्मणः "पावमानीः" पवमानदेवताका ऋचः "ऋषिभिः" मधुच्छन्दःप्रभृतिभिर्मन्त्रद्रष्टृभिः

सम्भृतं रसं" वेदसारं सूक्तसङ्घम् "अध्येति" अधीते, "तस्मै" पवमानाध्ययनं कुर्वते जनाय "सरस्वती" सर्वत्र सरणवती वाग्देवता "क्षीरं" यज्ञसाधनं पयः, "सर्पिः" तादृशं घृतं "मधु" मदकरम् "उदकं" सोमं "दुहे" स्वयमेव दुग्धे यागादिपरवेदशास्त्रविदं करोतीत्यर्थः दुह प्रपूरणे (अदा० प०) कर्मकर्त्तरि "न दुहस्नुनमाम् (३, १, ८९)—इत्यादिना यकः प्रतिषेधः, "लोपस्त आत्मनेपदेषु (७, १, ४१)" —इति तलोपः ॥ २ ॥

२ १ २ १ २ २ ३१ १ २३ १ २
पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः ।
२ १ २ १ २ ३ १ २ ३ २ ३ १ २ ३ २ २
ऋषिभिः संभृतो रसो ब्राह्मणेष्वमृतꣳ हितम् ॥*३*॥

अथ तृतीया। याः पावमान्य ऋचः ताः "स्वस्त्ययनीः" क्षेमप्रापिकाः "सुदुघाः" सुष्ठु फलं दुहानाः "घृतश्चुतः" घृतं श्चोतन्ति क्षारयन्तीति घृतश्चुतः ईदृग्भूताः अस्माननुष्ठातृन् लिहन्ति शेषः। "ऋषिभिः" मन्त्रदर्शिभिर्मुनिभिः "रसः" फलसारः "सम्भृतः" अस्मासु सम्पादितः "ब्राह्मणेषु" ब्रह्माणो मन्त्राः तत्पाठकाः ब्राह्मणाः, तेषु अस्मासु "अमृतम्" अविनाशयत् "हितं" सम्पादितम् ॥ ३ ॥

३ २ १ २ ३ १ २ ३ १ २ ३१ २१
पावमानीर्दधन्तु न इमं लोकमथो अमुम् ।
२ ३ १ २ ३ २ ३२ ३ १ २
कामांत्समर्धयन्तु नो देवीर्देवैः समाहृताः ॥*४*॥

अथ चतुर्थी। "देवैः" इन्द्रादिभिः "समाहृताः" सम्पादिताः "पा... देव्यो" पवमानमन्त्राभिमानिनो देव्यः

"नः" अस्माकम् "इमम्" दृश्यमानं "लोकं" भूलोकम् "अथो" अपि च "अमुं" स्वर्गलोकं "दधन्तु" प्रयच्छन्तु। तत्रत्यान् "कामान्" च "नः" अस्मदर्थं "समर्धयन्तु" समृद्धान् कुर्वन्तु ॥ ४ ॥

१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
येन देवाः पवित्रेणात्मानं पुनते सदा ।

१ २ ३ १ २ ३ १ २
तेन सहस्रधारेण पावमानीः पुनन्तु नः ॥*५*॥

अथ पञ्चमी। "देवाः" इन्द्राद्याः "येन" पवित्रेण शुद्धिसाधनेन "सदा" "आत्मानं" स्वदेहं "पुनते" शोधयन्ति, "सहस्रधारेण" सहस्रावान्तरभेदयुक्तेन "तेन" साधनेन "पावमानीः" पावमान्य ऋचः "नः" अस्मान् "पुनन्तु" ॥ ५ ॥

२ ३ २ ३ १ २ ३ १ ३ २ ३ १
पावमानीः स्वस्त्ययनीस्ताभिर्गच्छति नान्दनम् ।

३ १ ३ २ ३ २ ३ १ २
पुण्यांश्च भक्षान्भक्षयत्यमृतत्वं च गच्छति

॥*६*॥ [ ८ ]

अथ षष्ठी। "पावमानीः" पवमानः पावकः पूयमानो वा सोमः, तत्सम्बन्धिन्यस्तद्देवताका ऋचः पावमान्यस्ताः "स्वस्त्ययनीः" स्वस्त्योऽविनाशनाम, तथाविधफलस्य प्रापयित्र्यः, "ताभिः" उक्तलक्षणाभिः पावमानीभिः तत्पाठेन स्तोता "नान्दनं", नन्दयति सुकृतिन इति नन्दनः स्वर्गः स एव नान्दनः स्वार्थिकस्तद्धितप्रत्ययः तम् "गच्छति" प्राप्नोति। किञ्चेह लोके "पुण्यान्" सुकृतसम्पादितान् "भक्षान्" भक्षणीयान् भोगान् अन्नपानादिलक्षणान् "च भक्षयति"।

किञ्च "अमृतत्वं च गच्छति" अमृतत्वं नाम सोमभावः तञ्च प्राप्नोति ॥ ६ ॥ [ ८ ]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य सप्तमः खण्डः ॥ ७॥

---

१ २ २ १ १२ ३ १ २ ३
अगन्म महा नमसा यविष्ठं

२ ३ २ ३ १ २ ३ १ २ ३ १
यो दीदाय समिद्धः स्वे दुरोणे।

३ १ २ ३ १ २ ३ २ ३ १
चित्रभानुꣳ रोदसी अन्तरुर्वी

२ ३ १ २ ३ १ २
स्वाहुतं विश्वतः प्रत्यञ्चम् ॥*१७॥

ऋ० वसिष्ठः। छ० त्रिष्टुप्। दे० इन्द्रः। अथाष्टमे खण्डे—अगन्मेति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। "यः" अग्निः "स्वे दुरोणे" आहवनीयाख्ये स्वे स्थाने "समिद्धः" काष्ठैः सम्यग्दीप्तः सन् "दीदाय" दीप्यते, तमिमं "यविष्ठ" युवतमम् "उर्वी" विस्तीर्णयोः "रोदसी" रोदस्योः द्यावापृथिव्योः "अन्तः" मध्ये अन्तरिक्षे "चित्रभानुं" चित्रकान्तं "स्वाहुतं" सुष्टु आहुतिभिर्हुतं सन्त "विश्वतः" सर्वतः "प्रत्यञ्च" प्रतिगच्छन्तमग्निं "महा" महता "नमसा" नमस्कारेण "अगन्म" वयमुपगच्छामः ॥ १ ॥

१ ३ १ २र ३ १ २ ३ १
स मह्ना विश्वा दुरितानि साह्वा-

३ १ २३ १ ३ २ ३ १ १
नग्नि ष्टवे दम आ जातवेदाः ।

१ २ ३ १ २ ३ २
स नो रक्षिषद्दुरितादवद्या-

३ १ २ ३ २ ३ १ १ ३ १ २
दस्मान्गृणत उत नो मघोन: ॥*२*॥

अथ द्वितीया । यः "अग्निः" "मह्ना" महत्त्वेन "विश्वा" विश्वानि "दुरिता" दुरितानि "साह्वान्" अभिभवन् "जातवेदाः" जातधनः जातप्रज्ञो वा "दमे" यज्ञगृहे "स्तवे" अस्माभिः स्तूयते, "सः" अग्निः "गृणतः" स्तुवतः "नः" अस्मान् "दुरितात्" पापात् "अवद्यात्" निन्दिताच्च कर्मणः "रक्षिषत्" रक्षतु । "उत" अपि च "मघोनः" हविष्मतः "नः" अस्मान् रक्षतु ॥ २ ॥

१ २र ३ १ ३ १ २ १
त्वं वरुण उत मित्रो अग्ने

१ २ ३ २ ३ १ २
त्वां वर्धन्ति मतिभिर्वसिष्ठाः ।

१ २र ३ १ २
त्वे वसु सुषणनानि सन्तु

३ १ २ ३ २ ३ १ २
यूयं पात स्वस्तिभिः सदा नः ॥*३*॥ [९]

अथ तृतीया । हे "अग्ने!" "त्वं" "वरुणः" असि पापानां निवारको भवसि "उत" अपि च "मित्रः" असि, पुण्यप्रापणे सखा भवसि । "वसिष्ठाः" एतन्नामका ऋषयः हे अग्ने! "त्वां" "मतिभिः" स्तुतिभिः "वर्द्धन्ति" वर्द्धयन्ति "त्वे" त्वयि विद्यमानानि "वसु" वसूनि "सुषणनानि" सुसम्भजनानि "सन्तु" । हे अग्ने! "यूयं" त्वदादयः सर्वे देवाः

"स्वस्तिभिः" क्षेमैः "नः" अस्मान् "सदा" सर्वदा "पात" रक्षत ॥ ३ ॥ [ ८ ]

१ २उ २ १ २र ३ १ २ २ १ १
महाꣳ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाꣳ इव।

१ २ ३१ २
स्तोमैर्वत्सस्य वावृधे ॥*१*॥

ऋ० वत्सः। छ० गायत्री। दे० इन्द्रः। अथ तृचात्मके द्वितीयसूक्ते—तत्र प्रथमा। "यः" "इन्द्रः" "ओजसा" बलेन "महान्" सर्वेभ्योऽधिकः। क इव ? "वृष्टिमानिव" यथा वृष्ट्या युक्तः "पर्जन्यः" रसानां प्रार्जयिता देवः महान् स इन्द्रः "वत्सस्य" पुत्रस्थानीयस्य स्तोतुः वत्स-नाम्न एव वा ऋषेः "स्तोमैः" स्तोत्रैः "वावृधे" प्रवर्द्धते ॥ १ ॥

२ ३ १ २ १ २र २ १ २ ३ १ २ १ २
कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम्।

३ १ २ ३ १ २
जामि ब्रुवत आयुधा ॥*२*॥

अथ द्वितीया। "कण्वाः" स्तोतृ-नामैतत् (निघ० ३, १५, ७) स्तोतारः कण्वगोत्रा वा "इन्द्रं" "स्तोमैः" स्तोत्रैः "यज्ञस्य" यागस्य "साधनं" साधयितारं निष्पादकं "यद्" यदा "अक्रत" अकुर्वत करोतेर्लुङि "मन्त्रे" घसेति (२, ४, ८०) च्लेर्लुक्, तदानीं "आयुधा" शत्रूणां हिंसकानि वाणादीनि "जामि" अतिरिक्तनामैतत् अतिरिक्तम् अधिक प्रयोजनरहितं "ब्रुवते" कथयन्ति। "आयुधा" आयुधस्य सर्वस्य कार्यस्येन्द्रेण कृतत्वात् आयुधानि निःप्रयोजनानीत्यर्थः यद्वा,

"आयुधा" आयुधमायोधनशीलमिन्द्रं "जामि" जामिं भ्रातरं "ब्रुवते" वदन्ति ॥

"आयुधा"-"आयुधम्"—इति पाठौ ॥ २ ॥

२ २ ३ २ ३ १ २ ३ १ २३ १ २
प्रजामृतस्य पिप्रतः प्र यद्भरन्त वह्नयः ।
१ २ ३ २३ १ २
विप्रा ऋतस्य वाहसा ॥*३*॥ [१०]

अथ तृतीया। "ऋतस्य" यज्ञस्य सत्यस्य वा "प्रजा" प्रकर्षेण जातमिन्द्रं "पिप्रतः" नभसः" प्रदेशान् पूरयन्तः "वह्नयः" वाहका अश्वा "यद्" यदा "प्र भरन्त" प्रकर्षेण भरन्ति वहन्ति तदा "विप्राः" मेधाविनः स्तोतारः "ऋतस्य" यज्ञस्य "वाहसा" प्रापकेण स्तोत्रेण तम् इन्द्रं स्तुवन्तीति शेषः ॥ ३ ॥ [१०]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य अष्टमः खण्डः ॥ ८ ॥

---

१ १ १ १ २ ३ १ २ ३ १ २
पवमानस्य जिघ्नतो हरेश्चन्द्रा असृचत ।
३१ २ ३ १ २
जीरा अजिरशोचिषः ॥*१*॥

ऋ० वैखानसः । छ० गायत्री । दे० सोमः । अथ नवमे खण्डे—पवमानस्येति त्र्यचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा । "जिघ्नतः" पुनः पुनः तमांसि विनाशयतः "हरेः" हरित-वर्णस्य "अजिरशोचिषः" सर्वत्र गमनशीलतेजसः "पवमानस्य" "चन्द्राः" चदि आह्लादे (भ्वा० प०) देवानामाह्लादयितारः

"जीराः" चिप्रं चरणशीलाः धाराः "असृक्षत" सृजन्ति पवित्रान्निर्गच्छन्तीत्यर्थः ॥

"जिघ्नतः" "जङ्घ्नतः"—इति पाठौ ॥ १ ॥

१ १ २ १ २ २ १ २ २ १ २

पवमानो रथीतमः शुभ्रे भिः शुभ्रशस्तमः ।

१ २ ३ १ २

हरिश्चन्द्रो मरुद्गणः ॥२॥

अथ द्वितीया। "पवमानः" देवः "रथीतमः" अतिशयेन रथवान् "ईद्रथिनः (८, २, १७ वा०)"—इतीकारः। तथा "शुभ्रेभिः" शोभायुक्तेभ्यस्तेजोभ्योऽपि "शुभ्रशस्तमः" अत्यन्त दीप्यमानश्च यद्वा, निर्मलतमयशोयुक्तः "हरिश्चन्द्रः" "हस्वाचन्द्रोत्तरपदे मन्त्रे (६, १, १५१)"—इति सांहितिकः सुट् हरितवर्णदीप्तिः हरितधारायुक्तो वा "मरुद्गणः" मरुतो यस्य गणाः सहायभूताः स तथोक्तः तादृशः सोमः सर्वान् स्वरश्मिभिः व्याप्नोतित्युत्तरेण सम्बन्धः ॥ २ ॥

१ २ ३क २र ३ १ २ ३ १ २

पवमान व्यश्नुहि रश्मिभिर्वाजसातमः ।

१ २ ३ २ ३ १ २

दधत्स्तोत्रे सुवीर्य्यम् ॥३॥ [११]

अथ तृतीया। हे "पवमान!" सोम! त्वं "रश्मिभिः" स्वदीप्तिभिः "व्यश्नुहि" सर्वं जगद् व्याप्नुहि। कीदृशस्त्वम्? "वाजसातमः" अतिशयेनान्नस्य दाता बलस्य सम्भक्ता वा तथा "स्तोत्रे" पवमानं स्ताव कुर्वते जनाय "सुवीर्य्यं" शोभनवीर्य्यापेतं पुत्रं धनं वा "दधत्" विदधत् प्रयच्छन् व्याप्नुहि ॥

"पवमानव्यश्नुहि" पवमानोव्यश्नवत्"—इति पाठौ ॥३॥ [११]

२ ३ १ २ २ २उ ३ १ २ ३ २ ३ २
परीतो पिञ्चता सुतꣳ सोमो य उत्तमꣳ हविः ।
३ १ २र ३ २ २उ ३ २ ३ २ ३ १ २
दधन्वाꣳ यो नर्य्यो अप्स्वा३न्तरा सुषाव सोममद्रिभिः
॥*१*॥

ऋ० भरद्वाजः । छ० गायत्री । दे० सोमः । अथ द्वचात्मके द्वितीयसूक्ते—प्रथमा । हे ऋत्विजः ! "सुतम्" अभिषुतं सोमम् "इतः" अस्मात् कर्मेण ऊर्द्धम् अथवा अस्मात् प्रदेशात् ऊर्द्धं "परिषिञ्चत" वसतीवरीभिः इतोपिञ्चतेत्यत्र सन्हितायां छान्दसं रो रुत्वम्, आदेशप्रत्यययोरिति षत्वम् "यः" "सोमः" देवानाम् "उत्तमं" प्रशस्तं "हविः" भवति "यः" अपि च "नर्य्यः" मनुष्यहितः यश्च सोमः "अप्सु" वसतीवरीषु अन्तरिक्षे वा "अन्तः" "दधन्वान्" गच्छन् भवन् भवति तं "सोमम्" "अद्रिभिः" ग्रावभिः अध्वर्युः "सुषाव" अभिषुतं चकार ; तं परिषिञ्चतेति समन्वयः ॥ १ ॥

२ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
नूनं पुनानोऽविभिः परि स्रवादब्धः सुरभिन्तरः ।
२ १ २ २ १ २ २ १ २ २ ३ २ २ ३ १ २
सुते चित्वाप्सु मदामो अन्धसा श्रीणन्तो गोभिरुत्तरम्
॥*२ ॥

अथ द्वितीया । हे सोम ! "अदब्धः" कैश्चिदप्यहिंसितः "सुरभिन्तरः" अत्यन्तं सुगन्धि त्वं "नूनम्" इदानीं "पुनानः" पूयमानः "अविभिः" अविवालकृतैः पवित्रैः "परिस्रव" परिक्षर "सुते चित्" अभिषुते सति "अन्धसा" अन्नलक्षणेनानेन "गोभिः" गोविकारैः क्षीरादिभिः "श्रीणन्तः" मिश्रयन्तः

वयम् "उत्तरम्" उद्गततरम् "अप्सु" वसतीवरीषु स्थितं "त्वा" त्वां "मदामः" मदामहे ॥ २ ॥

१ २ २ १ २र ३ १ २ २ २ २ १ २ १ २
परि स्वानश्चक्षसे देवमादनः क्रतुरिन्दुर्विचक्षणः ॥*३*॥ [१२]

अथ अध्यास्यरूपा तृतीया। "स्वानः" सुतः अभिषूयमाणः सोमः "चक्षसे" सर्वेषां दर्शनाय "परि" स्रवति। कीदृशः? "देवमादनः" देवानां तर्पयिता, "क्रतुः" कर्त्ता, "इन्दुः" पात्रेषु क्षरणशीलः दीप्तो वा, "विचक्षणः" "सर्वस्य" विद्रष्टा ॥ ३ ॥ [१२]

१ २ २ १ २ २ ३उ १ २३
असावि सोमो अरुषो वृषा हरी
१ २ २ २ १ २ २र
राजेव दस्मो अभि गा अचिक्रदत्।
२ ३उ, १ २ २ २ १ २ २ १
पुनानो वारमत्येष्यव्ययᳬ श्येनो
२र २ १ २ २ १ २
न योनिं घृतवन्तमासदत् ॥*१*॥

ऋ० वसुः। छ० जगती। दे० सोमः। अथ तृचात्मके तृतीय-सूक्ते—प्रथमा। "सोमः" "असावि" अभिषुतोऽभूत्। कीदृशः सोमः? "अरुषः" आरोचमानः, "वृषा" वर्षकः, "हरिः" हरितवर्णः; स च राजेव "दस्मः" दर्शनीयः सन् "गाः" उदकानि "अभि" लक्ष्य "अचिक्रदत्" शब्दं करोति स्वरसनिर्मोकसमये, पश्चात् पुनानः "अव्ययम्" अविमयं "वारं" वालं दशापवित्रम् "अत्येषि" हे सोम! अतिक्रम्य

गच्छसि। ततः "श्येनो न" श्येन इव "योनिं" स्वीयं स्थानं "घृतवन्तम्" उदकवन्तम् "आसदत्" प्रविशति ॥

"अत्येषि" "पर्य्येति"—इति पाठौ, "आसदन्" "आसदम्"—इति च ॥ १ ॥

२ १ २ ३ १ २ ३ १ २ २ ३ २ २
पर्जन्यः पिता महिषस्य पर्णिनो
१ २ ३ २ ३ २ ३ १ २
नाभा पृथिव्या गिरिषु क्षयं दधे।
१ २ २ १ २ ३ १७ ३ १ २ ३ १
स्वसार आपो अभि गा उदासरन्त्सं
२८ ३ १ २ ३ २
ग्रावभिर्वसते वीते अध्वरे ॥*२*॥

अथ द्वितीया। यस्य "महिषस्य" महतः "पर्णिनः" पर्णवतः पतनवतो वा सोमस्य "पर्जन्यः" "पिता" जनकः "सः" सोमः "पृथिव्याः" "नाभा" नाभौ नाभिस्थानीये हविर्द्धाने "गिरिषु" गिरिसम्बन्धिषु ग्रावसु "क्षयं" निवासं "दधे" धारयति अभिषवसमये। तथा "स्वसारः" अङ्गुलयः "आपः" वसतीवर्य्यः "गाः" आशिराद्याः स्तुतयो वा "अभि" आभिमुख्येन "उदासरन्" उद्गच्छन्ति गच्छन्तु, "वसते", "सम्" गच्छते च, "ग्रावभिः" साकम्। कुत्र? "वीते" कान्ते "अध्वरे" यज्ञे ॥

"उदासरन्" "उतासरन्"—इति पाठौ, "वीते" "वीथे"—इति च ॥ २ ॥

२ १ २ ३ १ २८ ३ १ २ ३ १ २
कविर्वेधस्या पर्य्येषि माहिनमत्यो
२ ३ २ ३ १ २८
न मृष्टो अभि वाजमर्षसि।

२ १२ ३ १ २
अपसेधं दुरिता सोम नो मृड

३ १ २र ३ १२ ३ १ २
घृतावसानः परि यासि निर्णिजम् ॥*३*॥ [१३]

अथ तृतीया। हे "सोम!" "कविः" क्रान्तदर्शी सन् "वेधस्या" यागविधानेच्छया "माद्रिनं" मंहनीयं पवित्रं "पर्य्येषि" परिगच्छसि, यस्मात् "मृष्टः" प्रक्षालितः "अत्यो न" अश्व इव "वाजं" संग्रामम् "अभ्यर्षसि"। सोम! "दुरिता" अस्मदीयानि दुरितानि "अपसेधन्" परिहरन् "नः" अस्मान् "मृड" सुखय "घृतावसानः" घृतानि उदकानि वसानः आच्छादयन् "परि यासि" अभिगच्छसि। किन्तत्? "निर्णिजम्" पवित्रम्॥

"सोमनोमृडघृता"-सोमम्मृडयघृतम्"—इति पाठो॥३॥ [१३]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमखाध्यायस्य नवमः खण्डः॥९॥

---

१ २ ३ १ २ १ २र
आयन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत।

१ २ ३ १ २र ३ १ १ २
वसूनि जातो जनिमान्योजसा

१ २ ३ १ २र
प्रति भागं न दीधिमः॥*१*॥

ऋ० नृमेधः। छ० बृहती। दे० इन्द्रः। अथ दशमे खण्डे—प्रगाथात्मके प्रथम-सूक्ते, प्रथमा। हे अस्मदीया जनाः! "आयन्त इव" सूर्यं यथा समाश्रिता रश्मयः सूर्यं भजन्ते, तथा "इन्द्रस्य" "विश्वेत्" विश्वान्येव धनानि

"भजत" भजत। "जातः" प्रादुर्भूतः इन्द्रः यानि "वसूनि" धनानि "ओजसा" बलेन "जनिमा" जनिष्यमाणानि करोति अतो "भागं न" पितुः भागमिव तानि धनानि "प्रति दीधिमः" प्रतिधारयेम॥

"जातोजनिमानि"-"जातेजनिमानि"—इति पाठौ॥ १॥

१ २   २ १   १र   २ १   १र   २ १ २
अलर्षिरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः।

१ २ २   १ २   २ १   २र ०२
यो अस्य कामं विधतो न रोषति

१२   २ १ २   २ १२
मनो दानाय चोदयन्॥*२*॥ [१४]

अथ द्वितीया। द्वे स्तोतः। "अलर्षिरातिम्" अपापकदानम् अपापिष्ठस्य दातारमित्यर्थः अलर्षिपदसमानार्थमनर्शपदं यास्केन व्याख्यातम्—"अनर्शरातिमनश्लीलदानमश्लीलं पापकम्" इति (निरु० नै० ६, २३) "वसुदां" धनस्य दातारमिन्द्रम् "उप स्तुहि" यतः "इन्द्रस्य" "रातयः" दानानि "भद्रा" कल्याणानि अपदैश्वर्यकारीणीत्यर्थः। "यः" इन्द्रः स्वकीयं "मनः" "दानाय" अभीष्टप्रदानाय "चोदयन्" प्रेरयन् "विधतः" परिचरतः "अस्य" स्तोतुः "कामम्" इच्छां "न रोषति" न हिनस्ति। तमिन्द्रमुपस्तुहीति सम्बन्धः॥

"अलर्षिरातिम्"—इति छन्दोगाः पठन्ति, "अनर्शरातिम्"—इति बह्वृचाः; "यो अस्य" "सो अस्य"—इति च॥ २॥ [१४]

१२   २   १२   २ १२   २   १ २
यत इन्द्र भयामहे ततो नो अभयं कृधि।

१ २ १ २उ २ १ १ २ २ १ २उ २ १ २र
मघवं छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥*१*॥

ऋ० भर्गः। छ० बृहती। दे० अग्निः। अथ प्रगाथात्मके द्वितीय सूक्ते—प्रथमा। हे "इन्द्र!" "यतः" हिंसकात् "भयामहे" वयं, ततः "नः" अस्मभ्यम् "अभयं" "छग्धि" कुरु। हे "मघवन्!" धनवन्निन्द्र! "नः" अस्मानुद्दिश्य "तत्" तस्यै "तव ऊतये" त्वत्कर्तृकायै रक्षायै "शग्धि" शक्तो भव। किञ्च "वि द्विषः" अस्मद्द्वेष्टॄन् विजहि; "वि मृधः" अस्मद्धिंसकान् विजहि॥

"ऊतये" "ऊतिभिः"—इति पाठौ॥ १॥

१ २र २ १ २ १ २उ २ १ २ १ २
त्वꣳ हि राधसस्पते राधसो महः क्षयस्यासि विधर्त्ता।
१ २ ३ १ २ १ १ २
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥*२*॥ [१५]

अथ द्वितीया। हे "राधसस्पते!" धनस्य स्वामिन्! "त्वं हि" त्वं खलु "महः" महतः "राधसः" धनस्य "क्षयस्य" गृहस्य च "विधर्त्ता असि हि" अस्मभ्यं दातुं धारको भवसि खलु। हे "गिर्वणः" गीर्भिर्वननीय "मघवन्" धनवन्निन्द्र "तं" तादृशं "त्वा" त्वाम् "वयं" "सुतावन्तः" अभिषुत सोमाः "हवामहे" आह्वयामः।

"राधसस्पते" "राधस्पते"—इति पाठौ, "विधर्त्ता" "विधर्त्ते"—इति च॥ २॥ [१५]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य दशमः खण्डः॥ १०॥

२ २ २ ३ १ २र ३ २
त्वꣳ सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे ।
१ २ ३ १ २
पवस्व मꣳहयद्रयिः ॥*१*॥

*ऋ० भरद्वाजः । छ० गायत्री । दे० सोमः । अथैकादश-खण्डे—त्वं सोमेति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा । हे "सोम !" अभिषूयमाण ! पवमान ! "मन्द्रः" मादयितृतमः "ओजिष्ठः" ओजस्वितमः त्वम् "अध्वरे" हिंसारहितेऽस्मदीये यज्ञे "धारयुः" अभिषवधारा कामः "असि" भवसि । ततः "त्वं" "मंहयद्रयिः" स्तोतृभ्यः प्रदीयमानधनः सन् "पवस्व" द्रोणकलशे ग्रहादिषु दशापवित्रेण पूतो भव यद्वा, "धारयुः" तदर्थे भाष्यत इति मत्वर्थीयो युस् । हे सोम ! त्वं धारावानसि ततः पवस्वेति सम्बन्धः ॥ १ ॥

२ १२ ३ १ २ ३१ २ ३ १ २
त्वꣳ सुतो मदिन्तमो दधन्वान्मत्सरिन्तमः ।
१ २ ३ १ २र
इन्दुः सत्राजिदस्तृतः ॥*२*॥

अथ द्वितीया । हे सोम ! "सुतः" अभिषुतः "त्वं" "मदिन्तमः" अतिशयेन मदयुक्तोऽसि । कीदृशस्त्वम् ? "दधन्वान्" यज्ञस्य धारकः, "मत्सरिन्तमः" अतिशयेन मदकारी, "इन्दुः" दीप्तः, "सत्राजित्" बहूनां जेता, "अस्तृतः" केनाप्यहिंसितः ॥

"मदिन्तमः" "नृमादनः"—इति पाठौ, "इन्दुःसत्रा-जिदस्तृतः"—"इन्द्रायसूरिरन्धसा"—इति च ॥ २ ॥

१ २ ३ १ २र ३क२र ३ १ २
त्वꣳ सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत् ।

२ २ २ २ २ १ २
द्युमन्तꣳ शुष्ममा भर ॥*३*॥ [१६]

अथ तृतीया। हे "पवमान !" सोम ! "अद्रिभिः" ग्रावभिः "सुष्वाणः" सुष्वानः अभिषूयमाणस्त्वं "कनिक्रदत्" भृशं शब्दं कुर्वन् "अभ्यर्ष" कलशं पात्राणि चाभिगच्छ। किञ्च "द्युमन्तं" दीप्तियुक्तं "शुष्मं" शत्रूणां शोषकं बलं वा "आभर" ॥

"आभर" "उत्तमम्"—इति पाठौ ॥ ३ ॥ [१६]

१ २ २ १ २ २ २ २ १ २ ३ १ २
पवस्व देववीतय इन्दो धाराभिरोजसा।

२ १ २ २ १ २
आ कलशं मधुमान्त्सोम नः सदः ॥*१*॥

ऋ० मनुः। छ० उष्णिक्। दे० सोमः। अथ द्वचात्मके द्वितीयसूक्ते—प्रथमा। हे "इन्दो !" सोम ! "देववीतये" देवानां भक्षणाय "ओजसा" बलेन "धाराभिः" आत्मीयाभिः "पवस्व" चर। हे "सोम !" "मधुमान्" मदकररसवान् त्वं "नः" अस्मदीयं "कलशं" द्रोणाभिधानम् "आसदः" आसीद सदेर्लुङि रूपम् ॥ १ ॥

१२ ३ १ २३१२ २२ १२
तव द्रप्सा उदप्रुत इन्द्रं मदाय वावृधुः।

२ २ १ २ ३ १ २ २ २ २
त्वां देवासो अमृताय कं पपुः ॥*२*॥

अथ द्वितीया। "उदप्रुतः" वसतीवर्याख्यमुदकं प्रति गच्छन्तः यद्वा, उदकस्य निर्गमयितारः "तव" सम्भूताः "द्रप्साः" द्रुतगामिनो रसाः "मदाय" मदार्थम् इन्द्रम्

"वाहयुः" वर्द्धयन्ति । ततः "देवासः" देवा इन्द्रादयः "कं" सुखकरं "त्वाम्" "अमृताय" अमरणार्थं "पपुः" पिबन्ति ॥२॥

१ २ ३ १ २ १ २
आ नः सुतास इन्दवः पुनाना धावता रयिम् ।
१ १ २ १ १ २
वृष्टिद्यावो रीत्यापः स्वर्विदः ॥*३*॥ [१७]

अथ तृतीया । हे "सुतासः" अभिषूयमाणाः ! हे "इन्दवः" दीप्ताः पात्रेषु चरन्तो वा "रीत्यापः" यैः पृथिवीं प्रति स्रवणशीला आपः, तादृशा हे सोमाः ! "पुनानाः" पूयमानाः यूयं "नः" अस्मभ्यं "रयिम्" "आ धावत" आगमयत । कीदृशाः ? "वृष्टिद्यावः" वृष्टिमभि द्यौर्य्यैः क्रियते, वृष्यभिमुखद्युलोकवन्तः "स्वर्विदः" सर्वस्य लम्भकाः ॥ ३ ॥ [१७]

२ ३ १ २ ३ १ २र ३ १ २ ३ १ २
परि त्यꣳ हर्य्यतꣳ हरिं बभ्रुं पुनन्ति वारेण ।
१ २ ३उ ३ २उ ३ १ २ ३ १ २र
यो देवान्विश्वाꣳ इत्परि मदेन सह गच्छति ॥*१*॥

ऋ० अम्बरीषः ऋजिश्वा वा । छ० अनुष्टुप् । दे० सोमः । अथ दृचात्मके तृतीयसूक्ते—प्रथमा । "हर्य्यतं" सर्वैः स्पृहणीयं "हरिं" हरितवर्णं "बभ्रुं" बभ्रुवर्णं च "त्यं" तं सोमं "वारेण" वालेन पवित्रेण "परि पुनन्ति" परिशोधयन्ति "यः" सोमः "विश्वान्" एतत्सर्वानिन्द्रादीन् देवान् अनेन "मदेन" मादकेन रसेन "सह" "परि गच्छति" ॥ १ ॥

२उ ३ १ २ ३ १ २ ३ १ २
दिव्यं पञ्च स्वयशसꣳ सखायो अद्रिसंहतम् ।

२ १ २र २ १ २ २ १ २ २ १ १
प्रियमिन्द्रस्य काम्यं प्रस्नापयन्त ऊर्मयः ॥*२*॥

अथ द्वितीया। "हिः पञ्च" दयसङ्ख्याकाः "सखायः" समानख्याना अङ्गुलयः "स्वयशसं" स्वभूतयशस्काम् "अद्रिसंहतम्" ग्रावभिरभिषुतम् "इन्द्रस्य प्रियं" "काम्यं" सर्वैः काम्यमानम् "ऊर्मयः" द्वितीयैकवचने प्रथमाबहुवचनम्। ऊर्मिं प्रभूततरं "यं" सोमं "प्र स्नापयन्ते" वसतीवरीभिः प्रकर्षेण सेवयन्ति यद्वा, ऊर्मय इत्यङ्गुलिविशेषणं प्रभूता इति; तं सोमं पुनन्तीति पूर्वेण सम्बन्धः॥

"सखायः" "ससारः"—इति पाठौ, "प्र स्नापयन्त ऊर्मयः" "प्रस्नापयन्त्यूर्मिणम्"—इति च ॥ २ ॥

१ २ २ १-२ २१ २र
इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे।

१ २ ३ १ २ २ १ २ २ १ २
नरे च दक्षिणावते वीराय सदनासदे॥*३*॥[१८]

अथ तृतीया। हे "सोम!" "वृत्रघ्ने" वृत्रस्य हन्त्रे "इन्द्राय" षष्ठ्यर्थे चतुर्थी इन्द्रस्य "पातवे" पानार्थं "परिषिच्यसे" परितः पात्रेषु सिच्यसे वसतीवरीभिर्वा। किञ्च "दक्षिणावते" ऋत्विग्भ्यो दक्षिणादानेन तद्वते, "वीराय" विक्रान्तायेन्द्राय हवींषि दातुं "सदनासदे" यज्ञे यज्ञे सीदते, "नरे" मनुष्याय यजमानाय तस्मै फलप्रदानार्थं परिषिच्यसे।

"वीराय" "देवाय"—इति पाठौ ॥ ३ ॥ [१८]

१२ २१उ २ २ २
पवस्व सोम महे दक्षायाश्वो

२ १ २ २ १ २र
न निक्तो वाजी धनाय ॥*१*॥

ऋ० ऋणः त्रसदस्युः वा । छ० द्विपदा पंक्तिः । दे० सोमः । अथ दशात्मके चतुर्थ-सूक्ते—प्रथमा । हे "सोम !" "अश्वो न" अश्व इव "निक्तः" वसतीवरीभिरद्भिर्निर्णिक्तः, "वाजी" वेगवान् त्वं "मंहे" महते "दक्षाय" बलाय "धनाय" धनार्थं "पवस्व" क्षर ॥

"मंहे"-"क्रत्वे"—इति पाठौ ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्र ते सोतारो रसं मदाय पुनन्ति सोमं महे द्युम्नाय ॥*२*॥

अथ द्वितीया । "सोतारः" अभिषोतारः ऋत्विजः हे सोम ! "ते" तव स्वभूतं "रसं" "मदाय" मदार्थं "पुनन्ति" । तदेवोच्यते—"महे" महते "द्युम्नाय" "द्युम्नं" द्योततेर्यशो वान्नं वेति ( निरु० नै० ५, ५ ) यास्कः अन्नाय यशसे वा पुनन्ति सोमं शोधयन्ति यद्वा, सोममभिपूयमाणं रसं पुनन्तीति एकवाक्यतया योजनीयम् ॥

"प्रते"-"तन्वे"—इति पाठौ ॥ २ ॥

१ २ ३ १ २र
शिशुं जज्ञानꣳ हरिं मृजन्ति

३ १ २ १ २ १ २ ३ १ २
पवित्रे सोमं देवेभ्य इन्दुम् ॥*३*॥ [१८]

अथ तृतीया । "शिशुम्" एषां पुत्रभूतं "जज्ञानं" जायमानं "हरिं" हरितवर्णम् "इन्दुं" दीप्तं सोमं "देवेभ्यः" "पवित्रे" "मृजन्ति" ऋत्विजा मार्जयन्ति ॥ ३ ॥ [१८]

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २र
उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् ।
३ १ २ ३ १ २
इन्दुं देवा अयासिषुः ॥*१*॥

ऋ० पमहीयुः । छ० गायत्री । दे० सोमः । अथ तृचात्मके पञ्चम-सूक्ते—प्रथमा । "जातम्" प्रादुर्भूतम् "अप्तुरं" वसतीवरीभिः प्रेरितम् "भङ्गं" अत्रूणां भञ्जकम् "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतम् "इन्दुं" सोमं "देवाः" इन्द्रादयः "उपायासिषुः" उपगच्छन्ति ॥ १ ॥

१ २र ३ १ २ ३ १ २ ३ १ २
तमिद्वर्धन्तु नो गिरो वत्सꣳ सꣳशिश्वरीरिव ।
१ २र ३ १ २
य इन्द्रस्य हृदꣳसनिः ॥*२*॥

अथ द्वितीया । यः सोमः "इन्द्रस्य" "हृदंसनिः" हृदयस्य सम्भक्ता भवति "तमित्" तमेव सोमं "नः" अस्माकं "गिरः" स्तुतिरूपा वाचः "सवर्द्धन्तु" संवर्द्धयन्तु । तत्र दृष्टान्तः—"वत्सं" वालं "शिश्वरीरिव" यथा शिश्वर्यो बहुपयस्का मातरो वत्सं सम्यक् वर्द्धयन्ति तद्वदित्यर्थः ॥ २ ॥

१ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २
अर्षा नः सोम शं गवे धुक्षस्व पिप्युषीमिषम् ।
३ १ ३ १ २
वर्धा समुद्रमुक्थ्य ॥*३*॥ [२०]

अथ तृतीया । हे सोम !" त्वं "नः" अस्माकं "गवे" "शं" सुखम् "अर्ष" अर । अपि च "पिप्युषीम्" प्रवृद्धाम्

"इयम्" अन्नं "धुक्षस्व" प्रपूरय। किञ्च हे "उक्थ्य"! प्रशस्य! "समुद्रम्" "वर्द्ध" वर्द्धय॥

"अर्यानः"-"अर्याणः"—इति पाठौ, "उक्थ्य"-उक्थ्यम्"—इति च॥ ३॥ [ २० ]

इति सामवेदार्थप्रकाशे उत्तराचिकस्य दशमस्याध्यायस्य एकादशः खण्डः॥ ११॥

---

१ २ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २

आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्।

१ २ १ २ १ २ १ २

येषामिन्द्रो युवा सखा॥*१*॥

ऋ० त्रिशोकः। छं० गायत्री। दे० अग्निः। अथ द्वादश-खण्डे—आघाये अग्निमिति त्र्यृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। "ये" ऋषयः "आ घा" आभिमुख्येन खलु "अग्निम्" "इन्धते" दीपयन्ति, येषाञ्च "युवा" नित्यतरुणः "इन्द्रः" "सखा" भवति, ते "आनुषक्" आनुपूर्व्येण "बर्हिः स्तृणन्ति"॥ १॥

१ २र ३ १ २ ३ १ २ ३ २ ३ १ २क

बृहन्निदिध्म एषां भूरि शस्त्रं पृथुः स्वरुः।

२ ३ २ ३ १ २ १ २

येषामिन्द्रो युवा सखा॥*२*॥

अथ द्वितीया। "एषाम्" ऋषीणाम् "इध्मः" "बृहन् इत्" महान् खलु, "भूरि" बहु "शस्त्रं" स्तोत्रस्वरूपञ्च "पृथुः" महान्। सिद्धमन्यत्॥ २॥

१ २ १ २ ३ १ र २ ३ १ २ ३ १ २

अयुद्ध इद्युधा वृतꣳ शूर आजति सत्वभिः।

२ ३ २ ३ ३ २ ३ १
येषामिन्द्रो युवा सखा ॥*३*॥ [२१]

अथ तृतीया। "युवा इन्द्रः येषां सखा" तेष्वन्तर्भूतः अपित् "अयुद्ध इत्" प्राग्योद्धैव सन् "युधावृतं" योद्धृभिर्भटै राहृतं प्रव् "सत्वभिः" चात्मीयैर्बलैः "शूरः" सन् "चाजति" नमयति ॥ ३ ॥ [२१]

१३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
य एक इद्विदयते वसु मर्त्ताय दाशुषे।
१ २ ३ १२ ३ १ २ ३ २
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥*१*॥

ऋ० गौतमः। छ० उष्णिक्। दे० इन्द्रः। अथ य एक इति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। "यः" इन्द्रः "एक इत्" एकएव "दाशुषे" हविर्दत्तवते "मर्त्ताय" मनुष्याय यजमानाय "वसु" धनं "विदयते" विशेषेण ददाति "अङ्ग" —इति चिप्र नाम (निरु० नै० ५, १७) "अप्रतिष्कुतः" परैरप्रतिशब्दितः प्रतिकूलशब्दरहित इत्यर्थः। एवम्भूतः स "इन्द्रः" चिप्रम् "ईशानः" सर्वस्य जगतः स्वामी भवति ॥ १ ॥

२ ३ १ २ ३ १ २ २ ३ १ २ २ ३ १
यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति।
३ १ ३२ ३ २३ १ २ ३ २
उग्रं तत्पत्यते शव इन्द्रो अङ्ग ॥*२*॥

अथ द्वितीया। "बहुभ्यः" मनुष्येभ्यः सकाशात् "यः चित् हि" य एव खलु यजमानः "सुतावान्" अभिषुतसोमयुक्तः सन्। हे इन्द्र! "त्वा" त्वाम् "आ विवासति" परिचरति विवासतिः परिचरणकर्मा (निघ० ३, ५, १०) "तत्"

तस्मै यजमानाय "उग्रम्"-उद्गूर्णं "शवः" बलम् "इन्द्रः" "अङ्ग" क्षिप्रं "आ-पत्यते" आपतयति प्रापयति ॥ २ ॥

३ १ २र ३ १.२ ३१ २र
कदा मर्त्तमराधसं पदा क्षुम्पमिव स्फुरत्।
३ १ २ ३ २३ १ २ ३ २
कदा नः शुश्रवद्गिर इन्द्रो अङ्ग ॥*३*॥ [२२]

अथ तृतीया। "अराधसं" हविर्लक्षणेन राधसा धनेन रहितमयष्टारमित्यर्थः। एवंविधं "मर्त्तं" मनुष्यम् "इन्द्रः" "पदा" पादेन "क्षुम्पमिव" अहिच्छत्रमिव "कदा" वा "स्फुरत्" स्फुरिष्यति बधिष्यति? यथा अहिच्छत्रं मण्डलाकारेण प्रयान् कश्चिदनायासेन हन्ति एवमिन्द्रोऽपि कदास्मच्छत्रून् हनिष्यतीत्यर्थः स्फुरतिस्फुलतीति बधकर्म्मसु (निघ० २, १९, १४१६ पठितत्वात्)। "नः" अस्माकं यष्टॄणां "गिरः" स्तुतिलक्षणा वाचः "इन्द्रः" "कदा" कस्मिन् काले "अङ्ग" क्षिप्रं "शुश्रवत्" श्रोष्यतीति वितर्क्यते अत्र निरुक्तम्—"क्षुम्पमहिच्छत्रकम्भवति यत् क्षुभ्यते कदा मर्त्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति कदा नःश्रोष्यति गिर इन्द्रो अङ्ग (निरु० नै० ५, १७)"—इति क्षिप्रनामैतत् इति ॥३॥ [२२]

१ २ ३ १ ३र ३ २ ३ १ २
गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः।
३ १ २ ३ २३ १ २
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥*१*॥

ऋ० मधुच्छन्दाः। छ० अनुष्टुप्। दे० इन्द्रः। अथ गायन्तीति—दृचात्मकं सूक्तं तृतीयम्, तत्र प्रथमा। हे "शतक्रतो" बहुकर्म्मन्! बहुयज्ञ! वा इन्द्र! "त्वा" त्वाम् "गायत्रिणः"

उद्गातारः "गायन्ति" स्तुवन्ति ; "अर्किणः" अर्चनहेतुमन्त्रयुक्ता होतारः "अर्कम्" अर्चनीयम् इन्द्रम् "अर्चन्ति" स्तोत्रशस्त्रगतैर्मन्त्रैः प्रशंसन्ति ; "ब्रह्माणः" ब्रह्मप्रभृतयः इतरे ब्राह्मणाः "त्वाम्" "उद्येमिरे" उन्नतिं प्रापयन्ति। तत्र दृष्टान्तः—"वंशमिव" यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशमुन्नतिं कुर्वन्ति, यथा वा सन्मार्गवर्त्तिनः स्वकीयं कुलमुन्नतं कुर्वन्ति, तद्वत्। एतांश्च यास्क एवं व्याचष्टे—"गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्रह्माणस्त्वा शतक्रत उद्येमिरे वंशमिव। वंशो वनशयो भवति वननाच्छ्रूयत इति वेति" ( निरु० नै० ५, ५ )। अर्कशब्दञ्च बहुधा व्याचष्टे—"अर्को देवो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति यदनेनार्चन्त्यर्कमन्नं भवत्यर्चति भूतान्यर्को वृक्षो भवति संवृतः कटुकिम्ना ( निरु० नै० ५, ४ )"—इति ॥ १ ॥

२उ ३ २ ३२ ३ १ ३२ ३ १ २

यत्सानोः सान्वारुहो भूर्यस्पष्ट कर्त्त्वम्।

२उ ३ १२ ३ १ २ ३ १ २

तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥ २ ॥

अथ द्वितीया। "यद्" यदा "सानोः सानु" यजमानः सानोः सानु, सोमवल्ली समिदाद्याहरणाय पर्वतप्रदेशम् "आरुहः" आरूढवान्। तथा "भूरि कर्त्त्वम्" बहुकर्म यागरूपम् "अस्पष्ट" स्पृष्टवान् उपक्रान्तवानित्यर्थः। "तत्" तदानीम् "इन्द्रः" "अर्थं" यजमानस्य प्रयोजनं "चेतति" जानाति। ज्ञात्वा च "वृष्णिः" कामानां वर्षिता सन् "यूथेन" मरुद्गणेन सह "एजति" कम्पते, यस्य स्थानाद् यज्ञभूमिमागन्तुमित्यर्थः ॥

"सानोः सान्वारुहः" सानोः सानुमारुहत्"—इति पाठौ ॥ २ ॥

२ ३उ ३ २ ३ २३ १२ ३ २
युंक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
१ २ ३ १ ३२
अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥*३*॥[२३]

इति पञ्चमः प्रपाठकः ।

अथ तृतीया। हे "सोमपाः!" सोमपानयुक्तेन्द्र! "हरी" त्वदीयावश्वौ "युङ्क्ष्व हि" सर्वथा संयोजय। "अथ" अनन्तरं "नः" अस्मदीयानां "गिरां" स्तुतीनाम् "उपश्रुतिं" समीपे श्रवणमुद्दिश्य "चर" तत्प्रदेशे गच्छ। कीदृशौ हरी ? "केशिना" स्कन्धप्रदेशे लम्बमानकेशयुक्तौ, "वृषणा" सेचनसमर्थौ युवानौ, "कक्ष्यप्राः" अश्वस्योदरबन्धनरज्जुः कक्ष्यः, तस्य पूरकौ पुष्टाङ्गावित्यर्थः ॥

"युङ्क्ष्वा" "युक्ष्वा—इति पाठौ ॥

युङ्क्ष्वा—सति शिष्टत्वेन प्रत्ययस्वरः (३, १, ३) शिष्यते, "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति संहितायां दीर्घत्वम्। केशिना—प्रशस्ताः केशाः अनयोः सन्तीति मत्वर्थीय इनिप्रत्ययः, "सुपां सुलुगित्यादिना (७, १, ३९) द्विवचनस्याकारादेशः। वृषणा—वृषु सृपु सेचने (भ्वा० प०) "कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः"—इति कनिन् "ञ्नित्यादिर्नित्यम् (६, १, १९७)"—इत्याद्युदात्तः, "वा षपूर्वस्य निगमे (६, ४, ९)"—इति उपधायाः पक्षे दीर्घाभावः, पूर्ववदाकारः (७, १, ३९)। कक्ष्यप्रा:—कक्ष्ययोर्भवं कक्ष्यं सूत्रं तत् प्रातः पूरयतः पुष्टत्वादिति कक्ष्यप्रौ, प्रा पूरणे

( अदा० प० ), "आतोऽनुपसर्गे ( ३, २, ३ )"—कप्रत्ययः, कृदुत्तरपदप्रकृति स्वरेणान्तोदात्तत्वम् ( ६, २, १३९ )"—ओकारः पूर्ववत् ( ७, १, ३९ )। अथा—"निपातस्य च (६, ३, १३६ )"—इति संहितायां दीर्घः। नः—"अनुदात्तं सर्वमपादादौ ( ८, १, १८ )"—इत्यनुवृत्तौ "बहुवचनस्य वस्नसौ ( ८, १, २१ )"—इति नसादेशोऽनुदात्तः। इन्द्र!—सोमपा!—इत्युभौ "आमन्त्रितस्य च ( ८, १, १९ )"—इति सर्वानुदात्तौ। गिरां—"साबेकाचस्तृतीयादिर्विभक्तिः ( ६, १, १६८ )"—इति विभक्तिरुदात्ता। उप—शब्दो निपातत्वादाद्युदात्तः ( फि० ४, १२ ), श्रुतिशब्देन प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तादौ चनिति कृत्यचौ इति तु वर्जिततादिपरत्वात् गतेः प्रकृतिस्वरः परनिपातः॥३॥ [२३]

इति सामवेदार्थप्रकाशे उत्तरार्चिकस्य दशमस्याध्यायस्य द्वादशः खण्डः॥ १२॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमार्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः॥ ५॥

## इति पञ्चमः प्रपाठकः।

इति श्रीमद्राजाधिराज-परमेश्वर वैदिकमार्गप्रवर्त्तक श्री वीर बुक्क भूपाल साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ प्रकाशे उत्तरार्चिके दशमोऽध्यायः॥ १०॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥ ११ ॥

## अथ षष्ठप्रपाठकः ।

अथैकादशोऽध्याय आरभ्यते ।

१ १   २ १ २   २ १   २   २, १ २
सुषमिद्धो न आ वह देवाꣳ अग्ने हविष्मते ।
१ २   २ १ २
होतः पावक यक्षि च ॥*१॥

ऋ० मधुच्छन्दाः । छ० गायत्री । दे० आप्री । तत्र प्रथम-खण्डे—सुषमिद्धइति चतुर्ऋचं प्रथमं सूक्तम्, तत्र प्रथमा । हे "अग्ने !" "सुसमिद्धः" एतन्नामकस्त्वं "नः" "अस्मदीयाय" "हविष्मते" यजमानाय तदनुग्रहार्थं "देवान्" "आवह" । हे "पावक" शोधक ! "होतः" ! होमनिष्पादकाग्ने ! "यक्षि च" यज च ॥ सुसमिद्धः—सुशब्दः क्रियाविशेषणत्वेन गतिसञ्ज्ञकत्वात् प्रादिसमासः, शोभनवाचिनः सुशब्दस्य तु "विशेषणं विशेष्येण बहुलम् ( २, १, ५७ )"—इति समिद्धपदेन कर्मधारयः समासः, सुशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, "कर्मधारये निष्ठा ( ६, २, ४६ )"—इति पूर्वपदप्रकृतिस्वरत्वं, क्रियाविशेषणत्वे हि सुशब्दस्य गतित्वात् प्रादिसमासे "गतिरनन्तरः ( ६, २, ४९ )" इति "समो यदुत्तरः" इति समो यदुत्तरत्वं तदेव कदुत्तरप्रकृतिस्वरत्वेन (६, २, १३९) स्यात्स्यतीति सुशब्दोऽनुदात्तः स्यात् । देवाँ अग्ने—"दीर्घादटि समानपादे ( ८, ३, ९ )"—इति नकारस्य रुत्वम्, "अत्रानुनासिकः पूर्वस्य तु वा ( ८, ३, २ )"—"आतोऽटि

नित्यम् ( ८, ३, ३ )"—इत्यनुनासिकः। हविष्मते—हविरस्यास्तीति मतुप्, "तसौ मत्वर्थे ( १, ४, १९ )"—इति भत्वेन पदत्वबाधितत्वात् षत्वम्। होतः—पावक—एतच्छब्दयोरामन्त्रितयोः पृथक् पृथगेव क्रियान्वये परस्परसामर्थ्यात् पराङ्गवद्भावाभावाच्च तन्निबन्धनमैकस्वर्यम्, न च द्वितीयस्यामन्त्रितस्याष्टमिक-( ८, १, १९ )-निघातेनैकस्वर्यम्,—"आमन्त्रितं पूर्वमविद्यमानवद् ( ८, १, ७२ )"—इति पूर्वस्याविद्यमानत्वेन पदादपरत्वात् पादादित्वाच्च परस्य सामानाधिकरण्येऽपि होतरित्यस्य विशेषत्वे समानमेवाविद्यमानवत्त्वम्, अतएवाविद्यमानवत्वात् सामर्थ्येऽपि न पराङ्गवद्भावः—इति नैकस्वर्यसिद्धिः, अतो होतरिति विशेष्यम्; अतः पुनातीति पावकः —इत्यवयवप्रसिद्धस्वीकारेण विशेषणत्वाद्धोतरिति विशेष्यम्, तच्च सामान्यवचनम् इति "नामन्त्रिते समानाधिकरणे ( ८, १, ७३ )"—इत्यविद्यमानवत्त्वप्रतिषेधात् पदात्परत्वादपादादित्वाच्च द्वितीयामन्त्रितस्याष्टमिकनिघातेन वा पराङ्गवद्भावे सति षाष्ठनिघातेन वा सर्वानुदात्तत्वसिद्धिः। यक्षि—यजेर्लोपः सिपि "बहुलञ्छन्दसि ( २, ४, ७३ )"—इति शपो लुक् व्रश्चादिना (८, २, ३६) षत्वम्, "षढोः कःसि ( ८, २, ४१ )" —इति कत्वम्, सेर्हिरादेशश्छान्दसत्वान्न भवति, सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वरएव ( ६, १, १६२ ) शिष्यते, न च "तिङतिङः ( ८, १, २८ )"—इति निघातः पूर्वस्य पावकेत्यामन्त्रितस्य विद्यमानत्वेन पदादपरत्वात्, अतएव तस्याव्यवधायकत्वे होतरित्यपेक्ष्य निघातः स्यादिति चेत् न,—यक्षिपदापेक्षया होतारित्यस्यापि पूर्वत्वे नाविद्यमानत्वात्; ननु "नामन्त्रिते समानाधिकरणे ( ८, १, ७३ )"—इति तस्य नित्यमविद्यमानवत्त्वम्, न च पावकपदस्याविद्यमानवत्त्वे न

समानाधिकरणपरत्वाभावः; यद्यपि पदस्यैव हि कार्य्यं प्रति पावकपदं पूर्वत्वादविद्यमानवत् स्यात्, होतःपदमविद्यमानवत्त्वप्रतिषेधं प्रति तु परत्वाद्विद्यमानवदेवेति भवत्येव होतरित्यस्याविद्यमानवत्त्वप्रतिषेधः, अतस्तस्याविद्यमानवत्त्वात्तदपेक्षया यक्षीति निघातः प्राप्नोत्येव ? सत्यम्;—अत्र यक्षीत्यस्य चशब्दपरत्वात् "चादिषु च (८, १, ५८)"—इति निघातप्रतिषेधो भविष्यतीत्यदोषः ॥ १ ॥

१ २ ३ २ ३ १ २
मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे ।
२ १ २ ३ १ २
अद्या कृणुह्यूतये ॥*२*॥

अथ द्वितीया। हे "कवे!" मेधाविन्नग्ने! "तनूनपात्"—एतन्नामकस्त्वम् "अद्य" अस्मिन् "नः" अस्मदीयं "मधुमन्तं" रसवन्तं "यज्ञं" यजनीयं हविः "देवेषु" "कृणुहि" कुरु प्रापयेत्यर्थः। किमर्थम्? "ऊतये" अस्मद्रक्षणाय ॥
"ऊतये"-"वीतये"—इति पाठौ ॥ २ ॥

३ १ २ ३ २ ३ ३ ३ ३ १ २ १ २ ३
नराशꣳसमिह प्रियमस्मिन्यज्ञ उप ह्वये ।
१ २ ३ १ २
मधुजिह्वꣳ हविष्कृतम् ॥*३*॥

अथ तृतीया। "इह" देवयजनदेशे "अस्मिन्" वर्त्तमाने यज्ञे "नराशंसम्"—एतन्नामकमग्निम् "उपह्वये" आह्वयामि। कीदृशम्? "प्रियं" देवानां प्रीतिहेतुं, "मधुजिह्वं" मधुरभाषिजिह्वोपेतं माधुर्य्यरसास्वादकजिह्वोपेतं वा, "हविष्कृतं" हविषो निष्पादकम् ॥ ३ ॥

१ २ ३ १ २ ३ ३ १ २ ३ १ ३ २ ३ १ १२
अग्ने सुखतमे रथे देवाꣳ ईडित आ वह।

२ ३ २ ३ १ २
असि होता मनुर्हितः ॥*४*॥ [१]

अथ चतुर्थी। इदं-शब्दाभिधेय! हे "अग्ने!" "ईडितः" अस्माभिः स्तुतः सन् "सुखतमे" अतिशयेन सुखहेतौ कस्मिंचित् "रथे" "देवान्" स्थापयित्वा कर्मभूमौ "आ वह" इदं-शब्दाभिधेयत्वमत्र सूचयितुमीडित इति विशेषणम्। "मनुर्हितः" "मनुना" मन्त्रेण मनुष्येण वा यजमानादिरूपेण "हितः" अत्र स्थापितः त्वं "होता" देवानामाह्वातासि॥४॥[१]

१ २ ३ ३ १ २ १ २ ३ १ ३ २
यद्द्य सूर उदितेऽनागा मित्रो अर्यमा।

२ १ २ १ १ २२
सुवाति सविता भगः ॥*१*॥

ऋ० वसिष्ठः। छ० गायत्री। दे० आदित्यः। यद्द्येति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। "यत्" धनं "नः" अस्माकम् अपेक्षितं "तत्" "अद्य" अस्मिन् काले "सूरे" "उदिते" सति प्रातःसमये "अनागाः" पापहन्ता, "मित्रः", "अर्यमा" "सविता", "भगः" च—एतत् प्रत्येकं "सुवाति" प्रेरयतु अथवा अनागा मित्रो अर्यमा भवतु, तदीप्सितं भगो भजनीयः सविता सुवाति प्रेरयतु॥ १ ॥

१ १ १ १ २३ २ १ १२
सुप्रावीरस्तु स क्षयः प्र नु यामन्त्सुदानवः।

१ २ १ २ ३ १ २
ये नो अꣳहोऽतिपिप्रति ॥*२*॥

अथ द्वितीया। "सच्चयः" सन्निवासः "सुप्रावीरस्तु" सुष्ठु प्रकर्षेण रचितास्तु प्रयत्न आदरार्थः। "प्र" प्रकर्षेण "नु" चिप्रं भवत्विति शेषः। कदा? इत्यु्च्यते—हे "सुदानवः"! सुदानाः! युष्माकं "यामन्" यामनि गमने सति, कीदृशानां गमने? ये यूयमागत्य "नः" अस्माकम् "अंहः" पापम् "अति पिप्रति" अतिपारयथ, तेषां गमन इति ॥ २ ॥

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ,३ २

उत स्वराजो अदितिरदब्धस्य व्रतस्य ये।

२ १ २र

महो राजान ईशते ॥*३*॥ [२]

अथ तृतीया। "उत" अपि च "ये" मित्रादयस्त्रयः "स्वराजः" सर्वस्य स्वामिनः "अदितिः" येषाञ्च माता, सन्ति; ते "अदब्धस्य" अहिंसितस्य रचकस्य "महः" महतः "व्रतस्य" अस्य कर्मणः "राजानः" स्वामिनः, ते "ईशते" समर्था भवन्ति अभिमतं दातुमिति शेषः। अथवैवं योज्यम्—"ये" मित्रादयोऽदितिश्च "अदब्धस्य" व्रतस्य "स्वराजः" ईश्वरास्ते "महः" महतः अस्मदभिमतधनस्य "राजानः" स्वामिनः सन्तः "ईशते" अस्मभ्यं दातुम् ॥ ३ ॥ [ २ ]

१ १ २ ३ १ २ ३ १ २र

उ त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः।

१ २ ३ १ २

अव ब्रह्मद्विषो जहि ॥*१*॥

ऋ० प्रगाथः। छ० गायत्री। दे० सोमः। उत्त्वेति द्वात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। हे इन्द्र! "त्वा" त्वां "सोमाः" "उत्" उत्कृष्ट "मन्दन्तु" मादयन्तु। हे "अद्रिवः!"

वज्रवचिन्द्र! त्वं "राधः" अन्नं "कृणुष्व" अस्मभ्यं कुरु। किञ्च "ब्रह्मद्विषः" ब्राह्मणद्वेष्टॄन् "अव जहि" ॥

"सोमाः"-"सोमा"—इति पाठौ ॥ १ ॥

२ २ २ १ २ ३ २ ३ १ २ ३ १ २

पदा पणीनराधसो नि बाधस्व महाँ असि।

१उ २ १ २ १ २र

न हि त्वा कश्च न प्रति ॥*२*॥

अथ द्वितीया। "पणीन्" लुब्धान् "अराधसः" यष्टव्यधनरहितान् केवलधनान् "पदा" पादेनातिक्रम्य "निबाधस्व" नितरां बाधस्व। हे इन्द्र! त्वं "महान् असि" "त्वा" त्वया "प्रति" प्रतिनिधिसदृशः "कश्चन" कश्चिदपि देवोऽसुरो मनुष्यो वा "न हि" नास्ति खलु ॥

"पणीनराधसः"-पणीरराधसः"—इति पाठौ ॥ २ ॥

१ २ २ २ २ २ ३ १ २र

त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम्।

१उ २ १ २

त्वँ राजा जनानाम् ॥*३*॥ [३]

अथ तृतीया। हे "इन्द्र!" "त्वं" "सुतानाम्" अभिषुतानां सोमानाम् "ईशिषे" ईश्वरो भवसि, तथा "त्वम्" असुतानाम् वर्त्तमानानाञ्च ईशिषे। किञ्च "त्वं" सर्वेषां "जनानां" "राजा" भवसि ॥ ३ ॥ [ ३ ]

इति सामवेदार्थ-प्रकाशे उत्तरार्चिकस्य एकादशस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥

१ २र ३ १ २ ३ १ २ ३ १
आ जागृविर्विप्र ऋतं मतीनाꣳ

२र ३ १ २ ३ १ २
सोमः पुनानो असदच्चमूषु ।

१ २ ३ १ ३ २ ३ २ १ २
सपन्ति यं मिथुनासो निकामा

३ १ २ ३ १ २ ३ १ २
अध्वर्य्यवो रथिरासः सुहस्ताः ॥ १ ॥

ऋ० पराशरः । छ० त्रिष्टुप् । दे० सोमः । अथ द्वितीय-खण्डे—आजागृविरिति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा । "जागृविः" जागरणशीलः "ऋतम्" ऋतानां सत्यभूतानां "मतीनां" स्तुतीनां "विप्रः" ज्ञाता स "सोमः" "पुनानः" पूयमानः सन् "चमूषु" चमसेषु "आसदत्" आसीदति, "मिथुनासः" परस्परं सङ्गताः, "निकामाः" नितरां कामयमानाः "रथिरासः" यज्ञनेतारः "सुहस्ताः" कल्याण-पाणयः "अध्वर्य्यवः" पवित्रेण "यं" सोमं "सपन्ति" स्पृशन्ति स्म समवाये (भ्वा० प०) । 'सपतिः स्पृशति-कर्म्मा'—इति नैरुक्ताः ॥

"ऋतम्"-"ऋता"—इति पाठौ ॥ १ ॥

१ २ ३ २उ ३ १२ १ २ ३
स पुनान उप सूरे दधान

१ २र ३ १ २ ३ १ २र
ओभे अप्रा रोदसी वी ष आवः ।

३ १ ३ १ २ ३ १ २ ३ २
प्रिया चिद्यस्य प्रियसास ऊती

३ १ २र ३ २ ३ १ २र
सतो धनं कारिणे न प्र यꣳसत् ॥ २ ॥

अथ द्वितीया। "पुनानः" पूयमानः "दधानः" यज्ञादि-कर्म-धारकः "सः" सोमः "सूरे" प्रेरके इन्द्रे "उप" गच्छति। किञ्च "उभे रोदसी" द्यावा-पृथिव्यौ "आ अप्राः" स्व-महिम्ना आ पूरयति। तथा "सोमः" "व्रावः" स्व-तेजसा मां विहृणोति वृणोतेः "मन्त्रे घसेति (२, ४, ८१)" च्लेर्लुक्, "छन्दस्यपि दृश्यते (६, ४, ७३)"—इत्यडागमः। "पूर्वपदात् (८, ३, १०६)"—इति स-इत्यस्य सांहितिकं षत्वम्। "प्रिया" यद्वा आकारः (७,१, ३८) प्रियस्य "यस्य" "सतः" विद्यमानस्य सोमस्य यद्वा, 'प्रिया' प्रियाणि प्रयच्छतः सोमस्य "प्रियसासः" अत्यन्तं प्रियतमा धाराः "ऊतौ" ऊत्यै रक्षणाय भवन्ति "सः" सोमः "नः" अस्मभ्यम् "धनं" "प्रयंसत्" प्रयच्छतु यच्छतेर्लेटि सिप्यडागमः। तत्र दृष्टान्तः—"कारिणे न" यथा कारिणे भृतकाय भृतिं प्रयच्छति तद्वत्॥

"दधानस्तोभे"-"दधानोभे"—इति पाठौ, "सतोधन"-"सतूधनम्"—इति च॥ २॥

१ २ ३ १ ३२ ३ १ २ ३ १ २
स वर्धिता वर्धनः पूयमानः सोमो
२ ३ ३ २ ३ १ २
मीढ्वाꣳ अभि नो ज्योतिषावीत्।
१२ ३ १२ ३ १ २ ३ २
यत्र नः पूर्वे पितरः पदज्ञाः
३ १ २ ३ १ ३२ ३ २
स्वर्विदो अभि गा अद्रिमिष्णान्॥३*॥ [४]

अथ तृतीया। "वर्द्धिता" देवानां स्व-कला-प्रदानेन वर्द्धयिता "वर्द्धनः" स्वयं वर्द्धमानः "पूयमानः" पवित्रेण पूयमानः "मीढ्वान्" कामानां सेक्ता "सः" सोमः "नः" अस्मान्

"ज्योतिषा" स्वतेजसा "अभ्यावीत्" अभिरक्षतु "यत्र" यस्मिन् सोमे प्रसवे सति "पदज्ञाः" पणिभिरपहृतानां गवां पदानि जानन्तः "स्वविदः" सर्ववेत्तारः सूर्यं जानन्तो वा "नः" अस्माकं "पूर्वे" चिरन्तनाः "पितरः" अङ्गिरसः "गाः" पशून् लब्धुम् "अद्रिम्" शिलोच्चयम् "अभि" लक्ष्य गन्तुम् "इष्णन्" ऐच्छन् ॥

"यत्रनः"-"येनान"—इति पाठौ, "इष्णन्"-"यान्"—इति च ॥ ३ ॥ [ ४ ]

१ २ ३ १ २र ३ १ २ ३ १ २
मा चिदन्यद्वि शंसत सखायो मा रिषण्यत ।
२ ३ १ २ ३ १२३ १२
इन्द्रमित्स्तोता वृषणं सचा
३ १ २३ ३ १ २
सुते मुहुरुक्था च शंसत ॥*१*॥

ऋ० प्रगाथः । छ० बृहती । दे० इन्द्रः । अथ माचिदन्यदिति प्रगाथात्मके द्वितीयसूक्ते—प्रथमा । हे "सखायः !" समानख्यानाः स्तोतारः ! इन्द्र-स्तोत्रात् "अन्यत्" स्तोत्रं "मा चित् विशंसत" मैवोच्चारयत, "मा रिषण्यत" मा हिंसिता भवत अन्यदीय-स्तोत्रोच्चारणेन हृथोपक्षीणा मा भवत, "सुते" अभिषुते सोमे "वृषणं" कामानां वर्षितारम् "इन्द्रम् इत्" इन्द्रमेव हे प्रस्तोत्रादयः ! "सचा" सह "स्तोत" स्तुत । हे प्रशास्त्रादयः ! "उक्था च" उक्थानि शास्त्राणि च इन्द्रविषयाणि यूयं "मुहुः" पुनः पुनः "शंसत" ॥ १ ॥

२ १ २ ३ १ ३ २ ३ ३ १ २र ३ १ २
अवक्रक्षिणं वृषभं यथा जुवं गां न चर्षणीसहम् ।

२ १ २ २ १ २ २ १ २र ३ १ २
विद्वेषणᳬं संवननमुभयङ्करं मᳬंहिष्ठमुभयाविनम्
॥*२*॥ [५]

अथ द्वितीया। "वृषभं यथा" वृषभमिव "अवक्रक्षिणम्" अवकर्षणशीलं शत्रूणां हिंसितारं "जुवं" शीघ्रकारिणं "गां न" गामिव वृषमिव "चर्षणीसहम्" मनुष्याणां शत्रुभूतानामभिभवितारं, "विद्वेषणं" विद्वेष्टारं शत्रूणां, "संवननं" सम्यक् सम्भजनीयं स्तोतृभिः "उभयङ्करं" निग्रहानुग्रहयोरुभयोः कर्त्तारं "मंहिष्ठं" दातृतमम् "उभयाविनं" दिव्य-पार्थिव लक्षणेन उभय-विधानेनोपेतम्। यद्वा, स्थावर-जङ्गम-रूपेण द्विप्रकारेण रक्षितत्वेनोपेतम्। अथवा उभयविधैः स्तोतृभिर्यष्टृभिश्चोपेतम्—एवंविधमिन्द्रमिमस्तोत्रेति पूर्वेणान्वयः॥

"जुवं"-"जुरं"—इति पाठौ, "संवननं"-"सवनना"—इति च॥ २॥ [५]

२ १ १ २र २ १ १ २
उदु त्ये मधुमत्तमा गिर स्तोमास ईरते।
१ १ २ १ १ २र २ १ १ १ २
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव
॥*१*॥

ऋ० मेधातिथिः। छ० बृहती। दे० इन्द्रः। अथ उदुत्य इति प्रगाथात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। "त्ये" ते प्रसिद्धाः "मधुमत्तमाः" अतिशयेन मधुराः "गिरः" स्तुतिरूपया वाचा "स्तोमासः" त्रिवृदादि-स्तोमाश्च "उदीरते" हे इन्द्र! त्वामुद्दिश्य उद्गच्छन्ति ऊर्द्ध्वं संचरन्ति दूरं गतौ

अदादिकः ( आ० )। तत्र दृष्टान्तः—“सत्राजितः” सदैव शत्रून् जयन्तः “धनसा” धनानि सम्भजन्तः वन षण सम्भक्तौ ( भ्वा० प० ), “जन-सन-खन-क्रम-गमो विट् ( ३, २, ६७ ), “विड्वनोरनुनासिकस्यात् ( ६, ४, ४१ )”—इत्यात्वम्, “अक्षितोतयः” अक्षिताः क्षय-रहिताः ऊतयो रक्षा येषां ते तथोक्ताः क्षियो भावे निष्ठा, “निष्ठायामण्यदर्थे ( ६, ४, ६० )”—इति पर्य्युदासाद्दीर्घाभावः अत एव “क्षियो दीर्घात् ( ८, २, ४६ )” —इति निष्ठा-नत्वाभावश्च “वाजयन्तः” वाजमन्नमिच्छन्तः वाचि “न छन्दस्यपुत्रस्य ( ७, ४, ३५ )”—इतीत्वदीर्घयोः प्रतिषेधः, एवंगुणविशिष्टाः “रथा इव” ते यथा विविधमितस्ततः उत्तिष्ठन्ति तद्वदीरत इत्यर्थः ॥ १ ॥

१ २ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
कण्वा इव भृगवः सूर्य्या इव विश्वमिद्धीतमाशत।
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रꣳ स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरन्
॥*२*॥ [६]

अथ द्वितीया। “कण्वाः” कण्वगोत्रोत्पन्ना ऋषयः “इव” सुपन्तः “भृगवः” भृगुगोत्रोत्पन्ना ऋषयः “धीतम्” आध्यातम् “विश्वमित्” व्याप्तं तमेव “इन्द्रम्” “आशत” आनशिरे “सूर्य्या इव” यथा सूर्य्यरश्मयः सर्वं जगद् व्याप्नुवन्ति तद्वत्। अपि च “प्रियमेधासः” प्रिययज्ञाः एतन्नामका वा “आयवः” मनुष्याः तमेवेन्द्रं “महयन्तः” पूजयन्तः “स्तोमेभिः” स्तोत्रैः “अस्वरन्” अस्तुवन् स्वृ शब्दोपतापयोः भौवादिकः (प०)।
“आयत”-“आनशुः”—इति पाठौ ॥ २ ॥ [६]

२ ३ १ १२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
पर्य्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः।

२ २ २१ २ २ १ २
द्विषस्तरध्या ऋणया न ईरसे ॥*१*॥

ऋ० ऋणः त्रसदस्युः वा। छ० पिपीलिकमध्या विपरा विष्टुप्। दे० सोमः। अथ पर्य्यूष्विति ऋचात्मकं चतुर्थं सूक्तम्—तत्र प्रथमा। हे सोम! "सु" सुष्ठु "वाजसातये" अन्नस्यमन्न-दानायेव "परि प्रधन्व" परितः प्रगच्छ यद्वा, "वाजसातये" अन्नस्य लाभाय सङ्ग्रामं प्रगच्छ। किञ्च "सश्चतिः" सहन-शीलस्त्वं "वृत्राणि" शत्रून् परिगच्छ। तदेवोच्यते—"नः" अस्माकम् "ऋणया" ऋणानां यापयिता विनाशयिता त्वं "द्विषः" शत्रून् "तरध्यै" तरीतुं हन्तुम् "ईरसे" परिगच्छति।

"ईरसे"-"ईयसे"—इति पाठौ ॥ १ ॥

१ २ २ १२ २ १ २ २ २ २ १ २ २ १ २
अजीजनो हि पवमान सूर्य्यं विधारे शक्मना पयः।

१ २ २ १ २ २ १२
गोजीरया रꣳहमाणः पुरन्ध्या ॥*२*॥

अथ द्वितीया। हे "पवमान!" सोम! त्वं "पयः" पयस उदकस्य "विधारे" विधारके अन्तरिक्षे "शक्मना" सामर्थ्येन बलेन "सूर्य्यम्" "अजीजनः हि" उत्पादितवान् भवसि खलु। कीदृशः? "गोजीरया" स्तोतृभ्यो गवां प्रेरकेण स्तोतृणां प्रेरितपशुकेनेत्यर्थः, तादृशेन; "पुरन्ध्या" बहुविधप्रज्ञानेन युक्तः "रंहमाणः" वेगं कुर्वाणस्त्वं सूर्य्यमजीजनः ॥ २ ॥

१ २ १ २ २ १ २ २ १ २
अनु हि त्वा सुतꣳ सोम मदामसि० ॥*३*॥ [७]

अथ तृतीया।—इति तृतीयाया ऋचः प्रतीकमिदम्। सा चान्यत्र (छ० आ० ५, १, ५, ६—१भा० २४३पृ० (व्याख्याता ॥३॥ [७]

२ ३ १ २
परि प्र धन्व० ॥*१*॥

ऋ० ऋणः त्रसदस्युः वा । छ० द्विपदार्षपंक्तिः । दे० सोमः ।
अथ परिप्रधन्वेतित्र्यृचात्मकं पञ्चमं सूक्तम्—तत्र प्रथमाया ऋचः
"परिप्रधन्व"—इति प्रतीकमिदम् । सा चान्यत्र ( छ० आ०
५, १, ५, १,—१ भा०२४१पृ० ) व्याख्याता ॥ १ ॥

३१ २र ३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
एवामृताय महे क्षयाय स शुक्रो अर्ष दिव्यः पीयूषः
॥*२*॥

अथ द्वितीया । हे सोम ! "शुक्रः" दीप्तः "दिव्यः"
दिवि भवः "पीयूषः" देवैः पातव्यः "सः" त्वम् "अमृताय"
अमरणाय "महे" महते "क्षयाय" निवासाय च "एवम्
अर्ष" एवं पवस्व क्षर ॥ २ ॥

१ २ ३ १ २ ३ २ ३ १ १ २ ३ ,१ २ ३ २
इन्द्रस्ते सोम सुतस्य पेयात्क्रत्वे दक्षाय विश्वे च देवाः
॥*३*॥ [८]

अथ तृतीया । हे "सोम !" "सुतस्य" अभिषुतस्य "ते"
तव संभृतं रसमिति शेषः "इन्द्रः" "पेयात्" पिबतु
पिबतेराशीर्लिङि रूपम् । किमर्थम् ? "क्रत्वे" क्रतवे
प्रज्ञानाय "दक्षाय" बलाय "च" किञ्च, अमी "विश्वे" सर्वे
"देवाः" च त्वदीयं-रसं पिबन्तु ॥

"पेयात्"-"पेयाः"—इति पाठौ ॥ ३ ॥ [ ८ ]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

१ २ २ १ २ २ १ २
सूर्य्यस्येव रश्मयो द्रावयित्नवो
१ १ २ २ १ २ २ १ २
मत्सरासः प्रसुतः साकमीरते।
१ २ ३ १उ २ १ २ २ १ २
तन्तुं ततं परि सर्गास आशवो
१ २ ३१ २ ३ १ २ १ ३ १
नेन्द्रादृते पवते धाम किं चन ॥*१*॥

ऋ० हिरण्यस्तूपः। छ० जगती। दे० सोमः। अथ तृतीयखण्डे—सूर्य्यस्येवेति त्र्यृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। "सूर्य्यस्य" सर्वस्य प्रेरकस्य सुवीर्य्यस्यादित्यस्य "रश्मय इव" सर्वतो व्यापकाः किरणा इव "द्रावयित्नवः" सर्वत्र द्रवणशीलाः "मत्सरासः" मदकराः "प्रसुतः" प्रकर्षेण सुताः अभिषुताः एकवचनं छान्दसम् (३, १, ८५) "आशवः" ग्रहेषु चमसेषु च व्याप्ताः "सर्गासः" सृज्यमानाः सोमाः "ततं" विस्तृतं "तन्तुं" तन्तुभिः कृतं वस्त्रं दशापवित्रं "साकं" सह युगपत् "परि ईरते" परितो गच्छन्ति। ते सोमाः "इन्द्रादृते" इन्द्रं वर्जयित्वा अन्यत् "किञ्चन धाम" देवशरीरं लक्षीकृत्य "न पवते" न गच्छन्ति॥ इन्द्रस्य धाम्नो यष्टव्यत्वञ्च "अयाड्डीन्द्रस्य प्रिया धामानि"—इति मन्त्रवर्णादवगम्यते ॥१॥

१ २ ३ १ २ १ २ २ ३ २ १ २
उपो मतिः पृच्यते सिच्यते मधु
३ १ २ १ २ ३ १ २
मन्द्राजनी चोदते अन्तरासनि।

१ २ २ १ २ ३ १ २२
पवमानः सन्तनिः सुन्वतामिव
१ २ ३ १उ ३ १ २
मधुमां द्रप्सः परि वारमर्षति ॥*२*॥

अथ द्वितीया। अस्मिन् परिवादरूपे स्तोत्रे इन्द्रे "मतिः" स्तुतिरूपा "पृच्यते" स्तोतृभिः संयोज्यते पृची सम्पर्के (दि० धा०)। तथा "मधु" मदकरः सोमः इन्द्रार्थं "सिच्यते" अद्भिर्वसतीभिर्वा सिक्तो भवति, ततः "मन्द्राजनी" अज गतिक्षेपणयोः (भदा० धा०)—इत्यस्य ल्युटि ङीपि रूपम् मदकरस्य रसस्य प्रेरयित्री सोमधारा तस्येन्द्रस्य "आसनि" आस्ये "अन्तः" मध्ये "चोदते" प्रेर्य्यते आस्यशब्दस्य "पद्दन्नो-मास्वित्यादिना (६, १, ६३) आसन्नित्यादेशः। किञ्च "सन्तनिः" यज्ञादिषु सम्यक् विस्तृतः "सुन्वताम्" अभिषुण्वतां यजमानानां सम्बन्धिनो, "पवमानः" पूयमानः सोमः "द्रप्सः" द्रुतगमनशीलः "वारम्" अविवालमयं पवित्रं "परि" परितः "अर्षति" गच्छति। "इव"—इति पादपूरणः॥
"सुन्वतामिव"—"प्रघ्नतामिव"—इति पाठौ॥ २॥

२ १ १ ३ १ २ ३ १ २
उचा मिमेति प्रति यन्ति धेनवो
३१ २ ३ १ २र २ २
देवस्य देवीरुप यन्ति निष्कृतम्।
१ २ ३ १ २ ३ १ २ ३ २ ३ २ २
अत्यक्रमीदर्जुनं वारमव्ययमत्कं
१ २ ३उ २ १ २
न निक्तं परि सोमो अव्यत ॥*३*॥ [९]

अथ तृतीया। "उचा" रेतसः सेक्ता वृषभः पुरतो "मिमेति" शब्दायते माङ् माने शब्दे च (क्षा० आ०) तं वृषभं "धेनवः" गावः "प्रति यन्ति" अनुगच्छन्ति। तथा "देवस्य" द्योतमानस्य संस्कृतं स्थानं "देवीः" देव्यः स्तुतयः "उपयन्ति" उपगच्छन्ति अनेनादितसोमः स्तुतिभिश्चाभिधीयते। सोमो हि द्रोणकलशाभिगमनकाले शब्दं करोति, तमनु धेनवः प्रीणयित्र्यः स्तुतयः परियन्ति देवस्य स्थानं स्तुतयोऽभिगच्छन्ति। तथा सोऽयं सोमः "अर्जुनं" श्वेतवर्णम् "अव्ययम् अविमयम् अवेः स्वभूतं "वारं" वालं पवित्रम् "अत्यक्रमीत्" अतिक्रामति अतिक्रम्य पात्राणि गच्छतीत्यर्थः। किञ्च सोमः "अत्कं न" आत्मीयकवचमिव "निक्तम्" उज्ज्वलं अपशद्रव्यम् "परि अव्यत" परितः संवृणोति।

"मिमेति"-"मिमाति"—इति पाठौ ॥ ३ ॥ [८]

२ ३उ २ १ २ ३ २ ३
अग्निं नरो दीधितिभिररण्यो-

१ २ ३ १
र्हस्तच्युतं जनयत प्रशस्तम्।

२ १ २ ३ १ २ १ २
दूरेदृशं गृहपतिमथव्युम् ॥*१*॥

ऋ० वसिष्ठः। छ० त्रिष्टुप्। दे० अग्निः। अग्निवर इति द्व्यात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। हे "नरः"! नेतारः ऋत्विजः! यूयं "प्रशस्तं" प्रकर्षेण स्तुतं "दूरेदृशं" दूरे दृश्यमानं दूरे पश्यन्तं वा "गृहपतिम्" गृहाणां पालकम् "अथव्युम्" अगम्यम् सततवन्तं वा "अग्निम्" "अरण्योः" सकाशात् "हस्तच्युतं" हस्तगतं "दीधितिभिः" अङ्गुलिभिः "जनयत" उत्पादयत।

"हव्यच्युतञ्जनयन्त" "हव्यच्युतीजनयन्त"—इति पाठौ "यथव्युम्"-"यथव्युम्"—इति च ॥ १॥

२ ३ २उ ३ १ २ ३क २र
तमग्निमस्ते वसवो न्यृखंस्तु-

१ २ १ १ २ १ १ २
प्रतिचक्षमवसे कुतश्चित्।

१ २ ३ २उ ३ २ ३ १ २
दृचाय्यो यो दम आस नित्यः ॥२॥

अथ द्वितीया। "यः" अग्निः "दमे" गृहे गृहे "दृचाय्यः" पूजनीयो हविर्भिः समर्हनीयो वा "नित्यः" अजस्रः "आस" बभूव "तं" "सुप्रतिचक्षं" सुप्रतिदर्शनम् "अग्निं" "कुतश्चित्" सर्वस्मादपि भयहेतोः "अवसे" रक्षणाय "वसवः" वासकाः वसिष्ठाः स्तोतारः "अस्ते" गृहे "न्यृखन्" न्यदधुः ॥ २ ॥

१ २ २ १ १र २क १र
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ।

१ २र ३ १ २ ३ १ २
त्वाᳫं शश्वन्त उप यन्ति वाजाः ॥३॥ [१०]

अथ तृतीया। हे "यविष्ठ!" युवतमाग्ने! "प्रेद्धः" प्रकर्षेण समिद्धः त्वम् "अजस्रया" अक्षरणशीलया "सूर्म्या" ज्वालया "नः" अस्मदर्थं "पुरः" पुरस्तात् आहवनीयस्थाने "दीदिहि" दीप्यस्व। "त्वां" "शश्वन्तः" बहवः "वाजाः" अन्नानि हवींषि "उपयन्ति" उपगच्छन्ति ॥ ३ ॥ [१०]

१ २र ३ १ २ ३ १ २ ३ २
आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः।

३ १ २ ३ १ २
पितरं च प्रयन्त्स्वः ॥१॥

ऋ० सार्पराज्ञी। छ० गायत्री। दे० आत्मा। आयङ्गौरिति त्र्यृचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। "गौः" गमनशीलः "पृश्निः" प्राष्टवर्णः व्याप्ततेजाः "अयं" सूर्य्यः "आक्रमीत्" आक्रान्तवान् उदयाचलं प्राप्तवानित्यर्थः। आक्रम्य च "पुरः" पुरस्तात् पूर्वस्यां दिशि "मातरं" सर्वस्य भूतजातस्य निर्मात्रीं भूमिम् "असदन्" आसीदति प्राप्नोति सदेश्छान्दसो लुङ्, लृदित्वात् च्लेरङादेशः। ततः "पितरं" पालकं द्युलोकं "च" शब्दादन्तरिचञ्च "प्रयन्" प्रकर्षेण शीघ्रं गच्छन् "स्वः" सु-अरणः शोभनगमनो भवति यद्वा, पितरं स्वः द्युलोकं प्रयन् वर्त्तते ॥ १ ॥

२ १ २ १ २उ २ १ २ २ २
अन्तश्चरति रोचनास्य प्राणादपानती।
१ २र २ १ २र
व्यख्यन्महिषो दिवम् ॥*२*॥

अथ द्वितीया "अस्य" सूर्य्यस्य "रोचना" रोचमाना दीप्तिः "अन्तः" शरीरमध्ये मुख्यप्राणात्मना "चरति" वर्त्तते। किङ्कुर्वती? "प्राणादपानती" मुख्यप्राणस्य प्राणाख्या वृत्तयः, तच्च प्राणनं नाड़ीभिरूर्द्ध्वं वायोर्निर्गमनम्, तथाविधात् प्राणात् प्राणनात् अनन्तरम् अपानती, अपानं तन्नाड़ीभिरवाङ्मुखं वायोर्नमनं तत् कुर्वती, अपपूर्वादनितेः लटः शत, अदादित्वाच्छपो लुक्, "उगितश्च (४, १, ६)"—इति ङीप्, "शतुरनुमः (६, १, १७३)"—इति नद्यनुदात्तत्वम्। यद्वा, "अन्तः" द्यावापृथिव्योर्मध्ये "अस्य" सूर्य्यस्य "रोचना" रोचमाना दीप्तिः "चरति" गच्छति। रुच दीप्तौ (भ्वा० आ०), "अनुदात्तेतश्च हलादेः (३, २, १४८)"—इति

युच्। किङ्कुर्वती ? "प्राणात्" प्राणनात् उदयानन्तरम् "अपानती" सायं समये अस्तं गच्छतीति। ईदृश्या दीप्त्या युक्तः अतएव "महिषः" महान् सूर्य्यः "दिवम्" अन्तरिक्षम् उदयास्तमययोर्मध्ये "व्यख्यन्" विचष्टे प्रकाशयति॥ महिषः— महेः "अविमह्योष्टिषच् (उ० १, ४५)"—इति औणादिकः टिषच् प्रत्ययः। व्यख्यन्—"चक्षिङः ख्याञ् (२, ४, ५४)", छान्दसे लुङि "अस्यतिवक्ति (३, १, ५२)"—इत्यादिना च्लेरङादेशः॥ २॥

१ २उ ३ १ २ ३ १ २ ३ १ २
त्रिंशद्धाम वि राजति वाक्पतङ्गाय धीयते।
३ २ ३ २३ १ २ ३ १ २
प्रति वस्तोरह द्युभिः॥*३*॥ [११]

इति अर्द्धप्रपाठकः।

अथ तृतीया। "त्रिंशत्" "धाम" धामानि स्थानानि अत्र व्यत्ययः (३, १, ८५) "वस्तोः" वासरस्याहोरात्रस्यावयवभूतानि "अह" शब्दोऽवधारणे "द्युभिः" सूर्य्यस्य दीप्तिभिरेव "विराजति" विशेषेण दीप्यन्ते। व्यत्ययेनैकवचनम् (३, १, ८५)। मुहूर्त्तान्यत्र धामान्युच्यन्ते; पञ्चदश रात्रेः, पञ्चदशाह्नः। "पतङ्गाय" पतन् गच्छतीति पतङ्गः सूर्य्यस्तस्मै सूर्य्याय, स्तुतिरूपा "वाक्" "प्रति धीयते" प्रतिमुखं धीयते प्रतिमुखं स्तोतृभिः विधीयते क्रियते यद्वा, "वस्तोः" अहनि "त्रिंशद्धामानि" घटिकाभिप्रायमेतत्, त्रिंशत् घटिकाः; "अत्यन्तसंयोगे द्वितीया (२, ३, ५)"। एतावन्तं कालं "द्युभिः" दीप्तिभिः असौ सूर्य्यो "वि राजति" विशेषेण दीप्यते, तस्मिंश्च समये "वाक्" त्रयीरूपा "पतङ्गाय" "प्रतिधीयते" प्रतिमुखं

धीयते तं सूर्य्यं सेवत इत्यर्थः। श्रूयते हि—"ऋग्भिः पूर्वाह्ने दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः"—इत्यादि ॥ ३ ॥ [११]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ११ ॥

## इति षष्ठस्य प्रथमोऽर्द्धप्रपाठकः ॥ ६ ॥

इति श्रीमद्राजाधिराज परमेश्वर वैदिकमार्गप्रवर्त्तक श्रीवीर बुक्क-भूपाल-साम्राज्य धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे उत्तराग्रन्थे एकादशोऽध्यायः ॥ ११ ॥

—०—

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥ १२ ॥

## द्वादशोऽध्याय आरभ्यते।

२ १ २ २ १ २र २ १ १
उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये।
१ २ २ १ २ २ १
आरे अस्मे च शृण्वते ॥*१*॥

ऋ० गोतमः वसिष्ठो वा। तत्र प्रथमखण्डे उपप्रयन्त इति चतुर्ऋचं प्रथमं सूक्तम्—तत्र प्रथमा। "अध्वरं" हिंसा-प्रत्यवायरहितम् अग्निष्टोमादियज्ञम् "उप प्रयन्तः" उपेत्य प्रकर्षेण यन्तो गच्छन्तः प्रास्यविच्छेदेन सम्यगनुष्ठितवन्त इत्यर्थः। तादृशा वयम् "अग्नये" अङ्गनादिगुणयुक्ताय देवाय "मन्त्रं" मननसाधनमेतत् सूक्तरूपं स्तोत्रं "वोचेम" वक्तारो

भूयास्म इत्याशास्महे। कीदृशायाम्नये? "आरे अस्मे च शृण्वते" च शब्दोऽप्यर्थे आरेशब्दात् परो द्रष्टव्यः आरे च दूरेऽपि स्थित्वास्माकं स्तुतीः शृण्वते अस्मासु प्रीत्यतिशयेन सर्वत्र विद्यमानोऽग्निः अस्मदीयमेव स्तोत्रं शृणोतीति भावः। वोचेम—ब्रुवोवचिः (२, ४, ५३), लिङ्याशिष्यङ्, "वचउम् (७, ४, २०)"—इत्युमागमः। शृण्वते—"शतुरनुमः (६, १, १७३)"—इति विभक्तेरुदात्तत्वम् ॥ १ ॥

१ ११२ २१ २ २१ २२ ११
यः स्नीहितीषु पूर्व्यः सञ्जग्मानासु कृष्टिषु।

१२ १ २१ १२
अरक्षद्दाशुषे गयम् ॥*२*॥

अथ द्वितीया। "पूर्व्यः" चिरन्तनः "यः" अग्निः "स्नीहितीषु" वधकारिणीषु "कृष्टिषु" शत्रुरूपासु प्रजासु "जग्मानासु" सुसङ्गतासु सतीषु "दाशुषे" हवींषि दत्तवते यजमानाय "गयं" धनम् "अरक्षत्" रक्षति। तस्मै मन्त्रं वोचेमेति पूर्वेण सम्बन्धः। स्नीहितीषु—ष्णिह स्नेहने चुरादिः; "स्नेहयति"—इति वधकर्मसु (निघ० २, १९, १३) पठितम्; स्निह्यन्ते छिद्यन्ते प्रजा आभिरिति स्नीहितयः करणे "तितुत्रेष्वग्रहादीनाम् (७, २, ९ वा०)"—इति वचनात् निग्रहीतिर्निपतितिवदिडागमः व्यत्ययेनेकारस्य ईकारः, क्तिनो दीर्घश्च; नित्त्वादाद्युदात्तत्वम्। सञ्जग्मानासु—"समोगमि (१, ३, २९)"—इत्यात्मनेपदम्, लिटः कानच्, गमहनेत्यादिनोपधालोपः। अरक्षत्—"छन्दसि लङ्लुङ्लिटः (३, ४, ६)"—वर्त्तमाने लङ् ॥ २ ॥

२ २ १२ २१ २२ १ २ २ १२
स नो वेदो अमात्यमग्नी रक्षतु शन्तमः।

३ १उ २ १ २
उतास्मान्पात्वꣳहसः ॥*३*॥

अथ तृतीया। "सः" अग्निः "नः" अस्माकं "वेदः" धनम् "अमात्यम्"। अन्तिके भवं सहभूतं वा "रक्षतु" अग्नेः सकाशात् पालयतु। कीदृशः? "अन्तमः" सुखतमः "उत" अपि च "अस्मान्" वसिष्ठान् "अंहसः" पापात् "पातु" रक्षतु॥

"अन्तमः"—"विश्वतः"—इति पाठौ॥ ३॥

१ १ २ २ १ २ २२ १ २२ १ १ २
उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि।

२ २ ३१र
धनञ्जयो रणेरणे ॥*४*॥ [ १ ]

अथ चतुर्थी। "अग्निः" "उदजनि" अरण्योः सकाशात् उत्पन्नः "उत" अनन्तरं "जन्तवः" जाताः सर्वे ऋत्विजः ब्रुवन्तु तमग्निं स्तुवन्तु। कीदृशोऽग्निः? "वृत्रहा" वृत्राणामावरकाणां शत्रूणां हन्ता "रणेरणे" सर्वेषु सङ्ग्रामेषु "धनञ्जयः" शत्रुधनानां जेता "संज्ञायां (३, २, ४६)"—इति खच्, "अरुर्द्विषदजन्तस्य (६, ३, ६७)"—इति मुम्, चित्स्वरेणान्तोदात्तः। रणेरणे—रणयि दुन्दुभयोऽस्मिन्निति रणः सङ्ग्रामः "वशिरण्योरुपसङ्ख्यानम् (३, ३, ५८ वा०)"—इत्यप्, "नित्यवीप्सयोः (८, १, ४)"—इति द्विर्वचनम्, आम्रेडितानुदात्तत्वम्॥ ४॥ [ १ ]

१ २ २ १ ३१र २ १ २
अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः।

२ ३ १ २ ३ १ २
चरं वहन्त्याशवः ॥*१*॥

ऋ० भरद्वाजः। छ० गायत्री। दे० अग्निः। अथाग्ने-युङ्क्ष्वाहीति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। हे "देव!" द्योतमानाग्ने! तान् अस्मान् "युङ्क्ष्व" आत्मीये रथे योजय। "ये" "तव" त्वदीयाः "साधवः" साधकाः सुशीला वा "अश्वासः" अश्वाः "आशवः" शीघ्रगामिनः सन्तः "अरम्" अलम् पर्याप्तं त्वदीयं रथं वहन्ति "हि" खलु। तानश्वान् रथे युङ्क्ष्वेत्यर्थः।

"युङ्क्ष्व"-"युङ्क्षा"—इति पाठौ, "आशवः"-"मन्यवः"—इति च॥ १॥

२ ३ ३ १ २ ३ १ २र ३ १२
अच्छा नो याह्या वहाभि प्रयाꣳसि वीतये।

३ २ १ २र
आ देवांत्सोमपीतये ॥*२*॥

अथ द्वितीया। हे अग्ने! "नः" अस्मान् "अच्छ" आभि-मुख्येन "याहि" आगच्छ, तथा "प्रयांसि" हविर्लक्षणान्य-न्नानि "अभि" लक्ष्य "देवान्" "आवह"। किमर्थम्? "वीतये" तेषां हविर्भक्षणार्थं, तथा "सोमपीतये" सोम-पानार्थञ्च॥ २॥

१ २ ३ १ २र ३ १ २
उदग्ने भारत द्युमदजस्रेण दविद्युतत्।

२ ३ १ २
शोचा वि भाह्यजर ॥*३*॥ [ २ ]

अथ तृतीया। हे "भारत!" हविषां भर्त्तरग्ने! "उत्

शोच" उन्नततरं दीप्यस्व। तदेव विवृणोति—हे "अजर!" जरारहिताग्ने! "दविद्युतत्"-भृशं द्योतमानस्त्वं "द्युमत्" द्युमता दीप्तिमता सुपांसुलुगिति (७, १, ३९.) तृतीया-लुक् "अजस्रेण" अविच्छेदेन "तेजसा" "वि भाहि", विशेषेण प्रकाशयस्व यद्वा, भातिरन्तर्णीत-ण्यर्थः। त्वं प्रथममुद्दीप्यस्व पश्चादात्मीयेन तेजसा सर्वं जगत् प्रकाशयेति, योजनीयम् ॥ ३ ॥ [ ३ ]

१ २,३ २ ३१ २ २ ३ ३ १ २ १ २१
प्र सुन्वानायान्धसो मर्तो न वष्ट तद्वचः।
१ २ १ २ ३ १ २ २ २ ३ १ २१
अप श्वानमराधसꣳ हता मखं न भृगवः ॥०१०॥

ऋ० वाच्यप्रजापतिः। छ० अनुष्टुप्। दे० सोमः। अथ प्रसुन्वानायेति तृचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। "सुन्वानाय" सुन्वानस्याभिषूयमानस्य "अन्धसः" अदनीयस्य सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तः" मारकः कर्मविघ्नकारी श्वा "न वष्ट" वश कान्तौ (अदा० प०)—इति धातुः न कामयतां न शृणोत्विति यावत्। तथा, हे स्तोतारः! "अराधस" साधकधर्मरहितं तं "श्वानम्" "अपहत"। तत्र दृष्टान्तः—"मख न" यथा पुरा अपराद्धं मखम् एतन्नामानं "भृगवः" अपहतवन्तः तथा अपहतेत्यर्थः।

"सुन्वानाय"-"सुन्वानस्य"—इति पाठौ, "वष्ट"-"हत"—इति च ॥ १ ॥

२ ३ १ २१ ३ २ २ २ ३क २१
आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः।
१ २ ३ १ २१ २ १ ३२३ १ २
सरज्जारो न योषणां वरो न योनिमासदम् ॥०२॥

अथ द्वितीया। "जामिः" बन्धुभूतो देवानां सोमः "अत्के" आच्छादके पवित्रे "आ अव्यत" आवृणोति सम्बद्धो भवति। तत्र दृष्टान्तः—"भुजे न" यथा "श्रोण्योः" रक्षकयोः मातापित्रोः भुजे "पुत्रः" आवृणोति, तद्वत्। ततः सोऽयं सोमो "योनिं" स्वस्थानभूतं कलशम् "आसदम्" आसत्तुं "सरत्" सरति। तत्र दृष्टान्तद्वयम्—"जारो न" यथा जारो "योषणाम्" असतीं स्त्रियं प्राप्तुं "सरत्" सरति, यथा वा "वरः" कन्यां प्राप्तुं गच्छति, तद्वत् ॥ २ ॥

२ ३ १ ३ २ ३ १ २ ३ २उ ३ २ ३ १ ३ २
स वीरो दक्षसाधनो वि यस्तस्तम्भ रोदसी।
१ २ ३ १ २ ३ १ ३१२ ३ १ २
हरिः पवित्रे अव्यत वेधा न योनिमासदम्
॥*३*॥ [३]

अथ तृतीया। "दक्षसाधनः" बलसाधनः "सः" सोमः "वीरः" समर्थो भवति "यः" सोमः "रोदसी" द्यावापृथिव्यौ "वि तस्तम्भ" स्वतेजसा व्यस्तभ्नात् आच्छादयदित्यर्थः। किञ्च "हरिः" हरितवर्णः सोमः "वेधा न" यथा विधाता यजमानः स्वगृहमासीदति, तद्वत् "योनिं" स्वस्थानं कलशम् "आसदम्" आसत्तुं पवित्रे "अव्यत" आवृणोत् सम्बद्धो भवति ॥३॥ [३]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशाध्यायस्य प्रथमः खण्डः ॥१॥

---

२ ३ २ ३ १ ३२ ३ १ २ ३ १ २
अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि।
२ ३ २ ३ १ २
युधेदापित्वमिच्छसे ॥*१*॥

ऋ० सोभरिः। छ० ककुप्। दे० इन्द्रः। अथ द्वितीय-खण्डे—अभ्रातृव्य इति प्रगाथात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। हे "इन्द्र!" त्वं "जनुषा" जन्मनैव "अभ्रातृव्यः" "व्यन् सपत्ने (४, १, १४५)"—इति व्यन् प्रत्ययः सपत्नरहित इत्यर्थः, "अना" अनेतृकः "ऋतश्छन्दसि (५, ४, १५८)"—इति कपः प्रतिषेधः अनियन्तृक इत्यर्थः, "अनापिः" बन्धुवर्जितश्च, "सनादसि" चिरादेव भ्रातृव्यादि-वर्जितोऽसि, यत्र त्वया "आपित्वं" बान्धवम् "इच्छसे" इच्छसि, तत्र "युधेत्" युद्धेनैव युद्धं कुर्वन्नेव स्तोतॄणां सखा भवसि ॥ १ ॥

१ २ ३ १ २ १ २ ३ ३ १ २ ३क २र
न की रेवन्तᳪ सख्याय विन्दसे पीयन्ति ते सुराश्वः।
१२ ३ १ २ ३ १ ३१ २ ३उ ३ १ २
यदा कृणोषि नदनुᳪ समूहस्यादित्पितेव हूयसे ॥*२*॥ [४]

अथ द्वितीया। हे इन्द्र! "रेवतं" केवलधनवन्तं यागादि-रहितमयष्टारमाढ्यं मानवं "सख्याय" सखिभावाय "न किः विन्दसे" न लभसे नाश्रयसीत्यर्थः। अयष्टारो जनाः किं सन्तीत्यत आह—"सुराश्वः" टु ओ श्वि गतिवृद्ध्योः; सुरया हृष्टाः तद्वत् प्रमत्ताः नास्तिकाः। "ते" त्वां "पियन्ति" पीयतिर्हिंसाकर्मा हिंसन्ति तवाश्रयतीत्यर्थः। "यदा" त्वं "नदनुं" नद अव्यक्ते शब्दे (भ्वा० प०) यं स्तोतारं "कृणोषि" मदीयोऽयमिति यदा भावयसि, तदानीं "समूहसि" सम्-वहसि धनादिकं तस्मै वहसि। "आदित्" अनन्तरमेव तेन लब्धधनेन स्तोत्रा "पिता इव" पालयिता जनक इव "हूयसे" स्तुतिभिराहूयसे स्तूयस इत्यर्थः ॥ २ ॥ [४]

१ २ २ २ २ २ २ २ २ १ २८ २ १ २
आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
३ २ ३ १ १ ३ २ ३ १२ ३ १ २
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥*१*॥

ऋ० मेधातिथिः मेध्यातिथिः वा । आत्वासहस्रमिति द्वचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा । हे "इन्द्र !" "त्वा" त्वां "सहस्र" "सहस्रसङ्ख्याकाः "हरयः" त्वदीया अश्वाः "आ वहन्तु" आनयन्त्वस्मयाचं, तथा "शतं" शतसंख्याकाश्च भवदीयाश्वाः त्वामावहन्तु यद्यपि द्वावेवास्य हरी तथापि तद्विभूतयोऽन्येऽपि बहवोऽश्वाः सन्ति । ननु युगपदनेकैरश्वैः कथं वाहयितुं शक्यत इत्यत आह—युक्ता इति "हिरण्यये" स्वर्णविकारे हिरण्यशब्दाद् विकारार्थे विहितस्य मयटः "ऋत्व्यवास्त्व (६, ४, १७५)"—इत्यादौ मलोपो निपात्यते तादृशे "रथे" "युक्ताः" सम्बद्धाः बहूना मश्वानां शीघ्रगमनाय रथे नियुक्तत्वाद् युगपदेव सर्वैरश्वैर्गन्तुं शक्यत इति भावः । कीदृशा हरयः "ब्रह्मयुजः" ब्रह्मणा परिवृढेनेन्द्रेन युक्ताः यद्वा, ब्रह्मणास्मदीयेन स्तोत्रेण मन्त्राभिर्दत्तेन हविषा वा युक्ताः "केशिनः" केशाः सटाः तैर्युक्ताः । किमर्थम् इन्द्रस्य वहनम् ? तत्राह—"सोमपीतये" सोमस्य पानाय यथास्मदीयं सोमं पिबेत्, तथा वहन्त्वित्यर्थः ॥ १ ॥

२ ३ १२ ३ १ २ ३ १ २ ३ १ २
आ त्वा रथे हिरण्यये हरी मयूरशेप्या ।
१ ३ १ २ ३ २ ३ ३ २ ३ ३ १ २ ३ १ २
शितिपृष्ठा वहतां मध्वो अन्धसो विवक्षणस्य पीतये
॥*२*॥

अथ द्वितीया। पूर्वं हर्य्यौ विभूति रूपा अश्वाः इन्द्रं वहन्त्विति प्रार्थितम्, अधुना तावेवेन्द्रमावहतामिति प्रार्थ्यते—"हिरण्यये" हिरण्मये "रथे" युक्तौ "मयूरशेप्या" मयूरवर्णः शेपो ययोस्तौ सुपां सुलुगिति (७, १, ३९) विभक्त्यादेशः "शितिपृष्ठा" श्वेतपृष्ठौ एवम्भूतौ "हरी" अश्वौ हे इन्द्र! "त्वा" त्वाम् "आ वहताम्"। किमर्थम्? "मध्वः" मधुररसस्य "विवक्षणस्य" वक्तुमिष्टस्य स्तुत्यस्य यद्वा वोढव्यस्य प्रापव्यस्य "अन्धसः" अन्नस्य सोमरूपस्य "पीतये" पानार्थम्॥ २॥

११ १ १ २ ११२ ११ २
पिबा त्वाऽस्य गिर्वणः सुतस्य पूर्वपा इव।
१ २ ११२.११२ ३ २उ ११२
परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय पत्यते ॥*३*॥ [५]

अथ तृतीया। हे "गिर्वणः!" गीर्भिर्वननीयः! स्तुतिभिः सम्भजनीयेन्द्र! "सुतस्य" अभिषुतस्यास्य सोमस्य क्रियाग्रहणं कर्त्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी (२, ३, ६२) इममभिषुतं सोमं "तु" क्षिप्रं "पिब"। तत्र दृष्टान्तः—"पूर्वपा इव" पूर्वः सर्वेभ्यो देवेभ्यः प्रथमभावी सन् पिबतीति पूर्वपा वायुः, मध्येन्द्रवायवे सुख्ये ग्रहे सर्वेभ्यो देवेभ्यः पूर्वं पिबति "यस्य देव दधिषे पूर्वपेयम्"—इति निगमान्तरम्; तादृशः वायुरिव त्वमपि सर्वेभ्यो देवेभ्यः पूर्वं पिबेत्यर्थः। कीदृशस्य सोमस्य? "परिष्कृतस्य" अभिषवादिभिः संस्कृतस्य "सम्पर्य्युपेभ्यः (६, १, १३८)"—इति करोतेर्भूषणे सुट्, "परिनिविभ्यः (८, ३, ७०)"—इति सुटः षत्वम्, "रसिनः"

रसवतः । अपि च "इयमासुतिः" अयमामवो सुटकरः "चारुः" शोभनः सोमरसः "मदाय" हर्षाय हर्षजननाय "पत्यते" सम्पद्यते पतॢ गतौ (भ्वा० प०), यद्वा .पत्यतिरैश्वर्यकर्मा । मदाय—मदस्य पत्यते ईष्टे मदोत्पादने शक्त इत्यर्थः ॥ ३ ॥ [५]

१ २ ३ १ २ ३ २ ३ १ ३१२ ३२

आ सीता परि षिञ्चताश्वं न स्तोममप्तुरं रजस्तुरम्।

३ १ २३१ २

वनप्रक्षमुदप्रुतम् ॥*१*॥

ऋ० ऋजिश्वा । छ० ककुप् प्रगाथः । दे०.सोमः । अथ आसोतेति प्रगाथात्मकं तृतीयं सूक्तम्, तत्र प्रथमा । हे ऋत्विज ! "आसोत" सोमम् अभिषुणुत षुञ् अभिषवे (स्वा० उ० ), लोटि छान्दसो ( २. ४, ७२ ) विकरणस्य लुक्, "तप्तनप्तनथनाश्च ( ७, १, ४५ )"—इति तस्य तवादेशः । किञ्च, "परिषिञ्चत" परितस्तं वसतीवर्य्यादिभिः सिञ्चत । कीदृशम् ? "अश्वं न" अश्वमिव वेगिनं "स्तोमं" स्तोतव्यम्, "अप्तुरम्" अन्तरिक्षस्थितानामुदकानां प्रेरकम् "रजस्तुरं" तेजसां च प्रेरकम्, "वनप्रक्षम्" उदकवत् क्षरणशीलम्, "उदप्रुतम्" उदके गच्छन्तं प्लवमानं सोममभिषुणुत अभिषिञ्चत च ।

"वनप्रक्ष"-"वनऋक्षम्"—इति पाठौ ॥ १ ॥

३१ २ २ १ २ ३ १ २ ३ २ ३ २३ १ २

सहस्रधारं वृषभं पयोदुहं प्रियं देवाय जन्मने ।

३ २ ३ १ ३ १ २ ३१ ३२ ३२ ३ १ ३२

ऋतेन य ऋतजातो विवावृधे राजा देव ऋतं बृहत्

॥•२•॥ [ ६ ]

अथ द्वितीया। "सहस्रधारं" बहुधारोपेतं, "वृषभं" कामानां वर्षकं, "पयोदुहं" क्षीरवत् सारभूतं रसं सिञ्चन्तं "प्रियं" प्रीणयितारं तं सोमं "देवाय" देवसम्बन्धिने "जन्मने" देवेभ्यस्तदर्थम् अभिषुणुत। "ऋतजातः" उदकाज्जातः "यः" "राजा" सोमः "ऋतेन" वसतीवर्य्याख्येनोदकेन "वि वावृधे" विशेषेण वर्द्धते। कीदृशः? "देवः" द्योतमानः स्तोतव्यो वा, "ऋतं" सत्यभूतः, "बृहत्" महान्। तमाभिषुणुतेति पूर्वेण समन्वयः।

"पयोदुहम्"-"पयोवृधम्"—इति पाठौ ॥ २ ॥ [६]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य द्वितीयः खण्डः ॥२॥

---

१ २ ३१ २ ३ २ ३ १ २ ३ २ ३ १
अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया।
१ २ ३ १ . २र
समिद्धः शुक्र आहुतः ॥*१*॥

ऋ० भरद्वाजः। छ० गायत्री। दे० अग्निः। अथ तृतीयखण्डे अग्निर्वृत्राणीति त्र्यृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। "विपन्यया" सुस्तूयमानः "द्रविणस्युः" द्रविणं धनं स्तोतृणामिच्छन् यद्वा, हविर्लक्षणं धनमात्मनः इच्छन् "अग्निः" "वृत्राणि" आवरकाणि रक्षःप्रभृतीनि तमांसि वा "जङ्घनत्" भृशं हन्तु। कीदृशोऽग्निः? "समिद्धः" सम्यक् दीप्तः अतएव "शुक्रः" शुक्लवर्णः "आहुतः" हविर्भिरभिहुतः ॥ १ ॥

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे।

१ १ २ ३-२ २ ३ १
सीदन्नृतस्य योनिमा ॥*२*॥

अथ द्वितीया। अत्र मातृपितृशब्दाभ्यां भूद्यावाभि-धीयेते "द्यौः पिता, पृथिवी माता" इति श्रुतेः "मातुः" भूम्याः गर्भे" गर्भस्थाने मध्ये "अध्वरे" अध्वरचिते वेद्याख्ये स्थाने "वि दिद्युतानः" विशेषेण दीप्यमानः "पितुः पिता" द्युलोकस्य पालयिता हविषां प्रदानेन, एवम्भूतोऽग्निः "ऋतस्य" यज्ञस्य "योनिम्" उत्तरवेद्याख्यं "धिष्ण्य" सप्तम्यर्थे द्वितीया ( ३, १, ८५ ) "आसीदन्" उत्तरवेद्यामुपविशन् अग्निर्हवींषि जुह्वनदित्यन्वयः ॥ २ ॥

१ २ ३ २ ३ १ २ १ १ २ ३ १ २
ब्रह्म प्रजावदा भर जातवेदो विचर्षणे।
१ २ ३ २ १ २ ३ २
अग्ने यद्दीदयद्दिवि ॥*३*॥ [ ७ ]

अथ तृतीया। हे "जातवेदः" जातानां वेदितः! "विच-र्षणे" विशेषेण द्रष्टः अग्ने! "प्रजावत्" पुत्रपौत्रसहितं "ब्रह्म" अन्नम् "आ भर" आहर "यत्" ब्रह्म "दिवि" द्युलोके "दीद-यत्" दीप्यते। देवेषु यत् प्रशस्तमन्नं राजते तदाहरेत्यर्थः ॥ ३ ॥ [ ७ ]

२ ३ १ २ ३ १ २ ३ १ २
अस्य प्रेषा हेमना पूयमानो
३ १ २३ १ १ २ ३ १२
देवो देवेभिः समपृक्त रसम्।

२ १ २ १ २ १ २ २ १ २
सुतः पवित्रं पर्य्येति रेभन्

२ २ २ १ २ २ १ २ १ २
मितेव सद्म पशुमन्ति होता ॥*१*॥

ऋ० वसिष्ठः। छ० त्रिष्टुप्। दे० सोमः। प्रस्वप्रेषेति त्वचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। "अस्य" सोमस्य "प्रेषा" प्रेषतिर्गत्यर्थः क्विपि रूपं, "सावेकाच (६, १, १६८)"—इति विभक्तेरुदात्तत्वम्; प्रेरणेन, "हेमना" हिरण्येन "पूयमानः" "हिरण्यपाणिरभिषुणोति"—इति हिरण्यसम्बन्धः तादृशः "देवः" दीप्यमानः सोमः "रसम्" आत्मीयं "देवेभिः" देवैः सह "समपृक्त" सम्पर्चयति संयोजयति पृचो सम्पर्कें (पदा० आ०) ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्मितं "पर्य्येति" परिगच्छति। कथमिव? "होता" देवानामाह्वाता ऋत्विक् "मिता इव" निर्मितान् "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञगृहान् यथा पर्य्येति तद्वत् ॥ १ ॥

२ १ २२ २ १ १ २
भद्रा वस्त्रा समन्या३ वसानो

१ २ २ १ २ १ २ २ १ २
महान्कविर्निवचनानि शंसन्।

१ २ १क २२ २ १ २
श्रा वच्यस्व चम्वोः पूयमानो

२ १ २२ २ १ २
विचक्षणो जागृविर्देववीतौ ॥*२*॥

अथ द्वितीया। "भद्रा" भद्राणि कल्याणानि "समन्या" समनमिति संग्रामनाम (२, १७, १६), तत्र साधुरिति यत्

संग्रामयोग्यानि "वस्त्रा" वस्त्राणि आच्छादकानि तेजांसि "वसानः" आच्छादयन् "महान्" "कविः" क्रान्तदर्शी अतएव "निवचनानि" नितरां वक्तव्यानि ऋत्विकृतानि स्तोत्राणि "शंसन्" "विचक्षणः" विशेषेण सर्वस्य द्रष्टा "जागृविः" जागरणशीलः। हे सोम! एवम्भूतस्त्वं "देववीतौ" देवानां वीतिर्भक्षणं यस्मिन् तद्देववीतिर्यज्ञः तस्मिन् "चम्वोः" अधिषवणफलकयोः "आ वच्यस्व" पाचाय्याविश वचिर्गत्यर्थः (स्वा० प० ) व्यत्ययेन श्यन्॥ २॥

१ २ २ १ २ ३ २ ३ १ २
समु प्रियो मृज्यते सानो अव्ये
३ १ २ २ ३ १ १ २ २ २
यशस्तरो यशसां चैतो असो।
२ १ २ ३ १ २ ३ १ २
अभि स्वर धन्वा पूयमानो
३ १ २ ३ २ ३ १ २
यूयं पात स्वस्तिभिः सदा नः॥*३*॥ [८]

अथ तृतीया। "यशसां" यशस्विनां मध्ये "यशस्तरः" अतिशयेन यशस्वी "चैतः" चितो भवः "प्रियः" प्रीणयिता सोमः "सानौ" समुच्छ्रिते "अव्ये" अविभवे पवित्रे "अस्मे" अस्मदर्थं "समृज्यते" ऋत्विग्भिः परिपूयते "उ"—इत्यवधारणे "पूयमानः" त्वं "धन्वा" अन्तरिक्षे "अभि स्वर" अभितः शब्दय "यूयम्" पूजायां बहुवचनम् हे सोम! त्वं "नः" अस्मान् "स्वस्तिभिः" कल्याणतमैः पालनैः "सदा" सर्वदा "पात" रक्षत पालयेत्यर्थः॥ ३॥ [८]

२ ३ ५ २ १२ ३ १ २३ १ २ ३ २
एतो न्विन्द्रꣳ स्तवाम शुद्धꣳ शुद्धेन साम्ना ।
३ २३ १२३ १ २ ३२३ १ २
शुद्धैरुक्थैर्वावृध्वाꣳसꣳ शुद्धैराशीर्वान्ममत्तु ॥*१*॥

ऋ० तिरश्चो । छ० अनुष्टुप् । दे० इन्द्रः । अथैतोन्विन्द्र-मिति त्र्यचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा । अत्रेतिहास-माचक्षते—पुरा किलेन्द्रो वृत्रादिकान् असुरान् हत्वा ब्रह्म-हत्यादिदोषेणात्मानमपरिशुद्धमित्यमन्यत अथ तद्दोषपरि-हारार्थं तदेन्द्र ऋषीनवोचत्—यूयमपूतं मां युष्मदीयेन साम्ना शुद्धं कुरुतेति । ततस्ते च शुद्धत्वादकेन साम्ना ह्यस्यैव परिशुद्धमकार्षुः । पश्चात् पूतायेन्द्राय यागादिकर्माणि सोमादीनि हवींषि च प्रादुरिति । एषोऽर्थः ताण्ड्यायनक-ब्राह्मणे प्रतिपादितः—"इन्द्रो वा असुरान् हत्वाऽपूत इवा-मेध्यो ऽमन्यत सोऽकामयत शुद्धमेव मा सन्तं शुद्धेन साम्ना स्तुयुरिति स ऋषीनब्रवीत् स्तुतमेति । तत एव ऋषयः साम-पश्यन् तेनास्तुवन्नेतो न्विन्द्रमिति ततो वा इन्द्रः पूतः शुद्धो मेध्योऽभवदिति । तथा च अस्या ऋचोऽयमर्थः—ऋषयः परस्परं ब्रुवन्ति—"नु" क्षिप्रम् "एत उ" आगच्छतैव । आगत्य च "शुद्धेन" शुद्धत्वादकेन साम्ना, तथा "शुद्धैः" शुद्धि-हेतुभिः "उक्थैः" शस्त्रैश्च इन्द्रम् शुद्धमपापिनं कृत्वा "स्तवाम" स्तुयाम । ततः "साम्ना" शस्त्रैश्च "वावृध्वांसं" धापराह्णेन वर्द्धमानं तमिममिन्द्रं "शुद्धैः" शुद्धत्वादकैर्गव्यादिभिः "आशीर्वान्" आश्रयणवान् "क्रन्दशीरः (८, २, १५)"—इति मनुष्यो वत्सम्, तादृशः सोमः "ममत्तु" तमिन्द्रं मादयतु माद्यतेश्छान्दसः (२, ४, ७६) शुः ॥

"शुद्धैराशीर्वान्" "शुद्ध आशीर्वान्"—इति पाठौ ॥ १ ॥

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः।
३ २ ३ १ ३र ३ १ २
शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्य ॥*२*॥

अथ द्वितीया। हे "इन्द्र!" "शुद्धः" अस्मदीयैः सामभिः स्तोत्रैश्च परिशुद्धस्त्वं "नः" अस्मान् "आ गहि" आगच्छ "शुद्धाभिः" ऊतिभिः" ऊतयो मरुतः अवन्ति सर्वत्र गच्छन्तीति वा तेऽपि सामभिः स्तोत्रैश्च परिपूताः तैः मरुद्भिः सह "शुद्धः" पापरहितः त्वम् आगच्छ। आगत्य च "शुद्धः" त्वं "रयिं" धनं अस्मासु "निधारय" नितरां स्थापय। किञ्च, हे "सोम्य!" सोमार्ह! "शुद्धः" त्वं "ममद्धि" सोमेन माद्य मदी हर्षे (दि० प०) लोटि "बहुलञ्छन्दसि (२, ४, ७६)" —इति शपः श्लुः॥

"ममत्सिसोम्य" "ममद्धिसोम्य"—इति पाठौ॥ २॥

१ २ ३ १ ३र ३ १ ३ १ ३र ३ १ २
इन्द्र शुद्धो हि नो रयिᳬ शुद्धो रत्नानि दाशुषे।
३ २ ३ १ २ ३ १ ३र
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजᳬ सिषाससि
॥*३*॥ [८]

अथ तृतीया। हे "इन्द्र!" "शुद्धः हि"—अवधारणे शुद्ध एव त्वं "नः" अस्मभ्यम् "रयिं" धनं प्रयच्छ। तथा "शुद्धः" त्वं "दाशुषे" हविर्दत्तवते यजमानाय "रत्नानि" रमणीयानि कनकादीनि देहि। ततः "शुद्धः" पापरहितः त्वं "वृत्राणि" अपामावरकान् कर्मविघ्नकारिणः शत्रून् पापानि वा "जिघ्नसे" हंसि। ततः "शुद्धः" शत्रुहननदोष-

परिहाराय असदीयैः सामभिः शस्त्रैश्च परिगृह्णस्व वाजमन्नमस्मभ्यं "सिषासति" प्रदातुमिच्छसि यदा यदा अनुनद्धं त्वां तदा तदा गुह्युत्पादकैः सामभिः शस्त्रैश्च यूयं मां परिगृह्णं कुरुतेत्येवमस्मभ्यं धनमन्नञ्च दातुमिच्छसीत्यर्थः ॥ ३ ॥ [८]

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

१ १ २र १ २ ३ १ १ ३ १ १
अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः ।
१ १ २ २ १ २
देवस्य द्रविणस्यवः ॥*१*॥

ऋ० सुतम्भरः । छ० गायत्री । दे० अग्निः । अथ चतुर्थखण्डे—अग्नेस्तोममिति द्व्यात्मकं सूक्तम्, तत्र प्रथमा । "द्रविणस्यवः" द्रविणं धनमिच्छन्तो वयं "दिविस्पृशः" सूर्यरूपेण आकाशं व्याप्नुवतो "देवस्य" द्योतमानस्य "अग्नेः" "सिध्रं" पुरुषार्थानां साधकं "स्तोमं" स्तोत्रम् "अद्य" अस्मिन्नहनि "मनामहे" ब्रूमः ॥ १ ॥

२ १ ९ १ २ २ २ २ ३ १२ २ २
अग्निर्जुषत नो गिरो होता यो मानुषेष्वा ।
१ २ ३ १ २ १ २
स यक्षद्दैव्यं जनम् ॥*२*॥

अथ द्वितीया । "होता" देवानामाह्वाता होमनिष्पादको वा "यः" "अग्निः" "मानुषेषु" "आ" वसति । "सः" अग्निः "नः" अस्माकं "गिरः" स्तुतीः "जुषत" सेवताम् "सः" अग्निः "दैव्यं जनं" देवसम्बन्धिनं जनं "यक्षत्" यजतु ॥ २ ॥

१ २   ३१२   ३ २३ २ ३ १२
त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः ।
१ २ ३१   ३२
त्वया यज्ञं वि तन्वते ॥*३*॥ [ १० ]

अथ तृतीया। हे "अग्ने!" "जुष्टः" सर्वदा प्रीतः "वरेण्यः" सर्वैर्वरणीयः "होता" त्वं "सप्रथाः असि" सर्वतः पृथुर्भवसि तथा हि यास्कः—"सप्रथाः सर्वतः पृथुः (निरु० नै० ६, ७)"—इति। किञ्च, सर्वे यजमानाः "त्वया" साधनेन "यज्ञं" "वि तन्वते" ॥ ३ ॥ [१०]

२ १ २२१ ३२ २ १ २
अभि त्रिपृष्ठं वृषणं वयोधाम-
२ १२   २ १ २
ङ्गोषिणमवावशन्त वाणीः ।
१ २ २१ २ १२ २ ३२ २ १
वना वसानो वरुणो न सिन्धुर्वि
१२१ २ २ १ २
रत्नधा दयते वार्य्याणि ॥*१*॥

ऋ० वसिष्ठः। छ० त्रिष्टुप्। दे० सोमः। अभित्रिपृष्ठमिति त्वचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। "त्रिपृष्ठं" त्रीणि पृष्ठानि स्तोत्राणि सवनानि वा यस्य स तथोक्तस्तं "वृषणं" वर्षकं "वयोधाम्" अन्नस्य दातारम् "अङ्गोषिणम्" आघोषवन्तं सोममभिलक्ष्य "वाणीः" स्तोतॄणां वाचः "अभ्यवावशन्त" शब्दायन्ते। "वना" वनानि उदकानि "वसानः" आच्छादयन् "वरुणो न" वरुणो यथा सिन्धूनाच्छादयति तद्वत्। "सिन्धुः" स्यन्दनशीलः, "रत्नधाः" रत्नानां दाता सोमः "वार्य्याणि" धनानि "दयते" प्रयच्छति स्तोतृभ्यः ॥

"अङ्गोषिणम्" "अङ्गूषाणाम्"—इति पाठौ, "सिन्धुः"—"सिन्धून्"—इति च ॥ १ ॥

१ १ २ १२ २ १ २ २
शूरग्रामः सर्ववीरः सहावान्

१ २ २ १ २ २ २ २
जेता पवस्व सनिता धनानि ।

२ १ २ २ १ २ २ १
तिग्मायुधः क्षिप्रधन्वा समत्

२र २ १ २र २ १ २
स्वषाढः साह्वान् पृतनासु शत्रून् ॥*२*॥

अथ द्वितीया। हे सोम! त्वं "पवस्व"। कीदृशस्त्वम्? "शूरग्रामः" शूराणां ग्रामः सङ्घो यस्य सः, "सर्ववीरः" सर्वे वीरा यस्य स तथोक्तः, "सहावान" सहनवान् "जेता" जयशीलः "सनिता" सम्भक्ता "धनानि" धनानां, "तिग्मायुधः" तीक्ष्णप्रहरणसाधनः, "क्षिप्रधन्वा" क्षिप्रसंहननशीलधन्वा, "समत्सु" संग्रामेषु "अषाढ़ः" असोढ़ा, "साह्वान्" अभिभवन्! कुत्र? "पृतनासु" शत्रुसेनासु। कान्? "शत्रून्" ॥ २ ॥

२ १ २ २ १ २ २ १ २
उरुगव्यूतिरभयानि कृण्वन्-

२ १ २र २ १ २
समीचीने आ पवस्वा पुरन्धी ।

२ १ २र २ २ २ २ १
अपः सिषासन्नुषसः स्व१र्गाः

२ १ २ २ २ १ २
सं चिक्रदो महो अस्मभ्यं वाजान् ॥*३*॥[११]

अथ तृतीया। हे सोम! "उरुगव्यूतिः" विस्तीर्णमार्गः

त्वम् "उभयानि" स्तोतृभ्यः "शृण्वन्" कुर्वन्, "पुरन्धी" इमे द्यावापृथिव्यौ "समीचीने" सङ्गते कुर्वन्, "आ पवस्व" आचर। "अपः" "उषसः" "स्वः" आदित्यं "गाः" रश्मींश्च "सिषासन्" पुष्यर्थं सम्भक्तुमिच्छन् "संचिक्रदः" संक्रन्दसे। "महः" महतः महान्ति "वाजानि" अन्नानि अस्मभ्यं दातुमिति शेषः ॥ ३ ॥ [११]

१ २ २ १ २ ३ १ १२ ३ १ २
त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः।
१ ३१ २ २३ ३ १ २३१ २ ३ १ २
त्वं वृत्राणि हᳯंस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ॥*१*॥

ऋ० नृमेधः पुरुमेधो वा। छ० बृहती। दे० अग्निद्वयम्। अथ त्वमिन्द्रेति प्रगाथात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे "इन्द्र!" "त्वं" "शवसस्पतिः" शवसोऽन्नस्य बलस्य वा पालयिता, "ऋजीषी" ऋजीषोऽभिषुतः सोमः तद्वान्, त्वं "यशा असि" यशस्वी भवसि। कथमस्य यशस्वित्वं ? तदाह—"अप्रतीनि" बलिभिरपि अप्रतिगतानि "वृत्राणि" रक्षांसि "अनुत्तः" अन्यैर्नेतुमशक्यः त्वम् "एकइत्" एकएव असहाय एव "चर्षणीधृतिः" रक्षितेन यजमानादिमनुष्याणां धारकः "पुरु" बहुलं यथा भवति तथा "हंसि" सम्महरसि। अतएव अस्य यशस्वित्वम्।

"शवसस्पतिः"-"शवसस्पते"—इति पाठौ, "एक इत्पुर्वनुत्तश्चर्षणीधृतिः"—"यद्दनुत्ताचर्षणीधृता"—इति च ॥ १ ॥

१ २ ३ १ २ ३ १ २ २ १ २ ३ १ २
तमु त्वा नूनमसुर प्रचेतसᳯं राधो भागमिवेमहे।

२ २ २ १ २ ३ १ २ २ १ २ ३ १ २
मह्नीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन्

॥२॥ [१२]

अथ द्वितीया। हे "असुर!" बलवन्! प्राणवन्! वा हे "इन्द्र!" यः उक्तगुणोऽस्ति "तं" च 'प्रचेतस" प्रकृष्टज्ञानं "त्वा" "उ"—इत्यवधारणे पितृवत् पोषकं त्वामेव "राधः" धर्म्मादिसाधनं धनं "नूनम्" इदानीम् "ईमहे" याचामहे। तत्र दृष्टान्तः—"भागमिव" यथा कश्चित् पितृतो भागभूतं धनं याचते, तद्वत्; इन्द्रो यजमानेभ्यः स्तोतृभ्यश्च धनं प्रयच्छत्येव तस्मात् भागभूतं धनं यष्टारो वयं याचामहे। किञ्च हे इन्द्र! "मह्नीव कृत्तिः" कृत्तिर्यशोऽन्नं वा कृती छेदने (तु० प०) करणे क्तिन्। कृतन्त्यनेनेति, ईदृशी कृत्तिरिव "ते" तव "शरणा" शरणं गृहम् अन्तरिक्षं द्युलोके महद् वर्त्तते अत्र यास्कः—"कृत्तिः कृन्ततेर्यशो वान्नं वा। मह्नीव कृत्तिः शरणा त इन्द्र। सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिव (निरु० नै० ५, २२)"—इति। किञ्च, "ते" तव स्वभूतानि "सुम्ना" सुम्नानि पुत्रादिविषयसुखानि च "नः" अस्मान् "प्राश्नुवन्" प्रकर्षेणाश्नुवतां व्याप्नुवन्तु अश्नोतेर्लेट्यडागमः (३, ४, ९४) ॥२॥[१२]

१ २ ३१ २३ १ २१ ११२
यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम्।

१ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम् ॥१॥

ऋ० सोभरिः। छ० ककुप्। दे० अग्निः। यजिष्ठन्त्वेति प्रगाथात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा। हे अग्ने! "यजिष्ठं"

यष्टृतमं "त्वा" त्वां "वहमहे" वृणीमहे सम्भजामहे। कीदृशं त्वाम्? "देवत्रा" देवेषु मध्ये "देवम्" अतिशयेन दानादिगुणकम्, "होतारं" देवानामाह्वातारम्, "अमर्त्यम्" अविनाशनम्, "अस्य" "यज्ञस्य" यागस्य "सुक्रतुं" सुष्ठु कर्त्तारम्॥ १॥

२ १ २र ३ १ २ ३ १
अपां नपातꣳ सुभगꣳ सुदी-
२ ३ २ ३ १ २
दितिमग्निमु श्रेष्ठशोचिषम्।
१ २ ३ २ ३ १ २ ३ २
स नो मित्रस्य वरुणस्य सो
१ २उ ३ १ २ ३ २
अपामा सुम्नं यक्षते दिवि॥*२*॥ [ १२ ]

अथ द्वितीया। "ऊर्जः" अन्नस्य "नपातं" न पातयितारं यद्वा, नप्तारं चतुर्थं हविर्लक्षणेनान्नेन आपो जायन्ते, अन्नयोषधिवनस्पतयस्तेभ्य एव जायत इति चतुर्थत्वम्। "नभ्राण्नपात् (६, ३, ७५)"—इति नञ् प्रकृतिभावः "सुभगं" शोभनधनं "सुदीदितिं" सुष्ठु दीदयन्तं "श्रेष्ठशोचिषं" प्रशस्यतमतेजस्कम् अग्निं स्तौमीति शेषः। स तादृशोऽग्निः "नः" अस्मदर्थं "दिवि" द्योतमाने देवयजने द्युलोके वा "मित्रस्य" देवस्य "वरुणस्य" च "सुम्नं" सुखम् "आ" अभिलक्ष्य "यक्षते" यजतु। तथा सोऽग्निः, "अपाम्" अब्देवतानाञ्च सुखमभियजतु॥ २॥ [ १२ ]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशाध्यायस्य चतुर्थः खण्डः॥४॥

१ २ ३ १उ २ ३ २ ३ १ २ ३ १ ३ २
यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः ।
२उ ३ १ २ ३ १ २
स यन्ता शश्वतीरिषः ॥ *१ *॥

ऋ० शुनःशेपः । छ० गायत्री । दे० अग्निः । अथ पञ्चमखण्डे—यमग्नइति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा । हे "अग्ने !" "पृत्सु" सङ्ग्रामेषु "यं" "मर्त्यं" यजमानम् "अवाः" अवसि रक्षसि, "यं" पुरुषं "वाजेषु" संग्रामेषु "जुनाः" प्रेरयसि "सः" नरः यजमानः "शश्वतीरिषः" नित्यान्यन्नानि "यन्ता" नियन्तुं समर्थो भवति पृत्सु—"पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यानम् ( ६, १, ६३ )"—इति पृतनाशब्दस्य पदादेशः "सावेकाच ( ६, १, १६८ )"—इति विभक्तेरुदात्तत्वम् । अवाः—भाव: अकाराकारयोर्विपर्ययः, यद्वा लेट्यडागमः, "इतश्च ( ३, ४, ९७ )"—इति सिप इकारलोपः । जुनाः—जु इति गत्यर्थः सौत्रो धातुः, लङ्, सिप्, क्र्यादिभ्यः श्ना; "बहुलञ्छन्दस्य माङ्योगेऽपि ( ६, ४, ७५ )"—इत्यडागमाभावः ; यद्वृत्तयोगात् ( ८, १, ३० )" अनिघातः । यन्ता—तृनो नित्त्वादाद्युदात्तत्वम् ( ६, १, १९७ ) । शश्वतीः—"उगितश्च ( ४, १, ६ )"—इति ङीप् ॥ १ ॥

१ २ २ १ २र
न किरस्य सहन्त्य पर्य्येता कयस्य चित् ।
१ २ ३ १ २
वाजो अस्ति श्रवाय्यः ॥ *२ *॥

अथ द्वितीया । हे "सहन्त्य !" शत्रूणामभिभवनशीलाग्ने ! "अस्य" त्वद्रक्ष्य यजमानस्य "कयस्यचित्" कस्यापि "पर्य्येता

ऋ० नोधाः। छ० त्रिष्टुप्। दे० सोमः। अथ साकमुक्ष इति द्वचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। "साकमुक्षः" सह युगपत् सिञ्चन्त्यः उक्ष सेचने (भ्वा० प०) क्विपि रूपम्, तादृश्यः "ससारः" कर्मकरणार्थम् इतस्ततः सुष्ठु गच्छन्त्यः अङ्गुलयः "मर्जयन्त" सोमं शोधयन्ति मृजू शोधनालङ्करणयोः (अदा० प०)। तथा "दश" दशसङ्ख्याकाः "धीतयः" अङ्गुलिनामैतत् अङ्गुलयः (निघ० २, ५, ७) "धीरस्य" समर्थस्य प्राज्ञस्य वा देवेभ्योऽतव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति। ततः "हरिः" हरितवर्णः सोमः "सूर्यस्य" "जाः" प्रादुर्भूता जाया दिशः ताः "पर्यद्रवत्" परितो गच्छति सूर्यस्य तेजसा हि आविर्भवन्तीति दिशां तस्य जायात्वम् "अत्यः" अतनशीलः "वाजी न" अश्व इव स्थितः सोमः "द्रोणं" द्रोणकलशं "ननक्ष" व्याप्नोति नक्षतिर्व्याप्तिकर्मा (निघ० २, १८, २)॥१॥

२ ३ १ २ ३ १ ३२ ३ १
सं मातृभिर्न शिशुर्वावशानो

३२ ३ १ २ ३ २
वृषा दधन्वे पुरुवारो अद्भिः।

२ ३ १ ३२ ३ १ २ ३ १
मर्य्यो न योषामभि निष्कृतं

३२ ३ १ २ ३ १२
यन्त्सं गच्छते कलश उस्रियाभिः॥२॥

अथ द्वितीया। "वावशानः" देवान् कामयमानः "वृषा" कामानां वर्षकः अतएव "पुरुवारः" बहुभिर्वरणीयः सोमः "अद्भिः" मातृभूताभिः वसतीवरीभिः "स दधन्वे" सन्धार्य्यते। तत्र दृष्टान्तः—"मातृभिर्न शिशुः" कामयमानः पुत्रो यथा

मातृभिः पयःप्रदानेन सम्भार्य्यते अवि गत्यर्थः ( भ्वा० प० ) कर्म्मणि लिटि रूपम् "मर्य्यो न" मनुष्यो यथा "योषां" युवतिम् अभिगच्छति तद्वत्, "निष्कृतं" संस्कृतं स्वस्थानम् "अभियन्" अभिगच्छन् "कलशे" द्रोणाभिधाने "उस्रियाभिः" अद्भिः गोविकारैः क्षीरादिभिर्वा "सङ्गच्छते" गमेरकर्म्मकात् "समोगम्यृच्छिभ्याम् ( १, ३, २८ )"—इत्यात्मनेपदम् ॥ २ ॥

१ १   २र ३  २ ३ १ २  ३
उत प्र पिप्य ऊधरघ्न्याया

२ ३ १ २               ३ २
इन्दुर्धाराभिः सचते सुमेधाः ।

२ १ २  २  ३ १२   ३ १ २ १
मूर्धानं गावः पयसा चमूष्वभि

१     ३ १२ ३ १  ३ १
श्रीणन्ति वसुभिर्न निक्तैः ॥*३*॥ [१५]

अथ तृतीया। "उत" अपि च "अघ्न्यायाः" "अघ्न्या" —इति गो नाम ( निघ० २, ११, १ ) अहन्तव्याया गोः "ऊधः" पयःस्थानं सोमः "प्रपिप्ये" ओषध्यादिषु सोमः प्रविश्य प्रकर्षेण आप्याययति प्यायतेर्लिङि "लिड्यङोश्च (६, १, २९)" —इति पीभावः "सुमेधाः" शोभनप्रज्ञः सोऽयम् "इन्दुः" सोमः "धाराभिः" "सचते" समवैति सङ्गच्छते। ततो "गावः" "चमूषु" चमन्ति भक्षयन्त्यत्र सोममिति चम्वो यज्ञादयः, तेषु स्थितं "मूर्द्धानं" समुच्छ्रितमिमं सोमं "पयसा" उदकेन "अभि श्रीणन्ति" अभितः आच्छादयन्ति। तत्र दृष्टान्तः— "निक्तैः" प्रक्षालितैः "वसुभिः न" वस्त्रैः यथा आच्छादयन्ति तद्वत् ॥ ३ ॥ [१५]

१ २ ३ १ २ ३ २ ३ १ २ २ १ १
पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः।
३ १ २ २ १ २
आपिर्नो बोधि सधमाद्ये
२ २ १ २ ३ १ २
वृधे३ऽस्माँ अवन्तु ते धियः ॥*१*॥

ऋ० मेधातिथिः। छ० बृहती। दे० इन्द्रः। अथ पिबा-सुतस्येति प्रगाथात्मकं तृतीयं सूक्तम्,—तत्र प्रथमा। हे "इन्द्र!" "रसिनः" रसवतः "गोमतः" गोविकारैः पयःप्रभृतिभिः श्रपणद्रव्यैर्युक्तस्य "नः" अस्मदीयस्य "सुतस्य" अभिषुतस्य "क्रियाग्रहणं कर्त्तव्यम्"—इति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे (२, ३, ६२)—षष्ठी इदृशं सोमं "पिब", पीत्वा च "मत्स्व" हृष्टो भव। अपि च त्वं "सधमाद्ये" सह मादयितव्ये सह्वितेरस्माभिस्तर्पयितव्ये सोमे "आपिः" आपयिता बन्धुः सन् "नः" अस्माकं "वृधे" वर्द्धमानाय "बोधि" बुध्यस्व "ते" त्वदीया "धियः" बुद्धयः अनुग्रहात्मिकाः "अस्मान्" स्तोतॄन् "अवन्तु" रक्षन्तु॥

"सधमाद्ये" "सधमाद्यः"—इति पाठौ॥ १॥

२ १ २ ३ २ ३ १ २ ३१ २र ३ १,२,
भूयाम ते सुमतौ वाजिनो वयं मा न स्तरभिमातये।
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अस्माँ चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामय
॥*२*॥ [१६]

अथ द्वितीया। हे इन्द्र! "ते" तव "सुमतौ" शोभनायां बुद्धौ अनुग्रहबुद्धौ "वाजिनः" हविष्मन्तो वयं "भूयाम" वर्त्तमाना

भवाम "अभिमातये" अभिमन्यत इत्यभिमातिः शत्रुः तस्मै तदर्थं "नः" अस्मान् "मा स्तः" माहिंसीः स्तृङ् हिंसायाम् (क्रा० प०) माङि लुङि छान्दसश्च लुक्। अपि तु "अभिष्टिभिः" अभ्येषणीयाभिः प्रार्थनीयाभिः "चित्राभिः" चायनीयाभिः बहुविधाभिर्वा त्वदीयाभिः "ऊतिभिः" "अस्मान्" "अवतात्" अवरक्षणे (भ्वा० प०)। तथा "नः" अस्मान् "सुक्षेषु" सुखेषु "आयामय" आयतान् कुरु सर्वदा सुखिन एव कुरु ॥ २ ॥ [१६]

१ २ ३ २ ३ १ २
त्रिरस्मै सप्त धेनवो दुदुह्निरे

२ २ २ १ २ २ १-२
सत्यामाशिरं परमे व्योमनि।

२ २ २ १ २र २ २ २
चत्वार्य्यन्या भुवनानि निर्णिजे

१ २ २ ३ २ १ २र
चारूणि चक्रे यदृतैरवर्धत ॥*१*॥

ऋ० रेणुः। छ० जगती। दे० सोमः। अथ त्रिरस्मै सप्तेति द्यचात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा। "परमे व्योमनि" विविधमोममवनं गमनं देवानामत्रेति व्योम यज्ञः, तस्मिन् स्थिताय यद्वा परमे व्योमनि अन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशतिसङ्ख्याकाः "धेनवः" प्रीणयित्री गावः "सत्यां" यथार्थभूतम् "आशिरम्" आश्रयमाणं "दुदुह्निरे" दुहन्ति। यद्वा, त्रिःसप्त द्वादशमासाः पञ्चर्त्तवः त्रय इमे लोका असावादित्य एकविंश इति, एतैः सर्वैः सह गोषु उत्पद्यते तद्भावो दुहन्तीति। किञ्चायं सोमः "अन्या" अन्यानि "चत्वारि"

"भुवनानि" उदकानि वसतीवरीस्तिसृयेकधना इति, तानि चतुःसङ्ख्याकानि "चारूणि" कल्याणानि उदकानि "निर्णिजे" निर्णेजनाय परिशोधनाय वा "चक्रे" करोति। "यद्" यदा अयम् "ऋतैः" यज्ञैरेव "वर्द्धितः" वर्द्धितवान् तदा करोति।

"दुदुक्रिये," "दुदुह्रे," इति "परमे व्योमनि" "पूर्वे व्योमनि" इति च पाठौ ॥ १॥

१ २र २ १२ ३ १ २
स भक्ष्यमाणो अमृतस्य चारुण

१ २उ २ १ २ ३ १ २
उभे द्यावा काव्येना वि शश्रथे।

१ २ २ २ ३ १२ १ २ २
तेजिष्ठा अपो मꣳहना परि व्यत

१ २ १२२ १ २ २ १ २ २ २
यदी देवस्य श्रवसा सदो विदुः ॥*२*॥

अथ द्वितीया। "सः" "भक्ष्यमाणः" "चारुणः" कल्याणस्य "अमृतस्य" उदकस्य "क्रियाग्रहणमिति कर्म्मणः सम्प्रदानसञ्ज्ञा, "चतुर्थ्यर्थे बहुलम् (२, ३. ६२)"—इति षष्ठी चारुदकं भक्ष्यमाणः इकारलोपश्छान्दसः (३, ४, ८७) भिक्षमाणः यष्टृभिः याच्यमानः सन् "उभे" "द्यावा" द्यावादेशस्य द्वन्द्वे विहितत्वात् उत्तरपदाभावेऽपि द्वन्द्वः प्रतीयते उभे द्यावापृथिव्यौ "काव्येन" कविकर्म्मणा "विशश्रथे" विहृते करोति यज्ञनिमित्तेन प्रवृत्तेनोदकेन सम्पूरयतीत्यर्थः। किञ्च "तेजिष्ठाः" अतिशयेन दीप्तानि "अपः" उदकानि "मंहना" महत्त्वेन "परिव्यत" वरणार्थं परित आच्छादयति। "यदि" यदा ऋत्विजः "देवस्य" द्योतमानस्य सोमस्य "सदः" स्थानं

२ २ ३ २ ३क २र ३१र
अभि वायुं वीत्यर्षा गृणानो३-
२ ३ १ २र ३१२
ऽभि मित्रावरुणा पूयमानः ।
३१ २र ३ १ २ ३ २ ३
अभी नरं धीजवनꣳ रथेष्ठाम-
३ ३ १२ ३ १ ३
भीन्द्रं वृषणं वज्रबाहुम् ॥*१*॥

ऋ० कुत्सः। छ० त्रिष्टुप्। दे० सोमः। अथ षष्ठे खण्डे—अभिवायुमिति तृचात्मकं प्रथमं सूक्तम्। तत्र प्रथमा। हे सोम। "गृणानः" स्तूयमानस्त्वं "वीति"। "सुपांसुलुक्"—इति चतुर्थ्याः पूर्व्वसवर्णदीर्घः। वीत्यै पानाय। "वायुम्" "अभ्यर्ष" अभिगच्छ। तथा पवित्रेण "पूयमानः" त्वं "मित्रावरुणा" मित्रावरुणौ च पानाय "अभि" गच्छ। किञ्च "नरं" सर्वस्य नेतारं, "धीजवनं" बुद्धा समं वेगं कुर्वाणं, "रथेष्ठां" रथे तिष्ठन्तम् अनेनाश्विनावभिधीयेते; एकवचनन्तु प्रत्येकविवक्षया समुदायविवक्षया वा; एतादृशावश्विनौ चाभिगच्छ। तथा "वृषणं" कामानां वर्षकं "वज्रबाहुं" वज्रयुक्तहस्तम् "इन्द्रं" च त्वं पानाय "अभि" गच्छ॥१॥

२ १ २र ३ १ २ ३ २
अभि वस्त्रा सुवसनान्यर्षाभि-
३ २ ३ १ २ ३ १ २
धेनूः सुदुघाः पूयमानः ।
३ २ ३ १ २र ३ १ २ ३
अभि चन्द्रा भर्तवे नो हिरण्या-
१ २ ३ १ १
भ्यश्वान्रथिनो देव सोम ॥*२*॥

अथ द्वितीया। हे "सोम !" त्वम् अस्माकं "सुवसनानि" सुपरिधानानि "अभ्यर्ष" अभिगमय यद्वा, सुवसनानि शोभनवस्त्रसञ्चितानि "वस्त्रा" वस्त्राण्याच्छादकानि धनानि "अभि" गमय। किञ्च "पूयमानः" पवित्रेण त्वं "सुदुघाः" सुष्ठु पयसो दोग्ध्रीः "धेनूः" नवप्रसूतिका गाः "अभि" प्रापय। अपि च "चन्द्रा" चन्द्राणि आह्लादकानि "हिरण्यानि" "भर्त्तवे" भरणाय पोषणाय "नः" अस्माकम् "अभि" गमय। तथा हे "देव !" स्तोतव्य ! हे "सोम !" "रथिनः" रथवतः अस्मान् अस्माकम् "अभि" प्रापय ॥ २ ॥

१ १ २ १ १ १२२ २७
अभी नो अर्ष दिव्या वसून्यभि

२ १ २ ३ १ २
विश्वा पार्थिवा पूयमानः ।

२ २उ १ १ २ २ १ २३क १२ ३ १ २ ३ १ २
अभि येन द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः

॥*३*॥ [१८]

अथ तृतीया। हे सोम। पवित्रेण "पूयमानः" त्वं "दिव्या" दिव्यानि दिवि भवानि "वसूनि" धनानि "नः" अस्माकम् "अभ्यर्ष" अभिगमय। तथा "पार्थिवा" पार्थिवानि पृथिव्यां भवानि "विश्वा" विश्वानि सर्वाणि धनान्यभिगमय। तथा "येन" त्वदीयेन सामर्थ्येन "द्रविणं" धनं "वयम्" "अश्नवाम" अभिव्याप्नुयाम तत् सामर्थ्यम् "अभि" गमय। किञ्च "आर्षेयम्" ऋषीणामृत्विग्भ्राणां योग्यं धनं "जमदग्निवत्" जमदग्नेर्यथा त्वं प्रापय एवं "नः" अस्माकमपि अभ्यर्ष यद्वा, आर्षेयम्, ऋषीणां योग्यं मन्त्रं जमदग्नेः सम्भृतं मन्त्रं

यथा स्वादुतमम्, अकार्षीः एवमस्माकं तादृशं मन्म स्वादुतमं कुर्विति मन्त्रद्रष्टा स्तोता कुत्सो नाम ऋषिः प्रार्थयते ॥ २ ॥ [१८]

१ २र ३ १ २ ३ १ २
यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय ।

१ २ ३१ २ ३१ २ ३ १ २र
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥*१*॥

ऋ० प्रियमेधः । छ० अनुष्टुप् तथा बृहती छन्दसी । दे० अग्निद्वयम् । अथ यज्जायथा इति द्व्यात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा । हे "अपूर्व्य !" त्वत्तो व्यतिरिक्तेन पूर्वेण वर्जित ! हे "मघवन् !" मंहनीयधनवन् ! "इन्द्र !" "वृत्रहत्याय" वृत्रहननाय "यद्" यदा त्वं "जायथाः" उत्पन्नः प्रादुर्भूतोऽसि "तत्" तदानीमेव "पृथिवीं" प्रथमानां भूमिम् "अप्रथयः" प्रथितां दृढामकरोः । "उत" अपि च "तत्" तदानीमेव "दिवं" द्युलोकम् अन्तरिक्षेण "अस्तभ्नाः" निरुद्धामकार्षीः एतादृशं वीर्यं त्वदन्यस्य न सम्भवतीत्यर्थं द्योतयितुमपूर्व्येति पदम् ॥

"उतोदिवम्" "उतद्याम्"—इति पाठौ ॥ १ ॥

१ २ ३ १ ३ २ ३ २ ३ १ २र
तत्ते यज्ञो अजायत तदर्क उत हस्कृतिः ।

१ २र ३ १ २ ३ २ ३ २उ ३ १ २
तद्विश्वमभिभूरसि यज्जातं यच्च जन्त्वम् ॥*२*॥

अथ द्वितीया । हे इन्द्र ! "यद्" यदा त्वम् अजायथाः तदानीं "ते" त्वदर्थं "यज्ञः" अग्निष्टोमादिः "अजायत" सोमपानार्थमभूत् । "उत" अपि च "तद्" तदानीं "हस्कृतिः" हस हसने (भ्वा० प० ) हासकारो प्रीत्यर्थं क्रियमाणो हर्ष-

सूचको द्वितीयमन्त्रोऽपि अजायत । किञ्च तदा "यत्" "जातं" भूतजातं "यच्च" "जन्त्वम्" कृत्यार्थे त्व-प्रत्ययः जनितव्यं विश्वमस्ति "तत्" "विश्वं" सर्वम् "अभिभूः असि" समञ्जिस्रा अभिभूतवानसि ॥ २ ॥

३ १ २ २१ २र३ १ २र ३ २
आमासु पक्वमैरय आ सूर्य्यं रोहयो दिवि ।
२ १ २र २ २ ३ २ २ १ २ २ २
घर्मं न सामं तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत्
॥*३*॥ [१९]

अथ तृतीया। हे इन्द्र! "आमासु" अपक्वासु गोषु "पक्वं" पयः "ऐरयः" प्रैरय तथा च मन्त्रः—"आमासुचिद्-धिषे पक्वमन्तः" इति। किञ्च, "दिवि" द्युलोके "सूर्य्यम्" "आरोहयः" पूर्वं पणयो नामासुरा अङ्गिरसां गा अपहृत्य अन्धकारावृते कस्मिंश्चित् पर्वते स्थापितवन्तः, ततोऽङ्गिरसः इन्द्रं स्तुत्वा गाः पुनरस्मभ्यमाहरेति तेनाक्रम् इन्द्रो गवां स्थानं तमसावृतं दृष्ट्वा तत्र गोप्रदर्शनाय द्युलोके सर्वप्रकाशकं सूर्य्यमारोपितवान् स्थापितवानसि "चादिलोपे विभाषा (८, १, ६२)"—इति पूर्वस्य ऐरय इत्यस्य न निघातः। अथ परोक्षकृतोऽर्द्धर्चः—हे स्तोतारः! "सुवृक्तिभिः" शोभनाभिः स्तुतिभिः "तपत" इन्द्रं तीक्ष्णीकुरुत इन्द्रं स्तुतिभिः प्रवर्द्धयतेत्यर्थः। तत्र दृष्टान्तः—"घर्मं न" यथा घर्मं दीपनशीलं प्रवर्ग्यं "सामन्"। "सुपांसुलुक्"—इति तृतीयाया लुक्। सामभिः यथा तपन्ति तद्वत्। ततः "गिर्वणसे" गीर्भिर्वननीयायेन्द्राय "जुष्टं" प्रीतिकरं पर्य्याप्तं वा "बृहत्" महत् बृहदाख्यं वा "साम" गायत ॥ ३ ॥ [१९]

१ २र ३ २ ३ १ २ ३ १ २र
मत्स्यपायि ते महः पात्रस्येव हरिवो मत्सरो मदः।
१२ ३ २ ३ १ २ ३ १ २ ३ १ २
वृषा ते वृष्ण इन्दुर्वाजी सहस्रसातमः ॥*१॥

ऋ० अगस्त्यः। छ० अनुष्टुप्। दे० इन्द्रः। अथ मत्स्यपायीति तृचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे "हरिवः!" हरिभ्यां तद्वन्निन्द्र! "महः" महान् पूज्योऽयं सोमः "पात्रस्येव" पात्रेणेव सोमपात्रेण यथा धार्य्यते सोमः, तस्मादयेन "त्वया ते" तृतीयार्थे (२, १, ८५) षष्ठी। यद्वा, "पात्रस्य इव" "ते" तव सम्भूतः "महः" महान् सोमः इति वा योजना "अपायि" पीयते आगमाया विवक्षितार्थत्वात् भूतेऽर्थे प्रयोगः यतः पिबसि अतो "मत्सि" माद्यसि मादयस्व वा। पात्रे यथा सोमः पूर्य्यते, तथात्यधिकं पिब; पीत्वा च मादयस्वेत्यर्थः। किञ्च, "वृष्णे" "ते" अभिमतवर्षित्रे तुभ्यम्। चतुर्थ्यर्थे षष्ठी। "मत्सरः" मदसाधनः, "मदः" तर्पयिता; "वृषा" वर्षिता, "इन्दुः" क्लेदयिता आह्लादकारीत्यर्थः, "वाजी" अन्नवान्; अन्नकार्य्यतृप्तिसद्भावात् अन्नवानित्युच्यते, "सहस्रसातमः" अपरिमितदातृतमः सहस्र पुरुष-सम्भजन-पर्य्याप्त-शक्त्यतिशयो वा एवं महानुभावः सोमः सम्पादितः तं पिबेत्यर्थः॥ १॥

१ २ ३ १२उ ३ १ २ ३ १ २
आ नस्ते गन्तु मत्सरो वृषा मदो वरेण्यः।
३ १ २ ३ १ २ ३ १ २र
सहावाꣳ इन्द्र सानसिः पृतनाषाडमर्त्यः ॥*२॥

अथ द्वितीया। हे इन्द्र! "ते" त्वां "नः" अस्मदीयः "मत्सरः" मर्पणसाधनः सोमः "आगन्तु" आगच्छतु। कीदृशोऽयम्? "वृषा" वर्षकः "मदः" तर्पयिता, "वरेण्यः" वरणीयः, "सहा-

वान्" सहायवान् अस्मादृत्तेन सोमेन सहायवान् सन्। सहसा बलेन तद्वान् वा। "सानसिः" अस्माभिः सम्भजनीयः, "पृतनाषाट्" शत्रुसेनाया अभिभविता "अमर्त्यः" अविनाशी च भवति॥ २॥

२३ २ १२ २ २ ३ १ २ ३ १२
त्वꣳ ह्नि शूरः सनिता चोदयो मनुषो रथम्।
३ १ २ ३ १ २ १ २३ २ १ २ २ ३ १ २
सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा
॥*३*॥ [२०]

## इति द्वितीयोऽर्द्धप्रपाठकः।

अथ तृतीया। हे इन्द्र! "त्वं" "हि" खलु "शूरः" शौर्य्योपेतः "सनिता" दातासि। अतः "मनुषः" मनुष्यस्य मे "रथं" रंहणं स्यन्दनं मनोरथं वा स्वर्गगमनसाधनं यज्ञार्थं रथं वा "चोदयः" प्रेरय। किञ्च त्वं "सहावान्" भूत्वा "दस्युम्" उपक्षयितारम् "अव्रतम्" अकर्माणम् अननुष्ठायिनम् "ओषः" दह। किमिव? "शोचिषा" दीप्त्या ज्वालया अग्निः "पात्रम्" स्वाधारं पात्रविशेषमिव यागाधिकारी सन् यो न यजते, तं दहेत्यर्थः॥ ३॥ [२०]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशाध्यायस्य षष्ठः खण्डः॥ ६॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः॥ १२॥

## इति षष्ठस्य द्वितीयोऽर्द्धप्रपाठकः।

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर बुक्क-
भूपाल साम्राज्य धुरन्धरेण सायणाचार्य्येण विरचिते
माधवीये सामवेदार्थ-प्रकाशे उत्तराग्रन्थे
द्वादशोऽध्यायः॥ १२॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १२ ॥

## अथ तृतीयोऽर्द्धप्रपाठकः ।

त्रयोदशोऽध्याय आरभ्यते ।

१ २ २ ३उ २ २ ३ १ २ १ १८
पवस्व वृष्टिमा सु नोऽपामूर्मिं दिवस्परि ।
१ २ २ १ २८
अयक्ष्मा बृहतीरिषः ॥*१*॥

ऋ० कविः । छ० गायत्री । दे० सोमः । तत्र, प्रथमे खण्डे—पवस्वहष्टिमिति पञ्चर्चं प्रथमं सूक्तम्, तत्र प्रथमा । हे "सोम ! त्वं "दिवः" द्युलोकात् "वृष्टिं" वर्षं "नः" अस्माकं "सु" सुष्ठु "आ पवस्व" समन्तात् चर । एतदेव दर्शयति—"अपाम्" उदकानाम् "ऊर्मिं" तरङ्गं "दिवः" "परि" आपवस्व । अपि च "अयक्ष्माः" यक्ष्मरहितानि अनामयानि "बृहतीः" महान्ति "इषः" अन्नानि आपवस्व ॥ १ ॥

१ २ २ १२ ३ २ ३ १ २ ३ १ २ ३ १८
तया पवस्व धारया यया गाव इहागमन् ।
१ २ २ १ २ २ ३
जन्यास उप नो गृहम् ॥*२*॥

अथ द्वितीया । हे सोम ! त्वं "तया" तादृश्या "धारया" "पवस्व" चर । कीदृश्येत्यत्राह—"यया" यादृश्या त्वदीयया धारया "जन्यासः" जन्याः प्रभुजनपदभवाः "गावः" "इह" अस्मिंल्लोके "नः" अस्माकं सम्बन्धि "गृहम्" "उप आ गमन्" उपागच्छन्ति ॥ २ ॥

३ १-२ ३ १ २ ३ १२ ३ १ २
घृतं पवस्व धारया यज्ञेषु देववीतमः।
३ १ २ ३ १ २र
अस्मभ्यं वृष्टिमा पव ॥*३*॥

अथ तृतीया। हे सोम! "यज्ञेषु" "देववीतमः" अतिशयेन देवकामः त्वम् "अस्मभ्यं" स्तोतृभ्यः "घृतम्" उदकं "धारया" सम्पातेन "पवस्व" क्षर; "वृष्टिं" वर्षञ्च "आपवस्व" ॥ ३ ॥

१ २ ३ २ १२ ३ १ २ ३ १ २
स न ऊर्जे व्या३व्ययं पवित्रं धाव धारया।
१ १ २ ३ २ ३ १ २
देवासः शृणवन्हि कम् ॥*४*॥

अथ चतुर्थी। हे सोम! "सुतः" अभिषुतस्त्वं "नः" अस्माकम् "ऊर्जे" अन्नाय "अव्ययम्" अविमयं "पवित्रं" धारया सम्पातेन "विधाव" प्राप्नुहि "देवासः" देवा अपि "हि कं शृणवन्" गमनवेलायामुत्पन्नं त्वदीयं शब्दं शृण्वन्तु ॥ ४ ॥

१२ ३१ २ ३ १ २
पवमानो असिष्यदद्रक्षा७ंस्यपजङ्घनत्।
३ १ २ ३ १ १ २
प्रत्नवद्रोचयन् रुचः ॥*५*॥ [ १ ]

अथ पञ्चमी। "रक्षांसि" राक्षसः "अपजङ्घनत्" "रुचः" आत्मीया दीप्तीः "प्रत्नवत्" पुरातनवत् "रोचयन्" दीपयन् "पवमानः" सोमः "असिष्यदत्" स्यन्दते ॥ ५ ॥ [१]

१ २ ३ १ २ ३ १ २ ३ १ २
प्रत्यस्मै पिपीषते विश्वानि विदुषे भर।

२ २ २ २ २ १ २ २ १ २
अरङ्गमाय जग्मयेऽपश्चाद्‌घ्वने नरः ॥ १ ॥

ऋ० भरद्वाजः। छ० अनुष्टुप्। दे० इन्द्रः। अथ प्रत्यस्मा इति चतुर्ऋचं द्वितीयं सूक्तम्, तत्र प्रथमा। हे अध्वर्यो! "नरः" नेता यज्ञानां त्वम् "अस्मै" इन्द्राय "प्रति भर" अभिहर सोमं प्रयच्छेत्यर्थः। कीदृशायेन्द्राय? "पिपीषते" पातुमिच्छते "विश्वानि" सर्वाणि वेद्यानि "विदुषे" जानते "अरङ्गमाय" पर्याप्तगमनाय "जग्मये" यज्ञेषु गमनशीलाय "अपश्चादघ्वने" दघिर्गतिकर्मा (निघ० २, १४, ६२) अपश्चाद्गमनाय सर्वेषामग्रगामिने ॥

"नरः" "नरे"—इति पाठौ ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ १ २
एमेनं प्रत्येतन सोमेभिः सोमपातमम्।

१ २ ३ १ २ ३ १ २ ३ १ २
अमत्रेभिर्ऋजीषिणमिन्द्रꣳ सुतेभिरिन्दुभिः ॥ २ ॥

अथ द्वितीया। हे अध्वर्यवः! "सोमेभिः" सोमैः कारणभूतैः "सोमपातमं" अतिशयेन सोमस्य पातारम् "एनम्" इन्द्रम् "आ" अभिमुखं "प्रत्येतन" प्रतिगच्छत "इम्"—इति निपातोऽनर्थकः। कीदृशमिन्द्रम्? "अमत्रेभिः" अमत्रैः सोमपात्रैः यद्वचमसादिभिः "ऋजीषिणम्" ऋजीषं शत्रूणामुपार्जकं बलं, तद्वन्तं, यद्वा, ऋजीषिणमित्युत्तरत्र सम्बन्धनीयं, "सुतेभिः" अभिषुतैः "इन्दुभिः" सोमैः, "ऋजीषिणं" गतसारः सोमः ऋजीषः तद्वन्तम्। अथवा अमत्रैः अपरिमितैरभिषुतैः सोमैः ऋजीषिणम्। ऋजेर्गत्यर्थादाय-साधन ऋजीषशब्दः, ततो मत्वर्थीय इनिः, सकृतमित्यर्थः।

एवंविधमिन्द्रं प्रति गच्छतेत्यन्वयः । अन्ये आहुः—अमत्रेभिः ग्रहचमसादिगतैः सोमैः ऋजीषिणं बलवन्तमिन्द्रं प्रतिगच्छतेति ॥ २ ॥

१ २ २ २ २ १ २ २ १ २ २ १ २
यदी सुतेभिरिन्दुभिः सोमेभिः प्रतिभूषथ ।
२ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३क
वेदा विश्वस्य मेधिरो धृषत्तन्तमिदेषते ॥*३*॥

अथ तृतीया । हे अध्वर्यवः ! "सुतेभिः" अभिषुतैः "इन्दुभिः" उन्दनशीलैः दीप्तैर्वा "सोमेभिः" सोमैः "यदि प्रतिभूषथ" इन्द्रं प्रति यदि यूयं प्रतिगच्छथ भू प्राप्तौ (भ्वा० उ०)—इत्यस्यैतद्रूपं तदानीं "मेधिरः" मेधावी मेधो यज्ञः ( निघ० ३, १७, ४ ) तद्वान् वा स इन्द्रः "विश्वस्य" विश्वं सर्वं भवदीयं कामं "वेद" वेत्ति जानाति ज्ञात्वा च "धृषत्" शत्रूणां धर्षकः सन् "तमित्" तं तं काममेव "एषते" प्रापयति ॥३॥

२ १ २ २ १ २ २उ २ १ १ २ १ २ १ २
अस्माअस्मा इदन्धसोऽध्वर्यो प्र भरा सुतम् ।
२ १ २ २ १ २ ३ १ २ ३ १ २ ३ १ १
कुवित्समस्य जेन्यस्य शर्धतोऽभिशस्तेरवस्वरत्
॥*४*॥ [ २ ]

अथ चतुर्थी । "अस्माअस्माइत्" अस्माएवेन्द्राय नान्यस्मै, हे अध्वर्यो ! त्वम् "अन्धसः" सोमलक्षणस्यान्नस्य "सुतम्" अभिषुतं रसं "प्रभर" प्रहर प्रयच्छेति यावत् । स चेन्द्रः "समस्य" सर्वस्य जेतव्यस्य "शर्धतः" उत्सहमानस्य शत्रोः "अभिशस्तेः" अभिशंसनात् तत्कृतात् हिंसनात्

"कुवित्" बहुशः "अवसरत्" अस्मान् पालयत्वित्यर्थः ॥
"प्रवसरत्" "अवसरद्"—इति पाठौ ॥ ४ ॥ [२]
इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य त्रयोदशाध्यायस्य प्रथमः खण्डः ॥१॥

---

२ ३ १ १ २र २ १ २ ३ १ २
बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे ।
१ २ ३ १ २
सोमाय गाथमर्चत ॥*१*॥

ऋ० असितः देवलो वा। छ० गायत्री। दे० सोमः।
अथ द्वितीयखण्डे—बभ्रवेन्विति षड्ऋचं प्रथमं सूक्तम्, तत्र प्रथमा। हे स्तोतारः। "बभ्रवे" बभ्रुवर्णाय "स्वतवसे" स्वबलाय "अरुणाय" कदाचिदरुणवर्णाय "दिविस्पृशे" दिवं स्पृशते सोमाय "गाथं" स्तुतिरूपां वाचम् "अर्चत" उच्चारयतेत्यर्थः ॥ १ ॥

१ २ ३ २ ३ २ १ २र
हस्तच्युतेभिरद्रिभिः सुतꣳ सोमं पुनीतन ।
२ ३ १२ २ ३ १ २
मधावा धावता मधु ॥*२*॥

अथ द्वितीया। हे ऋत्विजः। "हस्तच्युतेभिः" हस्तप्रच्युतैः "अद्रिभिः" अभिषवग्रावभिः "सुतम्" अभिषुतं "सोमं" "पुनीतन" पवित्रे पावयत। अपि च "मधौ" मदकरे सोमे "मधु" गव्यं पयः "आधावत" प्रक्षिपत ॥ २ ॥

२ ३ १ २र ३ २ ३ १ २
नमसेदुप सीदत दध्नेदभि श्रीणीतन ।
२ ३ १ २
इन्दुमिन्द्रे दधातन ॥*३*॥

अथ तृतीया। हे ऋत्विजः! "नमसेत्" नमस्कारेणैव "उपसीदत" सोमसुपगच्छत "दध्नेत्" दध्नैव "अभिश्रीणीतन" सोममभिश्रीणीत च। "इन्द्रे" "इन्दुं" सोमं "दधानत" धत्ते च॥ ३॥

२ १ २र ३ १ २ ३ १ २र
अमित्रहा विचर्षणिः पवस्व सोम शं गवे।
२ १ २ २ १
देवेभ्यो अनुकामकृत् ॥*४*॥

अथ चतुर्थी। हे सोम! "अमित्रहा" अमित्राणां हन्ता "विचर्षणिः" विद्रष्टा "देवेभ्यः" "अनुकामकृत्" अभीष्टस्य कर्त्ता त्वं "गवे" अस्माकं पशवे "शं" सुखं "पवस्व" चर॥ ४॥

१ २ २ १ २ ३ १ २ ३ १ २
इन्द्राय सोम पातवे मदाय परि षिच्यसे।
२ १ २र ३ १
मनश्चिन्मनसस्पतिः ॥*५*॥

अथ पञ्चमी। हे "सोम!" "मनश्चित्" मनसो ज्ञाता; मनसस्पतिरीश्वरः। त्वं "इन्द्राय" इन्द्रस्य "पातवे" पानार्थं "मदाय" च "परिषिच्यसे" परितः पात्रेषु सिच्यसे॥ ५॥

१ २ २ १ २ २ १ २
पवमान सुवीर्य्यᳬ रयिᳬ सोम रिरीहि णः।
२ ३ १ २ ३ २
इन्दविन्द्रेण नो युजा ॥*६*॥ [३]

अथ षष्ठी। हे "इन्दो!" क्लियमान! "पवमान"! सोम! त्वं "सुवीर्य्यं" शोभनवीर्य्योपेतं "रयिं" धनं "नः" अस्माकं

सम्बन्धिना "इन्द्रेण" "युजा" सहायेन "नः" अस्मभ्यं "रीरिहि" देहि ॥ ६ ॥ [२]

१उ २ ३ २ ३ १ २ ३ १ २र
उद्घेदभि श्रुतामघं वृषभं नर्य्यापसम् ।

१ २
अस्तारमेषि सूर्य्य ॥*१*॥

ऋ० सुकक्षः । छ० गायत्री । दे० इन्द्रः । अथोद्घेद-भीति त्र्यचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा । हे "सूर्य्य !" द्वादशसु भानुषु इन्द्रोऽपि सूर्य्यात्मना पठितः । तस्मात् सूर्य्य-त्वम् । सुवीर्य्य ! हे इन्द्र ! "श्रुतमघं" सर्वदा देयत्वेन विख्यातधनम्, अतएव "वृषभं" याचमानानां धनस्य वर्षितारं "नर्य्यापसं" नरहितं नर्य्यं नरहितकर्म्माणम् "अस्तारम्" दान-शौण्डम् औदार्य्यवन्तम् एतादृशं स्तोतारम् "अभि" लक्ष्य "उदेषि" इदवधारणे त्वमेव तस्य यज्ञे सूर्य्यात्मना उद्गतो-ऽसि "घ"—इति प्रसिद्धौ ॥ १ ॥

१ २ १ २ ३ १ २र ३ १ २ ३क २र
नव यो नवतिं पुरो बिभेद बाह्वोजसा ।

१ २ ३ १ २
अहिं च वृत्रहावधीत् ॥*२*॥

अथ द्वितीया । "यः" इन्द्रः "नवनवतिं" नवतिसङ्ख्याकाः ततः नवसङ्ख्याकाः एकोनशतसङ्ख्याकाः शम्बरस्य "पुरः" पुरीः "बाह्वोजसा" बाहुबलेनैव "बिभेद" दिवोदासाय भिनत्ति स्म तथा च मन्त्रान्तरे—"दिवोदासाय नवतिञ्च नवेन्द्रः पुरोव्यै-रच्छम्बरस्य"—इति । (ऋ० स० २३, १८, ६) स च "वृत्रहा" वृत्रासुरस्य हन्ता । स इन्द्रः "अहिं च" केनाप्यहन्तव्यं मेघ-

नपामावरकं वृत्रासुरं वा अवधीत्। स इन्द्रोऽस्माकं धनं ददात्वित्युत्तरेण सम्बन्धः ॥ २ ॥

१ २ ३ १ २　३ १　३र १ २ ३ १ २
स न इन्द्रः शिवः सखाश्वावद्गोमद्यवमत् ।
३ १ २
उरुधारेव दोहते ॥*३*॥ [४]

अथ तृतीया । "सः" पूर्वोक्तगुणविशिष्टः "शिवः" कल्याणतमः "सखा" यष्टृयष्टव्य-स्तोतृस्तोतव्य-लक्षणेन सम्बन्धेन "नः" अस्माकं मित्रभूतः एतादृश इन्द्रः "अश्ववत्" अश्वयुक्तं "गोमत्" पश्वादिसहितं "यवमत्" "अयवादिभ्यः"—इति प्रतिषेधात् मतुपो वत्वाभावः । यव इति धान्यविशेषः धान्ययुक्तं धनं "नः" अस्मभ्यं "दोहते" दोग्धुं ददातु । तत्र दृष्टान्तः —"उरुधारेव" दोहनकाले प्रभूतपयोधारा यद्वा बहूनां पोषयित्री गौः यथा वत्सस्य पयो दोग्धि तथा प्रभूतधनम् अस्माकं दोग्धुं ददातु दुहेर्लेट्यड़ागमः ( ३, ४, ८४ ) ॥ ३ ॥ [४]

इति सामवेदार्थप्रकाशे उत्तराध्यायस्य षष्ठीदशाध्यायस्य द्वितीय खण्डः ॥२॥

---

१ २　२ १ २　१ २उ　२
विभ्राड्बृहत्पिबतु सोम्यं मध्वायु-
१ २ ३ १ २ ३ १ २
र्दधद्यज्ञपतावविह्रुतम् ।
१ २　३ १　२ ३ १ २ ३　१ २
वातजूतो यो अभिरक्षति त्मना
३ १　२　३ १　३र
प्रजाः पिपर्ति बहुधा वि राजति ॥*१*॥

ऋ० विभ्राट्, सौर्यः । छ० जगती । दे० सूर्यः ।

अथ तृतीयखण्डे—विभ्राड़िति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। "विभ्राट्" विभ्राजमानः विशेषेण दीप्यमानः सूर्य्यः "बृहत्" परिवृढ़ "सोम्यं" सोममयं "मधु" "पिबतु"। किं कुर्वन्? "यज्ञपतौ" यजमाने "अविह्रुतम्" अकुटिलम् "आयुः" "दधत्" कुर्वन् "यः" सूर्य्यः "वातजूतः" वातेन महा-वायुना प्रेर्य्यमाणः सन् "त्मना" आत्मना स्वयमेव "अभि रक्षति" सर्वं जगदभिपश्यन् पालयन्ति राशिचक्रस्य वायुप्रेर्य्यत्वात् सूर्य्यस्यापि तत्प्रेर्य्यत्वम्। स सूर्य्यः "प्रजाः" "पिपर्त्ति" वृष्ट्यादिप्रदानेन पालयति "बहुधा विराजति" विशेषेण दीप्यते च।

"पिपर्त्तिबहुधा"-"पुपोषपुरुधा"—इति पाठौ ॥ १ ॥

२ ३ २ ३ १ २ ३र २ ३ १ २ १
विभ्राड्बृहत्सुभृतं वाजसातमं
१ २ २ २ ३ १ २ ३ १ २ ३र
धर्मं दिवो धरुणे सत्यमर्पितम्।
२ १ २ ३ २ ३ २ ३ १ २ ३
अमित्रहा वृत्रहा दस्युहन्तमं
१ २ ३ १ २ २ ३ २
ज्योतिर्जज्ञे असुरहा सपत्नहा ॥ २ ॥

अथ द्वितीया। "विभ्राट्" विभ्राजमानं, "बृहत्" प्रौढ़ं, "सुभृत" सुपुष्ट, "वाजसातमं" वाजस्यान्नस्य बलस्य वा दातृतम, "धर्मन्" धर्म्मणि वायुना धारयितव्ये "दिवः" द्युलोकस्य "धरुणे" धारके सूर्य्यमण्डले "अर्पितं" निहितं, "सत्यम्" अनश्वरम् "अमित्रहा" अमित्राणामप्रियाणां हन्तृ, "वृत्रहा" आवृण्वतां हन्तृ, "दस्युहन्तमं" दस्यूनामुपक्षपयितॄणां हन्तृ-

तमम्, "असुरहा" असुराणां चैषां घातकं "सपत्नहा" सपत्नानां शत्रूणामपि घातकम्, ईदृग्भूतं "ज्योतिः" सौरं तेजः "जज्ञे" प्रादुर्भवति ॥ २ ॥

२ ३उ १ १ २ ३ १ २ ३ १
इदᳬ श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं

२ १ १२ ३ १ २ ३ २
विश्वजिद्धनजिदुच्यते बृहत् ।

१ २ १ २उ ३ १ २ ३ १
विश्वभाड्भ्राजो महि सूर्यो दृश

३ १ २ ३ २ ३ २ ३ १ २
उरु पप्रथे सह ओजो अच्युतम् ॥*३*॥ [५]

अथ तृतीया। "इदं" सौरं तेजः "श्रेष्ठं" प्रशस्यतमं "ज्योतिषाम्" अन्येषां ग्रहनक्षत्रादीनामपि "ज्योतिः" प्रकाशकम् अतएव "उत्तमम्" उत्कृष्टं "विश्वजित्" विश्वस्य सर्वस्य जेतृ "धनजित्" धनस्य जेतृ "बृहत्" प्रभूतमुच्यते एवंगुणविशिष्टमिति सर्वैरभिधीयते अपि च "विश्वभ्राट्" विश्वस्य प्रकाशयिता "भ्राजः" भ्राजमानः "महि" महान् "सूर्यः" "दृशे" दर्शनाय "उरु" विस्तीर्णं "सहः" तमसोऽभिभवितृ "अच्युतं" च्युतिरहितम् अविनाशम् "ओजः" तेजोरूपं बलं "पप्रथे" विस्तारयति ॥ ३ ॥ [५]

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।

१ २ ३ १ २ ३
शिक्षा णो अस्मिन्पुरुहूत

१ २ ३ १ २र
यामनि जीवा ज्योतिरशीमहि ॥*१*॥

ऋ० शक्तिः। छ० बृहती। दे० इन्द्रः। अथ इन्द्रक्रतु-
मिति प्रगाथात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। हे "इन्द्र!"
"नः" अस्मभ्य "क्रतुं" कर्म प्रज्ञानं वा "आभर" आहर।
अपि च "यथा" "पिता" "पुत्रेभ्यः" प्रयच्छति तथा "नः"
अस्मभ्यं "शिक्ष" धनं देहि। हे "पुरुहूत" बहुभिराहुत!
"यामनि" यज्ञे "जीवाः" वयं "ज्योतिः" सूर्यम् "अशीमहि"
प्रतिदिनं प्राप्नुयामः॥ १॥

मा नो अज्ञाता वृजना

दुराध्यो३ माशिवासोऽव क्रमुः।

त्वया वयं प्रवतः शश्वतीरपोऽति शूर तरामसि
॥२॥ [६]

अथ द्वितीया। हे इन्द्र! "अज्ञाताः" अज्ञातगमनाः
"वृजनाः" हिंसकाः "दुराध्यः" दुष्टाभिसन्धयः "नः" अस्मान्
"मा अवक्रमुः" मावचक्रमुः। हे "शूर!" "त्वया" "वयं"
स्तोतारः "प्रवतः" प्रवणकाः सन्तः "शश्वतीः" बह्वीः "अपः"
"अतितरामसि" अतितरामः॥२॥[६]

अद्याद्या श्वःश्व इन्द्र त्रास्व परे च नः।

विश्वा च नो जरितॄन्त्सत्पते

अहा दिवा नक्तं च रक्षिषः॥१॥

ऋ० भर्गः। छ० ककुप्प्रगाथः। दे० अग्निः। अद्याद्ये-

र्थेति प्रगाथात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। "अद्याद्य" यदद्यशब्दवाच्यमहरस्ति, तत्र सर्वत्र, हे "इन्द्र!" "श्वःश्वः" श्वःशब्दवाच्यं च यत्, तत्र सर्वत्र, त्वं "त्रास्व" अस्मान् रक्ष। तथा "परे च" "परस्मिन्" तृतीयेऽहनि च त्रास्व। हे "सत्पते"। सतां पालकेन्द्र! "विश्वा च" सर्वाण्यपि "अहा" अहानि सर्वेष्वप्यहःसु "नः" अस्मान् "जरितॄन्" स्तोतॄन् "रक्षिषः" रक्षसि। तथा "दिवा नक्तं च" रक्षिषः रक्षसि रक्ष वा॥ १॥

१ १ २र ३ १ २ ३ १ २ ३ १ २ २ ३क २र ३ २
प्रभङ्गी शूरो मघवा तुवीमघः संमिश्लो वीर्य्याय कम्।
१ १ २ २ १ २र २ १
उभा ते बाहू वृषणा शतक्रतो
१ २ ३ २र ३ १ २
नि या वज्रं मिमिक्षतुः॥*२*॥ [७]

अथ द्वितीया। अयं "मघवा" धनवान्, इन्द्रः, "प्रभङ्गी" प्रभञ्जनशीलः, "शूरः" विक्रान्तः, "तुवीमघः" प्रभूतधनः "संमिश्लः" सम्यङ् मिश्रयिता। किमर्थम्? "वीर्य्याय" वीर्य्यकरणाय। कमिति पादपूरणः। एवं महानुभावो भवति। अथ प्रत्यक्षवादः। हे "इन्द्र!" "ते" "उभा" उभौ अपि "बाहू" "वृषणा" कामानां वर्षकौ हे "शतक्रतो"! बहुप्रज्ञ! "या" यौ बाहू "वज्रम्" आयुधं "मिमिक्षतुः" परिगृहीतः॥ २॥ [७]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठोदशाध्यायस्य तृतीय खण्डः॥ ३॥

---

१ २ १र १ २ १ २ ३ १ २ ३ १ २ १
जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः।

१ २
सरस्वन्तꣳ हवामहे ॥*१*॥ [८]

ऋ० वसिष्ठः। छ० गायत्री। दे० सरस्वान्। अथ चतुर्थ-खण्डे—जनीयन्त इत्येकर्चं प्रथमं सूक्तम्, सेयोच्यते। "जनीयन्तः" जायन्ते आसपत्यानीति जनयः जायाः ता इच्छन्तः, "पुत्रीयन्तः" पुत्रान् कामयमानाः, "सुदानवः" शोभनदानाः, "अग्रवः" उपगन्तारो वयं "नु" अद्य "सरस्वन्तं" तं देवं मध्यमस्थानं "हवामहे" आह्वयामहे ॥ १ ॥ [८]

१२ २ १२ ३१२ ३१२३ २ १ २
उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा।

१२ ३ १ २
सरस्वती स्तोम्या भूत् ॥*१*॥ [९]

ऋ० भरद्वाजः। छ० गायत्री। दे० सरस्वती। उतन इत्येकर्चं द्वितीयं सूक्तम्, सेयोच्यते। "उत" अपि च "नः" अस्माकं "प्रियासु" प्रियाणां मध्ये "प्रिया" प्रियतमा "सप्तस्वसा" गायत्र्यादीनि सप्त छन्दांसि स्वसारो यस्यास्साद्दशी नदीरूपया सुत्वा गङ्गाद्याः सप्त नद्यः स्वसारः "सुजुष्टा" बहु पुरातनैरृषिभिः सेविता, एवम्भूता "सरस्वती" देवी "स्तोम्या" स्तोतव्या "भूत्" भवतु ॥ १ ॥ [९]।

१ २ ३१ ३२३ १ २ ३१२
तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।

२ ३ १ २ ३ १ २
धियो यो नः प्रचोदयात् ॥*१*॥

ऋ० विश्वामित्रः। छ० गायत्री। दे० सविता। अथ तत्सवितुर्वरेण्यमिति तृतीयसूक्तरूपा, सेषा। "यः" सविता देवः "नः" अस्माकं "धियः" कर्माणि, धर्मादिविषया वा बुद्धीः

"प्रचोदयात्" प्रेरयत्, "तत्" तस्य "देवस्य" द्योतमानस्य "सवितुः" सर्वान्तर्य्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य "वरेण्यं" सत्स्वरूपतया श्रेयतया च भजनीयं "भर्गः" अविद्यातत्कार्य्ययोर्भञ्जनात् भर्गः स्वयं ज्योतिः परब्रह्मात्मकं तेजः "धीमहि" वयं ध्यायामः। यद् भर्गो धियः प्रचोदयति तद् ध्यायाम इति समन्वयः। यद्वा, यः सविता सूर्य्यः "धियः" कर्माणि "प्रचोदयात्" प्रेरयति, तस्य "सवितुः" सर्वस्य प्रसवितुः "देवस्य" द्योतमानस्य सूर्य्यस्य "तत्" सर्वैर्दर्शनीयतया प्रसिद्धं "वरेण्यं" सर्वैः सम्भजनीयं "भर्गः" पापानां तापकं तेजोमण्डलं "धीमहि" ध्येयतया मनसा धारयेम। यद्वा, भर्गशब्देनान्नमभिधीयते "यः" सविता देवः "धियः" प्रचोदयति, तस्य "देवस्य" प्रसादात् "तद् भर्गः" अन्नादिलक्षणं फलं "धीमहि" धारयामः तस्याधारभूता भवेमेत्यर्थः। भर्गशब्दस्यान्नपरत्वे धीशब्दस्य कर्मपरत्वे चाथर्वणम्—वेदांश्छन्दांसि—"सवितुर्वरेण्यं भर्गो देवस्य कवयोऽन्नमाहुः, कर्माणि धियस्तदु ते प्रब्रवीमीति प्रचोदयात् सविता याभिरेतीति। (गो० ब्रा० १, ३२) भर्गः—भ्रस्ज पाके (तु० उ०) असुन् "भ्रस्जोरोपधयोरमन्यतरस्याम् (६, ४, ४७)"—इति रोपधयोर्लोपो रमागमश्च, न्यङ्क्वादिपाठात् कुत्वम् (७, ३, ५३)। धीमहि—ध्यायतेर्लिङि "बहुलञ्छन्दसि (२, ४, ७६)"—इति सम्प्रसारणं, व्यत्ययेनात्मनेपदम्; यद्वा धीङ् आधारे (दि० आ०) लिङि "बहुलञ्छन्दसि (२, ४, ७३)"—इति विकरणस्य लुक्। प्रचोदयात्— चोदयतेर्लेटि आडागमः, यद्वृत्तयोगादनिघातः, आगमस्यानुदात्तत्वे णित्स्वरः॥ १॥

१ २ २' १ २
सोमानाᳪ स्वरणं० ॥२८॥

२ ३ १ २
अग्न आयूꣳषि पवसे० ॥*३*॥ [१०]

ऋ० मेधातिथिः, वैखानसः वा । छ० गायत्री । दे० ब्रह्मणस्पतिः, अग्निः वा । अथ सोमानां स्मरणम्—इति, अग्न आयूꣳषिपवसे—इति, चतुर्थ-पञ्चम सूक्तात्मकयोर्द्वयोरृचोः प्रतीके; ते चान्यत्राम्नाते (छ०,आ०—२, १, ५, ५; १भा० ७१पृ०), (उ० आ० ७, १, १२, १ ) ॥ २ ॥ ३ ॥ [१०]

१ २ २ १ २
ता नः शक्तं पार्थिवस्य० ॥*१*॥

ऋ० यजतः । छ० गायत्री । दे० मित्रावरुणौ । अथ तानःशक्तमिति तृचात्मकं षष्ठं चतुर्थं सूक्तम्; तत्र तान,—इति प्रथमाया ऋचः प्रतीकमिदं सा चान्यत्र ( उ० ४, २, ४, २ ) ६१५ पृ० आम्नाता ॥ १ ॥

३ २ ३ १ २ ३ १ २ ३ २ २र
ऋतमृतेन सपन्तेषिरं दक्षमाशाते ।

३ १ २ ३ १ २
अद्रुहा देवौ वर्द्धेते ॥*२*॥

अथ द्वितीया । "ऋतेन" उदकेन निमित्तभूतेन "ऋतं" यज्ञं "सपन्ता" स्पृशन्तौ "इषिरम्" एषणवन्तं "दक्ष" प्रवृद्धं यजमानं हविषा "आशाते" व्याप्नुतः "अद्रुहा" अद्रोग्धारौ "देवौ" द्योतमानौ मित्रावरुणौ "वर्द्धेते" प्रवृद्धौ भवत ॥ २ ॥

३ १ २ १क २र २ १उ १ १ २
वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः ।

३ २ ३ १ २
बृहन्तं गर्त्तमाशाते ॥*३*॥ [११]

अथ तृतीया । "वृष्टिद्यावा" वृष्ट्यर्था द्यौः स्तुतिर्ययोस्तौ

वृष्टिधावा अथवा वृष्टिवर्षिका द्यौरन्तरिक्षं याभ्यां तौ तादृशौ, "रीत्यापा" रीगतिरेषणयोः ( क्रया० प० ) रीतिः · प्राप्तिः सैव आप्तिरभिमतप्राप्तिर्ययोस्तौ तादृशौ, "इषः" अन्नस्य "पती" स्वामिनौ वृष्टिप्रदत्वात् स्वामित्वम्, "दानुमत्याः" दानवत्याः दातुमुचिताया इत्यर्थः एतदिडविशेषणम् एवम्महानुभावौ मित्रावरुणौ "बृहन्तं" महान्तं "गर्तं" रथम् "आशाते" व्याप्नुतः अधितिष्ठतो यागार्थम् ॥ ३ ॥ [११]

१ १ १ २ १ २ १ २ १ २ ३ २ १ २ ३ १ २
युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः ।
१ २ ३ १ ३ २
रोचन्ते रोचना दिवि ॥*१*॥

ऋ० मधुच्छन्दः । छ० गायत्री । दे० इन्द्रः । अथ युञ्जन्तीति त्र्यचात्मकं सप्तमं सूक्तम्, तत्र प्रथमा । इन्द्रो हि परमैश्वर्ययुक्तः परमैश्वर्य्ये चाग्निवाय्वादित्यनक्षत्ररूपेणावस्थानात् उपपद्यते "ब्रध्नम्" आदित्यरूपेणावस्थितम्, "अरुषम्" हिंसारहिताग्निरूपेणावस्थितं, "चरन्तं" वायुरूपेण सर्वतः प्रसरन्तमिन्द्रं "परि तस्थुषः" परितोऽवस्थिता लोकत्रयवर्त्तिनः प्राणिनो "युञ्जन्ति" स्वकीये कर्मणि देवतात्वेन सम्बन्धं कुर्वन्ति । तस्यैवेन्द्रस्य मूर्त्तिविशेषाणि "रोचना" नक्षत्राणि "दिवि" द्युलोके "रोचन्ते" प्रकाशन्ते अस्य मन्त्रस्योक्तार्थपरत्वं ब्राह्मणान्तरे व्याख्यातम्—"युञ्जन्ति ब्रध्नमित्याह—असौ वा आदित्यो ब्रध्नः आदित्यमेवास्मै युनक्ति । अरुषमित्याह—अग्निर्वा अरुषः अग्निमेवास्मै युनक्ति । चरन्तमित्याह—वायुर्वै चरन् वायुमेवास्मै युनक्ति । परितस्थुष इत्याह—इमे वै लोकाः परितस्थुषः इमानेव अस्मै लोकान् युनक्ति । रोचन्ते

रोचना दिवीत्याह—नक्षत्राणि वै रोचना दिवि, नक्षत्राण्ये-वास्मै रोचयन्तीति ॥ १ ॥

२ १ २ २ २ २ २३ १ २ २ ११
युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।

१ २ ३ १ ३ १ २
शोणा धृष्णू नृवाहसा ॥*२*॥

अथ द्वितीया । "अस्य" ब्रध्नादिशब्दप्रतिपाद्यस्यादित्यादि-मूर्त्तिभिस्तत्र तत्रावस्थितस्येन्द्रस्य "रथे" "हरी" एतन्नामानी द्वावश्वौ सारथयो "युञ्जन्ति" इन्द्रस्याश्विनोरश्वयो-र्हरिनामत्वं "हरी इन्द्रस्य" रोहितोऽग्नेः" ( निघ० १, १५, १-२ )—इति पठितत्वात् । कीदृशौ हरी ? "काम्या" कामयितव्यौ "विपक्षसा" विविधे पक्षसी रथस्य पार्श्वौ ययोस्तौ विपक्षसौ रथस्य द्वयोः पार्श्वयोर्योजिताविव्यर्थः, "शोणा" रक्तवर्णौ, "धृष्णू" प्रगल्भौ, "नृवाहसा" नृणां पुरुषाणा-मिन्द्र तत्सारथिप्रमुखाणां वोढारौ ॥ २ ॥

३ १ २ १ २ २ २ २ १ २ २ १ २ ३ १ २
केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।

२ ३ १ २ १
समुषद्भिरजायथाः ॥*३*॥ [१२]

अथ तृतीया । हे "मर्याः !" मनुष्याः ! इदमाश्चर्यं पश्यतेत्यध्याहारः । किमाश्चर्यम् ? इति तत्रोच्यते—आदित्यरूपो-ऽयमिन्द्रः "उषद्भिः" दाहकैः रश्मिभिः प्रतिदिनमुषःकालेवा सम्भूय "अजायथाः" उदपद्यत । अथवा सूर्यस्यैवास्तमये मरणमुपचर्य व्यत्ययेन बहुवचनं कृत्वा सम्बोधनं क्रियते—हे मर्य ! प्रतिदिनं त्वमजायथा इति योज्यम् । किङ्कुर्वन् ? "अकेतवे" रात्रौ निद्राभिभूतत्वेन प्रज्ञानरहिताय प्राणिने "केतुं

कृण्वन्” प्रातः प्रज्ञानं कुर्वन् “अपेशसे” रात्रावन्धकारावृतत्वे-नाभिव्यक्तत्वात् रूपरहिताय पदार्थाय प्रातरन्धकारनिवारणेन “पेशः” रूपनामैतत् ( निघ० ३, ७, १० ) रूपमभिव्यज्यमानं कुर्वन् अकेतवे, अपेशसे—इति चतुर्थ्यौ षष्ठ्यर्थे द्रष्टव्यौ ॥ ३ ॥ [१२]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठोदशाध्यायस्य चतुर्थः खण्डः ॥४॥

---

१ २ ३१ २र १ २ ३ ३
अयं सोम इन्द्र तुभ्यं सुन्वे
३ १ २ ३ १ २
तुभ्यं पवते त्वमस्य पाहि ।
१ ३ १ २ ३ १ २र३ १र
त्वं ह यं चकृषे त्वं ववृष
३ १ २ ३, १ २ ३ १ २
इन्दुं मदाय युज्याय सोमम् ॥*१*॥

ऋ० उशना। छ० त्रिष्टुप्। दे० सोमः। अथ पञ्चमे खण्डे—अयं सोमइति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। हे “इन्द्र !” अयं सोमः इन्द्राय “तुभ्यं” “सुन्वे” सूयते सुनोतेः कर्मणि लटि “लोपस्त आत्मनेपदेषु (७, १, ४१)”—इति त-लोपः “तुभ्य” त्वदर्थमेव “पवते” पूयते। त्वञ्च “अस्य” अमुं “पाहि” पिब “त्वं ह” “यम्” इन्दुं” “सोमं” “चकृषे” करोषि “त्वं” “यं” च “ववृषे” वृतवानसि। किमर्थम् ? “मदाय” मदार्थं “युज्याय” सहायाय सोम इन्द्राय बलकरत्वात् सहाय इति प्रसिद्धम्। यमेवं करोषि त्वं तं पाहीति समन्वयः ॥ १ ॥

१ २ २३ १ २ ३१ २
स ईं रथो न भूरिषाडयोजि

२२ २ १ २ २ २३ १ २
महः पुरूणि सातये वसूनि ।

२ ३ २ ३ १२ २र २ १
आदीं विश्वा नहुष्याणि जाता

१ २ ३१ २ १ २
स्वर्षाता वन ऊर्ध्वा नवन्त ॥२॥

अथ द्वितीया। "स ईम्" सोऽयं "भूरिषाट्" भूरि भारस्य सोढा "रथो न" रथ इव "अयोजि" युज्यते, कीदृशः सः? "महः" महान्। किमर्थमयोजि? "पुरूणि" बहूनि "वसूनि" धनानि "सातये" अस्मभ्यं दातुम् "आदीं" योगानन्तरं "विश्वा" विश्वानि कर्माणि "नहुष्याणि" नहुषो मनुष्याः तेषां सम्बन्धीनि "जाता" जातानि अस्मद्विरोधीनि "ऊर्ध्वा" उन्मुखानि "वनं" वननीये "स्वर्षाता" स्वर्षाता—सङ्ग्रामनामैतत् स्वर्गलाभयुक्ते सङ्ग्रामे "नवन्त" गच्छन्तु नवतिर्गतिकर्मा (२, १४, २८)। यद्वा, सोमं संग्रामे युद्धार्थिनः गच्छन्ति ॥२॥

२ ३उ ३ १ २र २ १ २
शुष्मी शर्धो न मारुतं पवस्वान-

२ ३उ २ २
भिशस्ता दिव्या यथा विट्।

२ २ २ ३ १ २ ३ १ २
आपो न मक्षू सुमतिर्भवा नः

२ १ २ १ ३उ २ २
सहस्राप्साः पृतनाषाड् यज्ञः ॥३॥ [१३]

अथ तृतीया। हे सोम! "शुष्मी" बलवांस्त्वं "शर्धो न

मारुतं" मरुतां बलमिव "पवस्व"। तत्र दृष्टान्तमेव स्पष्टयति—"यथा" "दिव्याः" "विट्" प्रजाः "अनभिशस्ताः" अभिशस्ता निन्दिताः अनिन्दिता पवन्ते "मरुतो वै देवानां विशः"—इति हि ब्राह्मणम् किञ्च "आपो न" उदकानीव "मक्षु" क्षिप्रं पवमानस्त्वं "सुमतिः भव" "नः" अस्माकम्। किञ्च, "सहस्राप्साः" अप्स इति रूपनाम (निघ० ३, ७, ६) बहुरूपस्त्वं "पृतनाषाट् न" पृतनानामभिभवितेन्द्र इव "यज्ञः" यष्टव्यो भवसीति॥ ३॥ [१३]

१ २ २ २ २ २ २ २ २ २ २
त्वमग्ने यज्ञानाꣳ होता विश्वेषाꣳ हितः।

२ २ २ १ २ २ २ २
देवेभिर्मानुषे जने॥ १॥

ऋ० भरद्वाजः। छ० गायत्री। दे० अग्निः। अथ त्वमग्नइति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। हे "अग्ने!" "त्वं" "विश्वेषां" सर्वेषां सप्तसंख्याकरूपेण भिन्नानां "यज्ञानां" "होता" होमनिष्पादकोऽसि। यद्वा, यज्ञानां सम्बन्धी देवानामाह्वाता भवसि। कुतः? इत्यत आह—यस्मात् त्वं "मानुषे" मनोः सम्बन्धिनि मनुष्ये "जने" यजमाने "देवेभिः" देवैः "हितः" होतृत्वेन निहितोऽसि तस्मादित्यर्थः॥ १॥

१ २ २ १ २ २१ २ १ २ २ ५
स नो मन्द्राभिरध्वरे जिह्वाभिर्यजा महः।

२ २१ २ २ १ २
आ देवान्वक्षि यक्षि च॥ २॥

अथ द्वितीया। हे अग्ने! "सः" त्वं "नः" अस्माकं "अध्वरे" यज्ञे "मन्द्राभिः" "मदकरीभिः" स्तुत्याभिर्वा

"जिह्वाभिः" ज्वालाभिः "मद्रः" मदतः देवान् यज हविर्भिस्तर्पय च। कथं तत्? इति चेत्, उच्यते—"देवान्" यष्टव्यानिन्द्रादीन् "आ वक्षि" आवह ततो "यक्षि च" यज च हवींषि तेभ्यो देहीत्यर्थः ॥ २ ॥

१ २ १ २३ १ २ २ १ २ ३१ २
वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसा ।

१ २ ३ १ २
अग्ने यज्ञेषु सुक्रतो ॥*३*॥ [१४]

अथ तृतीया। हे "वेधः" विधातः। "सुक्रतो" शोभनकर्मन्। "देव" दानादिगुणयुक्त अग्ने! त्वं "यज्ञेषु" दर्शपौर्णमासादियागेषु "अध्वनः" महामार्गान् "पथश्च" क्षुद्रमार्गांश्च "अञ्जसा" जवेन "वेत्थ" जानासि "हि" यस्मादेवं तस्मात् यज्ञमार्गात् भ्रष्टं यजमानं पुनस्तं मार्गं प्रापयेत्यर्थः ॥३॥ [१४]

१ २ ३ १ २र १ २ १ २ १ २
होता देवो अमर्त्यः पुरस्तादेति मायया ।

१ २ १ २ १ २
विदथानि प्रचोदयन् ॥*१*॥

ऋ० देवश्रवाः देववातो वा। छ० गायत्री। दे० अग्निः। अथ होतादेवइति त्र्यृचात्मकं तृतीयं सूक्तम् तत्र प्रथमा। "होता" होमनिष्पादकः "अमर्त्यः" मरणरहितः "देवः" द्योतमानः "विदथानि" वेदितव्यानि कर्माणि "प्रचोदयन्" प्रकर्षेण प्रेरयन् सोऽग्निः "मायया" कर्मविषयाभिज्ञानेन युक्तः सन् "पुरस्तात्" कर्मप्रारम्भकाले एव "एति" यज्ञमागच्छति ॥ १ ॥

१ १ १ २र १ २ ३ १ २
वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते ।

१ २ ३ १ २ १ २
विप्रो यज्ञस्य साधनः ॥*२*॥

अथ द्वितीया। "वाजी" बलवान् अग्निः "वाजेषु" युद्धेषु "धीयते" देवैः सवृजनार्थं निधीयते। किञ्च "अध्वरेषु" अग्निष्टोमादिषु "प्रणीयते" अध्वर्य्वादिभिः प्रकर्षेणाहवनीयादिस्थानेषु प्रक्षिप्यते अतएव "विप्रः" मेधावी सोऽग्निः "यज्ञस्य" अग्निष्टोमादेः "साधनः" साधको भवति ॥ २ ॥

२ १ १ २ १ २ १ २ २ २ ३-१ २
धिया चक्रे वरेण्यो भूतानां गर्भमा दधे ।

१ २ १ २१ १ २
दक्षस्य पितरं तना ॥*३*॥ [१५]

अथ तृतीया। योऽग्निः "धिया" आधानपवमानेष्टिरूपेण कर्मणा "चक्रे" आहवनीयरूपतया कृतोऽभूत् अतएव "वरेण्यः" सर्वैर्यजमानैः कर्माङ्गत्वेन वरणीयः यश्चाग्निः "भूतानां" स्थावरजङ्गमात्मकानां भूतजातानामन्तः "गर्भं" आत्मानमिव गर्भरूपतया "आदधे" सर्वत्र दधार "पितरं" सर्वस्य जगतः पालकं तमिममग्निं "दक्षस्य" दक्षप्रजापतेः "तना" तनया वेदिरूपा भूमिर्दर्शपौर्णमासाग्निष्टोमादिकर्मसिध्यर्थं धारयति। भूमेर्दक्षदुहितृत्वे मन्त्रवर्णः—"अदितिर्ह्यजनिष्ट दक्षस्य दुहिता तव" इति ॥ ३ ॥ [१५]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठोऽध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

२ २ १ २ ३ २ ३ १ २ ३ १ २
आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियम् ।

३ १ २ ३ २
रसा दधीत वृषभम् ॥*१*॥

ऋ० प्रगाथो हर्य्यतः। छ० गायत्री। दे० अग्निः।. अथ षष्ठे खण्डे—आसुतेसिञ्चत इति द्व्यालकं प्रथमं सूक्तम्, तत्र प्रथमा। "सुते" दुग्धे गो-पयसि "श्रियं" श्रयणमाज्यं पयः "आसिञ्चत"। हे अध्वर्य्यव। आसिञ्चत कीदृशमाजम्? "रोदस्योः" कर्मणि षष्ठी द्यावापृथिव्यौ "अभिश्रियम्" अभिश्रयन्तम् अग्निसंयोगात् तावत् पर्य्यन्तं प्रवृद्धमित्यर्थः अथवा "तत्काविश्विनौ द्यावापृथिव्यावित्येके (निरु० दै० ६, १)" इति यास्कनोक्तत्वात् अश्विनोरभिश्रियमित्यर्थः। सेचनानन्तरं "रसा" रसे आज्ये पयसि "वृषभं" वर्षकमग्निं "दधीत" धारयेत् अजाया आग्नेयीत्वात् चीरस्याप्यग्निसंयोजनमुचितम् वा "आग्नेयी एषा यदजा"—इति हि ब्राह्मणम् ॥ १ ॥

१ २ २ ३ १ २ ३ १ २ ३ २ ३ १ २
ते जानत स्वमोक्या३ं सं वत्सासो न मातृभिः।
१ २ ३ २ ३ १ २
मिथो नसन्त जामिभिः ॥*२*॥

अथ द्वितीया। "ते" ता गावः "जानत" ज्ञातवत्यः अथवा सामान्याकारेण ते इति पुम्निर्देशः। किम्? "स्वम्" स्वकीयम् "ओक्यम्" निवासं महावीरं तत्र दोग्धुमगमन्नित्यर्थः। तदेवाह—"वत्सासो न" यथा वत्साः "मातृभिः" जननीभिः सह सङ्गच्छन्ते जामिभिर्बन्धुभिः सहिता गावः "मिथः" प्रत्येकं "नसन्त" सङ्गच्छन्ते महावीरम् ॥ २ ॥

२ २ १ २ ३ १ २ २ ३ २ १ २ ३ १
उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि।
१ २ ३ २उ ३क २र
इन्द्रे अग्ना नमः स्वः ॥*३*॥ [१६]

अथ तृतीया। महावीरस्य "सक्तेषु" "वपतः" ज्वालया भक्षयतोऽग्नेः "नमः" अत्र "धरुणम्" "इन्द्रे" "अग्ना"—इति वक्ष्यमाणत्वात् इन्द्राग्न्योर्धारकमाज्यं "दिवि" अन्तरिक्षे "उप क्षयते" उपकुर्वते ऋत्विजः यदाग्निर्महावीरं दहति तदा तस्योपर्युभयविधं क्षीरम् आसेचयन्तीत्यर्थः। एवं महावीरे आसिच "इन्द्रे" "अग्ना" अग्नौ च "स्वः" सर्वं गव्य माज्यं "नमः" अन्नम्। अथवा "स्वः" अन्तरिक्षे योजयन्तीति शेषः॥ ३॥ [१६]

३र २ ३ १२ ३ १ २ ३ १ २ ३ २ ३२ ३ १ १
तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः।
३ १ २ ३ २ १ ३र २
सद्यो जज्ञानो नि रिणाति
२ ३ २ ३ १ २उ ३ ३ १ २
शत्रूननु यं विश्वे मदन्त्यूमाः॥*१*॥

ऋ० बृहद्दिवः। छ० त्रिष्टुप्। दे० अग्निः। अथ तदिदास इति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। "तत्" जगत्कारणत्वेन सर्ववेदान्तप्रसिद्धम् "इत्" शब्दोऽवधारणे, "भुवनेषु" भू सत्तायां (भ्वा० प०) सत्सु पृथिव्यादिषु लोकेषु मध्ये तत् जगत्कारणं ब्रह्मैव "ज्येष्ठं" प्रशस्ततमम् "आस" बभुव, तस्य परमार्थत्वात् तद्व्यतिरिक्तानां व्यावहारिकत्वाच्च यद्वा, ज्येष्ठं वृद्धतमं सजगत्कारणत्वेन सर्वेषामादिभूतं बभूव। अस्तेर्लिटि "छन्दस्युभयथा (३, ४, ११७)"—इति सार्वधातुकत्वाद् "अस्तेर्भूः (२, ४, ५२)"—इति भूभावाभावः। यद्वा, इदं तदेव ब्रह्म स्वप्रकाशतया "आस" दिदीपे। अस गति दीप्त्यादानेषु (भ्वा० उ०), अस्माल्लिटि रूपम् "यतः" उपादानभूतात् यस्माद् ब्रह्मणः "उग्रः" उद्गूर्णः त्वेष-

त्वमृण: प्रदीप्तबल: सूर्य्यात्मक इन्द्र: "जज्ञे" जातो बभूव श्रूयते हि—"चक्षो: सूर्य्यो अजायत"—इति, "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्"—इति च। "जनिकर्त्तुः प्रकृतिः (१, ४, ३०)"—इति प्रकृतेरपादानसञ्ज्ञायां यत इति पञ्चमी। जज्ञे इति "गमहनेत्यादिनोपधालोप: (६, ४, ९८), "द्विर्वचनेऽचि (१, १, ५९)"—इति तस्य स्थानिवद्भावात् द्विर्वचनादि, "यद्वृत्तान्नित्यम् (८, १, ६६)"—इति निघातप्रतिषेध:। स च "जज्ञान:" जायमान: एव "सद्य:" शीघ्रं "शत्रून्" घातयितृन् मन्देहादीन् राक्षसान् "नि रिणाति" निहिनस्ति यद्वा, उपासकानां पापरूपान् शत्रून् निघ्नन्ति। तथा च ब्राह्मणम्—"सद्यो ह्येष जात: पाप्मानमपघ्नत"—इति। जज्ञान इति जनेर्लिट: कानचि रूपमेतत्। रिणाति रीगति-रेषणयो: क्र्यादिक: (प०), "प्वादीनां ह्रस्व: (७, ३, ८०)"—इति ह्रस्वत्वम् "विश्वे" सर्वे जना: अवन्ति रक्षन्तीति "ऊमा:" प्राणिन: अवतेरौणादिको मन् प्रत्यय: "ज्वरत्वरेत्यादिना (६, ४, २०) वकारोपधयो: स्थाने ऊट् सर्वे प्राणिन: "यं" सूर्य्यात्मकमुद्यन्तमिन्द्रम् "अनु" लक्ष्य "मदयं सुदगात् मदर्यसुदगात्"—इति "मदन्ति" हृष्यन्ति मदी हर्षे (दि० प०) व्यत्ययेन शप् (३, १, ८५); तथा च ब्राह्मणम्—"भूतानि वै विश्व ऊमास्त एनमनुमदन्ति उदगादुदगादिति"—इति। तैत्तिरीयकञ्च—"तस्मात्सर्व एव मन्यते मां प्रत्युदगादिति"—इति। यद्वा, यं स्तुत्यादिभिर्माद्यन्तमनु पश्चात् सर्वे प्राणिन: अभीष्टप्राप्त्या हृष्यन्ति "अनुर्लक्षणे (१, ४, ८४)"—इति अनो: कर्मप्रवचनीयत्वात् "कर्मप्रवचनीय युक्ते द्वितीया (२, ३, ८)" स इन्द्रो जज्ञे इत्यन्वय: ॥ १ ॥

३ १ २र३ १ २ ३
वावृधानः शवसा भूर्य्योजाः
१ २ ३ १ २ ३ १ २
शत्रुर्दासाय भियसं दधाति ।
१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु
॥*२*॥

अथ द्वितीया। "शवसा" बलेन "वावृधानः" वर्द्धमानः, अतएव "भूर्य्योजाः" बहुबलः "शत्रुः" शातयिता इन्द्रः "दासाय" उपक्षयकारिणे शत्रवे "भियसं" भीतिं "दधाति" विदधाति करोति। "अव्यनत् च व्यनत् च" विविधमनिति श्वसितीति व्यनत्, सप्राणकं जङ्गमं, तद्विलक्षणमव्यनत् स्थावरम्। तदुभयमपि "सस्नि" संस्नातम् इन्द्रेण सम्यक् शोधितं भवति। स्नातेः "आदृगमहनः (३, २, १७१)"—इति व्यत्ययेन कर्मणि किन्प्रत्ययः। यद्वा, अन्तर्णीत-ण्यर्थात् कर्त्तर्य्येव किन्। वृष्ट्यादिना सम्यक् स्नापयिता शोधयिता भवति; "न लोकाव्यय (२, ३ ६८)"—इति कर्मणि षष्ठ्याः प्रतिषेधः। शिष्टः पादः प्रत्यक्षकृतः—हे इन्द्र! "ते" तव "मदेषु" हर्षेषु हविषा स्तुत्या च जातेषु सत्सु "प्रभृता" प्रभृतानि प्रकर्षेण हृतानि पोषितानि वा सर्वाणि भूतजातानि "सम्नवन्त" सङ्गच्छन्ते स्तोतुं हवींषि च दातुं समुद्युक्ता भवन्तीत्यर्थः। नवतिर्गतिकर्मा निघ० २, १४, २८)। प्रभृता—प्रपूर्वात् विभर्त्तेः कर्मणि निष्ठा, "शेश्छन्दसि बहुलम् (६, १, ७०)"—इति शे-लोपः, "गतिरनन्तरः (६, २, ४८)"—इति गतेः प्रकृतिस्वरत्वम् ॥ २ ॥

१उ २ १ १ २ १ २ २उ २ २उ २ १ २
त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः ।

२ १ २र २ १ २ २
स्वादोः स्वादीयः स्वादुना सृजा

१ २ १उ २ १ २ २ १ २
समदः सु मधु मधुनाभि योधीः ॥ ३ ॥ [१७]

अथ तृतीया । हे इन्द्र ! "त्वे" त्वयि "सुपां सुलुक् (७, १, ३९)"—इति सप्तम्येकवचनस्य शे आदेशः । "विश्वे" सर्वे यजमानाः "क्रतुम्" अनुष्ठेयं कर्म "वृञ्जन्ति" समापयन्ति । "अपि"—शब्दो ब्राह्मणोक्तः सर्वभूतानां सर्वमनसां समुच्चयार्थः । सर्वाणि पृथिव्यादीनि भूतानि सर्वेषां प्राणिनां मनांसि सर्वं यज्ञक्रतवश्च व्याप्ते त्वय्येव यजमानैः परिसमाप्यन्त इत्यर्थः । तथा च ब्राह्मणम्—"त्वयीमानि सर्वाणि भूतानि मनांसि सर्वे क्रतवोऽपि वृञ्जन्तीत्येतदाह"—इति "यद्" यस्मात् "एते" "ऊमाः" तर्पकाः अवतेस्तर्पणार्थादौणादिको मन्प्रत्ययः, "ज्वरत्वरेत्यादिना (६, ४, २०) वकारोपधयोरूठ् । ईदृशा यजमानाः पूर्वमेकाकिनः सन्तः पश्चात् "द्विः" द्विवारं स्त्रीरूपेण पुंरूपेण च जाताः सन्तः पुनरपत्येन सार्द्धं "त्रिः" त्रिवारं जन्मभाजो भवन्ति । एक एवात्मा स्त्रीपुंरूपेण जायते "अर्द्धो वा एष यत् पत्नीति" श्रुतेः । पुत्रोऽप्यात्मैव—"आत्मा वै पुत्रनामासि"—इति ( श० ब्रा० १४, ८, ४, २६ ) श्रुतेः । यत एवमेतेऽभिवृद्धा भवन्ति, ततो वा गम्यते त्वय्येवानुष्ठितं सर्वं कर्म परिसमापयन्तीति ; तथा च ब्राह्मणम्—"द्वौ सन्तौ मिथुनौ प्रजायेते प्रजापत्या"—इति हे इन्द्र ! त्वञ्च "स्वादोः" प्रियाद् गृहधनादेरपि "स्वादीयः" स्वादुतरं प्रियतरमपत्यं "स्वादुना" स्वादुभूतेन मिथुनेन माता-

पिवात्मकेन "संसृज" संयोजय । यद्वा, "स्वादुना" मिथुनभावेनोत्पन्न तदपत्यमपि संयोजय । एतदेवाह—"अद:" तत् अपत्यं "मधु" मधुरं "मधुना" मदहेतुना मिथुनान्तरेण पौत्रेण वा "सु" सुष्ठु "अभि योधीः" अभियोधय अभितः क्रीड़य । धातूनामनेकार्थत्वात् युधतिरत्र क्रीड़ार्थे वर्त्तते । "मिथुनं वै स्वादु प्रजाः स्वादु"—इत्यादि ब्राह्मणमत्रानुसन्धेयम् ॥२॥[१७]

१ २   २ १   २र   ३ १
त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म-

३ १   २र   ३ १ २   ३ १ २   ३ १
स्तृम्पत्सोममपिबद्विष्णुना सुतं यथावशम् ।

१ २   ३ २ ३   १ २   १ २   ३ १ २ ३ १
स ईं ममाद महि कर्म कर्त्तवे महामुरुꣳ

२र   ३ १ २ ३ १   ३ १   २र   ३ १   २र
सैनꣳ सश्चद्देवो देवꣳ सत्य इन्दुः सत्यमिन्द्रम्

॥*१*॥

ऋ० गृत्समदः । छ० अष्टिः । दे० इन्द्रः । अथ त्रिकद्रुकेष्विति दृचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा । "महिषः" महान् पूज्यः "तुविशुष्मः" बहुबलः "तृम्पत्" तृप प्रीणने तुदादिः ( प० ) तृप्यन् इन्द्रः "त्रिकद्रुकेषु" ज्योतिर्गौरायुरित्येतन्नामकेषु आभिप्लविकेष्वहःसु "सुतम्" अभिषुतं "यवाशिरं" यवमयसक्तुभिर्मिश्रितम् । आङ्पूर्वस्य श्रीणातेः क्विपि "अपस्पृधेथाम् (६, १, ३६ )"—इत्यादिना "शिर इत्यादेशः" । तं "सोमं" विष्णुना" सह "अपिबत्" "यथावशम्" पूर्वं यथा तं सोम मकामयत तथा अपिबत् वश कान्तौ ( अदा० प० ) "बहुलञ्छन्दसि (२, ४, ७३)"—इति शपो लुगभावः । पीतः

"सः" सोमः "महां" महान्तम् "उरुं" तेजसा विस्तीर्णम् "इमं" एनम् इन्द्रं "ममाद" अमादयत्। किमर्थम्? "महि" महत् वृत्रहननादिलक्षणं कर्म कर्त्तवे कर्त्तुं "सत्य" "इन्दुः" स्रवन् "देवः" द्योतमानः "सः" सोमः "सत्यं" यथार्थभूतं "देवं" सोमं कामयमानम् "एनम्" "इन्द्रम्" "सश्चत्" सश्चतिर्व्याप्तिकर्मा व्याप्नोतु॥

"वम्यत्" "वपत्"—इति पाठौ, "सत्य इन्दुस्सत्यमिन्द्रम्" —"सत्यमिन्द्रं सत्य इन्दुः"—इति अस्मिन् त्वचे मन्त्रे कलेवरावसाने व्यत्ययेन पाठौ॥ १॥

१ २ ३ १ २ ३ २२ ३ १ २ ३२
साकं जातः क्रतुना साकमोजसा ववक्षिथ
१ २ ३ १ २ ३ २२ ३ १ २ ३ १ २
साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः।
२ ३ १ २ २ ३ २ ३ १ २ २ ३ १ २
दाता राध स्तुवते काम्यं वसु प्रचेतन सैनꣳ
१ २ २ १ २ ३ १ २२ ३ १ २ २२
सश्चद्देवो देवꣳ सत्य इन्दुः सत्यमिन्द्रम्॥*२*॥

अथ द्वितीया। हे इन्द्र! त्वं "क्रतुना" कर्मणा प्रज्ञया वा "साकं" सह "जातः" "साकम्" "ओजसा" बलेन "ववक्षिथ" सिञ्चं योढुमिच्छसि। वहेः सन्नन्तस्य लिटि मन्त्वलादाम् न भवति। किञ्च हे "प्रचेतन" प्रकृष्टज्ञानेन्द्र! त्वं "वीर्यैः" वृत्रहननादिलक्षणैः पराक्रमैः "साकं" सह "वृद्धः" प्रवृद्धः "मृधः" हिंसकान् संग्रामान् वा "सासहिः"। "नलोकाव्ययेति (२, ३, ६९) षष्ठीप्रतिषेधः तेषामभिभविता "विचर्षणिः" पुण्यकृतोऽपुण्यकृतश्च विशेषेण द्रष्टा "स्तुवते"

स्तोत्रं कुर्वाणाय यजमानाय "राधः" साधकं "काम्यं" प्रार्थनीयं "वसु" धनं "दाता" सन् ववर्चियेति समन्वयः। सैनमिति परोक्षनिर्देशः सिद्धार्थेय॥

"प्रचेतन"—इति छन्दोगानां विशेषपाठः ॥ २ ॥

१ २   १ २   ३ १ २ ३   १ २ ३ १
अध त्विषीमाꣳ अभ्योजसा क्रिविं युधा-
२ ३ १   ३२   ३ १ २ ३   १ २
भवदा रोदसी अपृणदस्य मज्मना प्र वावृधे।
१ २ ३ २   ३ २ ३ १ २   ३ १ २   ३
अधत्तान्यं जठरे प्रेमरिच्यत प्र चेतय
१ २   ३ १   ३ २   ३ १   ३२   ३ १   ३२
सैनꣳ सश्चद्देवो देवꣳ सत्य इन्दुः सत्यमिन्द्रम्
॥*२*॥ [१८]

इति षष्ठः प्रपाठकः।

अथ तृतीया। "अध" अथ सोमपानानन्तरं "त्विषीमान्" इन्द्रः दीप्तिमान् "ओजसा" बलेन "क्रिविं" क्रिविनामासुरं "युधा" युद्धेन "अभ्यभवत्" अभिभूतवान्। किञ्च स इन्द्रः "रोदसी" द्यावापृथिव्यौ "आ अपृणत्" स्वतेजसा समन्तात् पूरयामास। तथा "अस्य" पीतस्य सोमस्य "मज्मना" बलेन "प्र वावृधे" प्रकर्षेण वर्द्धते यद्वा, "अस्य" कवेः असुरस्य "मज्मना" सारेण "रोदसी" अपूरयत्। स इन्द्रः सोमं द्विधा विभज्य "अन्यं" भागं स्वकीये "जठरे" "अधत्त"। "ईम्" एनम् अपरं भागं देवेभ्यः "प्रारिच्यत" प्रारेचयत् एतेनार्द्धमिन्द्राय अर्द्धमन्येभ्योऽपि देवेभ्य इत्युक्तं भवति। तथा च तैत्तिरीयकम्—"यत् सर्वपानर्द्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः"

## अथ सप्तमः प्रपाठकः ।

### अथ चतुर्दशोऽध्याय आरभ्यते ।

* सप्तमप्रपाठकस्य प्रथमार्द्धम् ।

१ २ १र २ १ २ ३ १ २ ३ २
अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे ।
३ २ ३ २ ३ १ २
सूनुꣳ सत्यस्य सत्पतिम् ॥ * १ * ॥

ऋ० प्रियमेधः । छ० गायत्री । दे० अग्निः । तत्र, प्रथमे खण्डे अभिप्रगोपतिमिति त्र्यचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा । हे स्तोतः ! 'गोपतिं' गवां स्वामिनम् 'इन्द्रम्' 'अभि प्र अर्च' प्रकर्षेण पूजय 'गिरा' स्तुत्या 'यथाविदे' स यथा स्वात्मानं स्तुतप्रकारं जानाति, यथा वा यागं प्रति गन्तव्यमिति जानाति तथार्चेति । कीदृशमिन्द्रम् ? 'सत्यस्य' यज्ञस्य वा 'सूनुं' पुत्रं तत्रानुरक्तत्वात् सूनुरित्युपचर्यते 'सत्पतिं' सतां पालकम् ॥ १ ॥

१ २र ३१ २३१ २ ३ १ २
आ हरयः ससृज्रिरेऽरुषीरधि बर्हिषि ।
२ ३ २ ३ १ २
यत्राभि सन्नवामहे ॥ * २ * ॥

अथ द्वितीया । 'हरयः' हरितवर्णाः अश्वाः 'अरुषीः' आरोचमानाः 'अधिबर्हिषि' अधीति सप्तम्यर्थानुवादी बर्हिष्यास्तृते 'आ ससृज्रिरे' आसृजन्तु, 'यत्र' यस्मिन् बर्हिषि स्थितमिन्द्रम् 'अभि सन्नवामहे' अभिसंस्तुमः ॥ २ ॥

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २
इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु ।

१ २ ३ २ ३ २
यत्सीमुपह्वरे विदत् ॥ * ३ * ॥ [१]

अथ तृतीया। 'इन्द्राय' 'गावः' 'आशिरम्' आश्रयणसाधनम् पय आदिकम् 'मधु' मदकरं 'दुदुह्रे' दुह्वते। कीदृशाय? 'वज्रिणे' वज्रयुक्तायेन्द्राय 'यद्' यदा 'उपह्वरे' समीपे वर्त्तमानं 'मधु' सोमरसं 'सीम्' सर्वतः 'विदत्' लभते तदा ॥ ३ ॥ [१]

२ ३ १ २ ३ ३ २ ३ १ २ ३ १ २
आ नो विश्वासु हव्यमिन्द्रꣳ समत्सु भूषत

३ ३ १ २ ३ ३ २
उप ब्रह्माणि सवनानि वृत्रहन्

३ १ २
परमज्या ऋचीषम ॥ * १ * ॥

ऋ० नृमेधः पुरुमेधो वा। छ० बृहती। दे० अखिलद्वयम्। अथ आनोविश्वास्विति प्रगाथात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। हे ऋत्विजः! 'विश्वासु' सर्वासु 'समत्सु' असुरयुद्धेषु 'हव्यं' सर्वैर्देवैरात्मरक्षार्थमाह्वातव्यमिन्द्रमुद्दिश्य 'नः' अस्माकं यज्ञे 'ब्रह्माणि' स्तोत्राणि हवीरूपाण्यन्नानि वा, तथा 'सवनानि' प्रातःसवनादीनि त्रीणि सवनानि च 'उप आ भूषत' उपसमीपे सम्यगलङ्कुरुत। 'हे वृत्रहन्! वृत्रस्यासुरस्य पापस्य वा हन्तः! 'परमज्याः' युद्धेषु शत्रुहननार्थं परमा अविनश्वरी ज्या मौर्वी यस्य स तथोक्तः। यद्वा, परमान् बलेन प्रकृष्टान् शत्रून् जिनाति हिनस्तीति परमज्याः हे. 'ऋचीषम'! स्तुतिभिरभिमुखीकरणीय! एवम्भूतेन्द्र! त्वम् अस्मदभिलषितानि प्रयच्छेति शेषः।

"इव्यमिन्द्रं समक्षुभूयत" "इव्यदिन्द्रःसमक्षुभूयत" इति पाठौ, "इवद्दनपरमज्याऋचीषम" "इवद्दापरमज्या ऋचीषमः" इति च पाठौ ॥ १ ॥

२ २ १ २ १ १ ३२ ३ १ २ ३ १ २ ३ २
त्वं दाता प्रथमो राधसामस्यसि सत्य ईशानकृत्।
१ २ ३ १ ३२
तुविद्युम्नस्य युज्या वृणीमहे
३ २ ३ १ २ ३ २
पुत्रस्य शवसो महः ॥ * २ * ॥ [२]

अथ द्वितीया। हे इन्द्र! 'प्रथमः' सर्वेषां मुख्यस्त्वं 'राधसां' धनानां 'दाता' 'असि' यद्वा, धनदातॄणां मध्ये त्वं प्रथम आदिमो भवसि। तथा 'ईशानकृत्' तव स्तोतॄन् ईशानान् ऐश्वर्य्ययुक्तान् कुर्वन् त्वं 'सत्यः' सत्यकर्मासि यथार्थकर्मा भवसीत्यर्थः। यस्मादेवं तस्मात् वयं 'तुविद्युम्नस्य' बहुधनवतो बहन्नस्य वा 'शवसः' बलस्य 'पुत्रस्य' प्रभुबधार्थं बलकरत्वेनोत्पन्नत्वात् बलपुत्रस्य अतएव 'महः' महतः तव 'युज्या' योग्यानि धनानि 'आ वृणीमहे' सम्भजामहे ॥२॥ [२]

२ १ ३ १ २ ३ २उ ३क ३२ ३ २
प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यं महो
३ २ ३ १ ३२
गाहाद्दिव आ निरधुक्षत।
१ २ ३ १ ३२ ३ १ २
इन्द्रमभि जायमानꣳ समस्वरन् ॥ * १ * ॥

ऋ० वसदस्युः। छ० ककुब्बृहती। दे० सोमः। अथ प्रत्नम्पीयूषमिति त्र्यचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा।

'दिवः' द्युलोकात् तत्र स्थितैर्देवैः 'पीयूषं' पातव्यं 'प्रत्नं' पुराणं 'यत्' सोमरूपमन्नम् 'उक्थ्यम्' प्रशस्यमस्ति 'पूर्व्यं' पुरातनं तत् सोमरूपमन्नं 'मह्नः' महतः 'गाहात्' गाहनात् 'दिवः' द्युलोकात् 'निरधुक्षत' आभिमुख्येन निर्दुहन्ति। ततः दुग्धं सिक्तम् 'इन्द्रम्' 'अभि' लक्ष्य 'जायमानं' तं सोमं 'समस्वरन्' स्तोतारः संस्तुवन्ति।

"प्रत्नं" "दिवः" इति च पाठः ॥ १ ॥

२ ३ २ ३ १ २ ३ १ २
आदीं के चित्पश्यमानास आप्यं

२ १ २ ३ २ ३क २र
वसुरुचो दिव्या अभ्यनूषत ।

२ १ १र ३ १ २
दिवो न वारꣳ सविता व्यूर्णुते ॥ * २ * ॥

अथ द्वितीया। 'आत्' अनन्तरं 'पश्यमानासः' एनं पश्यन्तः 'दिव्याः' दिवि भवाः 'वसुरुचः' नाम केचित् 'आप्यं' बन्धुषु साधुम् 'ईम्' एनं सोमम् 'अभ्यनूषत' अभ्यस्तुवन्। कस्मादनन्तरम्? उच्यते, 'दिवः'। 'देवः' द्योतमानः 'सविता' सर्वस्य प्रेरकः सूर्यः 'वारम्' आवरकम् अन्धकारं 'न व्यूर्णुते' नापगमयति। तदा एनमस्तुवन् सूर्योदयात् प्रागेव हि सोमं स्तुवन्ति खलु।

"दिवोनवारं" "वारन्देवः" इति पाठौ ॥ २ ॥

१ २ २ ३ १ २ १ १ २
अध यदिमे पवमान रोदसी

१ २ ३ २ २ ११ ३ २ २ १ २
इमा च विश्वा भुवनाभि मज्मना ।

२ २उ १ १ २ ३ १ २र
यूथे न निष्ठा वृषभो वि राजसि ॥ * ३ * ॥ [३]

अथ तृतीया। हे 'पवमान'! सोम! 'अध' अनन्तरं 'यद्' यदा 'इमे' 'रोदसी' द्यावापृथिव्यौ 'इमा' इमानि 'विश्वा' विश्वानि "भुवना" भूतजातानि "च" "मज्मना" बलेन "यूथे न निष्ठा वृषभः" यथा कश्चित् "वृषभः" गवां "यूथे" वृन्दे "निष्ठाः" निष्ठितो वर्त्तते। तद्वत् यूथस्थानीयेषु भूतजातेषु निष्ठितो भवसि। स त्वं तथा कुर्वन् "वि राजसि" विशेषेण राजसि।

"भुवनाभिजग्मना" "भुवनेषु वितिष्ठसे" इति पाठौ॥३॥[३]

२ १ २ १उ २ १ २ २ १ २ ३ १ २ २र
इममू षु त्वमस्माकꣳ सनिं गायत्रं नव्याꣳसम्।
१ २ ३१२ १ २
अग्ने देवेषु प्र वोचः ॥ * १ * ॥

ऋ० शुनःशेपः। छ० गायत्री। दे० अग्निः। इममूष्विति त्र्यृचात्मकं चतुर्थं सूक्तम्। तत्र प्रथमा। हे अग्ने! "त्वम्" "अस्माकम्" अस्मत्सम्बन्धिनम् "इमम् उ सु" पुरोदेशेऽनुष्ठीयमानमपि 'सनिं' हविर्दानं 'नव्यांसं' नवतरं 'गायत्रं' स्तुतिरूपं वचोऽपि 'देवेषु' देवानामग्रे 'प्रवोचः' प्रकर्षेण ब्रूहि ॥ १ ॥

२ १ २ ३ १ २ ३ १ २ ३ २
विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ।

३ २ ३ १ २
सद्यो दाशुषे क्षरसि ॥ * २ * ॥

अथ द्वितीया। हे 'चित्रभानो'! विचित्ररश्मियुक्ताग्ने! 'विभक्ता' विशिष्टस्य धनस्य प्रापयिता "असि" भवसि। तत्र दृष्टान्तः उच्यते, आकार उपमार्थीयः। यथा 'सिन्धोः' नद्याः 'उपाके' समीपे 'ऊर्मा' ऊर्मिं तरङ्गोपलक्षितं कुल्यादिरूपं प्रवाहं विभजन्ति तद्वत् 'दाशुषे' हविर्दत्तवते यजमानाय 'सद्यः' तदानीमेव 'क्षरसि' कर्मफलभूतां वृष्टिं करोषि ॥ २ ॥

१ २ ३ १ २र ३ १ २

आ नो भज परमेष्वा वाजेषु मध्यमेषु।

२ ३ २ ३ १ २

शिक्षा वस्वो अन्तमस्य ॥ * ३ * ॥ [४]

अथ तृतीया। हे अग्ने! 'परमेषु' उत्कृष्टेषु द्युलोकवर्त्तिषु 'वाजेषु' अन्नेषु 'नः' अस्मान् 'आ भज' सर्वतः प्रापय। "मध्यमेषु" अन्तरिक्षलोकवर्त्तिषु वाजेषु आभज। 'अन्तमस्य' अन्तिकतमस्य भूलोकस्य सम्बन्धीनि 'वस्वः' वसूनि 'शिक्ष' देहि ॥ ३ ॥ [४]

३ १उ ३ १ २र ३ २ ३ १ २ ३ १ २

अहमिद्धि पितुष्परि मेधामृतस्य जग्रह।

३ १ २र

अहं सूर्य इवाजनि ॥ * १ * ॥

ऋ० वत्सः। छ० गायत्री। दे० इन्द्रः। अहमिद्धीति द्वचात्मकं पञ्चमं सूक्तम्। तत्र प्रथमा। 'पितुः' पालकस्य 'ऋतस्य' 'सत्यस्य' अवितथस्य इन्द्रस्य 'मेधाम्' अनुग्रहात्मिकां बुद्धिम् 'अहमित्' अहमेव 'परिजग्रह' परिगृहीतवानस्मि नान्यः। 'हि' यस्मादेवं तस्मात् 'अहं सूर्य इवाजनि' सूर्या

यथा प्रकाशमानः सन् प्रादुर्भवति तथा श्रजनिषम् प्रादुरभुवम्।

"जयद्य" "जग्राह" इति पाठौ ॥ १ ॥

१ २ १२ १ १ २ ३ १ २ १ २
अहं प्रत्नेन जन्मना गिरः शुम्भामि कण्ववत्।

२उ ३ १ २ ३ १ २
येनेन्द्रः शुष्ममिद्दधे ॥ * २ * ॥

अथ द्वितीया। 'कण्ववत्' कण्व इव अहमपि 'प्रत्नेन' चिरन्तनेन 'जन्मना' 'गिरः' इन्द्रविषयाणि स्तोत्राणि 'शुम्भामि' अलङ्करोमि। येन स्तोत्रसमूहेन 'इन्द्रः' 'शुष्मं' शत्रूणां शोषकं 'दधे इत्' धत्त एव धारयत्येव यत् स्तोत्रमिन्द्रे ईदृशं बलम् अवश्यं जनयति तत् स्तोत्रमलङ्करोमीत्यर्थः।

"जन्मना" "मन्मना" इति पाठौ ॥ २ ॥

१ २र २ १ २ ३ १ २र ३ १ २ ३ २
ये त्वामिन्द्र न तुष्टुवुर्ऋषयो ये च तुष्टुवुः।

१ २र १ १ २
ममेद्वर्द्धस्व सुष्टुतः ॥ * ३ * ॥ [५]

अथ तृतीया। हे 'इन्द्र'! 'ये' जनाः 'त्वां' 'न तुष्टुवुः' न स्तुवन्ति 'ये च ऋषयः' मन्त्राणां द्रष्टारः जनाः 'तुष्टुवुः' त्वां स्तुवन्ति उभयेषां मध्ये 'ममेत्' ममैव स्तोत्रेण 'सुष्टुतः' शोभनं स्तुतः सन् 'वर्द्धस्व' वृद्धोभव ॥ ३ ॥ [ ५ ]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्दशाध्यायस्य

प्रथमः खण्डः ॥ १ ॥

---

२ १ १ २ ३ २ ३ २ ३ १ २
अग्ने विश्वेभिरग्निभिर्जोषि ब्रह्म सहस्कृत ।
१ २ ३ २३ ३ २ ३ १ २ ३ १२
ये देवत्रा य आयुषु तेभिर्नो महया गिरः ॥*१*॥

ऋ० अग्निः। छ० अनुष्टुप्। दे० विश्वे देवाः। अथ द्वितीयखण्डे—अग्नेविश्वेभिरिति त्र्यचात्मकं प्रथमं सूक्तम्। तत्र प्रथमा। हे 'सहस्कृत'! सहसा बलेन कृत! उत्पादित! हे अग्ने! "विश्वेभिः" विश्वैः सर्वैर्यष्टव्यतया स्थितैरग्निभिः सह "ब्रह्म" अस्माभिः क्रियमाणं स्तोत्रं हवीरूपमन्नं वा 'जोषि' जुषस्व किञ्च 'ये देवत्रा' ये अन्वयः देवेषु वर्त्तन्ते 'देवमनुष्येति (५,४,५६)' सप्तम्यर्थे त्राप्रत्ययः 'य आयुषु' ये वाग्नयो मनुष्येषु वर्त्तन्ते 'तेभिः' तैः सर्वैः अग्निभिः सह 'नः' अस्माकं 'गिरः' स्तुतिलक्षणा वाचः 'महय' पूजय ॥ १ ॥

१ २र ३ १ २ ३ १ ३र ३ १ २
प्र स विश्वेभिरग्निभिरग्निः स यस्य वाजिनः ।
१ २ ३ २ ३ १र ३ २उ ३ १ २
तनये तोके अस्मदा सम्यक् वाजैः परीवृतः ॥*२*॥

अथ द्वितीया। 'यस्य वाजिनः' यस्याग्नेर्वाजिनः हविर्लक्षणान्नवन्तः अनेके यष्टारः सन्ति 'सः अग्निः 'विश्वेभिः' विश्वैः सर्वैर्यष्टव्यतया स्थितैरग्निभिः 'सः' एकस्तच्छब्दोऽनुवादः। "अस्मत्" इति अस्मासु सुपां सुलुक् (६,१,३८) इति सप्तम्या लुक्, आङोरुपसर्गयोः श्रवणादुचितक्रियाध्याहारः 'आ' गच्छतु। "सम्यङ्" यथावत्कालातिक्रमेणेत्यर्थः। कथभूतः? 'वाजैः परिवृतः' वाजैरन्नैर्यं दातव्यैरन्नैः परिवृतः परिवेष्टितः सहित इत्यर्थः। न केवलमस्मास्वेव यष्टादिविषय-

र्थमस्मैः परिवृतोऽग्निरागच्छतु किं तर्हि? 'तनये' अस्मत्पुत्रे आगच्छतु। न केवलं पुत्रे 'तोके' पुत्रपुत्रे दासध्यैर्णाजैः परिवृतोऽग्निरागच्छतु। इति परोक्षकृत्या अग्निः स्तूयते अस्मदर्थे चाग्निसाध्यक्रियानुपरमः प्रार्थ्यते ॥ २ ॥

१ २ २ २ २१ २ २१ २
त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्द्धय।

१ २ २१ २ २ १ २र
त्वं नो देवतातये रायो दानाय चोदय ॥ * ३ * ॥ [६]

अथ तृतीया। हे 'अग्ने!' 'त्वम्' 'अग्निभिः' त्वद्विभूतिभूतैरन्यैरग्निभिः सार्द्धं 'नः' अस्माकं 'ब्रह्म' स्तोत्रं 'यज्ञं च' 'वर्द्धय'। तथा 'त्वं' 'नः' अस्माकं 'देवतातये' यज्ञनामैतत् ( निघ० ३, १७, १० ) यागार्थं 'रायः' धनस्य 'दानाय' प्रदानाय 'चोदय' दातॄन् प्रेरय ॥ ३ ॥ [६]

१ २ २ २ २१ २
त्वे सोम प्रथमा वृक्तबर्हिषो

२१ २र २ १ २२ १ २
महे वाजाय श्रवसे धियं दधुः।

१ २र १क २र
स त्वं नो वीर वीर्य्याय चोदय ॥ * १ * ॥

ऋ० त्रसदस्युः। छ० ऊर्द्ध्वबृहती। दे० सोमः। अथ त्वेसोमेति त्र्यचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। हे 'सोम!' 'प्रथमाः' पुरातनाः यद्वा, यष्टृत्वेन सर्वेषां जनानां मुख्याः 'वृक्तबर्हिषः' वृक्तं छिन्नं बर्हिर्यैर्यज्ञार्थमिति वृक्तबर्हिषः यजमानाः 'महे' महते 'वाजाय' बलाय 'श्रवसे'

भवाय च 'धियं' बुद्धिं 'त्वे' त्वयि 'दधुः' निहितवन्तः, तस्मात् हे 'वीर' ! समर्थ ! सोम ! तादृशः 'त्वं' 'नः' अस्मानपि सङ्ग्रामे 'वीर्य्याय' सामर्थ्याय 'चोदय' प्रेरय, यद्वा, 'वीर्य्याय' वीरे पुत्रे भवाय सुखाय 'नः' अस्मान् प्रेरय ॥ १ ॥

३क २र २ १ २र ३ २ ३ २ ३
अभ्यभि हि श्रवसा ततर्दिथोत्सं
१ २र ३ २ ३ १ २
न कं चिज्जनपानमक्षितम् ।
१ २ ३ १ २र ३ १ २
शर्य्याभिर्न भरमाणो गभस्त्योः ॥ * २ * ॥

अथ द्वितीया । हे सोम ! त्वं 'श्रवसा' अन्नेन हेतुना 'अभ्यभि ततर्दिथ हि' पवित्रमभिलक्षवानसि । तत्र दृष्टान्तद्वयम् 'उत्सं न' यथा 'कञ्चित्' 'जनपानम्', अस्मिन् जना उदकं पिबन्ति, तम् 'अक्षितम्' अक्षीणं कञ्चित् कश्चन 'उत्सम्' उत्क्षरणशीलं वाप्यादिकमभिलक्षयति यथा वा कश्चित् 'गभस्त्योः' बाह्वोः 'शर्य्याभिः' अङ्गुलीभिः 'भरमाणः' उदकं सम्भरन् कश्चिदभिलक्षयति तद्वत् ॥ २ ॥

१ २ २ १ २ ३ २ ३
अजीजनो अमृत मर्त्याय कमृ-
२ ३ १ २ ३ १ २ ३ १ २
तस्य धर्मन्नमृतस्य चारुणः ।
१ २ ३ २ ३ २ ३ १ २
सदासरो वाजमच्छा सनिष्यदत् ॥ * ३ * ॥ [७]

अथ तृतीया । हे "अमृत" ! मरणधर्मरहित ! सोम !

त्वम् "ऋतस्य" सत्यभूतस्य "चारुणः" कल्याणस्य 'अमृतस्य' उदकस्य 'धर्मन्' धारकेऽन्तरिक्षे 'कं' सूर्यं 'मर्त्याय' मनुष्यार्थम् 'अजोजनः' किञ्च 'सनिष्यदत्' सम्भजत् देवान्। स त्वम् 'वाजम् अच्छ' सङ्ग्रामम् अभिलक्ष्य 'सदा' 'असरः' सरसि गच्छसि।

"मर्त्यायकं" "मर्त्येषु" इति पाठौ ॥ ३ ॥ [७]

२ ३ १ २ ३ १ २ ३ १ २र
एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु।
१ २र ३ २
प्र राधाᳫसि चोदयते महित्वना ॥ * १ * ॥

ऋ० विश्वमनाः। छ० उष्णिक्। दे० इन्द्रः। अथ एन्दुमिन्द्रायेति त्वचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे ऋत्विजः! 'इन्दुं' स्यन्दनशीलं सोमम् 'इन्द्राय' इन्द्रार्थम् 'आ सिञ्चत' आज्ययद्द्रव्येणासेचनं कुरुत अभिषुणुतेत्यर्थः। ततः 'सोम्यं' सोममयं 'मधु' मदकरं सोमरसं 'पिबाति' पिबतु। पीत्वा च स इन्द्रः महित्वना स्वमहत्त्वेनैव 'राधांसि' धनानि स्तोतृभ्यः 'प्रचोदयते' प्रकर्षेण चोदयते प्रेरयति।

"प्रराधांसि" "प्रराधसा" इति पाठौ, "चोदयते" "चोदयाते" इति च ॥ १ ॥

२ ३ १ २ ३ २ ३ १ २ ३ १ २
उपो हरीणां पतिᳫ राधः पृञ्चन्तमब्रवम्।
३ १ २ ३ २ ३ १ २
नूनᳫ श्रुधि स्तुवतो अश्व्यस्य ॥ * २ * ॥

अथ द्वितीया। 'हरीणां' हरितवर्णानाम् अश्वानां 'पतिं' पालयितारं 'राधः' धनं 'पृचन्तं' पृची सम्पर्के (अदा० या०)

स्तोत्रेषु संयोजयन्तं ददतमित्यर्थः। एतादृशमिन्द्रम् 'उपो, अब्रवम्' अतिशयेनाहं स्तोत्रं करवाणि 'अश्वस्य' अश्वो नामर्षिरश्वशब्देनोच्यते तस्य पुत्रस्य स्तुवतः स्तोत्रं कुर्वतः मम सम्बन्धिनीं हे इन्द्र! त्वद्विषयां स्तुतिं 'नूनं' सम्प्रति 'श्रुधि' शृणु।

"राधः" "दशम्" इति पाठौ ॥ २ ॥

१ २ २ ३१ १ २ १ २ १ १ २ १ १ २

न ह्यावङ्ग पुरा च न जज्ञे वीरतरस्त्वत्।

१ २ ३ २उ १ २ १ १ २

न की राया नैवथा न भन्दना ॥ * ३ * ॥ [८]

अथ तृतीया। हे इन्द्र! 'त्वत्' त्वत्तः 'पुरा' पूर्वं 'वीरतरः' सामर्थ्यवान् कश्चित् 'न हि जज्ञे' न जातः खलु। 'अङ्ग' प्रसिद्धौ त्वमेव सामर्थ्यवान् जात इत्यर्थः। किञ्च त्वत्तोऽपि 'राया' धनेन समर्थः 'न किः' न कश्चिदस्ति। तथा 'एवथा' शत्रुपुराणि सङ्ग्रामं वा प्रति गमनेन त्वत्तोऽधिको न जातः। यद्वा, एवथा अव रक्षणादिषु (भ्वा० प०) अकारस्यैकारश्छान्दसः, औणादिकस्थाप्रत्ययः, शरणागतानां स्तोतॄणां वा अवने त्वत्तोऽधिको नास्ति। किञ्च 'भन्दना'-भन्दतिः स्तुतिकर्म्मा (निघ० ३, १४, १८) स्तुत्या त्वदधिको न जातः धनवान् रचकः स्तुत्यश्च त्वत्तोऽन्यो न जज्ञ इति ॥ ३ ॥ [८]

२ २ ३ १ २ ३ १ ३२

नदं व ओदतीनां नदं योयुवतीनाम्।

१ २ ३ १ २ ३ १ २

पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ॥ * १ * ॥ [९]

ऋ० प्रियमेध। छ० अनुष्टुप्। दे० इन्द्रः। अथ नदं

व इति चतुर्थसूक्तस्त्रिकोपा। 'ओदतीनाम्' ओदत्यः उषसः 'ओदती' 'भासती' इति तन्नामसु पाठात् (निघ० १,८,३-४) तासां 'नदम्' उत्पादकमित्यर्थः इन्द्रेण हि उषस उत्पद्यन्ते इन्द्रस्यैव सूर्यत्वात्, द्वादशादित्यमध्ये इन्द्रः पठितः। तादृशमिन्द्रं हे यजमानाः! 'वः' युष्मदर्थम् आह्वयामि 'अघ्न्यानाम्' अहन्तव्यानां गवां 'पतिम्' आह्वये। अथ प्रत्यक्षकृतः हे यजमानाः! 'वः' त्वं 'धेनूनां' चौरादिना प्रीणयित्रीणां गवाम् 'इषुध्यसि' अन्नमिच्छसि॥ १॥

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्दशाध्यायस्य

द्वितीयः खण्डः॥ २॥



१ १ २ १ २ २ ३ १ २ ३ १ २

देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम्।

१ २ ३ २ ३ १ २ ३

उद्वा सिञ्चध्वमुप वा पृणध्व-

१ ३२ ३ १ २

मादिद्वो देव ओहते॥ * १ *॥

ऋ० वसिष्ठः। छ० बृहती। दे० अग्निः। अथ तृतीय खण्डे—देवो वो द्रविणोदा इति प्रगाथात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। 'द्रविणोदाः' धनानां दाता 'देवः' अग्निः 'वः' युष्मदीयां 'पूर्णां' हविषा 'आसिचम्' आसिक्तं स्रुचं 'विवष्टु' कामयताम्। अतः 'उत्सिञ्चध्वम् वा' सोमेन पात्रम्, 'उप पृणध्वम् वा' सोमम्, वा शब्दौ समुच्चयार्थौ ध्रुवग्रहेण द्रोणकलशं पूरयत च अग्नये सोमं यच्छत चेत्यर्थः। 'आदित्' अनन्तरमेव 'देवः' अग्निः 'वः' युष्मान् 'ओहते' वहति।

*"विवष्टु" "विवष्टि" इति पाठौ॥ १॥

२ ३१ २ २ ३ २ ३ १ २
तᳫं होतारमध्वरस्य प्रचे-
२ १ २ ३ १ २
तसं वह्निं देवा अकृखत ।
१ २ ३ १ २ ३ २ ३ १ २
दधाति रत्नं विधते सुवीर्य्य-
३ १ २ ३ ३ १ २
मग्निर्जनाय दाशुषे ॥ * २ * ॥ [१०]

अथ द्वितीया। देवाः 'प्रचेतसं' प्रकृष्टमतिं 'तम्' अग्निम् 'अध्वरस्य' यज्ञस्य 'वह्निं' वोढारं 'होतारं' च 'अकृखत' अकृखन्। किमर्थमित्यत्राह स च 'अग्निः' 'विधते' परिचरते 'दाशुषे' हविषां प्रदात्रे 'जनाय' 'सुवीर्य्यं' शोभनवीर्योपेतं 'रत्नं' रमणीयं धनं 'दधाति' दधातु इत्यर्थः ॥ २ ॥ [१०]

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
अदर्शि गातुवित्तमो यस्मिन् व्रतान्यादधुः ।
२ ३ २ ३ १ २ ३ ३ १ २
उपो षु जातमार्य्यस्य वर्द्धन-
३ १ २ ३ १ २
मग्निं नक्षन्तु नो गिरः ॥ * १ * ॥

ऋ० सौभरिः। छ० बृहती। दे० अग्निः। अथ अदर्शीति द्व्यचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। 'यस्मिन्' अग्नौ 'व्रतानि' कर्माणि 'आ दधुः' यजमानाः आहितवन्तः 'गातुवित्तमः' अतिशयेन मार्गाणां ज्ञाता, सोऽग्निः 'अदर्शि' प्रादुरभूत्। किञ्च 'सुजातं' सम्यक् प्रादुर्भूतम् अस्य 'आर्य्यस्य' उत्तमवर्णस्य 'वर्द्धनं' वर्द्धयितारम्

'अग्निं' 'नः' अस्माकं 'गिरः' स्तुतिरूपा वाचः 'उपो नक्षन्तु' उपगच्छन्तु नक्ष गतौ इति (भ्वा० प०) धातुः।

"नक्षन्तु" "नक्षन्त" इति पाठौ ॥ १ ॥

१ २ १ २   २ १ २ ३ १ २   १ २
यस्माद्रेजन्त कृष्टयश्चर्कृत्यानि कृण्वतः।
१   २ ३ १ २   १
सहस्रसां मेधसाताविव
२ १ २   ३ १ २
त्मनाग्निं धीभिर्नमस्यत ॥ * २ * ॥

अथ द्वितीया। 'यस्मात्' कारणात् 'चर्कृत्यानि' कर्त्तव्यानि कर्माणि 'कृण्वतः' कुर्वाणान् मनुष्यान् 'कृष्टयः' इतरे मनुष्याः 'रेजन्त' कम्पन्ते, तस्मादिदानीं हे मदीया जनाः! यूयं 'सहस्रसां' गवां धनानां च सहस्रस्य दातारमग्निं 'मेधसातौ' यज्ञे 'धीभिः' कर्त्तव्यैः कर्मभिः 'त्मना' आत्मनैव 'नमस्यत' परिचरत।

"नमस्यत" "सपर्यत" इति पाठौ ॥ २ ॥

१   २र   २ २
प्र दैवोदासो अग्निः ००० ॥ * ३ * ॥ [११]

अथ तृतीया। 'दैवोदासः' दिवोदासेनाह्वयमानोऽग्निः 'मातरं' सर्वस्य लोकस्य धारणवत्त्वात् पृथिवी माता, तां पृथिवीं 'अनु' प्रति 'न' 'प्र विवाहते' देवान् प्रति हविर्वोढुं विशेषेण न प्रवर्त्तयति, यस्मादेनमग्निं दिवोदासो 'मज्मना' बलेन आजुहाव। तस्मादयमग्निः 'नाकस्य' स्वर्गस्य 'दिवः' द्योतमानः 'इन्द्रः' परमैश्वर्ययुक्तः 'शर्मणि' गृहे स्वायतने एव 'तस्थौ' अतिष्ठत्। प्रथमभागे २५पृष्ठायाम् इयं ऋक् द्रष्टव्याः ॥ ३ ॥ [११]

२ १ २
अग्न आयूंषि पवसे ॥ * १ * ॥

ऋ० वैखानसः । छ० गायत्री । दे० अग्निः । अथ अग्न आयूंषि त्रृचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा । सा चाम्नाता (उ० आ० ६,३,१०,३,) ॥ १ ॥

१ २उ  २ १२  २ १ २  २ १ २
अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ।
१ २  ३ १
तमीमहे महागयम् ॥ * २ * ॥

अथ द्वितीया । 'पाञ्चजन्यः' निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः, यद्वा, गन्धर्वाः पितरो देवाः असुराः रक्षांसीत्येतत् पञ्चजनाः, अथवा देवाः मनुष्याः गन्धर्वाप्सरसः सर्पाः पितर इति ब्राह्मणाभिहिताः पञ्चजनाः । 'गम्भीरात् ञ्यः (४,३,५८)' इत्यत्र 'बहिर्देव पञ्चजनेभ्य इति वक्तव्यम्' इति वचनात् भावार्थे ञ्यप्रत्ययः । तेषां तत्तदभीष्टप्रदानेन स्वभूतः 'ऋषिः' सर्वस्य द्रष्टा 'पवमानः' पवमानरूपः 'अग्निः' 'पुरोहितः' कर्मार्थमृत्विग्भिः पुरतो निहितः, 'तम्' पूर्वोक्तलक्षणं 'महागयं' महद्भिरपि देवादिभिर्गातव्यं महान्ति प्रभूतानि यज्ञगृहाणि यस्य वा स तथोक्तः, तम् 'ईमहे' याचामहे ॥ २ ॥

२ ३  १२ ३ १ २ ३ १  २र  ३ १ २
अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्य्यम् ।
१ २ ३ १उ  ३ १ २
दधद्रयिं मयि पोषम् ॥ * ३ * ॥ [१२]

अथ तृतीया । हे अग्ने ! 'स्वपाः' 'सौमनसी (६, २,

११७)' इति उत्तरपदाद्युदात्तत्वम् शोभनकर्मा त्वम्, 'अस्मे' अस्मासु 'सुवीर्य्यं' शोभनवीर्य्योपेतं 'वर्चः' वर्च दीप्तौ (भ्वा० आ०) तेजः 'पवस्व' आ गमय। तथा भवान् 'रयिं' धनं पुत्रं वा 'पोषं'भावे कर्मणि वा घञ् गवां पुष्टिं यद्वा गवादिकं 'मयि' भवान् 'दधत्' दधातु करोतीत्यर्थः दधातेर्लेटि अडागमे 'धोर्लोपो लेटि वा (७,३,७०), इत्याकारलोपः ॥ २ ॥ [१२]

१ २    ३ १ २ ३ १ २    ३ १ २
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया।
२ ३१    २ ३ १ २
आ देवान् वक्षि यक्षि च ॥ * १ * ॥

ऋ० वसूयवः। छ० गायत्री। दे० अग्निः। अथ अग्ने पावकेति तृचात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा। हे 'पावक'! शोधक! 'रोचिषा' स्वदीप्त्या 'मन्द्रया' देवानां मादयित्र्या 'जिह्वया' च, हे 'देव'! द्योतमानाग्ने! 'देवान्' 'आ वक्षि' आवह, यज्ञार्थं 'यक्षि च' तान् यज ॥ १ ॥ [१२]

१ २    ३ १ २    ३ १ २
तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम्।
३ २उ    ३ १ २
देवाꣳ आ वीतये वह ॥ * २ * ॥

अथ द्वितीया। हे 'घृतस्नो'! घृतस्य प्रेरक! यद्वा, घृतेन जनित! हे 'चित्रभानो!' चित्रा नानाविधा भानवो दीप्तयो रश्मयो यस्यासौ चित्रभानुस्तस्य सम्बोधनम् 'स्वर्दृशं' सर्वस्य द्रष्टारं 'तं' 'त्वा' त्वाम् 'ईमहे' याचामहे, अतो 'वीतये' हविषां भक्षणाय 'देवान्' 'आ वह' ॥ २ ॥

२ १ २ २ २ १ १ २
वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमहि।
१ २ २ १ १ २ २
अग्ने बृहन्तमध्वरे ॥ * ३ * ॥ [१३]

अथ तृतीया। हे 'कवे'! क्रान्तदर्शिन्! 'अग्ने!' 'वीतिहोत्रं' क्रान्तयज्ञं यद्वा प्रिययज्ञं 'द्युमन्तं' दीप्तिमन्तं 'बृहन्तं' महान्तं, 'त्वा' त्वाम् 'अध्वरे' यज्ञे 'समिधीमहि' समिद्भिः सन्दीपयामः ॥ ३ ॥ [१३]

इति सामवेदार्थप्रकाशे उत्तरायन्यस्य चतुर्दशाध्यायस्य
तृतीयः खण्डः ॥ ३ ॥

---

१ २ २ १ २ १२ २ १२
अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि।
१ २ ३ १ २
विश्वासु धीषु वन्द्य ॥ * १ * ॥

ऋ० गोतमः। छ० गायत्री। दे० अग्निः। अथ चतुर्थे खण्डे—अवानो अग्न इति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। 'विश्वासु धीषु' सर्वेषु कर्मसु 'वन्द्यः' स्तुत्यः हे 'अग्ने!' 'गायत्रस्य' गायत्रसाम्नः गायत्रीच्छन्दस्कस्य वा सूक्तस्य 'प्रभर्मणि' प्रभरणे सम्पादने निमित्तभूते सति 'नः' अस्मान् 'ऊतिभिः' त्वदीयैः पालनैः 'अव' रक्ष 'द्व्यचोऽतस्तिङः (६,३,१३५)' इति संहितायां दीर्घत्वम् ॥ १ ॥

२ २ २ १ २ १ २ २ १२
आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम्।
१ २ १ २ ३१२
विश्वासु पृत्सु दुष्टरम् ॥ * २ * ॥

अथ द्वितीया। हे 'अग्ने'। 'रयिं' धनं 'नः' अस्मभ्यम् 'आ भर' प्रयच्छ। कीदृशम्? 'सवासाहं' सवा सह युगपदेव दारिद्र्यस्य नाशकं 'वरेण्यं' सर्वैर्वरणीयं 'विश्वासु पृत्सु' सर्वेषु सङ्ग्रामेषु 'दुष्टरम्' शत्रुभिस्तरीतुमशक्यम्॥ २॥

१ २ २ १ २ ३ २ ३ १ २
आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम्।
१ १ २ ३ १ २
मार्डीकं धेहि जीवसे॥ * ३ *॥ [१४]

अथ तृतीया। हे 'अग्ने!' 'नः' अस्माकं 'जीवसे' जीवनाय 'सुचेतुना' शोभनेन ज्ञानेन युक्तं 'रयिं' धनम् 'आ धेहि' आस्थापय। कीदृशम्? 'मार्डीकं' मृडीकं सुखं तद्धेतुभूतं 'विश्वायुपोषसं सर्वस्मिन्नायुषि देहादेः पोषकं यावज्जीवमस्मदुपभोगपर्याप्तमित्यर्थः॥ ३॥ [१४]

२ १ २ २ ३२ ३ १ २ ३ १ ३२ १ २
अग्निं हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु।
१ २ ३ १ २
तेन जेष्म धनं धनम्॥ * १ *॥

ऋ० केतुः। छ० गायत्री। दे० अग्निः। अग्निं हिन्वन्तीति पञ्चर्चं द्वितीयं सूक्तम्। तत्र प्रथमा। 'नः अस्माकं 'धियः' कर्माणि स्तुतयो वा 'अग्निं' 'हिन्वन्तु' प्रेरयन्तु यागार्थमुद्योजयन्तु वर्द्धयन्तु वा हि गतौ वृद्धौ च। तत्र दृष्टान्तः 'आजिषु' सङ्ग्रामेषु 'आशुं' शीघ्रगामिनं 'सप्तिम् इव' सर्पणशीलमश्वं यथा योद्धारः प्रेरयन्ति तद्वत्' 'तेन' अग्निना 'धनं धनं' सर्वं धनं 'जेष्म' वयं जयेम॥ १॥

२ २ २ ३ १२ ३ १ २ ३ २ ३ २
यथा गा आकरामहे सेनयाग्ने तवोत्या ।
१ २ ३ १ २
तां नो हिन्व मघत्तये ॥ * २ * ॥

अथ द्वितीया। हे 'अग्ने !' 'सेनया' इनेन सह वर्त्तमानया, सेनारूपया वा 'यया' 'तव' 'ऊत्या' रक्षया 'गाः' 'आ करामहे' आभिमुख्येन करवामहे लभामहे इत्यर्थः। 'ताम्' ऊतिं 'नः' अस्मान् 'हिन्व' गमय। किमर्थम्? 'मघत्तये' धनस्य दानार्थम् अस्माकं धनलाभायेत्यर्थः।

"करामहे" "करामहै" इति पाठौ ॥ २ ॥

१ २ ३ २ ३ १ २ ३ १ २र ३ १ २
आग्ने स्थूरꣳ रयिं भर पृथुं गोमन्तमश्विनम् ।
१ २उ ३ १ २ ३ २
अङ्धि खं वर्त्तया पविम् ॥ * ३ * ॥

अथ तृतीया। हे 'अग्ने'। 'स्थूरं' स्थूलं दृढं 'पृथु' विस्तीर्णं 'गोमन्तं' गोभिर्युतम् 'अश्विनम्' अश्वोपेतम् 'आ भर' अस्मभ्यमाहर प्रयच्छ। किञ्च 'खम्' अन्तरिक्षम् 'अङ्ग्धि' वृष्ट्युदकैः सिञ्च यद्वा आत्मीयैस्तेजोभिः व्यञ्जय प्रकाशय। 'पविम्' आयुधं 'वर्त्तय' अस्मद्विरोधिषु प्रवर्त्तय।

"पविम्" "पग्मिम्" इति पाठौ ॥ ३ ॥

२ ३ १ २ ३ २ ३ १ २र १ २
अग्ने नक्षत्रमजरमा सूर्य्यꣳ रोहयो दिवि ।
२ ३ २ ३ १ २
दधज्ज्योतिर्जनेभ्यः ॥ * ४ * ॥

अथ चतुर्थी। हे 'अग्ने।' 'नक्षत्रं' नक्षति समन्ताद्

गच्छतीति नक्षत्रः, नक्षि गतौ (भ्वा० प०) 'असिनक्षि (उ०३,१०५)' इत्यादिना अत्रन् प्रत्ययः। सततं गन्तारम् 'अजरम्' जरारहितम् 'सूर्यं' सर्वस्य प्रेरकमादित्यं 'दिवि' अन्तरिक्षम् 'आ रोहयः' उपर्यवस्थापितवानसि यद्वा, नक्षत्रं कृत्तिकादिकं सूर्यस्य दिव्यारोहयः। किङ्कुर्वन्? 'जनेभ्यः' सर्वेभ्यः प्राणिभ्यः व्यवहारार्थं 'ज्योतिः' प्रकाशकं 'दधत्' विदधत् कुर्वन्, यथा सर्वेषां प्रकाशो भवति तथा उन्नते देशे सूर्यमगमय इत्यर्थः॥ ४॥

१ २ २ २ २ १ २ २ २ २ २ ३ २
अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत्।
१ २ २ ३७ २ १ २
बोधा स्तोत्रे वयो दधत्॥ * ५ *॥ [१५]

अथ पञ्चमी। हे 'अग्ने!' 'विशां' प्रजानां यजमानानां 'केतुः' केतयिता ज्ञापयिता 'असि' भवसि। अतएव 'प्रेष्ठः' प्रियतमः 'श्रेष्ठः' प्रशस्यतमश्च भवसि। स त्वम् 'उपस्थसत्' उपस्थाने यज्ञगृहे निषीदन् 'बोध' अस्मदीयं स्तोत्रमवगच्छ। किङ्कुर्वन्? 'स्तोत्रे' स्तुवते जनाय 'वयः' अन्नं 'दधत्' विदधत् कुर्वन् प्रयच्छन् वा॥ ५॥ [१५]

१ २ २ २ २ १ २ १ २८ २ २ २ २
अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्।
१ २ २२
अपाᳬरेताᳬसि जिन्वति॥ * १ *॥

ऋ० विरूपः। छ० गायत्री। दे० अग्निः। अथ अग्निर्मूर्द्धेति तृचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। 'मूर्द्धा' देवानां श्रेष्ठः, 'दिवः' द्युलोकस्य 'ककुत्' 'उच्छ्रितः',

'पृथिव्याः' च 'पतिः', 'अयम्' 'अग्निः' 'अपां' 'रेतांसि' स्थावरजङ्गमात्मकानि भूतानि 'जिन्वति' प्रीणयति ॥ १ ॥

१ २ ३ १ २ ३ २ ३ १ २ ३क २र
ईशिषे वार्यस्य हि दात्रस्याग्ने स्वःपतिः ।

२ २ ३ २३ १ २
स्तोता स्यां तव शर्मणि ॥ * २ * ॥

अथ द्वितीया । हे 'अग्ने !' 'स्वःपतिः' स्वर्गस्य स्वामी त्वं 'वार्यस्य' वरणीयस्य 'दात्रस्य' दातव्यस्य धनस्य 'ईशिषे' ईश्वरोऽसि 'शर्मणि' सुखे निमित्ते तव 'स्तोता' 'स्यां' भवेयम् ॥ २ ॥

१२ ३ १ २ ३ १ २ ३ १ २र
उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते ।

३ २ १ २ ३ १ २
तव ज्योतींष्यर्चयः ॥ * ३ * ॥ [१६]

इति सप्तमप्रपाठकस्य प्रथमार्द्धम् ।

---

अथ तृतीया । हे 'अग्ने !' 'ते' तव 'शुचयः' निर्मलाः 'शुक्राः' शुक्लवर्णाः 'भ्राजन्तः' दीप्यमानाः 'अर्चयः' प्रभाः 'तव' 'ज्योतींषि' तेजांसि 'उदीरते' प्रेरयन्ति ॥ ३ ॥ [१६]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्दशाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये साम वेदार्थप्रकाशे उत्तराग्रन्थे चतुर्दशोऽध्यायः ॥ १४ ॥

---

# अथ पञ्चदशोऽध्याय आरभ्यते ।

अथ सप्तमप्रपाठकस्य द्वितीयार्द्धम् ।

१ २　२ १　२र ३ २ ३　२　३क २र
कस्ते जामिर्जनानामग्ने को दाश्वध्वरः ।
१　२ १　२　　२ २
को ह कस्मिन्नसि श्रितः ॥ * १ * ॥

ऋ० गोतमः । छ० गायत्री । दे० अग्निः । तत्र, प्रथमे खण्डे—कस्तेजामिर्जनानामिति दृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा । हे 'अग्ने !' 'जनानां' मनुष्याणां मध्ये 'ते' तव "कः' 'जामिः' को बन्धुः ? त्वं सर्वैर्गुणैरधिकोऽसि त्वत्स्वरूपो बन्धुर्नास्तीति भावः । 'कः' दाश्वध्वरः' दाश्वदत्त अध्वरो यज्ञो येन स तथोक्तः त्वां यष्टुमतिसमर्थः कोऽपि नास्तीत्यर्थः । 'को ह' त्वं कथम्भूतः ? त्वमीदृग्रूप इति सर्वैर्न ज्ञायस इत्यर्थः । 'कस्मिन्' स्थाने 'श्रितः' आश्रितः 'असि' भवसि वर्त्तसे ? तत्स्थानमपि न केन विज्ञायते अतस्त्वमस्माभिः मांसदृष्टिभिः कथमुपलब्धव्यः ? इत्यग्निः प्रशस्यते ॥ १ ॥

२ ३　१　२र ३ १ २　३ १　२　　३ २
त्वं जामिर्जनानामग्ने मित्रो असि प्रियः ।
१ २　१ २ ३ १ २
सखा सखिभ्य ईड्यः ॥ * २ * ॥

अथ द्वितीया । हे 'अग्ने !' 'त्वम्' उक्तप्रकारेण अचिन्त्यरूपोऽपि अनुग्रहीतृतया सर्वेषां 'जनानां' 'जामिः' बन्धुः

'असि'। तथा 'प्रियः' प्रीणयिता त्वं यजमानानां 'मित्रः' त्रायकः असि। 'ईड्यः' स्तुतिभिः स्तुत्यः त्वं 'सखिभ्यः' समानख्यानेभ्यः ऋत्विग्भः 'सखा' सखिवदत्यन्तं प्रियोऽसि ॥ २ ॥

१ २ ३ १ २र ३ १ २ ३ २ ३ २ ३ २
यजा नो मित्रावरुणा यजा देवाꣳ ऋतं बृहत्।
२ १ २ १ १ २र
अग्ने यक्षि स्वं दमम् ॥ * ३ * ॥ [१]

अथ तृतीया। हे अग्ने! 'नः' अस्मदर्थं 'मित्रावरुणा' एतत्सञ्ज्ञौ देवौ 'यज' हविषा पूजय। तथा 'देवान्' इन्द्रादीन् 'यज' पूजय। 'ऋतं' सत्यं यथार्थफलं यज्ञञ्च यज इत्येतदर्थं 'बृहत्' प्रौढ़ 'स्वं' स्वकीयं 'दम' यज्ञ गृहं 'यक्षि' यज सङ्गच्छस्व। त्वयि अन्तर्विद्यमाने सति हि यज्ञगृहं पूज्यते ॥ ३ ॥ [१]

२ १ २ ३क २र ३ १ २र ३ २
ईडेन्यो नमस्यस्तिरस्तमाꣳसि दर्शतः।
२ ३ १ २ ३ १ २
समग्निरिध्यते वृषा ॥ * १ * ॥

ऋ० देवश्रवा देववातः। छ० गायत्री। दे० अग्निः। अथ द्वितीयखण्डे प्रथमा। 'ईडेन्यः' स्तोतृभिरोड्यः अतएव 'नमस्यः' सर्वैर्नमस्कार्यः 'तमांसि तिरः' ध्वान्तानि स्वाभाभिस्तिरस्कुर्वन् 'दर्शतः' कमनीयतया सर्वैर्दर्शनीयः, तादृशः 'अग्निः' 'वृषा' यजमानस्य कामानां वर्षिता 'समिध्यते' आहुतिप्रक्षेपेण प्रज्वाल्यते। उक्तार्थं वाजसनेयकम् 'ईड्यो चेष नमस्यो चेष तिरस्तमांसि ददृशे समिद्धः' इति ॥ १ ॥

१२ ३ १   २र ३ २ ३ १ २३१ २
वृषो अग्निः समिध्यतेऽश्वो न देववाहनः।
२ ३ १२
तᳬ हविष्मन्त ईडते ॥ * २ * ॥

अथ द्वितीया। 'वृषा उ' वृषैव कामानां वर्षिता 'देववाहनः' देवान् हवींषि वाहयति प्रापयतीति देववाहनः तत्र दृष्टान्तः 'अश्वो न' यथाश्वो राजानं वाहयति स्वपुरं प्रापयतीति वाहनभूतो यः 'अग्निः' 'समिध्यते' आहुतिप्रदानेन सम्यग् दीप्यते 'तं' तादृशमग्निं 'हविष्मन्तः' सम्भृतहविष्का यजमानाः 'ईडते' कामसिद्धार्थं स्तुवन्ति ॥ २ ॥

१ २   ३ १ २ ३ १ २ २ १ २
वृषणं त्वा वयं वृषन् वृषणः समिधीमहि।
२ ३ १ २ ३ २
अग्ने दीद्यतं वृहत् ॥ * ३ * ॥ [२]

अथ तृतीया। 'वृषन्' कामानां वर्षितः। हे 'अग्ने'! 'वृषणः' वृषणः घृताद्याहुतीनां सेक्तारो वयं वृषणम् आहुतिद्वारा उदकस्य सेक्तारं तथा च स्मृतिः 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति (मनु ३,७६)' 'दीद्यन्तं' दीप्यमानं 'वृहत्' अतएव महान्तं तमिममग्निं 'समिधीमहि' सम्यग् दीपयामः ॥ ३ ॥ [२]

१२ ३ १ २ ३ १२   ३ १ २
उत्ते वृहन्तो अर्चयः समिधानस्य दीदिवः।
१ २ ३ १ २
अग्ने शुक्रास ईरते ॥ * १ * ॥

'असि'। तथा 'प्रियः' प्रीणयिता त्वं यजमानानां 'मित्रः' वायकः असि। 'देवः' स्तुतिभिः स्तुत्यः त्वं 'सखिभ्यः' समानख्यानेभ्यः ऋत्विग्भ्यः 'सखा' सखिवद्धितः प्रियोऽसि ॥ २ ॥

१ २    ३ १   २२ ३   १ २   ३ २    ३ २ ३ २
यजा नो मित्रावरुणा यजा देवाꣳ ऋतं बृहत्।
२ ३   २ ३   १    २२
अग्ने यक्षि स्वं दमम् ॥ * ३ * ॥ [१]

अथ तृतीया। हे अग्ने! 'नः' अस्मदर्थं 'मित्रावरुणा' एतन्नामकौ देवौ 'यज' हविषा पूजय। तथा 'देवान्' इन्द्रादीन् 'यज' पूजय। 'ऋतं' सत्यं यथार्थफलं यज्ञञ्च यज इत्येतदर्थं 'बृहत्' प्रौढ़ं 'स्वं' स्वकीयं 'दमं' यज्ञ गृहं 'यक्षि' यज सङ्गच्छस्व। त्वयि अन्तर्विद्यमाने सति हि यज्ञगृहं पूज्यते ॥ ३ ॥[१]

१ ३ १    ३ ३ २२ ३ १    ३२         ३ २
ईडेन्यो नमस्यस्तिरस्तमाꣳसि दर्शतः।
२ ३   १   २   ३ १ २
समग्निरिध्यते वृषा ॥ * १ * ॥

ऋ० देवश्रवा देववातः। छ० गायत्री। दे० अग्निः। अथ द्वितीयखण्डे प्रथमा। 'ईडेन्यः' स्तोत्रैरीड्यः अतएव 'नमस्यः' सर्वैर्नमस्कार्यः 'तमांसि तिरः' ध्वान्तानि स्वाभाभिस्तिरस्कुर्वन् 'दर्शतः' कमनीयतया सर्वैर्दर्शनीयः, तादृशः 'अग्निः' 'वृषा' यजमानस्य कामानां वर्षिता 'समिध्यते' आहुतिप्रक्षेपेण प्रज्वाल्यते। उत्तरार्धं वाजसनेयकम् 'ईडेन्यो नमस्यो तिरस्तमांसि दर्शतः समिद्धः' इति ॥ १ ॥

१ २ २ १ २२ १ २ २ १ २ ३ १ १ २
वृषो अग्निः समिध्यतेऽश्वो न देववाहनः।
२ १ १ २
तᳲहविष्मन्त ईडते ॥ * २ * ॥

अथ द्वितीया। 'वृषा उ' वृषैव कामानां वर्षिता 'देववाहनः' देवान् हवींषि वाहयति प्रापयतीति देववाहनः तत्र दृष्टान्तः 'अश्वो न' यथाश्वो राजानं वाहयति स्वपुरं प्रापयतीति वाहनभूतो यः 'अग्निः' 'समिध्यते' आहुतिप्रदानेन सम्यग् दीप्यते 'तं' तादृशमग्निं 'हविष्मन्तः' सम्भृतहविष्का यजमानाः 'ईडते' कर्मसिद्ध्यर्थं स्तुवन्ति ॥ २ ॥

१ २ ३ १ २ ३ १ २ ३ १ २
वृषणं त्वा वयं वृषन् वृषणः समिधीमहि।
२ ३ १ २ ३ २
अग्ने दीद्यतं वृहत् ॥ * ३ * ॥ [२]

अथ तृतीया। 'वृषन्' कामानां वर्षितः। हे 'अग्ने।' 'वृषणः' वृषणाः घृताद्याहुतीनां सेक्तारो वयं वृषणम् आहुतिद्वारा उदकस्य सेक्तारं तथा च स्मृतिः 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति (मनु ३,७६)' 'दीद्यतं' दीप्यमानं 'वृहत्' अतएव महान्तं तमिममग्निं 'समिधीमहि' सम्यग् दीपयामः ॥ ३ ॥ [२]

१ २ ३ १ २ ३ १ २ ३ १ २
उत्ते वृहन्तो अर्चयः समिधानस्य दीदिवः।
१ २ ३ १ २
अग्ने शुक्रास ईरते ॥ * १ * ॥

ऋ० विरूप:। छ० गायत्री। दे० अग्नि:। तृतीयऋचे प्रथमा। हे 'दीदिव:'! दीप्ताग्ने! 'समिधानस्य' समिध्यमानस्य 'ते' तव 'बृहन्त:' महान्त: 'शुक्रास:' ज्वलन्त: 'अर्चय:' दीप्तय: 'उदीरते' उद्गच्छन्ति ॥ १ ॥

१ २ ३ २ १ २ ३१ २
उप त्वा जुह्वो३ मम घृताचीर्यन्तु हर्य्यत।
१ २ ३ १ २
अग्ने हव्या जुषस्व न: ॥ * २ * ॥

अथ द्वितीया। हे 'हर्य्यत'! कामयमानाग्ने! 'मम' मदीया 'घृताची:' घृतमचन्त्य: शुभ्रा: स्रुच: 'त्वा' त्वाम् 'उप यन्तु'। 'न:' अस्माकं 'हव्या' हव्यानि 'जुषस्व' सेवस्व च ॥ २ ॥

३ १ ३र ३ १ २ ३ १ २ ३१ २
मन्द्रꣳहोतारमृत्विजं चित्रभानुं विभावसुम्।
३ १ २ ३ १ २
अग्निमीडे स उ श्रवत् ॥ * ३ * ॥ [३]

अथ तृतीया। "मन्द्रं' मादनं 'होतारं' देवानामाह्वातारम् 'ऋत्विजम्' ऋतौ यष्टव्यं 'चित्रभानुं' विविधदीप्तिं 'विभावसुं' दीप्तिधनम् 'अग्निम्' 'ईडे' स्तौमि। 'स:' अग्नि: 'श्रवत् उ' अस्मदीयां स्तुतिं शृणोत्येव ॥ ३ ॥ [३]

१ २ ३ ३ १ २ ३ २ ३ ३ २ ३
पाहि नो अग्न एकया पाह्यू३त द्वितीयया।
३ २ ३ २ ३ १ २
पाहि गीर्भिस्तिसृभिरूर्जां

२ १ २२१ २
पते पाहि चतसृभिर्वसो ॥ * १ * ॥

ऋ० भर्गः। छ० बृहती। दे० अग्निः। अथ प्रगाथात्मके चतुर्थसूक्ते, प्रथमा। हे 'अग्ने'! 'नः' अस्मान् 'एकया' ऋचा गिरा 'पाहि' रक्ष। 'उत' अपिच 'द्वितीयया' ऋचा 'पाहि' पालय। 'पाहि' 'तिसृभिः' 'गीर्भिः' 'ऊर्जाम्' अन्नानां बलानां वा 'पते'! स्वामिन्! तथा 'पाहि' 'चतसृभिः' गीर्भिः हे 'वसो'! वासकाग्ने!॥ १॥

१ १ २र २ ३ १
पाहि विश्वस्माद्रक्षसो

१ २ २ ३ २ १ २
अराव्णः प्र स्म वाजेषु नोऽव।

१ २र ३ १ २
त्वामिद्धि नेदिष्ठं देवतातय

२ १ २र १ २
आपिं नक्षामहे वृधे ॥ * २ * ॥ [४]

अथ द्वितीया। हे 'अग्ने'! 'विश्वस्मात्' सर्वस्मात् 'रक्षसः' 'अराव्णः' अदातुः सकाशात् 'पाहि' रक्ष। सोऽस्मान् 'वाजेषु' सङ्ग्रामेषु 'प्राव' प्रकर्षेण रक्ष। 'स्म' इति पूरणः। 'हि' यस्मात् 'नेदिष्ठम्' अन्तिकतमम् 'आपिं' बन्धुभूतं 'त्वाम् इत्' त्वामेव 'देवतातये' यज्ञाय यज्ञसिद्ध्यर्थं 'वृधे' वर्द्धनाय 'नक्षामहे' व्याप्नुमः नक्षति र्व्याप्तिकर्मा (निघ०२,१८,२) ॥ २॥ [४]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चदशाध्यायस्य
प्रथमः खण्डः।

---

२ १ २ २ १ २२ ३
द्वतो राजन्नरतिः समिद्धो

२ ३ १ २ ३ १ २
रौद्रो दक्षाय सुषुमाꣳ अदर्शि ।

१ १ २२ १ १ १११
चिकिद्वि भाति भासा बृहता-

१ २ ११ १ १ २ ३ १ २
सिक्नीमेति रुशतीमपाजन् ॥ * १ * ॥

ऋ० पायवितः। छ० त्रिष्टुप्। दे० अग्निः। अथ द्वितीय खण्डे—द्वतोराजन्निति द्वचात्मके प्रथमसूक्ते; प्रथमा। हे 'राजन्' ! दीप्यमानाग्ने ! त्वम् 'द्वतः' ईश्वरः सर्वस्य भवसि। अथ परोक्षः 'अरतिः' हविरादाय देवान् प्रति गन्ता 'समिद्धः' सन्दीप्तः 'रौद्रः' शत्रूणां भयङ्करः 'सुषुमान्' ओषध्यात्मना स्थितोऽग्निः सुष्ठु सूयत इति सुसोमः, तेन तद्वान् शोभनप्रसवो वा सोऽग्निः 'दक्षाय' यजमानानां धनादिवृद्धयर्थं कर्मवृद्धयर्थं वा 'अदर्शि' सर्वैर्दृश्यते। किञ्च 'चिकित्' सर्वं जानानोऽग्निः 'विभाति' विशेषेण दीप्यते तथा 'बृहता' महता 'भासा' तेजसा ज्वालालक्षणेन 'असिक्नीं' रात्रिम् 'एति' सायं होमसिद्धयर्थं गच्छति। किङ्कुर्वन् ? 'रुशतीं' श्वेतवर्णां दीप्तिम् 'अपाजन्' अपगमयन् सर्वतो विकिरन् यद्वा, रुशतीं दीप्तामुषस मागच्छन् अपक्षिपन् परित्यजन् रात्रिं गच्छति। सामर्थ्यात् रात्रिं परित्यजन्नुषसं प्रातर्होमसिद्धयर्थं गच्छतीत्यर्थो लभ्यते ॥ १ ॥

२ १ २२ १ १ २२ ३ २
कृष्णां यदेनीमभि वर्पसाभू-

२ २ ३ १ २ २ २ ३ २
ज्जनयन्योषां बृहतः पितुर्जाम्।
३ २ ३ १ ३८ ३ २
ऊर्ध्वं भानूं सूर्य्यस्य स्तभायं
३ १ ३८ ३ १ ३८
दिवो वसुभिररतिर्वि भाति ॥ * २ * ॥

अथ द्वितीया। सोऽग्निः 'यद्' यदा 'कृष्णां' कृष्णवर्णाम् 'एनीं' गच्छन्तीं रात्रिं 'वर्पसा' आत्मीयेन ज्वालालक्षणेन रूपेण 'अभिभूत्' अभिभवति। किङ्कुर्वन्? 'बृहतः' महतः 'पितुः' सर्वस्य जगतः पालयितुः पितृभूताद्वा आदित्यात् 'जां' जायमानां 'योषाम्' उषसं 'जनयन्' अभिव्यञ्जयन्। तदानीम् 'अरतिः' गमनशीलोऽग्निः 'दिवः' द्युलोकस्य 'वसुभिः' वासयितृभिः आच्छादकैः सम्भुवनसमर्थैः आत्मीयैस्तेजोभिः 'सूर्य्यस्य' 'भानुं' दीप्तिम् 'ऊर्द्ध्वम्' उपरिष्टात् 'स्तभायं' स्तभ्नयन् 'वि भाति' विशेषेण दीप्यते ॥ २ ॥

३ २ ३ १ २ १ २ २ २ ३
भद्रो भद्रया सचमान आगात्-
१ २ ३ १ ३क २८ ३ २
स्वसारं जारो अभ्येति पश्चात्।
२ १ २८ ३ २ ३ २ २
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठ-
१ २ ३ १ २ ३ २ ३ १ २
न्नुशद्भिर्वर्णैरभि राममस्थात् ॥ * ३ * ॥ [५]

अथ तृतीया। 'भद्रः' भजनीयः कल्याणः 'भद्रया' भजनीयया दीप्तेरूपया वा 'सचमानः' सेव्यमानः सङ्गच्छमानो

वा अग्निः 'आगात्' आजगाम, गार्हपत्या दाहवनीयम् आगच्छति। ततः 'पश्चात्' 'जारः' जरयिता शत्रूणां सः 'अग्निः' 'स्वसारं' स्वयं सारिणीं भगिनीं वा आगतामुपसम् 'अभ्येति' अभिगच्छति। तथा 'सुप्रकेतैः सुप्रज्ञानैः 'द्युभिः' दीप्तिभिस्तेजोभिः सह 'वितिष्ठन्' सर्वतो वर्त्तमानः सोऽग्निः 'उशद्भिः' श्वेतैः 'वर्णैः' वारकैरात्मीयैः तेजोभिः 'रामं' कृष्णं शार्वरं तमः 'अभ्यस्थात्' सायं होमकाले अभिभूय तिष्ठति ॥ २ ॥ [५]

१ २          ३ १ २     ३ १ २
कया ते अग्ने अङ्गिर ऊर्जो नपादुपस्तुतिम्।

१ २      ३ १ २
वराय देव मन्यवे ॥ * १ * ॥

ऋ० उशनाः। छ० गायत्री। दे० अग्निः। अथ द्वितीयसूक्ते, प्रथमा। हे 'अङ्गिरः'! अङ्गिरसां वरिष्ठ! यद्वा, अङ्गति सर्वत्र गच्छतीति अङ्गिराः तादृश! हे 'ऊर्जो नपात्' 'नपात्' इत्यपत्यनाम (निघ०२,२,११) अन्नस्य पुत्र,! हविर्भिर्वर्द्धमानत्वात्। यद्वा नपादिति नप्ता, हविर्लक्षणस्यान्नस्य नप्ता!। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' (मनुः ३,७६) इति वृष्टेरोषधय ओषधिभ्योऽग्निरिति अन्नस्य नप्ता हे 'देव'! द्योतमान! 'अग्ने' 'वराय' सर्ववरणीयाय 'मन्यवे' शत्रूनभिमन्यमानाय 'ते' तुभ्य 'कया' कीदृश्या वाचा 'उपस्तुतिं' स्तोत्रम् अहं भरेयम्। त्वं महान् खलु अहमल्पः तदयं कथं स्तुतिं कुर्य्यामिति ऋषिरग्निं प्रति वदति ॥ १ ॥

१ २ ३ २ ३ १ २     ३ १ २
दाशेम कस्य मनसा यज्ञस्य सहसो यहो।

१ २ ३ १ २र
कदु वोच इदं नमः ॥ * २ * ॥

अथ द्वितीया। ऋषिरग्निं प्रति ब्रूते, हे 'सहसोयहो'। 'यहुः' इत्यपत्यनाम (निघ०२,२,११) बलेन निष्पाद्यमानत्वात् बलस्य पुत्र। हे अग्ने। 'कस्य' कीदृशस्य 'यज्ञस्य' यज्ञवतो यजनीयदेववतो वा यजमानस्य 'मनसा' युक्ताः सन्तो हवींषि तुभ्यं वयं 'दाशेम' प्रयच्छेम पूजायां बहुवचनम् किञ्च, तुभ्यम् 'इदं' 'नमः' हविर्नमस्कारं वा 'कत्' कदा, 'वोचे' अहं वदामि? 'उ' इति प्रश्ने। ऋषिः, 'कदा दास्यामि? कदा स्तोष्यामि?' इत्यग्निं पृच्छति। वोचे वचादेशस्य लुङ्यात्मनेपदे उत्तमैकवचने रूपम् ॥ २ ॥

१ २ २उ २ २ २ १ २ २ १ २ १ २
अधा त्वꣳहि नस्करो विश्वा अस्मभ्यꣳ सुक्षितीः।
१ २ २ १ २
वाजद्रविणसो गिरः ॥ * ३ * ॥ [६]

अथ तृतीया। हे अग्ने। 'अध' अथानन्तरं 'त्वं हि' हिरवधारणे त्वमेव 'अस्मभ्यम्' 'करः' कुरु देहीत्यर्थः। करोतेर्लेट्यडागमः। किमित्यपेक्षायामाह 'नः' अस्मदीयाः 'गिरः' त्वद्विषयाः 'विश्वाः' सर्वाः स्तुतीः एवं कुरु यथा 'सुक्षितीः' क्षियन्ति निवसन्त्यत्रेति, क्षितयो गृहाः शोभननिवासाः यद्वा क्षितयो मनुष्याः कल्याणपुत्रपौत्रयुक्ताः, तथा 'वाजद्रविणसः' अन्नयुक्ता धनवतीः अथवा वाजो दीप्तिः सर्वतो दीप्तधनाः कुरु। त्वमस्माभिः स्तुतः सन् गृहपुत्रान्नधनादीनि देहीत्यर्थः ॥ ३ ॥ [६]

२ ३ १ २ २ २ ३ १ २
अग्न आ याह्यग्निभिर्होतारं त्वा वृणीमहे ।
१ २र २ १२ ३ १
आ त्वामनक्तु प्रयता हवि-
२ ३ १२ ३ २३१२
ष्मती यजिष्ठं बर्हिरासदे ॥ * १ * ॥

ऋ० भर्ग. । छ० वृहती । दे० अग्निः । अग्न आयाहीति प्रगाथरूपे तृतीयसूक्ते, प्रथमा । हे "अग्ने ।" "अग्निभि" यष्टव्ये. सह "आ याहि" आगच्छ । तदर्थं "होतार" देवानामाह्वातारं "त्वा" त्वा "वृणीमहे" त्वामागत "प्रयता" अध्वर्युं हस्ताभ्या नियता "हविष्मती" घृतवती "यजिष्ठ" त्वा "बर्हि." बर्हिषि "आसदे" । आसाद्य च "अनक्तु" सिञ्चतु ॥ १ ॥

२ ३ १ २
अच्छा हि त्वा सहसः सूनो
१ २३ १२ ३२
अङ्गिरः स्रुचश्चरन्त्यध्वरे ।
३ १ २र ३१२ २
ऊर्जो नपात घृतकेशमीमहे-
१ ३१२ ३२
ऽग्निं यज्ञेषु पूर्व्यम् ॥ * २ * ॥ [७]

अथ द्वितीया । हे "सहस. सूनो" बलस्य पुत्र । बलेन मथ्यमानत्वात्, हे "अङ्गिर." । अङ्गिरसा मध्ये मुख्य ! अथवा अङ्गतिर्गतिकर्मा सर्वत्र गन्त ! "त्वा" त्वाम् "अध्वरे" यागे "अच्छ" अभिप्राप्तु "स्रुच" "चरन्ति" गच्छन्ति । अतः

"ऊर्जः" अन्नस्य "नपातं" न पातयितारं रक्षकं बलस्य वा नप्तारं "घृतकेशं" प्रदीप्तकेशं "पूर्व्यं" पुरातनं पूरकं वा "अग्निं" "यज्ञेषु" अस्मदीयेषु "ईमहे" स्तौमि ॥ २ ॥ [७]

१ २ १ २ १ २ २ १ २ १ २
अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम् ।
१ २ ३ २ ३ १ २ २
अच्छा यज्ञासो नमसा पुरू-
१ २ ३ २ ३ १ २
वसुं पुरुप्रशस्तमूतये ॥ * १ * ॥

ऋ० पुरुमीढ़ः। छ० प्रगाथः। दे० अग्निः। अच्छान इति प्रगाथात्मके चतुर्थसूक्ते तत्र प्रथमा। "अच्छ" अभिमुखं "यन्तु" गच्छन्तु "नः" अस्माकं "गिरः" स्तुतयः। कम्? "शीरशोचिषम्" अज्ञानशीलज्वालं "दर्शतम्" सर्वैर्दर्शनीयम् अग्निम्। तथा "यज्ञासः" यज्ञाश्च अस्मदीयाः "नमसा" हविषा आज्यादिलक्षणेन "अच्छ" अभिमुखं "यन्तु" गच्छन्तु। कीदृशम्? "पुरुवसुं" प्रभूतधनं "पुरुप्रशस्तं" बहुभिः सम्यक् स्तुतम्। किमर्थम्? "ऊतये" अस्माकं रक्षणाय ॥ १ ॥

१ २ ३ १ २२ २ १
अग्निꣳ सूनुꣳ सहसो जात-
२ ३ २ ३ १ २
वेदसं दानाय वार्य्याणाम् ।
३ २उ ३ २ ३ २ ३ १
द्विता यो भूदमृतो मर्त्येष्वा
२२ ३ १ २ ३ २
होता मन्द्रतमो विशि ॥ * २ * ॥ [८]

अथ द्वितीया। "यः" अग्निः "अमृतः" अमरणधर्मा देवेषु भवति, सः "मर्त्येषु आ" आकारश्चार्थे "मर्त्येषु" मनुष्येषु च "अभूत्" अभवत् इत्येवं "द्विता" द्वैधं भवति। देवेषु अप्यमृतत्वमस्य प्रसिद्धम्। मनुष्येषु कीदृशोऽभूत्? उच्यते "विक्षु" विट्सु यजमानरूपासु प्रजासु "होता" होमनिष्पादकः "मन्द्रतमः" मादयितृतमश्च भवति। तमच्छ यन्त्विति समन्वयः। अथवा "यः" अमृतः "द्विता" द्वित्वं द्वैधं द्विःप्रकारोऽभूत्। कथं मर्त्येषु सामान्येन दाहपाकादिसाधनोऽभवदित्येतत् प्रसिद्धम्। "विक्षु" यजमानरूपायां तु "होता" "मन्द्रतमश्च" अभवदित्येवं द्वित्वम्॥ २॥ [८]

इति सामवेदार्थप्रकाशे उत्तरार्चिकस्य पञ्चदशाध्यायस्य द्वितीयः खण्डः।

---

१ २      ३ २   ३ २   ३   १    २र

अदाभ्यः पुरएता विशामग्निर्मानुषीणाम्।

२ ३   १ २   ३ २    १ २

तूर्णी रथः सदा नवः॥ * १ *॥

ऋ० विश्वामित्रः। छ० गायत्री। दे० अग्निः। अथ तृतीयखण्डे—अदाभ्य इति तृचात्मके प्रथमे सूक्ते, प्रथमा। "मानुषीणां" मनोर्जातानां "विशां" प्रजानां "पुर एता" सन्मार्गप्रदर्शनेनाग्रतो गन्ता, अतएव "तूर्णीः" तूर्णिताः प्रजाः वैदिककर्मप्रवर्त्तनेनानुग्रहीतुं त्वरायुक्ताः आलस्यरहिताः "रथः" हविषां वहनाद्रथसदृशः "सदा" सर्वदा तत्कर्मणि "नवः" नूतनः पुनर्मन्थनादभिनवः, एवंविधोऽग्निः "अदाभ्यः" अहिंस्यः न केनापि तिरस्कार्य इत्यर्थः॥ १॥

२ १ २र २ १ २ २ १ २ २ १ २
अभि प्रयाꣳसि वाहसा दाश्वाꣳ अश्नोति मर्त्यः।
१ २ २ १ २
क्षयं पावकशोचिषः ॥ * २ * ॥

अथ द्वितीया। "दाश्वान्" हविषो दाता "मर्त्यः" मनुष्यः यजमानः "वाहसा" हविषां वाहकेनाग्निना "प्रयांसि" अन्नानि "अभि अश्नोति" अभितः सर्वतः प्राप्नोति। किञ्च "पावकशोचिषः" शोधकदीप्तेः अग्नेः सकाशात् "क्षयं" गृहं चाश्नोति ॥ २ ॥

२ १ २र २ १ २ १ २ ३ १ २ १ २
साह्वान् विश्वा अभियुजः क्रतुर्देवानाममृक्तः।
२ ३ १ १ २
अग्निस्तुविश्रवस्तमः ॥ * ३ * ॥ [८]

अथ तृतीया। "अभियुजः" अभियोक्त्रीः "विश्वाः" सेनाः "साह्वान्" सहमानः स्वबलेन तिरस्कुर्वाणः अतएव "अमृक्तः" शत्रुभिरहिंसितः "देवानां" "क्रतुः" कर्त्ता हविःप्रदानेन पोषकः। एवम्भूतः "अग्निः" "तुविश्रवस्तमः" तुविशब्दो बहुवाची (निघ० ३,१,२), श्रवःशब्दोऽन्नवाची ( निघ० २,७,८ ) अतिशयेन बहुविधान्नोपेतो वर्त्तते यस्मादेवं तस्मादस्मानपि बहुविधान्नोपेतान् करोत्विति भावः ॥ ३ ॥ [८]

२ १ २ २ १ २र १ २
भद्रो नो अग्निराहुतो भद्रा
२ १ २ २ १ २ ३ २
रातिः सुभग भद्रो अध्वरः।

अथ द्वितीया। "यः" अग्निः "अमृतः" अमरणधर्मा देवेषु भवति, सः "मर्त्त्येषु आ" आकारश्चार्थे "मर्त्त्येषु" मनुष्येषु च "अभूत्" अभवत् इत्येवं "द्विता" द्वैधं भवति। देवेषु अप्यमृतत्वमस्य प्रसिद्धम्। मनुष्येषु कीदृशोऽभूत्? उच्यते "विक्षि" विक्षु यजमानरूपासु प्रजासु "होता" होमनिष्पादकः "मन्द्रतमः" मादयितृतमश्च भवति। तमच्छ यन्तीति समन्वयः। अथवा "यः" अमृतः "द्विता" द्वित्वं द्वैधं द्विः प्रकारोऽभूत्। कथं मर्त्त्येषु सामान्येन दाहपाकादिसाधनोऽभवदित्येतत् प्रसिद्धम्। "विक्षि" यजमानरूपायां तु "होता" "मन्द्रतमश्च" अभवदित्येवं द्वित्वम्॥ २॥ [८]

इति सामवेदार्थप्रकाशे उत्तराचिकस्य पञ्चदशाध्यायस्य
द्वितीयः खण्डः।

---

१ २    ३ २    ३ २ ३ १    २र
अदाभ्यः पुरएता विशामग्निर्मानुषीणाम्।
२ ३ २३ २ ३ ३ १
तूर्णी रथः सदा नवः॥ * १ *॥

ऋ० विश्वामित्रः। छ० गायत्री। दे० अग्निः। अथ तृतीयखण्डे—अदाभ्य इति तृचात्मके प्रथमे सूक्ते, प्रथमा। "मानुषीणां" मनोर्जातानां "विशां" प्रजानां "पुर एता" सन्मार्गप्रदर्शनेनानाग्रतो गन्ता, अतएव "तूर्णीः" तूर्णिताः प्रजाः वैदिककर्मप्रवर्त्तनेनानुपश्चीत् त्वरायुक्ताः आलस्यरहिताः "रथः" हविषां वहनाद्रथसदृशः "सदा" सर्वदा तत्कर्मणि "नवः" नूतनः पुनर्मन्थनादभिनवः, एवंविधोऽग्निः "अदाभ्यः" अहिंस्यः न केनापि तिरस्कार्य्य इत्यर्थः॥ १॥

२ १ २र १ १ २ २ १ २ २ १ २
अभि प्रयाꣳसि वाहसा दाश्वाꣳ अश्नोति मर्त्यः।
१२ २ १ २
क्षयं पावकशोचिषः ॥ * २ * ॥

अथ द्वितीया। "दाश्वान्" हविषां दाता "मर्त्यः" मनुष्यः यजमानः "वाहसा" हविषां वाहकेनाग्निना "प्रयांसि" अन्नानि "अभि अश्नोति" अभितः सर्वतः प्राप्नोति। किञ्च "पावकशोचिषः" शोधकदीप्तेः अग्नेः सकाशात् "क्षयं" गृहञ्चाप्नोति ॥ २ ॥

१ १ २र १२१ १२११२ १ १
साह्वान् विश्वा अभियुजः क्रतुर्देवानामम्रृक्तः।
१ २ १ १ २
अग्निस्तुविश्रवस्तमः ॥ * ३ * ॥ [८]

अथ तृतीया। "अभियुजः" अभियोक्त्रीः "विश्वाः" सेनाः "साह्वान्" सहमानः स्वबलेन तिरस्कुर्वाणः अतएव "अम्रृक्तः" शत्रुभिरहिंसितः "देवानां" "क्रतुः" कर्त्ता हविःप्रदानेन पोषकः। एवम्भूतः "अग्निः" "तुविश्रवस्तमः" तुविशब्दो बहुवाची (निघ० ३,१,२), श्रवःशब्दोऽन्नवाची (निघ० २,७,८) अतिशयेन बहुविधान्नोपेतो वर्त्तते यस्मादेवं तस्मादस्मानपि बहुविधान्नोपेतान् करोत्विति भावः॥ ३ ॥ [८]

२ १ २ ३ १ २र ३२
भद्रो नो अग्निराहुतो भद्रा
२ १ २ ३ १ २३२
रातिः सुभग भद्रो अध्वरः।

२ २ १ १ १र
भद्रा उत प्रशस्तयः ॥ * १ * ॥

ऋ० सोभरिः प्रयोगः वा। छ० ककुप्। दे० अग्निः। अथ भद्रोनो अग्निराहुत इति प्रगाथात्मके द्वितीयसूक्ते, सैषा प्रथमा। "आहुतः" हविर्भिस्तर्पितः "अग्निः" "नः" अस्माकं "भद्रः" कल्याणः भवतु। हे "सुभग"। शोभनधनाग्ने! "भद्रा" कल्याणी "रातिः" दानं चास्माकं भवतु। "भद्रः" कल्याणः "अध्वरः" यागश्च भवतु। "उत" अपिच "भद्राः" कल्याण्यः "प्रशस्तयः" प्रशंसाः स्तुतयश्च भवन्तु ॥ १ ॥

२ १ २र १ २ ३ १ २ २ १ २ १ २
भद्रं मनः कृणुष्व वृत्रतूर्य्ये येना समत्सु सासहिः।
१ २ २ १ २ ३ २ ३ १ २
अव स्थिरा तनुहि भूरि शर्द्धतां
३ १ २ ३ १ २
वनेमा ते अभिष्टये ॥ * २ * ॥ [१०]

अथ द्वितीया। हे "अग्ने!" "वृत्रतूर्य्ये" सङ्ग्रामे "भद्रं" शोभनं "मनः" "कृणुष्व" अस्माकं कुरु। "येन" मनसा त्वं 'समत्सु' सङ्ग्रामेषु "सासहिः" भृशं शत्रूनभिभवसि। अपिच "शर्द्धताम्" अभिभवतां शत्रूणां "भूरि" भूरीणि बहूनि "स्थिरा" स्थिराणि दृढान्यपि बलानि "अव तनुहि" अवाञ्चि कुरु। पराजितानि कुर्वित्यर्थः वयञ्च "अभिष्टिभिः" अन्वेषणसाधनैः हविर्भिः स्तोत्रैश्च "ते" त्वां "वनेम" सम्भजेमहि यद्वा, "ते" तव प्रसादात् अभिष्टिभिः अभीष्टैः फलैः "वनेम" सङ्गच्छेमहि ॥ २ ॥ [१०]

१ ३ १ २ ३ १ २ ३ १ २
अग्ने वाजस्य गोमत ईशानः सहसो यहो।
३ १ २ ३ २ ३ १ २
अस्मे देहि जातवेदो महि श्रवः॥ * १ *॥

ऋ० गोतमः। छ० उष्णिक्। दे० अग्निः। अथ अग्ने वाजस्येति तृतीयऋचे, प्रथमा। हे "सहसः यहो" बलस्य पुत्र! "अग्ने!" "गोमतः बहुभिर्गोभिर्युक्तस्य" "वाजस्य" अन्नस्य "ईशानः" ईश्वरस्त्वमसि। अतः "अस्मे" अस्मासु हे "जातवेदः" ! जातधन! जातानां वेदितो वाग्ने! "महि" प्रभूतं "श्रवः" अन्नं "देहि" प्रयच्छ। सहसोयहो पराङ्गवद्भावात् "आमन्त्रितस्य च (८,१,१९)" इति षष्ठ्या-मन्त्रितसमुदायो निहन्यते। अस्मे सुपां सुलुक् (७,१,३९) इति सप्तम्याः शे आदेशः॥ १॥

३ १ २ ३ १ २३ १ २ ३ १ ३ १ २ ३ २
स इधानो वसुष्कविरग्निरीडेन्यो गिरा।
१ २ ३ १ २
रेवदस्मभ्यं पुर्वणीक दीदिहि॥ * २ *॥

अथ द्वितीया। "सः" अग्निः "इधानः" दीपनशीलः "वसुः" निवासयिता सर्वेषां, "कविः" क्रान्तदर्शनः मेधावी वा "गिरा" स्तोत्ररूपया वाचा "ईडेन्यः" स्तोतव्यो भवति हे "पुर्वणीक" अनीकं मुखं पुरुभिः बह्वीभिः अनीकस्थानीयाभिः ज्वालाभिः युक्ताग्ने! "अस्मभ्यं" "रेवत्" धनयुक्तमन्नं यथा भवति तथा "दीदिहि" दीप्यस्व इन्धीति छान्दसो दीप्तिकर्मा॥ २॥

२ १ २ १ २उ १ १ २ ३ १ २र
क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः ।
१ २ २ १ २ १ १ २
स तिग्मजम्भ रक्षसो दह प्रति ॥ * ३ * ॥ [११]

अथ तृतीया। हे "राजन्"! राजमान! "अग्ने"! "क्षपः" क्षपय राक्षसादीन् स्वकीयैः पुरुषैर्बाधस्व। "उत" अपिच "त्मना" न केवलमन्यैरेव आत्मना च तान् बाधस्व। कदा? इति चेत्, उच्यते "वस्तोः" सर्वाण्यहानि "उत" अपिच "उषसः" उषः कालोपलक्षिता रात्रीश्च। अत्यन्तसंयोगे द्वितीया (२,३,४)। सर्वेष्वहःसु सर्वासु रात्रिषु चेत्यर्थः। "हे तिग्मजम्भ"! तीक्ष्णमुखाग्ने! "रक्षसः" राक्षसान् उक्तप्रकारेण क्षपयित्वा स एव त्वं "प्रति दह" प्रत्येकं दह दह न किञ्चिदप्यद्ग्धमित्युदास्तेत्यर्थः॥ ३॥ [११]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चदशाध्यायस्य
तृतीयः खण्डः।

---

१ २ २ १ १ २ १ २ २ २
विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम्।
१ २ २ २ ३ १ २ १ २ ३ १ ३ १ २
अग्निं वो दुर्य्यं वच स्तुषे शूषस्य मन्मभिः ॥ * १ * ॥

ऋ० गोपवनः वा सप्तवध्रिः। छ० अनुष्टुप्। दे० अग्निः। अथ चतुर्थ खण्डे—विशोविशोवो अतिथिमिति तृचात्मके प्रथमे सूक्ते, प्रथमा। हे ऋत्विजो! यजमानाय "वः" यूयं "वाजयन्तः" अन्नमिच्छन्तः "विशः विशः" सर्वस्याः प्रजायाः "अतिथिं" पूज्यं

"पुरुप्रियं" बहुप्रियम् "अग्निं" स्तुत्वा परिचरतीति शेषः। अहश्च "वः" युष्मदर्थं "दुर्य्यं" गृहाद्धितम् अग्निं "वचः" अनु 'स्तुषे' स्तौमि 'शूषस्य' बलस्य लाभार्थकैः साधनैः 'मन्मभिः' मननीयैः स्तोत्रैः ॥ १ ॥

१ २र २ १ २ ३ २उ ३ १ २
यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम्।
२१ २ ३ १ २
प्रशंꣳसन्ति प्रशस्तिभिः ॥ * २ * ॥

अथ द्वितीया। 'यम्' अग्निं 'जनासः' जनाः यजमानाः 'हविष्मन्तः' सन्तः 'मित्रं न' मित्रमिव आदित्यमिव सखायमिव वा 'सर्पिरासुतिं' सर्पिरासूयते हूयते यस्मिन् तादृशं 'प्रशंसन्ति' स्तुवन्ति 'प्रशस्तिभिः' ॥ २ ॥

१ २ ३ १ २ ३ २ ३२३ १ २
पन्याꣳसं जातवेदसं यो देवतात्युद्यता।
३ १ २र ३ २
हव्यान्यैरयद्दिवि ॥ * ३ * ॥ [१२]

अथ तृतीया। 'पन्यांसम्' अतिशयेन स्तोतारं साधु जतमिति यजमानं स्तुवन्तं 'जातवेदसं' जातधनं जातविद्यं वा स्तुम इति वाक्यशेषः। 'यः' अग्निः 'देवताति' देवताती यज्ञे 'उद्यता' उद्यतानि 'हव्यानि' हवींषि 'दिवि' 'ऐरयत्' प्रेरयति दिवि देवेभ्यः॥ ३ ॥ [१२]

१ २ ३ २ ३ १ २ ३१ २१
समिद्धमग्निꣳ समिधा गिरा गृणे
१ २ ३२ ३१ २ ३ २ ३२
शुचिं पावकं पुरो अध्वरे ध्रुवम्।

२ ३ १ २ ३ १ २ ३ १ २
विप्रꣳ होतारं पुरुवारमद्रुहं
३ २ ३ १ २ ३ १ २
कविꣳ सुम्नैरीमहे जातवेदसम् ॥ * १ * ॥

ऋ० भरद्वाजः वीतहव्यः वा। छ० जगती। दे० वैश्वानरः। अथ द्वितीयऋचे, प्रथमा। 'समिद्धं' सम्यग्दीप्तम् 'अग्निं' 'समिधा' समिन्धनहेतुभूतया 'गिरा' स्तुत्या 'गृणे' अहं स्तौमि यद्वा, 'समिधा' समिद्भिर्दारुभिः 'समिद्ध' सम्यक् दीप्तम्। अपिच 'शुचिं' स्वयं शुद्धं 'पावकं' सर्वेषां शोधकं 'ध्रुवं' निश्चलं तमग्निम् 'अध्वरे' यज्ञे 'पुरः' करोमीति शेषः। तथा 'विप्रं' मेधाविनं 'होतारं' देवानामाह्वातारं 'पुरुवारं' बहुभिर्वरणीयम् 'अद्रुहम्' अद्रोग्धारं सर्वेषामनुकूलं 'कविं' क्रान्तदर्शनं 'जातवेदसं' जातानां वेदितारमग्निं 'सुम्नैः' सुखकरैः स्तोत्रैः 'ईमहे' सम्भजामहे यद्वा, द्वितीयार्थे तृतीया (३,१,८५) सुम्नानि धनानि, ईमहे याचामह इति ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ १ २
त्वां दूतमग्ने अमृतं युगेयुगे
३ १ २ ३ १ २र
हव्यवाहं दधिरे पायुमीड्यम्।
३ १ ३ ३ १ २ ३ १ २ १ २
देवासश्च मर्त्तासश्च जागृविं विभुं
३ २ ३ १ २ ३ १ २
विश्पतिं नमसा नि षेदिरे ॥ * २ * ॥

अथ द्वितीया। हे 'अग्ने!' 'त्वां' 'देवासः' देवाश्च 'मर्त्तासः' मनुष्याश्च 'दूतं' 'दधिरे' विदधिरे कृतवन्तः। कीदृशं त्वाम्? 'अमृतम्' अमरणम्, 'युगे युगे' काले काले

तच्चयागानुष्ठानसमये 'हव्यवाहं' हविषां हव्यानां वोढारं 'पायुं' पालयितारम् 'ईड्यं' स्तुत्यम्। अपिच ते उभयविधाः 'जागृविं' जागरणशीलं 'विभुं' व्याप्तं विश्पतिं विशां प्रजानां पालयितारम् अग्निं 'नमसा' हविर्लक्षणेनान्नेन नमस्कारेण वा 'निषेदिरे' उपसेदिरे॥ २॥

१ ३१ २ ३ १ १ २ ३ १
विभूषन्नग्न उभयाꣳ अनु व्रता

२ १ ३ १ २ २ १ २ ३ १ २
दूतो देवानाꣳ रजसी समीयसे।

१ २ ३ १ २ ३ १ २ ३ १
यत्ते धीतिꣳ सुमतिमावृणीमहे-

२र २ ३ १ २ ३ १ २
ऽधस्मानस्त्रिवरूथः शिवो भव॥ * २ *॥ [१२]

अथ तृतीया। हे 'अग्ने!' उभयान् 'उभयविधान्' देवान् मनुष्यांश्च 'विभूषन्' अलङ्कुर्वन् त्वम् 'अनुव्रता' व्रतान्यनु 'व्रतेषु' कर्मसु यागेषु 'देवानां' 'दूतः' सन् 'रजसी' द्यावापृथिव्यौ 'समीयसे' सञ्चरसि देवानानेतुं द्युलोकं गच्छसि हवींषि च नेतुमिमं लोकम्। किञ्च 'यत्' यस्मात् 'ते' तुभ्यं त्वदर्थं 'धीतिं' कर्म, 'सुमतिं' 'शोभनां स्तुतिं च आवृणीमहे' वयं सम्भजामहे। 'अध' अतः कारणात् 'त्रिवरूथः' त्रिस्थानस्त्वं 'नः' अस्माकं 'शिवः' सुखकरः 'भव' 'स्य' इति पादपूरणम्॥ २॥ [१२]

१२ ३ २ ३ २ ३ १ २ ३ १ २
उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः।

२ १ २र
वायोरनीके अस्थिरन् ॥ * १ * ॥

ऋ० प्रयोगः, अग्निः, यविष्ठः। छ० गायत्री। दे० अग्निः। अथ तृतीयसूक्ते, प्रथमा। हे अग्ने! 'हविष्कृतः' यजमानार्थं 'गिरः' स्तुतयः 'जामयः' स्वसार इव 'रेरिशतीः' तव गुणान् दिशन्त्यः 'त्वा' त्वाम् 'उप अस्थिरन्' उपतिष्ठन्ते 'वायोरनीके' समीपे त्वां समेधयन्त्यः अस्थिरंश्च ॥ १ ॥

१ २ ३ १ २र ३ २ ३ १ २र
यस्य त्रिधात्ववृतं बर्हिस्तस्थावसन्दिनम्।

१ २ ३ १ २ ३ २
आपश्चिन्नि दधा पदम् ॥ * २ * ॥

अथ द्वितीया। "यस्य" अग्नेः "त्रिधातु" त्रिपर्व "अवृतम्" अनावृतं च "असन्दिनम्" अबद्धञ्च स्तरणकाले बर्हिः स्वयं भवति "बर्हिः" "तस्थौ" आसदनार्थं तिष्ठति। तस्मिन् अग्नौ 'आपः चित्' आपोऽपि 'पद' 'निदध' निदधति। आन्तरिक्षा माध्यमिके पदं निदधतीत्यर्थः ॥ २ ॥

३२ ३१२ ३ १ २र २ ३ २
पदं देवस्य मीढुषोऽनाधृष्टाभिरूतिभिः।

३ १ २र ३ २
भद्रा सूर्य्य इवोपदृक् ॥ * ३ * ॥ [१४]

इति सप्तमप्रपाठकस्य द्वितीयार्द्धम्।

---

अथ तृतीया। "मीढुषः" कामानां सेक्तुः "देवस्य" द्योतमानस्याग्नेः पदं स्थानं अनाधृष्टाभिः अबाधिताभिः "ऊतिभिः"

रश्मिभिः भजनीयं भजतीत्यर्थः । तथैवास्य "उप दृक्" उपदृष्टिरपि "सूर्ये इव" यथा सूर्य्यः तद्वत् "भद्रा" मनुष्यैर्भजनीया भवति ॥ ३ ॥ [१४]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चदशाध्यायस्य चतुर्थः खण्डः ।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक श्रीवीरबुक्कभूपालसाम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे पञ्चदशोऽध्यायः ।

---

## अथ षोड़शोऽध्याय आरभ्यते ।

सप्तमप्रपाठकस्य तृतीयार्द्धम् ।

१ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः ।
३ १ २ ३ ३ १ ३ १ २
समीचीनास ऋभवः सम-
२ १ २ ३ २
स्वरन् रुद्रा गृणन्त पूर्व्यम् ॥ * १ * ॥

ऋ० मेधातिथिः । छ० बृहती । दे० इन्द्रः । तत्र प्रथमे खण्डे—अभित्वापूर्वपीतय इति प्रगाथात्मकं प्रथमं सूक्तम्, तत्र प्रथमा । हे "इन्द्र !" "आयवः" मनुष्याः स्तोतारः "स्तोमेभिः" स्तोत्रैः "त्वा" त्वाम् अभिष्टुवन्ति । किमर्थम् ? "पूर्वपीतये" सर्वेभ्यो देवेभ्यः पूर्वं प्रथमतएव सोमस्य पीतये पानाय सवन-मुखे हि चमसगणैः इन्द्रस्यैव सोमो हूयते तथा "समीचीनासः" सङ्गताः "ऋभवः" प्रथमवाचकेन शब्देन तयोऽप्युपलक्ष्यन्ते ऋभुर्विभ्वावाज इत्येते "समस्वरन्" त्वामिव

सम्यगस्तुवन् खुशब्दोपतापयोः (भ्वा० प०) "रुद्राः" रुद्र-पुत्राः मरुतश्च "पूर्व्यम्" पुरातनं वृद्धं त्वामिव "रणन्त" शब्दं स्तुवन् वृत्रवधसमये 'प्रहर भगवो जहि वीरयस्व'—इत्येवं रूपया वाचा त्वां स्तुतवन्त इत्यर्थः ॥ १ ॥

१ १ २र ३ २ ३
अस्येदिन्द्रो वावृधे वृष्ण्यं

३ २ १ २ ३ २३ १ २
शवो मदे सुतस्य विष्णवि ।

३ १ २र ३१ २ ३
अद्या तमस्य महिमानमा-

१ २र ३१ २
यवोऽनु ष्टुवन्ति पूर्वथा ॥ * २ * ॥ [१]

अथ द्वितीया। "अस्येत्" अस्यैव यजमानस्य "वृष्ण्यं" वृषत्वं वीर्य्यं "शवः" बलं च "इन्द्रः" "वावृधे" वर्द्धयति। 'सुतस्य' अभिसुतस्य सोमस्य पानेन 'विष्णवि' सकलदेहस्य व्यापके 'मदे' हर्षे सति तस्यैव यजमानस्य बलं वर्द्धयतीत्यर्थः। 'अद्य' अस्मिन् काले 'अस्य' इन्द्रस्य 'तम्' उक्त-गुणं 'महिमानं' महत्त्वम् 'आयवः' मनुष्याः 'अनुष्टुवन्ति' आनुपूर्व्येण स्तुवन्ति, 'पूर्वथा' पूर्वशब्दादिवार्थे 'प्रत्न पूर्व (४,३,१११) इत्यादिना थाल्प्रत्ययः यथा पूर्वस्मिन् काले अस्तुवन् एवमिदानीमपि तेनैव क्रमेण स्तुवन्तीत्यर्थः ॥२॥ [१]

१ २ ३ १ २ ३ १ २ ३ १ २
प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः ।

१ २ ३ ३१ १ २
इन्द्राग्नी इष आ वृणे ॥ * १ * ॥

ऋ०. विश्वामित्रः । छ० गायत्री । दे० अग्निः ।- प्रवासं-चेन्द्युक्थिन इति चतुर्ऋचं द्वितीयं सूक्तम्, तत्र प्रथमा । हे "इन्द्राग्नी !" "उकथिनः" उक्थं यस्य तद्वन्तः शस्त्रिणः होत्रादयः "वां" युवां प्रार्चन्ति—इह कर्मणि स्तुतिरूपाभि-र्वाग्भिः पूजयन्ति । तथा 'नीथाविदः' स्तोत्राभिज्ञाः साम-गानकुशलाः 'जरितारः' स्तोतारः उद्गात्रादयः अभिलषित-फलावाप्तये युवामर्चन्ति । अहमपि 'इषः' अन्नस्य लाभार्थम् "इन्द्राग्नी" युवाम् 'आ वृणे' सर्वतः सम्भजे पूजयामी-त्यर्थः ॥ १ ॥

१ २    २ १   १२ १   १ २
इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् ।
३ १   १२ १   १ २
साकमेकेन कर्मणा ॥ * २ * ॥

अथ द्वितीया । हे 'इन्द्राग्नी !' "दासपत्नीः" दास-यन्ति उपचयन्तीति दासाः उपचयितारः शत्रवः, ते पतयः पालकाः यासां ता दासपत्नीः "नवतिं" नवतिसङ्ख्याकाः "पुरः" एवंविधाः शत्रुपुरीः "एकेन कर्मणा" एकेनैवोद्योगेन युवां "साकं" सह युगपत् "अधूनुतम्" अकम्पयतं, ताविन्द्राग्नी आह्वयामीति शेषः ॥ २ ॥

१ २   ३   १ २ ३ १ र   ३ १ २    ३ १ २
इन्द्राग्नी अपसस्पर्य्युप प्र यन्ति धीतयः ।
१ ३ १ २   ३ २    १ २
ऋतस्य पथ्या३ अनु ॥ * ३ * ॥

अथ-तृतीया । हे "इन्द्राग्नी !" "धीतयः" सोमस्य

धातारः पातारो होत्रादयः 'ऋतस्य' कर्मफलस्य 'पथ्याः' पथः मार्गान् 'अनु' लक्ष्यीकृत्य 'अपसः' अस्माभिः क्रियमाणस्य कर्मणः 'परि' सर्वतः 'उप प्रयन्ति' समीपे 'प्रकर्षेण' वर्त्तन्ते। अतः सोमपानार्थं युवामागच्छतमिति भावः यद्वा, 'धीतयः' स्तुतयः 'ऋतस्य' यज्ञस्य 'पथः' मार्गान् 'अनु' लक्ष्यीकृत्य 'अपसः' कर्मणः 'परि' परितः 'उप प्रयन्ति' प्रवर्त्तन्ते, अतः स्तोतव्यतया युवामागच्छतामिति ॥ ३ ॥

१ २ २ १ २ २ १ २ ३ १ २
इन्द्राग्नी तविषाणि वाᳬ सधस्थानि प्रयाᳬसि च

१२ ३ १ २ १ २
युवोरप्तूर्यᳬ हितम् ॥ * ४ * ॥ [२]

अथ चतुर्थी। हे इन्द्राग्नी! 'वां' युवयोः 'तविषाणि' बलानि 'प्रयांसि' अन्नानि 'च' 'सधस्थानि' सहस्थितानि परस्परमवियुज्य वर्त्तन्ते। तथा 'अप्तूर्यं' वृष्टिधारायाः प्रेरकत्वं "युवोः" युवयोरेव "हितं" निहितं वर्त्तते तस्मात् सोमपानप्रभृतिषु सर्व-कर्मसु इन्द्राग्न्योः सहैव वर्त्तनमिति भावः सधस्थानि—ष्ठा गति-निवृत्तौ च (भ्वा० प०) 'आतोऽनुपसर्गे कः (३,२,३)' 'सधमादस्थयोश्छन्दसि (६,३,८६)—इति सहस्य सधादेशः ॥ ४ ॥ [२]

१ २ १ २ ३ २ ३ १ २ ३ १ २
शग्ध्यू३ षु शचीपत इन्द्र विश्वाभिरूतिभिः।

२ ३
भ...

ऋ० भर्गः। छ० हहती। दे० इन्द्रः। अथ शग्ध्यूष्विति प्रगाथात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे "शचीपते!" "इन्द्र!" "शग्धि" "विश्वाभिः" सर्वाभिः "ऊतिभिः" मरुद्भिः सह। हे "शूर! हे वीर! "भगं न" भाग्यमिव "यशसं" यशस्विनं "वसुविदं" धनस्य लम्भकं "त्वा" त्वाम् "अनुचरामसि" अनुचरामः परिचराम इत्यर्थः॥ १॥

१ १ २२ २ १ २२
पौरो अश्वस्य पुरुकृद्गवा-
१ १ २ २ १ २
मस्युत्सो देव हिरण्ययः।
२ १ १ २२ १ १ २
न किर्हि दानं परि मर्धि-
१ २उ १ २ २ १ २२
षत्वे यद्यद्यामि तदा भर॥ * २ *॥ [३]

अथ द्वितीया। हे इन्द्र! त्वम् 'अश्वस्य' 'पौरः' पूरयिता "असि" भवसि। तथा गवां 'पुरुकृत्' बहुकर्त्तासि। हे 'देव'! 'हिरण्ययः' हिरण्मयशरीरस्त्वम् 'उत्स' उत्सवद्दश्योऽसि। हे इन्द्र! 'त्वे' त्वयि वर्त्तमानं 'दानम्' अस्मद्विषयम्, देयं धनं वा 'न किर् हि परि मर्धिषत्' न कश्चित् हिनस्ति। अतो 'यद् यद् यामि' याचे, तत्तत् 'आभर' आहर मह्यम्॥ २॥ [३]

२उ १ १ २ ३ २उ २ १ २
त्वᳪ ह्येहि चेरवे विदा भगं वसुत्तये।
१ २ २ १ २
उद्वावृषस्व मघवन् गवि-

धातारः पातारो होत्रादयः 'ऋतस्य' कर्मफलस्य 'पथ्याः' पथः मार्गान् 'अनु' लक्षीकृत्य 'अपसः' अस्माभिः क्रियमाणस्य कर्मणः 'परि' सर्वतः 'उप प्रयन्ति' समीपे 'प्रकर्षेण' वर्त्तन्ते। अतः सोमपानार्थं युवामागच्छतमिति भावः यद्वा, 'धीतयः' स्तुतयः 'ऋतस्य' यज्ञस्य 'पथः' मार्गान् 'अनु' लक्षीकृत्य 'अपसः' कर्मणः 'परि' परितः 'उप प्रयन्ति' प्रवर्त्तन्ते, अतः स्तोतव्यतया युवामागच्छतामिति ॥ ३ ॥

१ २ १ १ २ २ १ २ २ १ २
इन्द्राग्नी तविषाणि वाᳬ सधस्थानि प्रयाᳬसि च

१ २ ३ १ २ २ २
युवोरप्तूर्यᳬ हितम् ॥ * ४ * ॥ [२]

अथ चतुर्थी। हे इन्द्राग्नी! 'वां' युवयोः 'तविषाणि' बलानि 'प्रयांसि अन्नानि 'च' 'सधस्थानि' सहस्थितानि परस्परमवियुज्य वर्त्तन्ते। तथा 'अप्तूर्यं वृष्टिधारायाः प्रेरकत्वं "युवोः" युवयोरेव "हितं" निहितं वर्त्तन्ते तस्मात् सोमपानप्रभृतिषु सर्व-कर्मसु इन्द्राग्न्योः सहैव वर्त्तनमिति भावः सधस्थानि—ष्ठा गति-निवृत्तौ च (भ्वा० प०) 'आतोऽनुपसर्गे कः (३,२,३)' 'सधमादस्थयोश्छन्दसि (६,३,९६)—इति सहस्य सधादेशः ॥ ४ ॥ [२]

१ २ १ २ २ २ ३ १ २ २ १ २
शग्ध्यू३ षु शचीपत इन्द्र विश्वाभिरूतिभिः।

२ ३ १ २२ ३ १ २ २
भगं न हि त्वा यशसं वसु-

१ २ १ २ १ १ २
विदमनु शूर चरामसि ॥ * १ * ॥

ऋ० भर्गः। छ० वृहती। दे० इन्द्रः। अथ शग्ध्युषुविति प्रगाथात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे "शचीपते!" "इन्द्र!" "शग्धि" "विश्वाभिः" सर्वाभिः "ऊतिभिः" मरुद्भिः सह। हे "शूर! हे वीर! "भगं न" भाग्यमिव "यशसं" यशस्विनं "वसुविदं" धनस्य लम्भकं "त्वा" त्वाम् "अनुचरामसि" अनुचरामः परिचराम इत्यर्थः॥ १॥

१ १ २र. १ १ २र
पौरो अश्वस्य पुरुकृद्गवा-
१ १ २ १ १ २
मस्युत्सो देव हिरण्ययः।
२ ३ १ २र ३ १ २
न किर्हि दानं परि मर्धि-
३ २उ १ २ ३ १ २र
षत्वे यद्यद्यामि तदा भर॥ * २ *॥ [२]

अथ द्वितीया। हे इन्द्र! त्वम् 'अश्वस्य' 'पौरः' पूरयिता "असि" भवसि। तथा गवां 'पुरुकृत्' बहुकर्त्तासि। हे 'देव'! 'हिरण्ययः' हिरण्मयशरीरस्त्वम् 'उत्स' उत्सइवयोऽसि। हे इन्द्र! 'त्वे' त्वयि वर्त्तमाने 'दानम्' अस्मद्विषयम्, देयं धनं वा 'न किर् हि परि मर्धिषत्' न कश्चित् हिनस्ति। अतो 'यद् यद् यामि' याचे, तत्तत् 'आभर' आहर मह्यम्॥ २॥ [२]

२उ ३ १ २ ३ २उ ३ २ २
त्वᳫ० ह्येहि चेरवे विदा भगं वसुत्तये।
१ २ ३ १ २
उद्वावृषस्व मघवन् गवि-

२ २३ १ २
इय उदिन्द्राश्वमिष्टये ॥ * १ * ॥

ऋ० भर्गः। छ० बृहती। दे० अग्निः। अथ त्वं ह्येहि चेरव इति प्रगाथात्मकं चतुर्थं सूक्तम्; तत्र प्रथमा। हे 'इन्द्र!' 'त्वं हि' त्वं खलु सामर्थ्याद्दातेति गम्यते। अतः 'एहि' आगच्छ। आगत्य च अस्मभ्यं 'भर्ग' भजनीयं धनं 'विदाः' लभस्व दत्स्व। किमर्थम्? 'वसुत्तये' अस्माकं वसुदानाय। हे 'मघवन्' धनवन्! 'गविष्टये' गा इच्छते मह्यं 'उद्वावृषस्व' उत्सिञ्चस्व गा इति शेषः। तथा हे इन्द्र! 'अश्वमिष्टये' अश्वेषणवते मह्यम् अश्वान् उद्वावृषस्व उत्सिञ्चस्व देहि ॥ १ ॥

२ १ २ २१२ २ १ २
त्वं पुरू सहस्राणि शतानि
२ १ १ १ २
च यूथा दानाय मंहसे।
१ २ १ १ २ २ १ २
आ पुरन्दरं चकृम विप्र-
१ २ २ २१ १ २
वचस इन्द्रं गायन्तोऽवसे ॥ * २ * ॥ [४]

अथ द्वितीया। हे इन्द्र! त्वं 'पुरु' पुरूणि बहूनि सहस्राणि शतानि च' 'यूथा' गवादियूथानि 'दानाय' यजमानविषयाय 'मंहसे' अनुमन्यसे यद्वा, दानाय दात्रे यजमानाय मंहसे प्रयच्छसि। मंहतिर्दानकर्मा (निघ० ३, २०, १०) अथ परोक्षेण ब्रवीति—'पुरन्दरं' शत्रुपुराणां दारयितारम् 'इन्द्रम्' 'अवसे' रक्षणाय तर्पणाय वा 'गाय-

न्तः' स्तुवन्तः विप्रवचसः' विविधप्रकृष्टवचना वयम् 'घा' आगन्तारम् अभिमुखं वा 'चक्रम' कुर्मः ॥२॥ [४]

२उ   २   १२३ १२   १ २   ३१   २र
यो विश्वा दयते वसु होता मन्द्रो जनानाम्।
 १ २ १    २र   ३ १
मधोर्न पात्रा प्रथमान्
 २ १   १   २र   ३ १ २
यस्मै प्र स्तोमा यन्त्वग्नये ॥ * १ * ॥

ऋ० सौभरिः। छ० वृहती। दे० अग्निः। अथ योविश्वेति प्रगाथात्मकं पञ्चमं सूक्तम्, तत्र प्रथमा। 'होता' देवानामाह्वाता 'मन्द्रः' मोदयिता 'यः' अग्निः 'विश्वा' सर्वाणि 'वसु' वसूनि धनानि 'जनानां' जनेभ्यः 'दयते' प्रयच्छति, तस्मै 'अग्नये' 'मधोः' मदकरस्य सोमस्येव 'प्रथमानि' मुख्यानि 'पात्रा' पात्राणि 'स्तोमाः' 'प्रयन्तु' प्रगच्छन्तु ॥१॥

१ २ २   ३ १ २३क २र   ३ १ २   २ १ २   ३ १ २
अश्वं न गीर्भी रथ्यꣳ सुदानवो मर्मृज्यन्ते देवयवः।
 १ २ ३ १   २र   २
उभे तोके तनये दस्म विश्पते
 ३ २ १ २ ३ १ २
पर्षि राधो मघोनाम् ॥ * २ * ॥ [५]

अथ द्वितीया। हे 'दस्म'! दर्शनीय! 'विश्पते'! विशां पते! अग्ने! यं त्वां 'सुदानवः' शोभनदानाः 'देवयवः' देवानात्मन इच्छन्तो यजमानाः 'रथ्यं' रथस्य वोढारम् 'अश्वं नः' अश्वमिव 'गीर्भिः' स्तुतिभिः 'मर्मृज्यन्ते' परिचरन्ति स त्वम्

अस्माकं यजमानानां 'तोके' पुत्रे 'तनये' पौत्रे च 'उभे' उभयस्मिन् 'मघोनां' धनवतां 'राधः' धनं 'पर्षि' प्रयच्छ ॥२॥ [५]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षोडशाध्यायस्य
प्रथमः खण्डः ॥ १ ॥

---

२ १ . २                    २    १ २ २ १    २
इमं मे वरुण श्रुधी हवमद्या च मृड़य ।
१ . २ २ १        २र
त्वामवस्युरा चके ॥ * १ * ॥ [६]

ऋ० शुनःशेपः । छ० गायत्री । दे० वरुणः । अथ द्वितीयखण्डे—इममो वरुणेत्येकर्चं प्रथमं सूक्तम्, सा ऋगीया । हे 'वरुण !' 'मे' मदीयम् 'इमं' 'हवम्' आह्वानं 'श्रुधि' शृणु 'श्रु श्रवणे (भ्वा० प०), लोटो हिः, 'श्रु-शृ-णु-पॄ-कृ-वृभ्यश्छन्दसि (६, ४, १०२)'—इति हेर्धिरादेशः, 'बहुलं छन्दसि (२, ४, ७३)'—इति विकरणस्य लुक् 'अन्येषामपि दृश्यते (६, ३, १३६ वा०)'—इति संहितायां दीर्घः। किञ्च 'अद्य' अस्मिन् दिने 'मृडय' अस्मान् सुखय 'अवस्युः' रक्षणेच्छुः अवस्-शब्दात् 'सुप आत्मनः क्यच् (३, १, ८)', 'क्याच्छन्दसि (३, २, १७०)'—इति उ-प्रत्ययः एवंविधोऽहं त्वां वरुणम् 'आ' आभिमुख्येन 'चके' शब्दयामि के, गै शब्दे (भ्वा०प०), अस्माल्लिटि 'आदेच (६, १, ४५)'—इत्यात्वं, द्विर्भाव-चर्त्वे, 'आतोलोप इटि च (६, ४, ६४)'—इत्याकार-लोपः, 'तिङ्ङतिङः (८, १, २८)'—इति निघातः, स्तौमीत्यर्थः ॥१॥ [६]

२  २    १  २  १  १            २र
कया त्वं न ऊत्याभि प्र मन्दसे वृषन् ।

१ २  १ २ ३ १ २
कया स्तोतृभ्य आ भर ॥ * १ * ॥ [७]

ऋ० सुकक्षः । छ० गायत्री । दे० इन्द्रः । कयात्वत्र ऊत्याभिरित्येकर्च्चं द्वितीयं सूक्तम्, सा ऋगेषा । हे 'वृषन्' ! कामानां वर्षित इन्द्र ! 'कया' केन 'ऊत्या' अव रक्षणादिषु (भ्वा० प०), गत्यर्थः 'ऊति-यूति (३, ३, ९७)'—इत्यादिना निपातितः । केनाभिगमनेन 'नः' अस्मान् 'अभि' अभितः 'प्र मन्दसे', प्रकर्षेण मादयसि अस्मदीयं यज्ञं प्रति सोमपानार्थमागमनेन वा त्वदीयस्तुतिश्रवणार्थमागमनेन वा कदा अस्मान् प्रमादयसीति । किञ्च 'कया' केन अभिगमनेन 'स्तोतृभ्यः' अस्मभ्यं धनम् 'आ भर' बिभर्षि १—इतीन्द्रं स्तोता पृच्छति ॥१॥ [७]

२ १ २ ३ १ २  १ ३ १  २क ३र १ २
इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।

१ २   ३ १ ३ १ १
इन्द्रᳯ समीके वनिनो हवा-

१ २ १ ३ २ १ ३ १ २
मह इन्द्रं धनस्य सातये ॥ * १ * ॥

ऋ० मेधातिथिः । छ० बृहती । दे० इन्द्रः । अथेन्द्रमिद्देवतातय इति प्रगाथरूपं तृतीयं सूक्तम्, तत्र प्रथमा । 'देवतातये' देवैः स्तोतृभिस्तायते विस्तार्यत इति देवतातिर्यज्ञस्तदर्थम् 'इन्द्रम् इत्' देवेषु मध्ये इन्द्रमेव 'हवामहे' आह्वयामहे । 'अध्वरे' यज्ञे 'प्रयति' प्रगच्छति उपक्रान्ते सति 'इन्द्र' हवामहे । तथा 'समीके' सम्यग्जाते सम्पूर्णे च यागे 'वनिनः' भजमानाः वयम् 'इन्द्रम्' इन्द्रमेवाह्वयामहे यद्वा, समीके

मिति सङ्ग्राम-नाम ( निघ० २, १७, ११ ), समीके सङ्ग्रामे इन्द्रमाह्वयामहे] "धनस्य" "सातये" लाभाय 'इन्द्रम्' इन्द्रमेव चाह्वयामहे। अतः शीघ्रमिन्द्र आगच्छत्वित्यर्थः ॥१॥

१ २ ३१ २र २
इन्द्रो मह्ना रोदसी पप्रथ-
१ २ ३ २ ३ १
च्छव इन्द्रः सूर्य्यमरोचयत्।
१ २ ३ २ ३ २ ३
इन्द्रे ह विश्वा भुवनानि
३ १ २ ३ २ ३ १ २
येमिर इन्द्रे स्वानास इन्दवः ॥ * २ * ॥ [८]

अथ द्वितीया। अयम् 'इन्द्रः' 'शवः' शवसः आत्मीयस्य बलस्य 'मह्ना' महिम्ना महत्त्वेन 'रोदसी' द्यावापृथिव्यौ 'पप्रथत्' अप्रथयत् विस्तारितवान्। तथा स्वर्भानुनाहतं 'सूर्य्यम्' अयमेव 'इन्द्रः' 'अरोचयत्' अदीपयत् तस्यासुरस्य वधेन प्रकाशितवान्। अपिच 'इन्द्रे ह' अस्मिन्नेवेन्द्रे 'विश्वा' विश्वानि व्याप्तानि 'भुवनानि' भूतजातानि 'येमिरे' उपरमन्ते इन्द्रेण नियम्यन्त इत्यर्थः। तथा 'स्वानासः' स्वानाः अभिषूयमाणाः 'इन्दवः' सोमाश्च अस्मिन्नेवेन्द्रे नियम्यन्ते परमात्मन्यन्तर्भवन्तीत्यर्थः ॥ २ ॥ [८]

१ २ ३ १ २ ३ २
विश्वकर्मन् हविषा वावृधानः
३ १ २ ३ २ १ २र
स्वयं यजस्व तन्वा३ं स्वा हि ते।

१ २ २ २ २ २ २ १ २
मुह्यन्त्वन्ये अभितो जनास

३ १ २र ३ १ २ ३ १ २
इहास्माकं मघवा सूरिरस्तु ॥ * १ * ॥ [६]

ऋ० विश्वकर्मा। छ० त्रिष्टुप्। दे० विश्वकर्मा। अथ विश्वकर्मन्नित्येकर्चं चतुर्थं सूक्तम्, सा ऋगेषा। हे 'विश्वकर्मन्'! विश्व-विषय कर्मवन्! एतन्नामक! परमेश्वर! 'हविषा' हविर्भूतेन विश्वकर्मणा मया दत्तेन वा हविषा 'वावृधानः' वर्द्धमानः 'विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवाञ्चकार स आत्मानमप्यन्ततो जुहवाञ्चकार'—इत्यादिं निरुक्तम् (दै० ४, २६) पूर्वमुदाहृत 'स्वय' स्वयमेव 'तन्वा' शरीरेण 'स्वाहिते' अग्नौ दत्तो हविः 'यजस्व' पूजय। 'अन्ये' मर्त्याः 'जनासः' जनाः अयष्टारोऽस्मद्याग-विरोधिनो वा 'मुह्यन्तु' मुग्धा भवन्तु, 'अभितः' सर्वतः। अथ परोक्षकृतः—'इह' अस्मिन् यागे 'अस्माकं' 'मघवा' अस्मद्दत्तेन हविर्लक्षणेन धनेन धनवान् सः 'सूरिः' स्वर्गादिफलस्य प्रेरकः 'अस्तु' भवतु। अत्र 'विश्वकर्मन् हविषा वर्द्धमानः (दै० ४, २७)'—इत्यादि निरुक्तं द्रष्टव्यम्।

'तन्वांस्वाहिते'—पृथिवीमुतद्याम्'—इति पाठौ ॥१॥[८]

३ २ ३ १ २र ३ २उ ३ १ २
अया रुचा हरिण्या पुनानो विश्वा द्वेषाꣳसि

२ १ २ ३ २ ३ २ ३ १ २
तरति सयुग्वभिः सूरो न सयुग्वभिः।

१ २ ३ २ ३ १ २ ३ १ २र
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः।

२ ३ २३१ २३१
विश्वा यद्रूपा परियास्यृ-
३२ ३१ २ ३ १ २
क्वभिः सप्तास्येभिर्ऋक्वभिः ॥ * १ * ॥

ऋ० धनानतः। छ० अत्यष्टिः। दे० सोमः। अयारुचेति त्र्यचात्मकं पञ्चमं सूक्तम्, तत्र प्रथमा। 'पुनानः' पूयमानः सोमः 'हरिण्या' हरित-वर्णया 'अया' अनया 'रुचा' रोचमानया धारया 'विश्वा' सर्वाणि 'द्वेषांसि' द्वेष्टृणि रक्षांसि 'तरति' विनाशयति। तत्र दृष्टान्तः—'सूरो न' यथा सूर्यः 'सयुग्वभिः' स्वयं युक्तैः रश्मिभिः तमांसि छिनत्ति तद्वत्। सयुग्वभिरिति द्विरुक्तिरादरार्था। यद्वा, धारया युक्तः सोमः स्वीयैः युक्तैस्तेजोभिः सह रक्षांसि तरति। तस्य 'सुतस्य' दशापवित्रस्योपरिसिक्तस्य 'धारा' 'रोचते' दीप्यते 'पुनानः' पूयमानः 'हरिः' हरितवर्णः सोमः 'अरुषः' आरोचमानो भवति। 'यद्' यः सोमः 'सप्तास्येभिः' रसहरणशीलैः आस्यैः 'ऋक्वभिः' स्तुतिमद्भिः 'ऋक्वभिः' तेजोभिः 'विश्वा' विश्वानि व्याप्तानि 'रूपा' रूपाणि नक्षत्राणि 'परि याति' गच्छति व्याप्नोति।

'सुतस्य'-'सुतस्य'—इति पाठौ ॥ १ ॥

२ ३ १ २ २ १२ ३ १ २ ३ २ ३ १ २
प्राचीमनु प्रदिशं याति चेकितत्सꣳ रश्मिभि-
१२उ १ १ २ ३ १ २२
र्यतते दर्शतो रथो दैव्यो दर्शतो रथः।
१ २ ३ २ २ २उ ३ १ २
अग्मन्नुक्थानि पौꣳस्येन्द्रं जैत्राय हर्षयन्।

१ २ २ १ २१२ १ २
यच्चस्य यद्धवधो अनप-

३ १ २१
च्युता समत्स्वनपच्युता ॥ * २ * ॥

अथ द्वितीया। 'चेकितत्' जानानः सोमः 'प्राचीं' पूर्वां 'प्रदिशं' प्रकृष्टां दिशम् 'अनु याति' अनुगच्छति। किञ्च 'दर्शतः' सर्वैर्दर्शनीयः 'दैव्यः' देवेषु भवः तव 'रथः' सूर्यस्य 'रश्मिभिः' 'सं यतते' सङ्गच्छते। पुनः 'दर्शतः रथः'—इत्यादरार्थम्। ततः 'पौंस्या' पुंस्त्वावगमानि 'उक्थानि' स्तोत्राणि 'अग्मन्' इन्द्रं गच्छन्ति। तथा 'जैत्राय' जयार्थं तानि स्तोत्राणि 'इन्द्रं' 'हर्षयन्' हर्षयन्ति। तथा तस्य 'वज्रश्च' तमिन्द्रं गच्छति। 'यद्' यदा 'समत्सु' सङ्ग्रामेषु 'अनपच्युता अनपच्युतौ शत्रुभिरपराजितौ, सोम! त्वञ्च इन्द्रश्च युवां सह भवथः, तदा स्तोत्रागमनादीनि भवन्ति। पुनः 'अनपच्युता'—इत्यादरार्थम् ॥ २ ॥

२ ३ १ २ २ १ २ १ २ १ २ १ २
त्वं ह त्यत्पणीनां विदो वसु सं मातृभि-

२ १ २१ ३ १ २ ३ २ ३ १ २
र्मर्जयसि स्व आ दम ऋतस्य धीतिभिर्दमे।

३ २ १ २७ ३ २उ ३ १ २ ३ १ २
परावतो न साम तद्यत्रा रणन्ति धीतयः।

३१ २ ३ १ २ ३ १ २
त्रिधातुभिररुषीभिर्वयो

३ १ २ २ १२
दधे रोचमानो वयो दधे ॥ * ३ * ॥ [१०]

अथ तृतीया। हे सोम! त्वं 'त्यत्' त्यानि 'वसु' गवा-

दीनि धनानि 'पणीनां' पणिभिः अपहृतं तत् गवात्मकं धनं 'विदः' अविदः अलभथाः। 'आ' अपिच 'ऋतस्य' यज्ञस्य 'धीतिभिः' धात्रीभिः 'मातृभिः' वसतीवरीभिः 'स्वे' आत्मीये 'दमे' यज्ञे 'सम्मर्जयसि' सम्यक् शुद्धो भवसि। 'परावतो न' दूरस्थाद्देशात् यथा 'साम' साम-ध्वनिः श्रूयते तथा तव 'तत्' सामध्वनिः सर्वैः श्रूयते। असौ सोमाभिषवाभिप्रायेणोक्तः। 'यत्र' यस्मिन् शब्दे 'धीतयः' कर्मणो धर्त्तारो यजमानाः 'रणन्ति' रमन्ते, 'रोचमानः' सोऽयं सोमः "त्रिधातुभिः" त्रयाणां लोकानां धारयित्रीभिः "अरुणीभिः" आरोचमानाभिः दीप्तिभिः 'वयः' अन्नं 'दधे' स्तोतृभ्यः प्रयच्छति। पुनः 'वयो दधे'—इत्यादरार्थो ॥३॥ [१०]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षोड़शाध्यायस्य

द्वितीयः खण्डः ॥ २ ॥

---

२ १ १ २ २ २ १ २ २ १ २ २ २ २ २
उत नो गोपणिं धियमश्वसां वाजसामुत ।
२ १ २ २ १ २
नृवत्कृणुह्यूतये ॥ * १ * ॥ [११]

ऋ० भरद्वाजः। छ० गायत्री। दे० पूषा। अथ तृतीयखण्डे—उतनोगोपणिमित्येकर्चं प्रथमं सूक्तम्, सा ऋगेषा। 'उत' अपिच हे 'पूषन्!' 'गोपणिं' गवां सनित्रीं दात्रीं 'अश्वसां' अश्वानां सनित्रीं 'वाजसां' वाजानामन्नानां सनित्रीम् 'उत' अपिच 'नृवत्' नृवतीं नृणां वनित्रीं दात्रीम् एवम्भूतां 'धियं' बुद्धिं कर्म च 'नः' अस्माकम् 'ऊतये' रक्ष्यै उपभोगार्थं 'कृणुहि' कुरु।

'ऊतये'-'वीतये'—इति पाठौ ॥१॥ [११]

२ १ २ २ १ २
शशमानस्य वा नरः स्वेदस्य सत्यशवसः।
२ १ २र १ १ २
विदा कामस्य वेनतः ॥ * १ * ॥ [१२]

ऋ० गोतमः। छ० गायत्री। दे० मरुद्गणः। अथ शश-मानस्येत्येकर्चं द्वितीयं सूक्तम्, सैषा ऋक्। हे 'सत्यशवसः'! अवितथबलाः 'नरः' नेतारः मरुतः! 'शशमानस्य' युष्मान् स्तुतिभिः सम्भजमानस्येत्यर्थः, 'स्वेदस्य' स्तावकमन्त्रोच्चारण-जनितेन श्रमेण खिद्यमानगात्रस्य 'वेनतः' वेनतिः कान्ति-कर्मा (निघ०२,६,४) कामयमानस्य 'वा' शब्दः समुच्चये, एवम्भूतस्य स्तोतुश्च 'कामस्य' काममभिलाषं 'विद' लम्भयत प्रयच्छतेत्यर्थः ॥ १ ॥ [१२]

१२ १ २ २ १ २ १ २ २ १ २ १ २
उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये।
१ १ २
सुमृडीका भवन्तु नः ॥ * १ * ॥ [१३]

ऋ० ऋजिश्वा। छ० गायत्री। दे० विश्वे देवाः। उप-नः सूनव इत्येकर्चं तृतीयं सूक्तम्। सैषा ऋक्। 'अमृतस्य' मरणरहितस्य प्रजापतेः 'ये' 'सूनवः' पुत्राः ते देवाः 'नः' अस्माकं 'गिरः' स्तुतीः 'उप शृण्वन्तु' 'नः' अस्माकं 'सुमृ-डीकाः' सुष्ठु मृडयितारः सुखयितारश्च 'भवन्तु' सन्तु॥१॥ [१३]

२ ३ २ ३ १ २ ३ १ २
प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे।
२ ३ २ १ १ २
शुची उप प्रशस्तये ॥ * १ * ॥

ऋ० पुरुमीढ़ः अजमीढ़ः वा। छ० गायत्री। दे० द्यावापृथिव्यौ। प्रवामर्चन्तीति त्र्यचात्मकं चतुर्थं सूक्तम्। तत्र प्रथमा। हे द्यावापृथिव्यौ! 'देवौ' द्योतमाने 'वां' युवाभ्याम् 'उपस्तुतिं' स्तोत्रं 'मह्नि' महत् प्रभूतम् 'अभि प्र भरामहे' प्रकर्षेण सम्पादयामः॥ १॥

१ २ १क २र १२उ २ १ २
पुनाने तन्वा मिथः स्वेन दक्षेण राजथः।
२ १ २ १ २ ३१
ऊह्याथे सनादृतम्॥ * २ *॥

अथ द्वितीया। हे देव्यौ! 'तन्वा' स्वीयया मूर्त्या 'दक्षेण' बलेन च 'मिथः' प्रत्येकं 'पुनाने' शोधयन्त्यौ यज्ञं यजमानं वा युवां 'राजथः' ईश्वर्यौ भवथः। यद्वा, 'तन्वा' स्वशरीरैकदेशेन 'मिथः' परस्परं 'पुनाने' शोधयन्त्यौ द्यौः स्वीयेन रसेन भुवं सा च स्वकीयेन कार्य्येन चन्द्रमसि स्थितेन दिवमिति विवेकः। 'सनात्' सदाकालम् 'ऋतं' यज्ञम् 'ऊह्याथे' वहथः॥ २॥

३ २ ३ १ २ १ १२ १ १२ २ २
मही मित्रस्य साधथस्तरन्ती पिप्रती ऋतम्।
१ २ २ १ २र
परि यज्ञं नि षेदथुः॥ * ३ *॥ [१४]

अथ तृतीया। 'मही' महत्यौ द्यावापृथिव्यौ 'मित्रस्य' मित्रभूतस्य स्तोतुरभिमतं 'साधथः' साधयथ। 'ऋतम्' यज्ञं 'तरन्ती' तारयन्त्यौ 'पिप्रती' पूरयन्त्यौ 'यज्ञं' 'परि' परितः 'निषेदथुः' आश्रयथः॥ ३॥ [१४]

१ २ २ १ २ १ १ २ ३ २
अयमु ते समतसि कपोत इव गर्भधिम्।

१ २-१ २
वचस्तच्चिन्न ओहसे ॥ * १ * ॥

ऋ० शुनःशेपः। छ० गायत्री। दे० इन्द्रः। अयमुते-समतसीति तृचात्मकं पञ्चमं सूक्तम्। तत्र प्रथमा। हे इन्द्र! 'अयम्' अयमपि हूयमानः सोमः 'ते' त्वदर्थं सम्पादितः। यं सोमं 'समतसि' सम्यक् सातत्येन प्राप्नोषि। तत्र दृष्टान्तः, 'कपोत इव' यथा कपोताख्यः पक्षी 'गर्भधिं' गर्भधारिणीं कपोतीं प्राप्नोति तद्वत्। 'तच्चित्' तस्मादेव कारणात् 'नः' अस्मदीयं 'वचः' 'ओहसे' प्राप्नोषि। गर्भधिं, गर्भोऽस्यां धीयत इति गर्भधिः 'कर्मण्यधिकरणे च (३,३,८३)' इति किप्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वम् (६,२,१३९), 'ओहसे' तुहिर् उहिर् दुहिर् अर्दने (भ्वा० प०)' व्यत्ययेनात्मनेपदम् ॥ १ ॥

१ २ २ २ १ २ २ १ २
स्तोत्रꣳ राधानां पते गिर्वाहो वीर यस्य ते।
१ २ २ १ २
विभूतिरस्तु सूनृता ॥ * २ * ॥

अथ द्वितीया। हे इन्द्र! राधानां धनानां पते पालक! 'गिर्वाह' गीर्भिरुह्यमान! 'वीर'! शौर्य्योपेत! 'यस्य' 'ते' तव 'स्तोत्रम्' ईदृशं भवति तस्य तव 'विभूतिः' लक्ष्मीः 'सूनृता' प्रियसत्यरूपा 'अस्तु' ॥ २ ॥

२ १ २ २ २ ३ १ २र
ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन् वाजे शतक्रतो।
२र १ १ २
समन्येषु ब्रवावहै ॥ * ३ * ॥ [१५]

'अथ तृतीया। हे 'शतक्रतो'! शतसङ्ख्याककर्मोपेत! 'अस्मिन्' प्रसक्ते 'वाजे' सङ्ग्रामे 'नः' अस्माकम् 'ऊतये' रक्षणाय 'ऊति यूति (३, ३, ९७)'—इत्यादिना क्तिन उदात्तत्वम् "ऊर्द्ध्वः" उर्द्धतः उत्सुकः 'तिष्ठ' भव। त्वञ्चाहञ्च मिलित्वा "अन्येषु" कार्य्यान्तरेषु 'सं ब्रवावहै' सम्यग्विचारयावः। तिष्ठा—"द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति संहितायां दीर्घः ॥ ३ ॥ [१५]

२ ३ १ २ ३२ ३ २ ३१२ ३ १ २
गाव उप वदावटे मही यज्ञस्य रप्सुदा ।
२१ २र ३ १२
उभा कर्णा हिरण्यया ॥ * १ * ॥

ऋ० श्यैतः। छ० गायत्री। दे० इन्द्रः। गाव उपवदावट इति तृचात्मकं षष्ठं सूक्तम्, तत्र प्रथमा। हे 'गावः'! घर्मदुघा यूयम् "अवटे" महावीरे महावीरम् 'उप वद' उपावत. वर्ण-व्यत्ययः उपागच्छत यस्मात् 'यज्ञस्य' घर्मयागस्य साधनभूते 'रप्सुदा' रप्सुदे आश्विनोः फलप्रदे लिप्सोरश्विनोर्दातव्ये वा। यद्वा, रपणं शब्दनं रप् मन्त्रः तेन सह दातव्ये। अथवा, पूङ् क्षरणे (भ्वा० आ०) रपा मन्त्रेण क्षारणीये दोहनीये ईदृशे गवाजयोः पयसी 'मही' महती बहुले अपि चिते उपावत। गौशब्दोऽजाया अप्युपलक्षकः अजापयसोऽपि महावीरे सेचनीयत्वात्। अपि चास्य महावीरस्य 'उभा' उभौ 'कर्णा' कर्णस्थानीयौ द्वौ रुक्मौ 'हिरण्यया' हिरण्मयौ सुवर्णरजतमयावित्यर्थः।

'अवटे'-'अवतम्'—इति पाठौ ॥ १ ॥

१ २ ३ १ २र३ १ ३२ ३ १२ ३ १ २
अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु ।

२ १ २ ३ १ २
अवटस्य विसर्जने ॥ * २ * ॥

अथ द्वितीया। 'अद्रयः' आद्रियमाणाः अध्वर्य्यादयः 'अभ्यारमित्' अभिगम्यैव 'निपिक्रम्' प्रतिविक्रम् 'मधु' 'पुष्करे' प्रहूहे उपयमनीयपात्रे सिञ्चति अग्निहोत्रार्थम् 'अवटस्य' महावीरस्य 'विसर्जने' विसर्जनसमये होमानन्तरं महावीरमासन्यामासादय।

'अवटस्य'-'अवतस्य'—इति पाठौ ॥ २ ॥

१ २ ३ १ २ ३ १ २ १ २ ३ १ २
सिञ्चन्ति नमसावटमुच्चाचक्रं परिज्मानम्।
२ १ २ ३ १ २
नीचीनवारमचितम् ॥ * ३ * ॥ [१६]

अथ तृतीया। 'नमसा' नमनेन 'अवटं' महावीरम् 'उच्चाचक्रम्' उपरिस्थितचक्रम् 'परिज्मानं' परितस्त्य गतम्, 'नीचीनवारम्' नीचीनद्वारम् 'अचितम्' अचीणम् ईदृशं चीराद्यवयमेपसुक्तम् आहवनीयस्योपरि 'नमसा' नमनेन 'सिञ्चन्ति' जुह्वन्ति महावीरेण हि आहवनीये हूयते।

'अवटम्'-'अवतम्'—इति पाठौ ॥३॥ [१६]

इति सामवेदार्थप्रकाशे उत्तरार्च्चिके षोडशाध्यायस्य
तृतीयः खण्डः ॥ ३ ॥

---

१ २ ३ १ २ ३ १ २ ३ १ २र
मा भेम मा श्रमिष्मोग्रस्य सख्ये तव।
१ २ ३ १ २ ३ १ २
महत्ते वृष्णो अभिचक्ष्यं

२ १ २र २ २ २ १ २
क्रतं पश्येम तुर्वशं यदुम् ॥ * १ * ॥

ऋ० देवातिथिः। छ० प्रगाथः। दे० इन्द्रः। अथ चतुर्थखण्डे—माभेमेति प्रगाथात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। हे इन्द्र! 'उग्रस्य' उद्गूर्णबलस्य तव 'सख्ये' सखित्वे सति वयं 'मा भेम' मा भैष्म कुतश्चिदपि भयोभीता माभूम। 'मा श्रमिष्म' श्रान्ताः पीड़िताश्च माभूम। 'वृषणः' कामानां वर्षितुः 'ते' तव सम्बन्धि 'महत्' प्रभूतं 'क्रतं' वृत्रवधादिलक्षणं 'कर्म' 'अभि चक्ष्यम्' अभितः ख्यापनीयं स्तोतव्यम् अतः महानुभावस्य तव सख्ये प्राप्तानां भीतिश्रमौ न जायेते इत्यर्थः। तत् कथमवगम्यते? इति चेत् उच्यते—'तुर्वशम्', एतन्नामकं राजर्षिं 'यदुम्' एतन्नामकञ्च त्वत्प्रसादात् सुखेन जीवन्तौ 'पश्येम' दृष्टवन्तः खलु वयम्। अतः कारणात् त्वत्सख्यं प्राप्तस्य भयादिकं न जायत इत्येतदुपपन्नमित्यर्थः॥ १॥

१ २ २र ३क २र २
सव्यामनु स्फिग्यं वावसे
१ २ २ १ २ २
वृषा न दानो अस्य रोषति।
२ १ १ २ १ २ १ २ २
मध्वा सम्पृक्ताः सारघेण धेन-
१ २ ३ २ २ २२ १ २
वस्तूयमेहि द्रवा पिब॥ * २ * ॥ [१७]

अथ द्वितीया। 'वृषा' कामानां वर्षिता इन्द्रः 'सव्यां' दक्षिणेतरां 'स्फिग्यं' कटिप्रदेशम् 'अनु' तृतीयार्थे अनोः कर्मप्रवचनीयत्वम् (१,४,८५) सव्यया स्फिग्या शरीरैकदेशेनैव

'वावसे' वस्ते, सर्वं भूतजातमाच्छादयति । स्वयं कृत्स्नं जगद्‌ तीत्य वर्त्तत इत्यर्थः। निगमान्तरञ्च भवति, 'यदन्यया स्फिग्या क्षामवस्थाः', इति (ऋ० स० ३,२२,११)। अपिच 'दानः' अवखण्डयिता दान 'अवखण्डने' (भ्वा० प०), पचाद्यच्। (३, १, १३४) स च 'अस्य' इममिन्द्रं 'न रोषति' न हिनस्ति रुष हिंसायाम् (भ्वा० प०) इन्द्रं हिंसितुं कश्चिदपि शक्तो नास्तीत्यर्थः। यद्वा, हे यजमान ! 'दानः' हविषां दाता त्वम् 'अस्य' इन्द्रस्य 'न रोषति' रोषं न जनयतीत्यर्थः। उत्तरोऽर्द्धर्चः मत्यक्षकृतः, 'सारघेण' सरघा मधुमक्षिका, तत्सम्बन्धिना 'मध्वा' मधुना लुप्तोपमानमेतत् मधुनेव रसवता क्षीरादिना अपणद्रव्येण सम्पृक्ताः संसृष्टाः संस्कृताः 'धेनवः' धेनुवत्प्रीतिजनकाः अस्मदीयाः सोमाः यद्वा, धिविः प्रीणनार्थो (भ्वा० प०) 'धेनवः' प्रीणयितार इत्यर्थः। अथवा धेट् पाने (भ्वा० प०), 'धेट इच (उ० ३, ११)', इत्यौणादिको नप्रत्ययः सवियोग इकारान्तादेशश्च। पातव्याः सोमा इत्यर्थः। यत एवमतः कारणात्‌ हे इन्द्र ! 'तूयम्' क्षिप्रम् 'एहि' अस्मत्समीपमागच्छ, आगत्य च सोमा यस्मिन्नुत्तरवेदिलक्षणे स्थाने क्षयन्ते तं देशं 'द्रव' शीघ्रं गच्छ द्रुगतौ (भ्वा० प०), इति धातुः 'द्व्यचोऽतस्तिङः (६, ३, १३५)', इति सांहितिको दीर्घः। तदनन्तरम् अध्वर्युणा दत्तं सोमं 'पिब' तेन सोमेन सम्यक् स्वोदरं पूरयेत्यर्थः ॥ २ ॥ [१०]

२ १ २ १ १ २ २ १ २र
इमा उ त्वा पुरूवसो गिरो वर्द्धन्तु या मम ।

१ १ २ २ १ २ ३
पावकवर्णाः शुचयो विप-

२ ३ १ २र

श्चितोऽभि स्तोमैरनूषत ॥ * १ * ॥

ऋ० मेधातिथिः । छं० बृहती । दे० इन्द्रः । इमा उत्वेति प्रगाथात्मकं द्वितीयं सूक्तम्—तत्र प्रथमा । हे 'पुरूवसो' ! बहुधनेन्द्र ! 'मम' मदीयाः 'इमाः' 'गिरः' शस्त्ररूपा वाचः 'त्वा' त्वां 'वर्द्धन्तु' वर्द्धयन्तु । तथा 'पावकवर्णाः' अग्निसमानतेजस्काः अतएव 'शुचयः' शुद्धाः 'विपश्चितः' विद्वांस उद्गातारश्च 'स्तोमैः' स्तोत्रैः बहिष्पवमानादिभिः 'अभ्यनूषत' त्वामभिष्टुवन्ति णु स्तुतौ कुटादिः (प०) ॥ १ ॥

२ ३ ३ २ ३ १ २ ३ १ २

अयꣳ सहस्रमृषिभिः सह-

३ १ २

स्कृतः समुद्र इव पप्रथे ।

३ १ २र ३ १ २ ३

सत्यः सो अस्य महिमा गृणे

१ २ ३ १ २ ३ १ २

शवो यज्ञेषु विप्रराज्ये ॥ * २ * ॥ [१८]

अथ द्वितीया । 'अयम्' इन्द्रः 'सहस्र' सहस्रसङ्ख्याकैः 'ऋषिभिः' अतीन्द्रियार्थदर्शिभिः स्तोतृभिः 'सहस्कृतः' सहसा बलेन युक्तः कृतः स्तुत्या हि देवताया बलं वर्द्धते, स च एवम्भूतः सन् 'समुद्र इव' उदधिरिव 'पप्रथे' प्रथितो विस्तीर्णो बभूव । 'अस्य' चेन्द्रस्य 'सत्यः' अवितथः 'सः' प्रसिद्धः 'महिमा' महत्त्वं 'शवः' बलं 'यज्ञेषु' यागेषु 'विप्रराज्ये' राज्ञः कर्म राज्यम् विप्राणां स्तोतृणां राज्ये स्तुतमहत्त्वे 'गृणे' स्तूयते ॥ २ ॥ [१८]

१ २ २उ २ १ २ १ १ २ २ २ २
यस्यायं विश्व आर्य्यो दासः शेवधिपा अरिः।

२ १ २ ३ १ ३ २ ३ १ २
तिरश्चिदर्य्ये रुशमे पवी-

३ १ २र १ २
रवि तुभ्येत्सो अज्यते रयिः॥ * १ *॥

ऋ० उरुशिशुः। छ० प्रगाथः। दे० सोमः। अथ यस्याय-मिति प्रगाथात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। 'यस्य' यज्ञस्य 'अयं' 'विश्वः' सर्वो लोकः 'आर्य्यः' प्रभुरपि 'शेवधिपाः' निधि-पालकः 'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टे-ऽहमस्मि', इति (ऋ० वे० ८, २, २७, ४) मन्त्रान्तरे पठित-त्वात्। 'दासः' भृत्य इव 'अरिः' भवति स यज्ञः। 'अर्य्ये' स्वामिनि 'रुशमे' नियन्तरि "पवीरवि" सरस्वत्याः पितरि 'पावीरवी कन्या चित्रायुः सरस्वती', इत्युक्तम् (नि०)। 'तिरश्चित्' तिरो-भूतोऽपि 'तुभ्येत्' हे इन्द्र! तुभ्यमेव 'रयिः' हविर्लक्षणं धन-मुद्दिश्य 'अज्यते' प्राप्तो भवति अयमभिप्रायः, विप्रक्षत्रादिकः सर्वो लोकः बृहस्पतिः, स च राजसूयादिरूपस्य यज्ञस्य भृत्या वर्त्तते, स तादृशो यज्ञो मन्त्ररूपायाः सरस्वत्याः पितृस्थानीये परमेश्वरस्वरूपे गूढोऽपि सन् हे इन्द्र! त्वदर्थमेवं हविर्दातु प्रकटीभवति तथाविधस्तव महिमेति॥ १॥

२ २ १ १ २ १
तुरण्यवो मधुमन्तं घृत-

३ २ १ २ ३ १ २
श्चुतं विप्रासो अर्कमानृचुः।

२ २ २ १ २ ३ २ ३
अस्मे रयिः पप्रथे वृष्ण्यं

२ २ २ २ २ २ १ २
गवोऽस्मे स्वानास इन्दवः ॥ * २ * ॥ [१८]

अथ द्वितीया। "तुरण्यवः" यागादिकर्मसु त्वरणशीलाः 'विप्रासः' मेधाविन ऋत्विजः 'मधुमन्तं' मधुक्षीराद्याहुतियुक्तम्, 'घृतश्चुतम्', घृतमाज्यं श्चोतते क्षरति यस्मिन्नाहुतिद्वारेणेति 'अर्कम्' अर्चनीयमिन्द्रम् 'आनृचुः' पूजयन्ति। किमर्थम्? इत्युच्यते, 'अस्मे' अस्माभ्यं 'रयिः' हविर्लक्षणं धनं 'पप्रथे' प्रख्यातं भवतु। तथा 'वृष्ण्यं' वर्षणशीलं सोमनिबन्धनं 'श्रवः' बलमपि प्रथताम्। तथा 'अस्मे' अस्मासु 'स्वानासः' सुवानाः अभिषुताः "इन्दवः" सोमाः प्रख्याता भवन्तु। एवं फलं कामयमानाः ऋत्विजः इन्द्रं पूजयन्तीत्यर्थः ॥ २ ॥ [१८]

१ २ २ १ २ १ १ २
गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव ।

१ २ २ २ ३ २ २ १ २
शुचिं च वर्णमधि गोषु धारय ॥ * १ * ॥

ऋ० आप्त्यद्रितः। छ० उष्णिक्। दे० सोमः। अथ गोमन्न इन्दो इति तृचात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा। हे 'सुदक्ष'! हे सुबल! हे 'इन्दो'! सोम! 'सुतः' अभिषुतस्त्वं 'नः' अस्माकं 'गोमत्' यज्ञसाधनगोयुक्तम् 'अश्ववत्' अश्वयुक्तं धनं 'धनिव' धन्व वर्णविकारोऽत्र गमय धविर्गत्यर्थः (प०) भूवादिः ततोऽहं 'शुचिं' पूतं दीप्यमानं 'वर्णं' रसं 'च' 'गोषु' गव्येषु क्षीरादिषु 'अधि धारय' अधिधारयामि मिश्रयामीत्यर्थः ॥ १ ॥

१ २ २ १ २ २ १ २
स नो हरीणां पत इन्दो देवप्सरस्तमः ।

१ २ २ २ २ १ २ २ १ २
सखेव सख्ये नर्यो रुचे भव ॥ * २ * ॥

अथ द्वितीया। हे 'हरीणाम्पते'। 'नः' अस्मदीयानां हरितवर्णानां पशूनां स्वामिन्। हे 'इन्दो'! सोम! 'देव!' 'प्सरस्तमः' अतिशयेन दीप्तरूपोपेतः 'नर्य्यः' कर्मनेतृभ्य ऋत्विग्भ्यः हितः 'सः' त्वं 'नः' अस्माकं 'रुचे भव' दीप्तिकरो भव। क इव? 'सखेव' यथा सखा 'सख्ये' मित्राय दीप्तिं करोति, तद्वत् ॥२॥

१२ १ २ १ १ २र १ १ २ १ १ २
सनेमि त्वमस्मदा अदेवं कं चिदत्रिणम्।

१ १ २ १ २ १ २ १ १ २ २२
साह्वाँ इन्दो परि बाधो अप द्वयुम् ॥ * ३ * ॥ [२०]

अथ तृतीया। हे सोम! 'त्वं' 'सनेमि' पुराणं सख्यम् 'अस्मद्' अस्मासु 'आ' कुरु। अपिच 'अदेवम्' अदेवनशीलं 'कञ्चिद्' अपि 'अत्रिणम्' अदनशीलं राक्षसम् अस्मत्तः 'अप' गमय। किञ्च हे 'इन्दो'! सोम! 'साह्वान्' शत्रून् अभिभवन् 'बाधः' बाधमानान् 'परि' जहि। तथा 'द्वयुं' द्वयवन्तं सत्यानृतयुक्तं वाह्याभ्यन्तरमायाद्वयोपेतं वा राक्षसमस्मत्तोऽपगमय ॥ ३ ॥ [२०]

१ २३क २र १ १ २ १
अञ्जते व्यञ्जते समञ्जते

१ २ १ २ ३क २र
क्रतुँ रिहन्ति मध्वाभ्यञ्जते।

१ २ २ २ ३१२ २ १ २
सिन्धोरुच्छ्वासे पतयन्तमुक्षणँ

२ २ १ २ ३ १ २
हिरण्यपावाः पशुमप्सु गृभ्णते ॥ * १ * ॥

ऋ० कविः। छ० जगती। दे० सोमः। अथाञ्जत इति

पञ्चमं सूक्तम्, तत्र प्रथमा। सोऽयमृत्विजः 'अञ्जते' गोभिः, तथा 'व्यञ्जते' विविधमञ्जन्ति, "समञ्जते" सम्यगञ्जन्ति स्तुत्यर्थत्वादपुनरुक्तिः। तथा 'क्रतुं' बलकर्त्तारं 'रिहन्ति' लिहन्ति आस्वादयन्ति देवाः। तथा पुनः "मध्वा" मधुना गव्येन 'अभ्यञ्जते' तमेव सोमं "सिन्धोः" उदकस्य रसस्याधारभूते 'उच्छ्वासे' उच्छ्रिते देशे "पतयन्तं" गच्छन्तं पतॢ गतौ (भ्वा॰ प॰), इत्यस्मात् स्वार्थिके णिचि हृद्धभावश्छान्दसः 'उक्षणं' सेक्तारं 'हिरण्यपावाः' हिरण्येन पुनन्तः 'पशुं' द्रष्टारं 'पशुः पश्यतेः', इति (निरु॰ नै॰ ३, १६) यास्केनोक्तत्वात् "आसु" वसतीवरीषु "गृभ्णते" गृह्णन्ति ॥ १ ॥

१ २ ३ १ २
विपश्चिते पवमानाय गायत

३ १ २र
मही न धारात्यन्धो अर्षति ।

२ ३ २ ३ १ २र ३ १ २
अहिर्न जूर्णामति सर्पति त्वच-

१ २ १ २र ३ १ २ ३ १
मत्यो न क्रीडन्नसरद्वृषा हरिः ॥ * २ * ॥

अथ द्वितीया। हे ऋत्विजः! 'विपश्चिते' मेधाविने 'पवमानाय' पूयमानाय 'गायत' स्तुतिं कुरुत। स च 'विपश्चित्' सोमः 'मही न धारा' महती वर्षधारेव 'अन्धः' अन्नं रसात्मकम् 'अभ्यर्षति' "अहिर्न" अहिरिव 'जूर्णां' जीर्णां त्वचम् 'अतिसर्पति' अतिसृजति अभिषवादिकर्मणा त्वचं विसृजतीत्यर्थः। 'अत्यः न' अश्व इव 'क्रीडन्' क्रीडमानः "असरत्" सरति द्रोणकलशं गच्छति। "वृषा" वर्षकः कामाना "हरिः" हरितवर्णो रसः ॥ २ ॥

२ १ २र
अग्रेगो राजाप्यस्तविष्यते

२ २ २ २ ३ १२ २ ३ १ २
विमानो अह्नां भुवनेष्वर्पितः।

१ २ १ १ २ ११ २ ३ २
हरिर्घृतस्नुः सुदृशीको अर्णवो

१ १ २ ३ २ ३क २र
ज्योतीरथः पवते राय ओक्यः ॥ * ३ * ॥ [२१]

इति सप्तमप्रपाठकस्य तृतीयार्द्धम्।

---

अथ तृतीया। "अग्रेगः" अग्रे गन्ता "राजा" राजमानः 'आप्यः' अप्सु संस्कृतः सोमः 'तविष्यते' स्तूयते यः 'अह्नां' दिनानां "विमानः" निर्माता चन्द्रकलाह्रासवृद्ध्यधीनत्वादह-र्व्यवहारस्य निर्माता "भुवनेषु" उदकेषु वसतीवरीसम्बन्धिषु 'अर्पितः' स्थापितः सः 'राजा' 'तविष्यते'। किञ्च 'हरिः' हरि-तवर्णः 'घृतस्नुः' प्रस्नुतोदकः 'सुदृशीकः' शोभनदर्शनः 'अर्णवः' उदकवान् अर्णं इत्युदकं नाम (निघ० १, १२, १) "ज्योती-रथः" ज्योतिर्मयरथः "रायः" धनस्य प्रापयिता 'ओक्यः' 'ओक इति निवासनाम' (निरु० नै० ३, ३) तस्य हितः ॥ ३ ॥ [२१]

इति सप्तमप्रपाठकः।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपाल-साम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये साम-वेदार्थप्रकाशे उत्तराग्रन्थे षोडशोऽध्यायः ॥ १६ ॥

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षोडशाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

## अथ अष्टमः प्रपाठकः ।

### अथ सप्तदशोऽध्याय आरभ्यते ।

अष्टमप्रपाठकस्य प्रथमार्द्धम् ।

१ २ ३ १ २ ३ २ ३ १ २ १ २र
विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः ।
१ २
चनो धाः सहसो यहो ॥ * १ * ॥

ऋ० शुनःशेपः । छ० गायत्री । दे० अग्निः । तत्र प्रथमे खण्डे—विश्वेभिरग्न इत्येतत् त्र्यचं प्रथम सूक्तं, तत्र प्रथमा । हे 'सहसोयहो' । बलस्य पुत्र ! देवतारूप ! 'अग्ने !' 'विश्वेभिः' अग्निभिः सर्वैराहवनीयादिभिर्युक्तः त्वम् 'इमम्' अस्मदीयं 'यज्ञम्' 'इदम्' अस्मदीयं 'वचः' स्तोमञ्च सेवमानः 'चनः' अन्नं 'धाः' अस्मभ्यं धेहि ॥ १ ॥

२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
यच्चिद्धि शश्वता तना देवंदेवं यजामहे ।
१ २र ३ १ २
त्वे इद्धूयते हविः ॥ * २ * ॥

अथ द्वितीया । हे अग्ने ! 'यत् चित् हि' यद्यपि 'शश्वता' शाश्वतेन नित्येन, 'तना' विस्तृतेन हविषा 'देवं देवम्' अन्यमन्यं वरुणेन्द्रादिरूपं नानाविधं देवताविशेषं 'यजामहे' तथापि तत् 'हविः' सर्वं 'त्वे इत्' त्वय्येव हूयते अन्यदेवतान्तरविषयो यागोऽपि त्वदीयैव सेवेत्यर्थः । तना तनु विस्तारे (तना० प०), क्विप् च (३, २, ७६)' इति क्विप्, यद्वा पचाद्यच्, "सुपां सुलुगिति (७, १, ३९) तृतीयाया आकारः । देवदेवं "नित्यवीप्सयोः (८,

१, ४ )" इति द्विर्भावः, "तस्य परमाम्रेडितम् ( ८, १, २ )" इति उत्तरस्याम्रेडितसंज्ञायाम् "अनुदात्तञ्च ( ८, २, ३ )" इति सर्वानुदात्तत्वम्। यजामहे "निपातैर्यद्यदिहन्त ( ८, १, ३० )" इति निघातप्रतिषेधः। त्वे युष्मच्छब्दात्सप्तम्येकवचनस्य "सुपां सुलुगिति ( ७, १, ३९ ) शे आदेशः, "त्वमावेकवचने ( ७, २, ९७ )" इति मपर्यन्तस्य त्वादेशः शेपलोपे "अतो गुणे ( ६, १, ९७ )" इति पररूपत्वम्, "शे ( १, १, १३ )" इति प्रगृह्यसंज्ञायां "प्लुतप्रगृह्या अचि ( ६, १, १२५ )" इति प्रकृतिभावः। ईयते "अकृत्सार्वधातुकयोः ( ७, ४, २५ )" इति दीर्घः ॥ २ ॥

१ २ ३ २ ३ १ २ ३ १ २ ३र
प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः।

३ २ ३ १ २ ३१२
प्रियाः स्वग्नयो वयम् ॥ * ३ * ॥ [१]

अथ तृतीया। "विश्पतिः" विशां प्रजानां पालकः "पत्यावैश्वर्ये ( ६, २, १८ )" इति पूर्वपदप्रकृतिस्वरे प्राप्ते "परादिश्छन्दसि बहुलम् ( ६, २, १९९ )" इत्युत्तरपदाद्युदात्तत्वम् "होता" होमनिष्पादकः "मन्द्रः" हृष्टः "वरेण्यः" वरणीयः-वृञ एण्यः ( उ० ३, ९८ ) वृषादित्वादाद्युदात्तत्वम् एवं विशिष्टोऽग्निः "नः" अस्माकं "प्रियः" "अस्तु" भवतु। "वयम्" अपि "स्वग्नयः" शोभनाग्नियुक्ताः बहुव्रीहौ "नञ् सुभ्याम् (६, २, १७२)" इति उत्तरपदान्तोदात्तत्वम् एवम्भूताः अतस्तव प्रिया भूयास्म इति शेषः ॥ ३ ॥ [१]

१ २ ३ २ ३ २ ३ १ २ ३ १ २
इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः।

२ १ः २ २ १ २
अस्माकमस्तु केवलः ॥ * १ * ॥

ऋ० मधुच्छन्दः। छं० गायत्री। दे० इन्द्रः। अथेन्द्रं व इति तृचं द्वितीयं सूक्तम्, तत्र प्रथमा। हे ऋत्विग्यजमानाः! "विश्वतः" सर्वेभ्यः जनेभ्यः "परि" उपरि अवस्थितम् "इन्द्रं" "वः" युष्मदर्थं "हवामहे" आह्वयामः। अतः स इन्द्रः "अस्माकं" "केवलः" असाधारणः "अस्तु" इतरेभ्योऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थः इन्द्रं रन्प्रत्ययान्तः (उ० २, २८), नित्त्वादाद्युदात्तः (६, १, १९७) ॥ १ ॥

१ २ २ २ २ १ २र १ २ २
स नो वृषन्नमुं चरुꣳ सत्रादावन्नपा वृधि ।
१ २ २ १ २
अस्मभ्यमप्रतिष्कुतः ॥ * २ * ॥

अथ द्वितीया। हे "सत्रादावन्"! अस्मदभीष्टफलानां सर्वेषां सह प्रदातः! "आतो मनिन् क्वनिब्वनिपश्च (३, २, ७४)" इति वनिप्। "आमन्त्रितस्य च (६, १, १९८)" इत्याद्युदात्तत्वम्, पादादित्वान्न निघातः (८, १, १८) अतः कारणात् व्रीह्यादिनिष्पत्त्यर्थं हे "वृषन्"! वृष्टिप्रदेन्द्र! आमन्त्रितनिघातः (८, १, १९)."नः" अस्मदर्थम् "अमुं" "दृश्यमानं "चरुं" मेघं चरतीति चरुः "भृमृशीत्यादिना (उ०१,७) उप्रत्ययः, प्रत्ययस्वरेणान्तोदात्तः "अपावृधि" उद्घाटय वृञ् वरणे (स्वा० उ०), लोटः सिप्, तस्य "सेर्ह्यपिच्च (३, ४, ८७)" इति हि, "स्वादिभ्यः श्नुः (३, १, ७३)" तस्य "बहुलं छन्दसि (२, ४, ७३)" इति लुक् "श्रुशृणुपृकृवृभ्यश्छन्दसि (६, ४, १०२)" इति हेर्धिरादेशः, तस्य ङित्त्वात्

पूर्वस्य गुणाभावः, निघातश्च, उच्चाटयेत्यर्थः तथैव 'अस्मभ्यम्' अस्मच्छब्दात् "भ्यसोभ्यम् (७, १, ३०)" इति भ्यमादेशः, "शेषे (७, २, ९०)" इति दकारलोपः, "बहुवचने झल्येत् (७, ३, १०३)" इत्येत्वं न भवति "अङ्गवृत्तेः पुनर्वृत्ताव-विधिर्निष्ठितस्य' इत्युक्तम्। प्रातिपदिकस्वरेण स्मेत्यकार उदात्तः। "भ्यसोऽभ्यम् (७, १, ३०)" इत्यभ्यमादेशपक्षे "शेषे लोपः (७, २, ९०)" इति मपर्यन्तशेषस्यास्मच्छब्दस्य लोपः, तदा उदात्तनिवृत्तिस्वरेण अभ्यमादेरकारस्य उदात्त-त्वम् अस्मदर्थम् "अप्रतिष्कुतः" प्रतिशब्दरहितः केनचिद-प्रतिशब्दितः 'स्कुङ् शब्दे' (भ्वा० आ०) 'निष्ठा (३, २, १०२)' इति कर्मणि क्तप्रत्ययः। प्रतेः प्राक् प्रयोगः, पारस्करादेरा-कृतिगणत्वात् (६, १, १५७) सुडागमः। सुषामादेराकृति-गणत्वात् (८, ३, ९८) षत्वम्। नञ्समासे अव्ययपूर्वपद-प्रकृतिस्वरत्वम् (८, २, २), यद्यदस्याभिधीयते तत्र सर्वत्र नेति प्रतिशब्दं नोच्चारयति अतोऽस्मद्विषये कदाचिदप्य-प्रतिस्खलितः। एतदेवाभिप्रेत्य यास्क आह "अप्रतिष्कुतो ऽप्रतिष्कृतोऽप्रतिस्खलितो वा (निरु० नै० ६, १६)" इति॥२॥

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
वृषा यूथेव वꣳसगः कृष्टीरियर्त्योजसा।
१ २ ३ १ २
ईशानो अप्रतिष्कुतः॥ * ३ * ॥ [२]

अथ तृतीया। "वृषा" कामानां वर्षिता इन्द्रः 'ओजसा' स्ववीर्येण बलेनानुग्रहीतुं "कृष्टीः" मनुष्यान् "इयर्त्ति" प्राप्नोति। कीदृश इन्द्रः? "ईशानः" समर्थः "अप्रतिष्कुतः"

प्रतिशब्दरहितः योध्यमानं न परिहरतीत्यर्थः। इन्द्रस्य दृष्टान्तः "वंसगः" वननीयगतिर्वृषभः "यूथेव" गोयूथानि यथा प्राप्नोति तद्वत् यूथा इव युवन्ति मिश्रीभवन्तीति यूथानि, यु मिश्रणामिश्रणयोः ( अदा० प० ), "तिथपृष्ठगूथयूथप्रोथाः (उ० २, १२)" इति थप्रत्ययान्तो निपातितः, । निपातनाद्दीर्घत्वम्, प्रत्ययस्वरेण थकार उदात्तः ( ३, १, ३ ), "शेश्छन्दसि बहुलम् ( ६, १, ७० )" इति शेर्लुक्। "इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् ( २, ४, ७१ वा० )" इति समासेऽपि स एव स्वरः ॥ २ ॥ [२]

१ २ ३ २ ३ १उ ३ १ २
त्वं नश्चित्र ऊत्या वसो राधाꣳसि चोदय ।

२ ३ २ १ २र ३ १ २
अस्य रायस्त्वमग्ने रथीरसि

३ २ ३ २ ३ १ २र
विदा गाधं तुचे तु नः ॥ * १ *॥

ऋ० वृष्णपाणिः शंयुः। छ० बृहती। दे० अग्निः। त्वंनश्चित्र इति प्रगाथात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे "वसो"! वासकाग्ने! "चित्रः" दर्शनीयस्त्वम् "ऊत्या" रक्षया सह "राधांसि" धनानि "नः" अस्मभ्यं "चोदय" प्रेरय 'अस्य' लोके परिदृश्यमानस्य "रायः" धनस्य त्वं "रथीः असि" रंहिता नेता भवसि अतः कारणात् अस्मभ्यं धनानि प्रेरयेत्यर्थः। अपिच 'नः' अस्माकं 'तुचे' अपत्यनामैतत् ( निघ० २, २, १ ) अपत्याय अपतनहेतुभूताय पुत्रादये 'गाधं' प्रतिष्ठां 'नु' क्षिप्रं 'विदाः' लम्भय ॥ १ ॥

१ २ २ १ २र २२ २ १ २र ३ १ २
पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः।
१ १ १ २ ३ १ २ २
अग्ने हेडाᳬसि दैव्या युयोधि
१ २ २ १ २
नोऽदेवानि ह्वराᳬसि च ॥ * २ * ॥ [२]

अथ द्वितीया। हे 'अग्ने!' त्वम् अदब्धैः केनाप्यहिंसितैः 'अप्रयुत्वभिः' अपृथग्भूतैः यौतिरत्र पृथग्भावार्थः सहितैः 'पर्तृभिः' पालनसाधनैः 'तोकं' पुत्रं 'तनयं' पौत्रं च 'पर्षि' पालय 'दैव्या' देवसम्बन्धीनि च 'हेडांसि' क्रोधान् 'नः' अस्मत्तः 'युयोधि' पृथक् कुरु। 'अदेवानि' मनुष्यसम्बन्धीनि च ह्वरांसि हिंसनानि 'च' अस्मत्तः पृथक् कुरु॥ २ ॥ [२]

१ २र २ १ ३ २ २
किमित्ते विष्णो परिचक्षि नाम
१ २र २ १ २ २ १ २
प्र यद्ववक्षे शिपिविष्टो अस्मि।
१ २र ३ १ २र १ २उ
मा वर्पो अस्मदप गूह एतद्-
२ १ २ ३ २ ३ १ २
यदन्यरूपः संमिथे बभूथ ॥ * १ * ॥

ऋ० वसिष्ठः। छ० त्रिष्टुप्। दे० विष्णुः। अथ किमित्त इति त्र्यचात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा। पुरा खलु विष्णुः स्वं रूपं परित्यज्य कृत्रिमं रूपान्तरं धारयन् सङ्ग्रामे वसिष्ठस्य साहाय्यं चकार। तं जानन् ऋषिः अनया प्रत्याचष्टे। अत्र निरुक्तम् "शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः।

कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः। किन्ते विष्णोऽप्रख्यातमेतद् भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिरपि वा प्रशंसानामैवाभिप्रेतं स्यात्। किन्ते विष्णोः प्रख्यातमेतद् भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवति। मावर्पो अस्मदपगूह एतत्। वर्प इति रूपनाम वृणोतीति सतः। यदन्यरूपः समिथे सङ्ग्रामे भवति संयतरश्मिः ( निरु० नै० ५, ८)' इति तत्र कुत्सितार्थपक्षे योजना हे 'विष्णो!' 'ते' तव तत् 'नाम' 'किं' 'परिचक्षि' प्रख्याप्यं भवतीति शेषः किं शब्दः क्षेपे। अप्रख्याप्यमेव तद्भवति 'यत्' नामास्मभ्यं 'प्र ववक्षे' प्रब्रूषे 'शिपिविष्टोऽस्मि' इति अन्तर्णीतोपमानमेतत्। शेप इव निर्वेष्टितः तेजसा घनाच्छादितो भवामीति तदश्लीलार्थत्वादिदं नाम न प्रशस्तमित्यर्थः। यद्वा, परिपूर्वो चक्षिर्वर्जनार्थः तन्नाम किं परिचक्षि परिचक्ष्यं परिवर्जनीयं परित्याज्य विरुद्धार्थप्रतिपादकत्वात् स्वत एव परित्यक्तं हि तत्। शिष्टं समानं पूर्वेण। अन्यम् उक्तरूपविलक्षणं यद् वैष्णवं रूपमस्ति 'एतद्' 'वर्पः' रूपम् "अस्मत्" अस्माकं "मा अप गूहः" अपगूढ़ संवृतं मा कुरु गूह संवरणे ( भ्वा० उ० ) अपितु तदेव रूप प्रकटय। वैष्णवस्य रूपस्य गूहने का प्रसक्तिरिति चेत् 'यद्' यस्मात् त्वम् "अन्यरूप इत्" रूपान्तरमेव धारयन् "समिथे" सङ्ग्रामे 'बभूथ' अस्माकं सहायो भवसि तस्मात् त्वयेदं गूहनं न कार्यमिति। प्रशंसापक्षे तु हे विष्णो! 'ते' तव तत् 'नाम' 'किं' 'परिचक्षि' प्रख्यापनीयं भवति? न प्रख्यापनीयं स्वत एव प्रख्यातम्, अप्रख्यातम् प्रख्यापनीयम्। किं तन्नाम? 'शिपिविष्टो रश्मिभिः' आविष्टोऽस्मीति यन्नाम 'प्रब्रूषे'। यत एव प्रख्यात-

रूपस्त्वमतोऽस्माकमेतत् वैष्णवं रूपं संवृतं मा कार्षीः। इदानीं गूढ़रूपोऽपि 'यद्' यस्मात् त्वं 'समिथे' संग्रामे 'अन्यरूपः' क्षत्रिमरूपाद् यदन्यद् वैष्णवं रूपं शौर्य्यादिलक्षणं तादृग्रूप एव 'बभूथ' भवसि। तस्मात् त्वं गूढ़ोऽपि प्रायस एवेति व्यर्थमेव तस्य रूपस्य गूहनम्। अतो बहुतेजस्कं यद्वैष्णवं रूपं तदेवास्माकं प्रदर्शयेति तात्पर्य्यार्थः ॥ १ ॥

१ २१ १ १ २ २ १
प्र तत्ते अद्य शिपिविष्ट हव्य-
२ १ २ २ १ २ २ १
मर्य्यः शꣳसामि वयुनानि विद्वान्।
१ २ २ १ २ १ १ २ २
तं त्वा गृणामि तवसमतव्यान्-
१ २ १ १ २१ २ १
क्षयन्तमस्य रजसः पराके ॥ * २ * ॥

अथ द्वितीया। हे 'शिपिविष्ट'! रश्मिभिराविष्ट! विष्णो! 'ते' तव 'तत्' प्रसिद्धं विष्णुरिति प्रख्यातं नाम 'अर्य्यः' स्वामी स्तुतीनां हविषां वा तथा 'वयुनानि' ज्ञातव्यान्यर्थजातानि 'विद्वान्' जानन् यच्च 'हव्यम्' आह्वानयोग्यं नाम अहम् 'अद्य' इदानीं प्रशंसामि प्रकर्षेण स्तौमि। 'तवसं' प्रवृद्धं तं 'त्वा' त्वां विष्णुम् "अतव्यान्" अतवीयान् अप्रवृद्धतरोऽहं 'गृणामि' स्तौमि। कीदृशम्? 'अस्य' 'रजसः' लोकस्य "पराके" दूरदेशे क्षयन्तं निवसन्तम् ॥ २ ॥

१ १ २ १ २र १
वषट्ते विष्णवास आ कृणोमि

कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः । किन्ते विष्णोऽप्रख्यात-मेतद् भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्य-प्रतिपन्नरश्मिरपि वा प्रशंसानामैवाभिप्रेतं स्यात् । किन्ते विष्णोः प्रख्यातमेतद् भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपि-विष्टोऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैरा-विष्टो भवति । मावर्पो अस्मदपगूह एतत् । वर्प इति रूप नाम वृणोतीति सतः । यदन्यरूपः समिथे सङ्ग्रामे भवसि संयतरश्मिः ( निरु० नै० ५, ८ )' इति तत्र कुत्सितार्थपक्षे योजना हे 'विष्णो !' 'ते' तव तत् 'नाम' 'किं' 'परिचक्षि' प्रख्याप्य भवतीति शेषः किं शब्दः क्षेपे । अप्रख्याप्यमेव तद्भवति 'यत्' नामाख्यं 'प्र ववक्षे' प्रब्रूषे 'शिपिविष्टो अस्मि' इति अन्तर्णीतोपमानमेतत् । शेप इव निर्वेष्टितः तेजसा अनाच्छादितो भवामीति तदश्लीलार्थत्वादिदं नाम न प्रशस्तमित्यर्थः । यद्वा, परिपूर्वो चक्षिर्वर्जनार्थः तन्नाम किं परिचक्षि परिचक्ष्यं परिवर्जनीयं परित्याज्य विरुद्धार्थप्रतिपादक-त्वात् अत एव परित्यक्तं हि तत् । शिष्टं समानं पूर्वेण । अन्यम् उक्तरूपविलक्षणं यद् वैष्णवं रूपमस्ति 'एतद्' 'वर्पः' रूपम् "अस्मत्" अस्माकं "मा अप गूहः" अपगूढ संवृतं मा कुरु गूह संवरणे ( भ्वा० उ० ) अपितु तदेव रूप प्रकटय । वैष्णवस्य रूपस्य गूहने का प्रसक्तिरिति चेत् 'यद्' यस्मात् त्वम् "अन्यरूप इत्" रूपान्तरमेव धारयन् "समिथे" सङ्ग्रामे 'बभूथ' अस्माकं सहायो भवसि तस्मात् त्वयेदं गूहनं न कार्य-मिति । प्रशंसापक्षे तु हे विष्णो ! 'ते' तव तत् 'नाम' 'किं' 'परिचक्षि' प्रख्यापनीयं भवति? न प्रख्यापनीयं अत एव प्रख्या-तम्, अप्रख्यातम् प्रख्यापनीयम् । किं तन्नाम ?' 'शिपिविष्टो रश्मिभिः' आविष्टोऽस्मीति यन्नाम 'प्रब्रूषे' । अतएवं प्रख्यात-

तत्र प्रथमा। हे 'वायो!' 'ते' तुभ्यं 'शुक्रः' व्रतचर्य्यादिना दीप्तो ऽहं 'मध्वः' मधुरं सोमरसं कर्म्मणि षष्ठी (२, ३, ६५)। 'अयम्' इतरेभ्यः पूर्वम् 'अयामि' प्रापयामि अयतिरन्तर्भावितण्यर्थः। किमर्थम्? 'दिविष्टिषु' दिवो द्युलोकस्यैषणेषु सत्सु हे 'देव'! वायो। 'स्पार्हः' स्पृहणीयस्त्वं 'नियुत्वता' नियुद्भ वायोः प्रतिनियतोऽश्वः, तेन साधनेन 'आयाहि' 'सोमपीतये' सोमपानाय ॥ १ ॥

१ २   २   १ २   ३ १ २
इन्द्रश्च वायवेषाꣳ सोमानां पीतिमर्हथः।
२ १   २२
युवाꣳ हि यन्तीन्दवो
१ २उ   १ २ ३क २२
निम्नमापो न सध्यक् ॥ * २ * ॥

अथ द्वितीया। हे 'वायो' त्वम् 'इन्द्रश्च' 'एषां' ग्रहीतानां सोमानां 'पीतिं' पानम् 'अर्हथः'। 'युवां' 'हि' खलु 'इन्दवः' आप्युदकाः सोमाः 'यन्ति' प्राप्नुवन्ति 'निम्नं' खातप्रदेशम् 'आपः न सध्यक्' उदकानि यथा सहैव गच्छन्ति तद्वत् सर्वे सोमा युवां 'यन्ति हि' ॥ २ ॥

२ १ १ २   २   १ २   ३ १ २
वायविन्द्रश्च शुष्मिणा सरथꣳ शवसस्पती।
२ १ २   ३ २ ३
नियुत्वन्ता न ऊतय
१ २ ३   १ २
आ यातꣳ सोमपीतये ॥ * ३ * ॥ [५]

अथ तृतीया। हे 'वायो'। त्वम् 'इन्द्रश्च' 'शवसः' बलस्य

१ २ २ १ २
तन्मे जुषस्व शिपिविष्ट हव्यम् ।
२ ३ २ ३ १ १ २
वर्द्धन्तु त्वा सुष्टुतयो गिरो मे
२ १ २ १ २ १ १ २
यूयं पात स्वस्तिभिः सदा नः ॥ * ३ *॥ [४]

अथ तृतीया। हे 'विष्णो !' 'ते' तुभ्यं 'आसः' आस्यात् 'आ' अभिमुखं 'वषट् कृणोमि' वषट्कारेण हविर्ददामि। हे शिपिविष्ट' ! शिपयो रश्मयस्तैराविष्ट ! विष्णो ! 'तत्' वषट्कृतं 'मे' मदीयं 'हव्यं' हविः 'जुषस्व' सेवस्व। 'सुष्टुतयः' शोभनस्तुत्यात्मिकाः "गिरः" वाचश्च 'त्वा' त्वां 'वर्द्धन्तु' वर्द्धयन्तु। हे विष्णो। 'यूयं' बहुवचनं पूजार्थम्। यद्वा, भवदादयो देवाः सर्वे 'स्वस्तिभिः' अविनाशिभिः 'नः' अस्मान् 'सदा' सर्वदा 'पात' रक्षत ॥ ३ ॥ [४]

इति सामवेदार्थप्रकाशे उत्तरग्रन्थस्य पञ्चदशाध्यायस्य प्रथमः खण्डः ।

---

१ २ ३ १ २ १ २ १ २ १ २ १ २
वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु ।
१ २ ३ १ २
आ याहि सोमपीतये
१ १ २ ३ १ २
स्पार्हो देव नियुत्वता ॥ * १ * ॥

ऋ० वामदेवः। छ० अनुष्टुप्। दे० इन्द्रः, वायुः वा। अथ द्वितीयखण्डे—वायो शुक्रो अयामीति ऋचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा। हे 'वायो!' 'ते' तुभ्यं 'शुक्रः' व्रतचर्य्यादिना दीप्तो ऽहं 'मध्वः' मधुरं सोमरसं कर्मणि षष्ठी (२, ३, ६५)। 'अयम्' इतरेभ्यः पूर्वम् 'अयामि' प्रापयामि अयतिरन्तर्भावितण्यर्थः। किमर्थम्? 'दिविष्टिषु' दिवो द्युलोकस्यैषणेषु खलु हे 'देव'! वायो! 'स्पार्हः' स्पृहणीयस्त्वं 'नियुत्वता' नियुद् वायोः प्रतिनियतोऽश्वः, तेन साधनेन 'आयाहि' 'सोमपीतये' सोमपानाय ॥ १ ॥

१ २     २     १ २   ३ १ २
इन्द्रश्च वायवेषाꣳ सोमानां पीतिमर्हथः ।

१ २     ३२
युवाꣳ हि यन्तीन्दवो

१ २७   २   २   १क २र
निम्नमापो न सध्र्यक् ॥ * २ * ॥

अथ द्वितीया। हे 'वायो' त्वम् 'इन्द्रश्च' 'एषां' गच्छीतानां सोमानां 'पीतिं' पानम् 'अर्हथः'। 'युवां' 'हि' खलु 'इन्दवः' वाय्युदकाः सोमाः 'यन्ति' प्राप्नुवन्ति 'निम्नं' खातप्रदेशम् 'आपः न सध्र्यक्' उदकानि यथा सहैव गच्छन्ति तद्वत् सर्वे सोमा युवां 'यन्ति हि' ॥ २ ॥

२ ३ १ २   ३   १ २   ३ १ २
वायविन्द्रश्च शुष्मिणा सरथꣳ शवसस्पती ।

३ १ २     ३ २ ३
नियुत्वन्ता न ऊतय

१ . २ ३     १ २
आ यातꣳ सोमपीतये ॥ * ३ * ॥ [५]

अथ तृतीया। हे 'वायो'! त्वम् 'इन्द्रश्च' 'शवसः' बलस्य

'पती' पालयितारौ अतएव 'शुमिणा' बलवन्तौ 'नियुत्वता' नियुत्सञ्ज्ञाश्ववन्तौ युवां 'सरथं' समानमेव रथमारुह्येति शेषः। 'नः' अस्माकम् 'ऊतये' रक्षणाय 'सोमपीतये' सोमपानाय च 'आयातम्' आगच्छन्तम्। यद्वा, सरथमधितिष्ठन्तमारुह्य चायातमिति वाक्यद्वयम् ॥ ३ ॥ [५]

१ २ ३ १ २र ३ १ २ ३ १ २र
अध क्षपा परिष्कृतो वाजाँ३ अभि प्र गाहसे।

१ २ ३ १ २ ३ २ ३
यदी विवस्वतो धियो

३ २ ३ २ ३ १ २
हरिँ३ हिन्वन्ति यातवे ॥ * १ * ॥

ऋ० ऋजुः रेभः वा। छ० अनुष्टुप्। दे० सोमः। अधक्षपेति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। 'क्षपा' 'सुपां सुलुगिति (७, १, ३९) पञ्चम्या आकारः क्षपायाः रात्रेः 'अध' अनन्तरं प्रातःकाले 'परिष्कृतः' भूषणार्थे 'सम्पर्युपेभ्यः (६, १, १३७)' इति करोतेः सुडागमः। अद्भिरलङ्कृतः यद्वा, क्षपयितरां सेनायामलङ्कृतः हे सोम! त्वं 'वाजान्' अन्नानि बलानि वा 'अभि' लक्ष्य 'प्र गाहसे' प्रगच्छसि। 'विवस्वतः' परिचरणवतः यजमानस्य 'धियः' कर्मसाधनभूता अङ्गुलयः 'हरिं' हरितवर्णं त्वामंशुं 'यातवे' पात्राण्यभिगमनाय 'यदि' 'हिन्वन्ति' प्रेरयन्ति तर्हि सवनानि गच्छसीति ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ १ २
तमस्य मर्जयामसि मदो य इन्द्रपातमः।

१ २र ३ १ २ ३ २ ३ २ ३ १ २ ३ २
यं गाव आसभिर्दधुः पुरा नूनं च सूरयः ॥ * २ * ॥

अथ द्वितीया। 'अस्य' सोमस्य 'तं' रसं, 'मर्जयामसि' मर्जयामः शोधयामः अलङ्कुर्मो वा 'यः' 'मदः' मदकरः रसः 'इन्द्रपातमः' इन्द्रेणात्यन्तं पातव्यो भवति। किञ्च 'गावः' गन्तारः 'सूरयः' स्तोतारः 'पुरा च' 'नूनं' इदानीं च 'यं' सोमरसम् 'आसभिः' आस्यैः 'दधुः' धारयन्ति पिबन्तीति यावत् यद्वा, 'गावः' धेनवः 'यं' सोमं तृणादिष्ववस्थितम् 'आसभिः' आस्यैः 'दधुः' धारयन्ति तृणरूपेण भक्षयन्ति ॥ २ ॥

१  २र  १ १  १ २ २३क २र
तं गाथया पुराण्या पुनानमभ्यनूषत ।

२ १  २  ३ १ २
उतो कृपन्त धीतयो

१ २ ३  २ ३  १ २
देवानां नाम बिभ्रतीः ॥ * ३ * ॥ [६]

अथ तृतीया। 'पुनानं' पूयमानं सोमं 'पुराण्या' पुरातनया 'गाथया' स्तुत्या 'अभि अनूषत' स्तोतारोऽभिष्टुवन्ति नु स्तवने ( अदा० प० ), लुङि रूपम्। 'उतो' अपिच 'नाम' कर्माणि नमनं 'बिभ्रतीः' बिभ्राणाः 'धीतयः' अङ्गुलयः 'देवानां' सोमरूपहविःप्रदानाय "कृपन्त" कल्पयन्ति समर्था भवन्ति ॥ ३ ॥ [६]

१ १  १ ३ १ २   ३१ २  २ १  २र
अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।

२ १ २   ३ १ २
सम्राजन्तमध्वराणाम् ॥ * १ * ॥

ऋ० शुनःशेपः। छ० गायत्री। दे० अग्निः। अश्वमित्येति तृचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। "अध्वराणां"

यज्ञानां "सम्राजन्तं" सम्राट्स्वरूपं स्वामिनम् "अग्निं" "नमोभिः" स्तुतिभिर्हविर्भिर्वा "वन्दध्यै" वन्दितुं महत्ता इति शेषः। अत्रेदृष्टान्तः "वारवन्तं" वालयुक्तम् "अश्वं न" अश्वमिव अश्वो यथा वालेन बाधकान् मशकमक्षिकादीन् परिहरति, तथा त्वमपि ज्वालाभिरस्मद्विरोधिनः परिहरसीत्यर्थः। वारवन्तं मतुपः पित्त्वादनुदात्तत्वम्, हवौ जिह्वादाद्युदात्तत्वं वारशब्दः, 'कर्पात्वतः (६, १, १५८)' इति अन्तोदात्तत्वं व्यत्ययेन प्रवर्त्तते ॥ १ ॥

१ २ ३ १ ११ २ १ २ ३ १ २
स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः।

३ २ ३ १ २
मीढ्वाꣳ अस्माकं बभूयात् ॥ * २ * ॥

अथ द्वितीया। "स घ" स एवाग्निः "नः" अस्माकं "सुशेवः" सुसुखो भवत्विति शेषः। कीदृशः? "शवसा" शवसः बलस्य विभक्तिव्यत्ययः "सूनुः" पुत्रः "पृथुप्रगामा" पृथुप्रगमनः प्रकर्षेण गमनं प्रगामः 'ग्रहवृ (३, ३, १२१)' इति घञ्। पृथुः प्रगामो यस्यासौ पृथुप्रगामः, 'सुपां सुलुक् (७, १, ३८)' इति पूर्वसवर्ण आकारः, बहुव्रीहौ पूर्वपद प्रकृतिस्वरत्वम् (८, २, १) किञ्च 'अस्माकं' 'मीढ्वान्' 'मिह सेचने' (भ्वा० प०) इत्यस्मात् क्वसुप्रत्ययान्तो 'दाश्वान् साह्वान् मीढ्वांश्च (६, १, १२)' इति निपातितः कामानां वर्षिता 'बभूयात्' भवतेश्छान्दसस्य लिटः तिङां तिङो भवन्तीति तिङादेशः, यासुट्, स्थानिवद्भावात् आर्द्धधातुकत्वात् वुवभावः द्विर्वचने 'भवतेरः (७, ४, ७३)' इत्यत्वं 'तिङः (८, १, २८)' इति निघातः भवत्वित्यर्थः ॥ २ ॥

१ २ ३ २ ३ २ ३ १ ३२ ३ २ ३
स नो दूराच्चासाच्च नि मर्त्यादघायोः।
३ २उ ३ २ ३१ २
पाहि सदमिद्विश्वायुः॥ * ३ * ॥ [७]

अथ तृतीया। हे अग्ने! 'विश्वायुः' इण्गतावित्यस्माद् भावे एतेर्णिच्च इति उसिः, विश्वमयनं गमनं यस्येति बहुव्रीहिः, बहुव्रीहौ विश्वं संज्ञायाम् (६, २, १०६) इति पूर्वपदान्तोदात्तत्वं व्याप्तगमन इत्यर्थः स त्वं 'दूराच्च' दूरेऽपि 'आराच्च' आसन्नदेशेऽपि। 'अघायोः' अघं पापमनिष्टं कर्त्तुमिच्छतः 'मर्त्यात्' मनुष्याद् वैरिणः 'नः' अस्मान् 'सदमित्' सर्वदैव 'नि पाहि' निरतां पालय॥ ३ [७]

१ २ ३ १ २ ३ १ ३२ २ ३ २
त्वमिन्द्र प्रतूर्त्तिष्वभि विश्वा असि स्पृधः।
२ १ २ ३ १ २ ३२
अशस्तिहा जनिता वृत्र-
१ २ ३ १ २ ३२
तूरसि त्वं तूर्य्य तरुष्यतः॥ * १ * ॥

ऋ० नृमेधाः। छ० बृहती। दे० इन्द्रः। त्वमिन्द्रप्रतूर्त्तिष्विति प्रगाथात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे "इन्द्र!" "त्वं" "प्रतूर्त्तिषु" सङ्ग्रामेषु "विश्वाः" सर्वाः "स्पृधः" युद्धकारिणीः शत्रुसेनाः 'अभि असि' अभिभवसि। किञ्च, हे "तूर्य्य!" शत्रूणां बाधकेन्द्र! त्वम् 'अशस्तिहा' देव्यानामशस्तीनां हन्तासि। 'जनिता' असुरेभ्यः अशस्तीनां जनयिता चासि। अतएव "विश्वतूः" सर्वस्य शत्रुवर्गस्य सर्वप्रकारेण हिंसिता "असि" "तरुष्यतः" बाधकांश्च बाधमानोऽसि॥ १॥

१ २ ३ १ २ ३ १ १
अनु ते शुष्मं तुरयन्तमीयतुः
१ २उ ३ २ ३ १ २
चोणी शिशुं न मातरा ।
१ २ ३ १ २
विश्वास्ते स्पृधः श्नथयन्त
१ १ २ ३ १ ३२३ १ २
मन्यवे वृत्रं यदिन्द्र तूर्वसि ॥ * २ * ॥ [८]

अथ द्वितीया। हे इन्द्र! 'ते' तव 'शुष्मं' बलं 'तुरयन्तं' शत्रुं हिंसन्तं 'चोणी' द्यावापृथिव्यौ 'मातरा' मातरौ 'शिशुं न' शिशुमिव 'अनु ईयतुः' अनुगच्छतः, गमनमात्रे दृष्टान्तः। किञ्च, हे इन्द्र! त्वं 'यद्' यस्मात् 'वृत्रं' वृत्रनामानं शत्रुं 'तूर्वसि' हंसि। अतः 'ते' तव 'मन्यवे' क्रोधाय 'विश्वाः' सर्वाः 'स्पृधः' सङ्ग्रामकारिण्यः सेनाः 'श्नथयन्त' श्नथिता खिन्ना भवन्ति ॥ २ ॥ [८]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तदशाध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

---

२ १ २१ ३ १उ ३ १ २
यज्ञ इन्द्रमवर्द्धयद्यद्भूमिं व्यवर्त्तयत् ।
२ १ २ ३१ २ ३ २
चक्राण ओपशं दिवि ॥ * १ * ॥

ऋ० गोषूक्तिः वा अश्वसूक्तिः। छ० गायत्री। दे० इन्द्रः।
अथ तृतीयखण्डे—यज्ञ इन्द्रमिति त्र्यचं प्रथमं सूक्तम्, तत्र

प्रथमा। 'यज्ञः' यजमानैरनुष्ठीयमानो यागः 'इन्द्रं' देवम् 'अवर्द्धयत्' श्रूयते हि, 'इन्द्र इदं हविरजुषतावीवृधतमहो ज्यायोऽकृत' इति। स इन्द्रः 'यद्' यस्मात् 'भूमिं' पृथिवीं 'व्यवर्त्तयत्' वृष्ट्यादिप्रदानेन विशेषेण वर्त्तमानमकरोत्। किङ्कुर्वन्? 'दिवि' अन्तरिक्षे मेघम् 'ओपशम्' उपेत्य शयानं "चक्राणः" कुर्वन् यद्वा, आत्मनि समवेतो वीर्य्यविशेषः ओपशः, तमन्तरिक्षे कुर्वन् ॥ १ ॥

२ १ २ १ २ ३ १ २ ३ २
व्या३न्तरिक्षमतिरन्मदे सोमस्य रोचना।
२ ३ १ २र ३ २
इन्द्रो यदभिनद्वलम् ॥ * २ * ॥

अथ द्वितीया। 'सोमस्य' पानेन 'मदे' हर्षे सति 'रोचना' रोचमानम् 'अन्तरिक्षम्' अयम् 'इन्द्रः' 'वि अतिरत्' व्यवर्द्धयत् 'यद्' यस्मात् कारणात् 'वलम्' आवृत्य स्थितमसुरं मेघं वा 'अभिनत्' व्यदारयत् ॥ २ ॥

१ २र ३ १ २ ३ २ ३ १ २र ३ २
उद्गा आजदङ्गिरोभ्य आविष्कृण्वन् गुहा सतीः।
३ १ २ ३ २
अर्वाञ्चं नुनुदे वलम् ॥ * ३ * ॥ [९]

अथ तृतीया। 'अङ्गिरोभ्यः' ऋषिभ्यः वलानुचरैः पणिभिरपहृता गाः 'उदाजत्' उदगमयत्। किङ्कुर्वन्? 'गुहा' गुहायां विले 'सतीः' विद्यमाना यथा न दृश्यन्ते तथा पणिभिर्निगूढास्ता गाः 'आविष्कृण्वन्' प्रकाशयन्। अपिच पणी-

नामधिपतिं 'वलम्' असुरमपि 'अर्वाञ्चम्' अधोमुखं 'नुनुदे' प्रेरितवान् ॥ ३ ॥ [८]

१ २   २ ३ १   १ २   १ १ २
त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् ।
२ ३ १ २
आ च्यावयस्यूतये ॥ * १ * ॥

ऋ० श्रुतकक्षः वा सुकक्षः । छ० गायत्री । दे० इन्द्रः । अथ तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा । यजमानः स्तोतारं सम्बोध्याह, हे स्तोतः ! 'सत्रासाहं' सत्राशब्दो बहुवाची बहूनामभिभवितारं यद्वा, शत्रून् स्वबलेन सङ्गत्य जेतारं 'वः' युष्मदीयासु 'विश्वासु' 'गीर्षु' सर्वेषु स्तोत्रेषु 'आयतम्' विस्तृतं सर्वत्रेन्द्र एव स्तूयते, तस्मात् तेषु विततम्, 'त्यं' तम् 'उ', इत्यवधारणे तमेवेन्द्रम् 'ऊतये' अस्मद्रक्षणाय 'आ च्यावयसि' च्युङ् प्रुङ् गतौ (भ्वा० आ०) त्वदीयैः स्तोत्रैरस्मं प्रत्याभिमुख्ये नागमय ॥१॥

१ १   २र   ३ १ २   १ १   २र
युध्मꣳ सन्तमनर्वाणꣳ सोमपामनपच्युतम् ।
१ २   ३   १ २
नरमवार्यक्रतुम् ॥ * २ * ॥

अथ द्वितीया । एवं गुणोपेतमिन्द्रमागमयेत्याह, 'युध्मं' शत्रूणां सम्प्रहारकं 'सन्तम्' अतएव 'अनर्वाणम्' अन्यैरघृतगमनं, तस्मात् 'अनपच्युतं' सङ्ग्रामेषु शत्रुभिरहिंसितं, 'सोमपां' सोमस्य पातारम्, अस्य सोमस्य मदे सति 'अवार्यक्रतुं' अरैरनिवारणीयकर्माणं, 'नरं' सर्वस्य नेतारम् । एतादृग्गुणोपेतं तमिन्द्रमागमयेति पूर्वेण सम्बन्धः ॥ २ ॥

१ २ १ २उ २ २ २ १ २
शिचा ण इन्द्र राय आ पुरु विद्वाꣳ ऋचीषम।

१ २ ३ २ ३ १ २
अवा नः पार्य्ये धने ॥ * ३ * ॥ [१०]

अथ तृतीया। हे 'ऋचीषम'! स्तुत्या सम! यद्वा, 'ईष गति-हिंसादानेषु' (भ्वा० प०), अस्मादमः प्रत्ययः, सर्वैर्गन्तव्य! दर्शनीय! वा ऋक्तगुणोपेत! हे इन्द्र! 'विद्वान्' सर्वविषय-ज्ञानवान् त्वम् अस्मभ्यः 'आ' आहृत्य "रायः" धनानि 'नः' अस्मभ्य' 'पुरु' बहुवारं "शिच" प्रयच्छ यद्वा, पुरु इति रायो विशेषणम्, बहूनि धनानि प्रयच्छ। किञ्च, 'पार्य्ये' पाराः शत्रवः तत्र भवे 'धने' आजिहीर्षिते शत्रुधने 'नः' अस्मान् 'अव' रच, शत्रून् हत्वा तद्धनेनास्मान् पालयेत्यर्थः॥ ३॥ [१०]

२ १ १ २ १ २ २२उ १ १ २ १ १ १२
तव त्यदिन्द्रियं बृहत्तव दचमुत क्रतुम्।

१ १ १ २ ३ १ २
वज्रꣳ शिशाति धिषणा वरेण्यम्॥ * १ * ॥

ऋ० गोषूक्तिः अश्वसूक्तिः वा। छ० उष्णिक्। दे० इन्द्रः। तवत्यदिति त्र्यचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे इन्द्र! 'त्यत्' प्रसिद्धम् 'इन्द्रियम्' इन्द्रस्य लिङ्ग' "बृहत्" प्रभूतं वीर्य्यं "धिषणा" स्तुतिः "शिशाति" शिश्यति तीक्ष्णीकरोति। तथा "तव" त्वदीयं "दचं" शोषकं बलम् "उत" अपिच 'क्रतु' प्रज्ञानं बलं कर्म वा "वरेण्य" वरणीयं "वज्रम्" आयुधश्च शिशाति तीक्ष्णीकरोति॥ १॥

२१ १ २ २ १ २ २ १ २ १ १ २
तव द्यौरिन्द्र पौꣳस्यं पृथिवी वर्द्धति श्रवः।

२उ १ २ १
त्वामापः पर्वतासश्च हिन्विरे ॥ * २ * ॥

अथ द्वितीया। हे "इन्द्र!" "द्यौः" द्युलोकः "तव" "पौंस्यं" बलं "वर्द्धति" वर्द्धयति "श्रवः" त्वदीयं यशः "पृथिवी" वर्द्धयति वृधेर्ण्यन्ताल्लटि अपि "छन्दस्युभयथा (३, ४, ११७)", इति आर्द्धधातुकत्वात् "णेरनिटि (६, ४, ५१)", इति टिलोपः तं "त्वाम्" "आपः" उदकान्यान्तरिक्षाणि "पर्वतासः च" पर्ववन्तो मेघाश्च गिरयश्च वा 'हिन्विरे' प्रीणयन्ति स्वामित्वेन प्राप्नुवन्तीति वा ॥ २ ॥

१ २र ३ १ २र १ २ २ १ २
त्वां विष्णुर्बृहन् क्षयो मित्रो गृणाति वरुणः ।
१ २र ३ १ २ १ २
त्वाꣳ शर्धो मदत्यनु मारुतम् ॥ * ३ * ॥ [११]

अथ तृतीया। हे इन्द्र! 'बृहत्' महान् 'क्षयः' निवासहेतुः "विष्णुः" "मित्रः" 'वरुणः' च "त्वां" "गृणाति" स्तौति। तथा "मारुत" मरुत्सम्बन्धि "शर्द्धः" बलं "त्वाम्" "अनु मदति" तव मदमनुलक्ष्य पश्चात् माद्यति त्वामनुमादयति वा ॥ ३ ॥ [११]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमाध्यायस्य
तृतीयः खण्डः ॥ ३ ॥

---

१ २ १ २ २ २ १ २ २ १ २
नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः ।

१ २ ३ १ २
अमैरमित्रमर्दय ॥ * १ * ॥

ऋ० विरूपः। छ० गायत्री। दे० अग्निः। अथ चतुर्थे खण्डे नमस्ते अग्न इति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। 'देव !' द्योतमान ! हे 'अग्ने !' 'देव !' 'ते' तुभ्यं 'नमः' गृणन्ति' नमस्कारशब्दमुच्चारयन्ति। किमर्थम् ? 'ओजसे' बलाय किं ? 'कृष्टयः' मनुष्याः यजमानाः अतोऽहमपि गृणामीत्यर्थः। त्वञ्च 'अमैः' बलैः 'अमित्रं' शत्रुम् 'अर्दय' नाशय ॥१॥

३ २उ २ १ २३१ २ ३१२ ३ २
कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम्।
१२ ३१ २
उरुकृदुरु णस्कृधि ॥ * २ * ॥

अथ द्वितीया। हे 'अग्ने !' त्वं 'नः' अस्माकं 'गविष्टये' गवामिषणाय 'कुवित्सु' बहु 'रयिं' धनं 'संवेषिषः' सम्प्रापय 'उरुकृत्' त्वं 'नः' अस्मान् 'उरु कृधि' कुरु ॥ २ ॥

१ २ ३ १ २र ३ १ २
मा नो अग्ने महाधने परा वर्ग्भारभृद्यथा।
३ १ २ २ ३ १ २
संवर्गꣳ सꣳ रयिं जय ॥ * ३ * ॥ [१२]

अथ तृतीया। हे 'अग्ने !' 'नः' अस्मान्, अस्मिन् 'महाधने' सङ्ग्रामे 'मा परावर्क्' मा परित्याक्षीः 'भारभृद् यथा' भारवाही यथा भारमन्ते परित्यजति तद्वत् 'संवर्गं' शत्रुभ्यः सम्यक्छिद्यमानं 'रयिं' धनं 'सं जय' अस्मदर्थम् ॥३॥ [१२]

१ २ ३ २ ३ २ ३ १ २ ३ १ २
समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः ।
३ १ २ ३ १ २
समुद्रायेव सिन्धवः ॥ * १ * ॥

ऋ० वत्सः । छ० गायत्री । दे० इन्द्रः । अथ समस्यमन्यव इति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा । 'विशः' विशन्त्यः 'विश्वाः' सर्वाः 'कृष्टयः' प्रजाः 'अस्य' इन्द्रस्य 'मन्यवे' क्रोधाय यद्वा, मन्युर्मननसाधनं स्तोत्रं तदर्थं 'सं नमन्त' सम्यक् स्वत एव प्रह्वीभवन्ति उच्चारयन्ति वा । तत्र दृष्टान्तः, 'समुद्राय इव' यथा समुद्रमुदधिं प्रति 'सिन्धवः' स्यन्दनशीला नद्यः स्वयमेव नमन्ते, तद्वत् ॥ १ ॥

३ १ २ ३ २ १ २ ३ १ २ ३ १ २
वि चिद्वृत्रस्य दोधतः शिरो बिभेद वृष्णिना ।
१ २ ३ १ २
वज्रेण शतपर्वणा ॥ * २ * ॥

अथ द्वितीया । 'चित्', शब्दोऽप्यर्थः स च भिन्नक्रमः 'वृत्रस्य चित्' आवरकस्यापि 'दोधतः' अत्यर्थं भृशं वा जगत् कम्पयतः असुरस्य 'शिरः' मूर्द्धानं 'शतपर्वणा' शतसङ्ख्यापर्वोपेत धारा यस्य तादृशेन 'वृष्णिना' सेचनसमर्थेन वीर्य्यवता वज्रेण इन्द्रः 'वि बिभेद' विचिच्छेद ॥ २ ॥

३ २ १ २ १ २उ ३ १ २
ओजस्तदस्य तित्विष उभे यत्समवर्त्तयत् ।
३ १ २ ३ १ २ ३ १
इन्द्रश्चर्मेव रोदसी ॥ * ३ * ॥ [१३]

अथ तृतीया। 'अस्य' इन्द्रस्य 'तत्' 'ओजः' बलं 'तित्विषे' दीदिपे त्विष दीप्तौ (भ्वा० उ०) 'यत्' येन ओजसा अयम् 'इन्द्रः' 'उभे' रोदसी' द्यावापृथिव्यौ 'चर्म इव' 'समवर्त्तयत्' सम्यग् वर्त्तयति यथा कश्चित् किञ्चित् चर्म कदाचिद् विस्तारयति कदाचित् सङ्कोचयति एवं तदधीने अभूतामित्यर्थः ॥ ३ ॥ [१२]

१२ १ २ २ १ २ २ १२
सुमन्मा वस्वी रन्ती सूनरी ॥ * १ *॥

ऋ० शुनःशेपः। छ० गायत्री। दे० अग्निः। अथ सुमन्मा-वस्वीति त्र्यचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे इन्द्र। तव अश्वौ 'सुमन्मा' शोभनज्ञानौ 'वस्वी' धनवन्तौ 'रन्ती' रम-णीयौ 'सूनरी' सुष्ठु नेत्रौ यद्वा, सुमन्मा शोभनमननीया मम स्तुतिः प्रवृत्तेति शेषः। अन्यत् समानम् ॥ १ ॥

१२ २ १ २ ३ २ २ १ २२ ३ २
सरूप वृषन्ना गहीमौ भद्रौ धुर्यावभि।
२ ३ १ २२
ताविमा उप सर्पतः ॥ * २ *॥

अथ द्वितीया। हे 'सरूप।' हे 'वृषन्।' कामानां वर्षकेन्द्र। 'भद्रौ कल्याणौ 'इमौ' रथे युज्यमानौ 'धुर्य्यौ' वहनयोग्यावश्वौ 'अभि आ गहि' आगच्छ अस्मद् यज्ञं प्रति शीघ्रं गच्छ 'तौ' 'इमौ' अश्वौ 'उप सर्पतः' त्वां सम्यक् सेवेते ॥ २ ॥

१२ ३ १ २ २ ३ ३ १ २
नीव शीर्षाणि मृढ्वं मध्य आपस्य तिष्ठति।

१ २ ३ १ २ ३ २
शृङ्गेभिर्दशभिर्दिशन् ॥ * ३ * ॥ [१४]

इति अष्टमप्रपाठकस्य प्रथमार्द्धम् ।

---

अथ तृतीया । हे ऋत्विग्जनाः ! 'मध्ये' 'आपस्य' रसस्य इन्द्रः 'तिष्ठति'। किं कुर्वन् ? 'दशभिः' दशसङ्ख्याकैः 'शृङ्गेभिः' अङ्गुलिभिः हस्ताग्रैः उभाभ्यां 'दिशन्' अस्मदभीष्टमर्थं प्रयच्छन् यत्र तिष्ठति। हे ऋत्विग्यजमानाः ! तं पश्यत 'शीर्षाणि नि मृढ्व' यूयमिन्द्रगमनविषयश्रेयांसि शिरसा धारयध्वमित्यर्थः ॥ ३ ॥ [१४]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तदशाध्यायस्य चतुर्थः खण्डः ॥४॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे सप्तदशोऽध्यायः ।

---

## अथ अष्टादशोऽध्याय आरभ्यते ।

अष्टमप्रपाठकस्य द्वितीयार्द्धम् ।

१ २ ३ १ २ १ २ २ २ १ २
पव्यंपन्यमित्सोतार आ धावत मद्याय ।
१ २ ३ २ ३ १ २
सोमं वीराय शूराय ॥ * १ * ॥

ऋ० मेधातिथिः प्रियमेधः वा । छ० गायत्री । दे०सोमः । तत्र, प्रथमे खण्डे पन्यम्पन्यमिति तृचात्मकं प्रथमं सूक्तम्, तत्र

प्रथमा। हे 'सोतारः'! अभिषोतारोऽध्वर्य्यवः! 'मद्याय' मादयितव्याय 'वीराय' विक्रान्ताय 'शूराय' शौर्य्यवते इन्द्राय 'पन्यम् पन्यम् इत्' सर्वत्र स्तुत्यमेव 'सोमम्' 'आ धावत' अभिगमयत प्रयच्छतेत्यर्थः॥ १॥

१　२र　३ १ २　३ १　२　३　१ २
एह हरी ब्रह्मयुजा शग्मा वचतः सखायम्।
१ २ ३　१　२र
इन्द्रं गीर्भिर्गिर्वणसम्॥ * २ *॥

अथ द्वितीया। 'ब्रह्मयुजा' ब्रह्मणा मन्त्रेण स्तोत्रेण हविषा वा युज्यमानौ 'शग्मा' शग्मौ सुखकरौ शक्तौ वा 'हरी' अश्वौ 'इह' अस्मिन् यज्ञे 'सखायं' समानख्यानं मित्रभूतम् 'इन्द्रम्' 'आ वचतः' आवहताम्। कीदृशमिन्द्रम्? 'गीर्भिः' स्तुतिभिः प्रख्यापितमाहात्म्यं 'गिर्वणसं' गिरा सम्भक्तारं स्तुतिभिः सम्भजनीयं वा॥ २॥

१ २　३ १　२ १　२र　३ १ २उ　३ २
पाता वृत्रहा सुतमा घा गमन्नारे अस्मत्।
१　२　३ १ २
नि यमते शतमूतिः॥ * ३ *॥ [१]

अथ तृतीया। 'सुतम्' अभिषुतं 'पाता' पानशीलः ताच्छीलिकस्तृन् (३, २, १३५), "न लोकाव्यय (२, ३, ६९)", इति कर्मणि षष्ठ्याः प्रतिषेधः 'वृत्रहा' वृत्रस्यासुरस्य हन्ता इन्द्रः 'आगमत्' 'घ', इत्यवधारणे आगच्छतैव, 'अस्मत्' अस्मत्तः 'आरे' दूरदेशे मा भवतु। आगत्य च 'शतमूतिः' बहुविध-

रक्षणः इन्द्रः 'नि यमते' अस्मदीयान् शत्रून् नियच्छतु तिर-स्करोतु यद्वा, धनान्यस्मभ्यं नियच्छतु ददातु ॥ ३ ॥ [१]

१ ,२ २ १ २ २ १ २ ३ १ २
आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः ।
२उ १ १ २
न त्वामिन्द्राति रिच्यते ॥ * १ * ॥

ऋ० श्रुतकक्षः सुकक्षः वा । छ० गायत्री । दे० सोमः । अथ आत्वाविशन्त्विति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा । हे "इन्द्र !" 'इन्दवः' स्रवन्तः सोमाः 'त्वा' त्वाम् 'आ विशन्तु' सर्वतः प्रविशन्तु । तत्र दृष्टान्तः, 'समुद्रमिव सिन्धवः' स्यन्दन-शीला नद्यः यथा समुद्रं जलाशयं सर्वतः प्रविशन्ति तद्वत् । यत एवं तस्मात् हे 'इन्द्र !' 'त्वां' कश्चिदपि देवो बलेन धनेन वा "नातिरिच्यते' नातिरिक्तो भवति सामर्थ्यवान् त्वत्तोऽधिको नास्तीत्यर्थः ॥ १ ॥

१ १ २ १ १ २ १ १ २र
विव्यक्थ महिना वृषन् भक्षꣳ सोमस्य जागृवे ।
१ २ १ १ २
य इन्द्र जठरेषु ते ॥ * २ * ॥

अथ द्वितीया। हे 'वृषन्' ! कामानां वर्षितः । हे 'जागृवे' ! जागरणशील । इन्द्र ! त्वं तस्य 'सोमस्य' 'भक्षं' पानं प्रति 'महिना' महिम्ना 'विव्यक्थ' सर्वतो व्याप्तवानसि व्यचतेर्लिटि थलि 'लिट्यभ्यासस्योभयेषाम् (६, १, १७)', इति सम्प्रसारणम् हे 'इन्द्र !' 'यः' सोमः 'ते' तव "जठरेषु" उदरेषु प्रविशति, तस्य पानं व्याप्तवानसीति शेषः ॥ २ ॥

१ २ ३ २ ३ १ २
अरं त इन्द्र कुक्षये सोमो भवतु वृत्रहन्।
२ ३ १ २ १ २
अरं धामभ्य इन्दवः॥ * ३ *॥ [२]

अथ तृतीया। हे 'वृत्रहन्'। वृत्रस्यापामावरकस्यासुरस्य मेघस्य पापस्य वा हन्तः! 'इन्द्र!' सोऽस्माभिर्दीयमानः 'ते' तव 'कुक्षये' 'अरम्' अलं पर्य्याप्तो भवतु। किञ्च, 'इन्दवः' सर्वतः चरणशीलाः सोमाः तव 'धामभ्यः' नानाविधेभ्यः शरीरेभ्यः तव तेजोभ्यो वा अरमलं पर्य्याप्ता भवन्तु अनेन तेजसा हविर्भोक्तृत्वमस्तीति सूचितम्। अस्मदीयाः सोमा एव तव कुक्षये देवेभ्योऽपि पर्य्याप्ता भवन्तु नान्यदीया इति भावः॥ ३॥ [२]

१ २ ३ १ २ ३ १ २ ३ १ २
जराबोध तद्विविड्ढि विशेविशे यज्ञियाय।
१ २ ३ १ २ ३ २
स्तोमꣳ रुद्राय दृशीकम्॥ * १ *॥

ऋ० शुनःशेपः। छ० गायत्री। दे० अग्निः। अथ जराबोधेति तृचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे 'जराबोध'। जरया स्तुत्या बोध्यमान! हे अग्ने! 'विशे विशे' तत्तद्यजमानरूपप्रजानुग्रहार्थं 'यज्ञियाय' यज्ञसम्बन्ध्यनुष्ठानसिध्यर्थं 'तद्' देवयजनं 'विविड्ढि' प्रविश। यजमानोऽपि 'रुद्राय' क्रूरायाग्नये तुभ्यम्। कीदृशम्? 'दृशीकम्' दर्शनीयं समीचीनं 'स्तोमं' स्तोत्रं करोतीति शेषः। अत्र यास्क एवं व्याख्यातवान्, 'जरा स्तुतिः जरतेः स्तुतिकर्मणस्तां बोध, तया

बोधयितरिति वा, तद्विविड्ढि तत् कुरु, मनुष्यस्य मनुष्यस्य यजनाय। स्तोमं रुद्राय दर्शनीयम् ( निरु० दे० अ० १० )', इति ॥ १ ॥

१ २ ३ १ २ ३ २ ३ १ २ ३ २
स नो महाꣳ अनिमानो धूमकेतुः पुरुश्चन्द्रः ।
३ १ २र
धिये वाजाय हिन्वतु ॥ * २ * ॥

अथ द्वितीया। 'सः' अग्निः 'नः' अस्मान् 'धिये' कर्मणे 'वाजाय' अन्नाय च 'हिन्वतु' प्रीणयतु। कीदृशः ? 'महान्' संहितायां नकारस्य रुत्वानुनासिकावुक्तौ गुणाधिकः "अनिमानः" न विद्यते निमानोऽस्येति बहुव्रीहौ 'नञसुभ्याम् (६, २, १७२)', इत्युत्तरपदान्तोदात्तत्वम् निमानवर्जितः अपरिच्छिन्न इत्यर्थः, 'धूमकेतुः' बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (८, २, १) धूमेन ज्ञाप्यमानः 'पुरुश्चन्द्रः' चदि आह्लादने दीप्तौ च (भ्वा० प०) अस्मात् 'स्फायितञ्चि (उ० २, १३)', इत्यादिना कर्त्तरि रक्, पुरुश्चासौ चन्द्रश्च समासान्तोदात्तत्वम् 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे (६, १, १५१)', इति सुट्, तस्य रुत्वे न प्रकारः बहुदीप्तिरित्यर्थः धिये, "सावेकाचः (६, १, १६८)", इति चतुर्थ्या उदात्तत्वम्। हिन्वतु, हिवि: प्रीणनार्थः "इदितो नुम् धातोः (७, १, ५८)", इति नुम् ॥ २ ॥

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
स रेवाꣳ इव विश्पतिर्दैव्यः केतुः शृणोतु नः ।
१ २ ३ १ २ ३ १ २
उक्थैरग्निर्बृहद्भानुः ॥ * ३ * ॥ [३]

अथ तृतीया। "सः" "अग्निः" 'उक्थेभिः' स्तोत्रैर्युक्तान्

'नः' अस्मदीयान् 'शृणोतु'। तत्र दृष्टान्तः, 'रेवान् इव' यथा धनवान् राजा वन्दिनां स्तोत्रं शृणोति, तद्वत् एतत्तदोः (६, १, १३२)', इति सोर्लोपः) 'रयेर्मतौ बहुलम् (६,१,३४ वा०)', इति सम्प्रसारणं परपूर्वत्वम्, 'आद्गुणः (६, १, ८७)', "छन्दसीरः (८, २, १५)"; इति मतुपो वत्वम् 'रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम् (६, १, १७६ वा०)', इति मतुप उदात्तत्वम्। कीदृशः? 'विश्पतिः' "परादिश्छन्दसि बहुलम् (६, २,१९९)', इत्युत्तरपदाद्युदात्तत्वम् प्रजापालकः 'दैव्यः' देवानां सम्बन्धी अग्निर्वै देवानां होता', इति श्रुत्यन्तरात् 'केतुः' दूतवत् ज्ञापकः 'अग्निर्वै देवानां दूत आसीत्', इति श्रुतेः 'वृहद्भानुः' बहुव्रीहौ प्रकृतिस्वरत्वम् (८,२,१) प्रौढरश्मिः ॥२॥ [२]

१ २ २ १ २र १ २ ३ १ २
तद्वो गाय सुते सचा पुरुहूताय सत्वने।
२उ १ २ ३ १ २
शं यद्गवे न शाकिने ॥ * १ * ॥

ऋ० शंयुः। छ० गायत्री। दे० इन्द्रः। अथ तद्वोगायेति ऋचात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा। हे स्तोतारः! 'वः' यूयं "सुते" अभिषुते सोमे सति 'पुरुहूताय' बहुभिर्यजमानैराहूताय "सत्वने" शत्रूणां सादयित्रे यद्वा, धनानां सनित्रे दात्रे इन्द्राय 'तत्' स्तोत्रं 'सचा' सह संहता भूत्वा "गाय" गायत "यत्" स्तोत्रं "शाकिने" शक्तिमते इन्द्राय 'शं' सुखकरं भवति। 'गवे न' यथा गवे यवसं सुखकरं तद्वदित्यर्थः ॥ १ ॥

२ ३ २३ १ २ ३ १ २३१ १ २
न घा वसुर्नि यमते दानं वाजस्य गोमतः।

२ ३ २ ३ २ ३ १ २
यत्सीमुपश्रवद्गिरः ॥ * २ * ॥

अथ द्वितीया। 'वसुः' वासयिता स इन्द्रः "गोमतः" बहुभिर्गोभिर्युक्तस्य 'वाजस्य' अन्नस्य बलस्य वा 'दानं' प्रदानं 'न च' न खलु 'नियमते' नियच्छति उपरतं करोति 'यद्' यदि "सीं" अयम् 'गिरः' अस्मदीयाः स्तुतीः 'उपश्रवत्' उपशृणुयात् स्तोत्रश्रवणे सति सर्वदा ददातीत्यर्थः ॥ २ ॥

१ २ २ १ १७ ३ १ २८ ३ १ २८
कुवित्सस्य प्र हि व्रजं गोमन्तं दस्युहागमत्।

२ १ ३ १ २
शचीभिरप नो वरत् ॥ * ३ * ॥ [४]

अथ तृतीया। 'कुवित्सस्य' कुवित् बहुशः स्यति छिनत्तीति कुवित्सो नाम कश्चित् तस्य स्वभूतं 'गोमन्तं' बहुभिर्गोभिर्युक्तं 'व्रजं' गोष्ठं 'दस्युहा' दस्यूनामुपक्षपयिता हन्ता, इन्द्रः 'प्रागमत्' प्रकर्षेण गच्छति। 'हि' यस्मात् "शचीभिः" आत्मीयैः कर्मभिः प्रज्ञाभिर्वा 'नः' अस्माकं ता गाः 'अप वरत्' निगूढास्ता अपाहृणोत् ॥ ३ ॥ [४]

इति सामवेदार्थप्रकाशे उत्तरायणस्य अष्टादशाध्यायस्य
प्रथमः खण्डः ॥ १ ॥

---

१ २७ १ १ २ २ १ २८ ३ २
इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्।

१ २ ३ १
समूढमस्य पांसुले ॥ * १ * ॥

अथ द्वितीयखण्डे—अथेदं विष्णुरिति षडृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। 'विष्णुः' त्रिविक्रमावतारधारी "इदं" प्रतीयमानं सर्वं जगदुद्दिश्य 'विचक्रमे' विशेषेण क्रमणं कृतवान् तदा 'त्रेधा' त्रिभिः प्रकारैः 'पदं नि दधे' स्वकीयं पादं प्रक्षिप्तवान्। "अस्य" विष्णोः 'पांसुले' धूलियुक्ते पादस्थाने 'समूढम्' इदं सर्वं जगत्, सम्यगन्तर्भूतम् सेयमृग् यास्केनैवं व्याख्याता, "विष्णुः विशतेर्वा व्यश्नोतेर्वा यदिदं किञ्च तद् विक्रमते विष्णुस्त्रेधा निधत्ते पदं त्रेधा भावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः। समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः। समूढमस्य पांसुलेऽप्यायनेऽन्तरिक्षे पदं न दृश्यते अपि वोपमार्थे स्यात् समूढस्य पांसुल इव पदं न दृश्यत इति। पांसवः पादैः सूयन्त इति वा पन्नाः शेरत इति वा पंसनीया भवन्तीति वा (निरु० दै० ६,१८)', इति॥ १॥

१ २ ३ १ ३२ ३ १ २ ३ १ ३२
त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः।
३ १ १ २ ३ १ २
अतो धर्माणि धारयन्॥ * २ *॥

अथ द्वितीया। "अदाभ्यः" केनापि हिंसितुमशक्यः दभेः "ऋहलोर्ण्यत् (३,१,१२४)", इति ण्यत्, नञ्समासः अव्ययपूर्वपदप्रकृतिस्वरत्वम् (८,२,२) केनापि हिंसितुमशक्यः 'गोपाः' सर्वस्य जगतः रक्षकः "विष्णुः" पृथिव्यादिस्थानेषु अत एतेषु 'त्रीणि' 'पदा' पदानि "वि चक्रमे"। किङ्कुर्वन्? 'धर्माणि' अग्निहोत्रादीनि "धारयन्" शपः पित्त्वादनुदात्तत्वम् (३,१,४) शतुश्च लसार्वधातुकस्वरेण (६,१,१६८) णिच एव स्वरः शिष्यते पोषयन्॥ २॥

२ १ १ २ २ १ २ २ १ २ २ २
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
१ २ ३ १ १ १ २
इन्द्रस्य युज्यः सखा ॥ * ३ * ॥

अथ तृतीया । हे ऋत्विगादयः ! "विष्णोः" "कर्माणि" पालनादीनि "पश्यत" 'यतः' यैः कर्मभिः "व्रतानि" अग्निहोत्रादीनि 'पस्पशे' सर्वो यजमानः स्पृष्टवान् स्पश बाधनस्पर्शनयोः (भ्वा० उ०), लिटि द्विर्भावे, "शर्पूर्वाः खयः (७, ४, ६१)', इति पकारः शिष्यते सकारो लुप्यते, यद्वृत्तयोगादनिघातः (८, १, ६६) विष्णोरनुग्रहादनुतिष्ठतीत्यर्थः । तादृशः विष्णुः "इन्द्रस्य" 'युज्यः' योग्यः युजेर्बाहुलकात् क्यप् (१, १, १२१), कित्त्वाद् गुणाभावः (१, १, ५), क्यपः पित्त्वात् अनुदात्तत्वम् (३, १, ४), धातुस्वरः (६, १, १६२) अनुकूलः सखा भवति विष्णोरिन्द्रानुकूल्यं च "त्वष्टा हतपुत्रः इत्यनुवाके 'अथ वैतर्हि विष्णुरित्यादि बहुना प्रपञ्चेन तैत्तिरीया आमनन्ति ॥३॥

१ २र ३ १ २ ३ १ २र ३ १ २
तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः ।
१ २ १ २ ३ १ २
दिवीव चक्षुराततम् ॥ * ४ * ॥

अथ चतुर्थी । 'सूरयः' विद्वांसः ऋत्विगादयः 'विष्णोः' सम्बन्धि 'परमम्' उत्कृष्टं तच्छास्त्रप्रसिद्धं "पद" स्थानं शास्त्रदृष्ट्या "सदा" "सर्वकाल्य (५, ६, १५)", इति दाप्रत्ययः, "सर्वस्य सोऽन्यतरस्यां दि (५, ३, ६)", इति सर्वशब्दस्य सभावः व्यत्ययेनाद्युदात्तत्वम् सर्वदेत्यर्थः 'पश्यन्ति' । तत्र

दृष्टान्तः, "दिवि इव" 'अड़िदम् (६, १, १७१)', इत्यादिना विभक्तेरुदात्तत्वम्, इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वञ्च (२, ४, ७१ वा॰)', इति, तदेव शिष्यते आकाशे यथा 'आततम्' तनोतेः कर्मणि क्तः, 'यस्य विभाषा (७, २, १५)', इति इट्प्रतिषेधः, 'अनुदात्तोपदेश (६, ४, ३७)', इत्यादिना नलोपः, कृदुत्तरपदप्रकृतिस्वरत्वे (६, २, १३९) प्राप्ते "गतिरनन्तरः (६, २, ४९)", इति गतेरुदात्तत्वम् सर्वतः प्रसृतं चक्षुर्विरोधाभावेन विशदं पश्यति तद्वत् ॥ ४ ॥

१ २र १ १ २ २ १ २ १ २
तद्विप्रासो विपन्युवो जागृवाꣳसः समिन्धते ।
१' १ १ २ १.१ २ १
विष्णोर्यत्परमं पदम् ॥ * ५ * ॥

अथ पञ्चमी । पूर्वोक्तं "विष्णोः" "यत्" "परमं पदम्" अस्ति, "तत्" पद विप्रासः "आज्जसेरसुक् (७, १, ५०) मेधाविनः "समिन्धते" सम्यग् दीपयन्ति । कीदृशाः ? 'विपन्यवः' स्तुत्यर्थस्य पनेर्बाहुलक औणादिको युप्रत्ययः, तत्र प्रत्ययस्वरः (३, १, ३) विशेषेण स्तोतारः 'जागृवांसः' जागृ निद्राक्षये (अदा॰ प॰), लिटः क्वसुः, क्रादिनियमात् प्राप्तस्येटो 'वस्वेकाजाद् घसाम् (७, २, ६७)', इति नियमान्निवृत्तिः शब्दार्थयोः प्रमादराहित्येन जागरूका इत्यर्थः ॥ ५ ॥

१ २ ३ १ २ ३ २ ३ १ २ ३ २
अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
३ २उ ३ १ २
पृथिव्या अधि सानवि ॥ * ६ * ॥ [५]

अथ षष्ठी। 'विष्णुः' परमेश्वरः पृथिव्याः अस्मात् भूप्रदेशात् 'अधिसानवि' समुच्छ्रिते अधिके देशे स्वर्गादिलोके 'विचक्रमे' विविधं पादक्रमणं कृतवान् विशेषेण वर्त्तते, अतः 'अस्मात् पृथिवीदेशात् 'नः' अस्मान् 'देवाः' विष्णुमुखाः 'अवन्तु' पापाच्छत्रोर्वा रक्षन्तु इत्यर्थः ॥ ६ ॥ [५]

१ २र ३ १ २ ३ १ २उ ३ १ २र
सो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन्।

३ १ २ ३ १ २ ३ १
आरात्ताद्वा सधमादं न आ

३ २ ३ २ ३ १ २र
गहीह वा सन्नुप श्रुधि ॥ * १ * ॥

ऋ० वसिष्ठः। छ० बृहती। दे० इन्द्रः। अथ मोषुत्वेति प्रगाथात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। हे इन्द्र! 'त्वा' त्वां 'वाघतश्च न' ऋत्विजोऽप्येते 'अस्मत्' अस्मत्तः 'आरे' दूरे 'मा निरीरमन्' न नितरां रमयन्तु। अतस्त्वम् 'आरात्ताद्वा' दूरेऽपि वर्त्तमानः 'नः' अस्मदीयं 'सधमादं' यज्ञम् 'आ गहि' आगच्छ 'इह वा' अत्रापि वा 'सन्' विद्यमानः 'उप श्रुधि' अस्मदीय स्तोत्रम् उपशृणु ॥ १ ॥

३ १ २र ३ १ २ ३ २उ
इमे हि ते ब्रह्मकृतः सुते

२ ३ २ २उ ३ १ २
सचा मधौ न मक्ष आसते।

३ २ १ २ ३ १ २ २
इन्द्रे कामं जरितारो वसू-

२ ३ २ ३ २उ २ ३ २
यवो रथे न पादमा दधुः ॥ * २ * ॥ [६]

अथ द्वितीया। हे इन्द्र! 'ते' त्वदर्थं 'सुते' अभिषुते सोमे 'ब्रह्मकृतः' स्तोत्रकृतः ऋत्विजः 'मधौ न' मधुनीव 'मक्षः' मक्षिकाः 'सचा' सह 'आसते' उपविशन्ति। अथ परोक्षस्तुतिः, 'वसूयवः' धनकामाः 'जरितारः' स्तोतारः 'कामम्' इष्टम् 'इन्द्रे' 'रथे न पादं' रथे पादमिव 'आ दधुः' समर्पयन्तीत्यर्थः ॥ २ ॥ [६]

१ २ ३ १ २ ३ १ २र
अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत।

३ २ ३ १ २ ३ १ २
पूर्वीर्ऋतस्य बृहतीरनूषत

३ २ ३ १ २
स्तोतुर्मेधा असृक्षत ॥ * १ * ॥

ऋ० आयुः। छ० प्रगाथः। दे० सोमः। अथास्तावीति प्रगाथात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। स 'इन्द्रः' 'अस्तावि' अस्मदीयैः स्तोत्रैः ऋत्विग्भिर्वा स्तूयते 'इन्द्राय' 'पूर्व्यम्' अनादित्वात् पूर्वस्मिन् भवं 'मन्म' मननीयं 'ब्रह्म' स्तोत्रं वेदं वा 'वोचत'। हे ऋत्विजः! यूयं पठत किञ्च 'पूर्वीः' पूर्वकालीनाः 'ऋतस्य' यज्ञस्य सम्बन्धिन्यः 'बृहतीः' बृहतीच्छन्दस्काः बृहत्सामानि वा 'अनूषत' स्तुवत पठतेत्यर्थः। 'स्तोतुः' मम 'मेधाः' एवंविधाः प्रज्ञाविशेषाः 'असृक्षत' ऋत्विग्भिः विसृज्यताम् यद्वा, ईश्वरेण ॥ १ ॥

२उ ३ १ २ ३ १ २
समिन्द्रो रायो बृहतीरधू-

२ २ ३ २उ ३ १ २
नुत सं चोणी समु सूर्य्यम्।
२ ३ २ ३ १ २ ३ १ ३२
सं शुक्रासः शुचयः सं गवा-
३ २ ३ १ २
शिरः सोमा इन्द्रममन्दिषुः ॥ * २ * ॥ [७]

अथ द्वितीया। स 'इन्द्रः' 'इहतीः' महान्ति 'रायः' धनानि अन्नानि वा 'समधूनुत' मां प्रापयत्वित्यर्थः धूञ् कम्पने (क्रया० उ०) धातूनामनेकार्थत्वात्। किञ्च 'चोणी' भूमीः 'सम्' अधूनुत मां सम्यक् प्रापयन्तु। अपिच 'सूर्य्यम्' सूर्य्य-सदृशीं दीप्तिं 'सम्' अधूनुत। 'शुचयः' निर्मलाः 'शुक्रासः' शुक्रवर्णाः इन्द्रं 'सम् अमन्दिषुः' हर्षयन्ति। किञ्च 'गवाशिरः' गोश्रयणाः सहिताः इन्द्र ममन्दिषुः हृष्टवन्त इत्यर्थः ॥२॥[७]

१ २ ३ १ २ ३ २ ३२
इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे।
१ २ ३ १२ ३ १ २ ३ १ २
नरे च दक्षिणावते वीराय सदनासदे ॥ * १ * ॥

ऋ० अम्बरीषः ऋजिश्वा वा। छ० अनुष्टुप्। दे० सोमः। अथेन्द्रायसोमपातवे इति तृचात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा। हे 'सोम'। 'वृत्रघ्ने' वृत्रस्य हन्त्रे इन्द्राय षष्ठ्यर्थे चतुर्थी (२, ३, ६२ वा०) इन्द्रस्य 'पातवे' पानार्थं 'परि षिच्यसे' परितः पात्रेषु सिच्यसे वसतीवरीभिर्वा। किञ्च 'दक्षिणावते' ऋत्विग्भ्यो दक्षिणादानेन तद्वते, 'वीराय' वीर्य्ययुक्तायेन्द्रार्थं हर्वीषि दातुं "सदनासदे" यज्ञगृहे सीदते, 'नरे' मनुष्याय यजमानाय तस्मै फलप्रदानार्थं परिषिच्यसे ॥ १ ॥

१ २ २ १ २ २ २ २ १ २ २ १ २
तᳪ सखायः पुरूरुचं वयं यूयं च सूरयः।

२ १ २ १ २ २ ३ ३ १ २
अश्याम वाजगन्ध्यᳪ सनेम वाजपस्त्यम् ॥ * २ * ॥

अथ द्वितीया। हे 'सखायः'! स्तोतारः! 'सूरयः' प्रज्ञावन्तः 'यूयं वयञ्च' यजमानाः 'पुरूरुचं' बहुदीप्तिं 'वाजगन्ध्य' बलकरसाधुगन्धोपेतं तत्र भवं सोमम् 'अश्याम' अश्नवाम पिबेम। किञ्च 'वाजपस्त्यम्' अन्नयुक्तगृहसहितम्' यद्वा, बलकरं सोमं 'सनेम' सम्भजेमहि सोमेन बलावष्टम्भादीनि भवन्तीत्यर्थः ॥ २ ॥

२ १ १ २ १ १ २र
परि त्यᳪ हर्य्यतᳪ हरिं० ॥ * ३ * ॥ [८]

अथ तृतीया।—तृतीयमृक् पूर्वमेव (छ० आ० ६, २, १, ८ (१ भा० ३०८ पृ०)=उ० आ० ५, २, १८, १ (२ भा० ७०३ पृ०) व्याख्याता ॥ ३ ॥ [८]

१ २र २ १ २र
कस्तमिन्द्र त्वा वसो मर्त्त्यो० ॥ * १ * ॥

ऋ० वसिष्ठः। छ० बृहती। दे० इन्द्रः। अथ कस्तमिन्द्रेति प्रगाथात्मकं पञ्चमं सूक्तम्, तत्र प्रथमा। कस्तम् इत्यृचः प्रतीकम्, तस्यादितो व्याख्यानमन्यत्र द्रष्टव्यं १४८पृष्ठायाम् ॥ १॥

३ १ २ २ १ २
मघोनः स्म वृत्रहत्येषु

३ १ २र ३ १ २र
चोदय ये ददति प्रिया वसु।

२३ १ २ ३ २
तव प्रणीती हर्य्यश्व सूरि-
३ १ २ ३ २
भिर्विश्वा तरेम दुरिता ॥ * २ * ॥ [८]

अथ द्वितीया। हे इन्द्र ! 'मघोनः' धनवतः 'तव' त्वदर्थं 'प्रिया' प्रियाणि 'वसु' वसूनि हविर्लक्षणानि धनानि 'ये' जनाः 'ददति' प्रयच्छन्ति तान् जनान् 'हवत्त्येषु' यज्ञेषु सङ्ग्रामेषु वा 'चोदय' प्रेरय। हे "हर्य्यश्व" ! हरिनामकाश्ववन्निन्द्र ! तव 'प्रणीती' प्रणीत्या प्रणयनेन 'सूरिभिः' स्तोतृभिः पुत्रादिभिः सार्द्धम् 'विश्वा' विश्वानि 'दुरिता' दुरितानि 'तरेम' तीर्णा भवेम ॥ २ ॥ [८]

इति सामवेदार्थप्रकाशे उत्तरार्चिकस्य अष्टादशाध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

---

२३ १'२ ३ १२ ३१ २ ३ १ २
एदु मधोर्मदिन्तरं सिञ्चाध्वर्य्यो अन्धसः ।
१२उ ३ १ ३२ ३१ २
एवा हि वीर स्तवते सदावृधः ॥ * १ * ॥

ऋ० विश्वमनाः। छ० उष्णिक्। दे० सोमः। अथ तृतीयखण्डे—एदुमधोरिति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। हे "अध्वर्य्यो" ! अध्वरस्य नेतः ! ऋत्विक्! "मध्वोः" मदकरस्य 'अन्धसः' सोमलक्षणस्यान्नस्य "मदिन्तरम्" अत्यर्थं मादयितृतमं सोमरसमेव 'आ सिञ्च' इन्द्रार्थमाभिमुख्येन क्षर। "इत्" "उ", इत्यवधारणे। 'वीरः' 'समर्थः सदावृधः' सर्वदा हविर्भिर्वर्द्धनीयः यद्वा, सर्वदा स्तवतस्य वर्द्धकः अयम् 'एव' इन्द्रः

'स्तवते चि' स्तोत्रशस्त्रादिभिः स्तूयते खलु। अतः कारणात् स्तुतायेन्द्राय सोमो दातव्य इति शेषः। तस्मादासिञ्चेति पूर्वेण सम्बन्धः॥ १॥

१ २ ३ १ २ ३ १ २
इन्द्र स्यातर्हरीणां न किष्टे पूर्व्यस्तुतिम्।
१ २ ३ १ २ ३ २ ३ १ २
उदानꣳश शवसा न भन्दना॥ * २ *॥

अथ द्वितीया। हे 'हरीणां स्यातः'! हरिनामकानामश्वानामधिष्ठातः! यद्वा, हरिनामकैरश्वैः प्रापयितः! 'इन्द्र!' 'ते' त्वदीयां 'पूर्व्यस्तुतिं' पूर्वैश्चिरन्तनैर्ऋषिभिः कृतां स्तुतिम् उपलक्षणम् इदानीन्तनैः क्रियमाणामपि स्तुतिं 'न किः' न कश्चित् 'शवसा' बलेन 'उदानंश' सम्यग् व्याप्नोति अशू व्याप्तौ (स्वा० आ०) अस्माल्लिटि 'अश्नोतेश्च (७, ४, ७२)', इति नुट्, छान्दसो द्वितीयो नुड़ागमः कश्चिन्नातिक्रामतीत्यर्थः। किञ्च 'भन्दना' सर्वैः प्रार्थनीयत्वात् पूजनीयेन धनेन स्तुत्या वा त्वदीयां स्तुतिं न कश्चिदतिक्रामति, त्वत्तो बलवान् धनी स्तुत्यो वा अन्यो नास्तीत्यर्थः॥ २॥

२ ३ १ २ ३ २ ३ १ २ ३ १ २
तं वो वाजानां पतिमह्वमहि श्रवस्यवः।
१ २ २ ३ २ २ ३ २
अप्रायुभिर्यज्ञेभिर्वावृधेन्यम्॥ * ३ *॥ [१०]

अथ तृतीया। 'अप्रायुभिः' कर्मसु अप्रमाद्यन्मनुष्ययुक्तैः अथवा अप्रमत्ता एकत्र स्थित्वैव कर्म कुर्वन्ति कर्म प्रारभ्य, नान्यं देशं गच्छन्तीत्यर्थः एवंविधमनुष्ययुक्तैः 'यज्ञेभिः' यज्ञैः

एतादृशमनुष्यैर्यत्तेन च 'वाहयेन्यम्' वहनीयं 'वाजानाम्' अन्नानां 'पतिं' स्वामिनं 'वः' यष्टृयष्टव्यसम्बन्धेन युष्मदीय 'तं' तादृशम् इन्द्रम् "अवस्यवः" वयमन्नकामाः सन्तः "अहूमहि" आह्वयामः ह्वयतेर्लुङि बहुलञ्छन्दसि (६, १, ३४), इति सम्प्रसारणम् ॥ २ ॥ [१०]

१ २ ३क २र ३ १ २ ३ १ २ ३ १ २
सं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे ।

३ १ २ ३ १ २
देवत्रा हव्यमूहिषे ॥ * १ * ॥

ऋ० सौभरिः । छ० ककुप् । दे० अग्निः । अथ तङ्कृषीति प्रगाथात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा । हे स्तोतः ! 'तं' प्रसिद्धमग्निं 'गूर्धय' स्तुहि गूर्धयतिः स्तुतिकर्मा (निघ० ३, १४, ५) कीदृशम् ? 'स्वर्णरं' सर्वस्य नेतारं सर्वयजमानैः नेतव्यं वा, अथवा स्वर्गं प्रति हविषां नेतारं 'देवासः' दीव्यन्ति स्तुवन्तीति देवा ऋत्विजः 'देवं' दानादिगुणयुक्तम् 'अरतिम्' अर्यं स्वामिनं यद्वा, अभिप्रासव्यं द्रव्यं 'दधन्विरे' धन्वन्ति गच्छन्ति स्तुत्यादिभिः प्राप्नुवन्ति, धविर्गत्यर्थः (भ्वा० प०) अथ प्रत्यक्षस्तुतिः, 'देवत्रा' देवेषु मध्ये यद्वा, 'देवमनुष्य (५,४,१० वा०)', इत्यादिना द्वितीयार्थे त्राप्रत्ययः देवानित्यर्थः 'हव्यं' पुरोडाशादिलक्षणं हविः 'आ' आभिमुख्येन 'ऊहिषे' हे अग्ने ! अभितः प्रापयसि वहेर्लिटि यजादित्वात् सम्प्रसारणम् ।

'ऊहिषे', 'ऊहिरे', इति पाठौ ॥ १ ॥

१ २ ३ १
विभूतरातिं विप्र चित्र-

२ ३ १ २ ३ १ २
शोचिषमग्निमीडिष्व यन्तुरम् ।

२ १   २र   १ १ २
अस्य मेधस्य सोम्यस्य

३ १२३१ २ ३ २
सोभरे प्रेमध्वराय पूर्व्यम् ॥ * २ * ॥ [११]

अथ द्वितीया। ऋषिरात्मान सम्बोध्य स्तुतौ प्रेरयति, हे 'विप्र'! मेधाविन्! 'सोभरे' एतन्नामक! ऋषे! 'अध्वराय' यागार्थम् 'ईम्' अग्नि 'प्रेडिष्व' प्रकर्षेण स्तुहि। कीदृशम्? 'विभूतराति' व्याप्तधनं प्रभूतदान वा, 'चित्रशोचिष' चायनीयतेजस्क विचित्रदीप्तिक वा "सोमस्य" सोमसाध्यस्य "अस्य मेधस्य" 'यन्तुर' नियन्तारं 'पूर्व्य' चिरन्तनमिति ॥ २ ॥ [११]

१   २   १ १   २र   १ १ २र २ १ २
आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया।
२ ३   २ ३ २ ३क २र   ३
जनो न पुरि चम्वोर्विश-
१ १   २ १   १ २
द्धरिः सदो वनेषु दध्रिषे ॥ * १ * ॥

ऋ० भौम अद्रिः। छ० बृहती। दे० इन्द्रः। अथासोमस्वान इति प्रगाथात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे 'सोम!' 'अद्रिभि.' ग्रावभिः 'स्वान.' अभिषूयमाणः त्वम् 'अव्यया' अविमयानि 'वाराणि' बालानि दशापवित्राणि "तिर." कुर्वन् व्यवधायकानि कुर्वाणः सन् "आ" पवस्व इति शेषः। 'हरि' हरितवर्णः स सोमः 'चम्वो.' अधिषवणफलकयोः उपरि-स्थिते कलशे "विशत्" प्रविशति। तत्र दृष्टान्त,, 'जनो न'

यथा जनः 'पुरि' पुरं प्रविशति स त्वं 'वनेषु' काष्ठनिर्मितेषु पात्रेषु वसतीवरीषु वा "सदः" स्थानं "दधिषे" करोषि।
'दधिषे', 'दधिषः', इति पाठौ ॥ १ ॥

१ २ २ १ २र
स मामृजे तिरो अण्वानि
१अ २र ३ २उ २ १ २ २ २
मेष्यो मीढ्वान्त्सप्तिर्न वाजयुः।
३ १ २ १ २ २
अनुमाद्यः पवमानो मनी-
२ ३ १ ३ १ २ ३ १ २
षिभिः सोमो विप्रेभिर्ऋक्वभिः ॥ * २ * ॥ [१२]

अथ द्वितीया। "वाजयुः" अन्नकामः "अण्वानि" अणूनि सूक्ष्माणि "मेष्यः" मेष्या अवेः रोमाणि चित्राणि 'तिरः' कुर्वन् 'सः' सोमः "मामृजे" परिशोध्यते अलङ्क्रियते वा। तत्र दृष्टान्तः, 'मीढ्वान्' सेचनसमर्थः 'सप्तिः न' अश्व इव, अश्वो यथा सङ्ग्रामेऽलङ्क्रियते तद्वत्। कीदृशः? 'अनुमाद्यः' अनुमोदनीयः सर्वैः 'पवमानः' मनीषिभिर्ऋक्वभिः पूयमानः, तथा, 'ऋक्वभिः' 'छन्दसि वनिपौ (५, २, १२२ वा०)', इति, वनिप्। स्तुतिमद्भिर्विप्रैर्मेधाविभिः अभिष्टुतः, सूयते ॥ २ ॥ [१२]

३ १ २ २ १ २र २ २ २ १ २
ययमेनमिदा ह्योऽपीपेमेह वज्रिणम्
१ २ २ १ २र २ २
तस्मा उ अद्य सवने सुतं

१२ ११२ ३२
भरा नूनं भूषत श्रुते ॥ * १ * ॥

ऋ० कलिः। छ० बृहती। दे० इन्द्रः। अथ वयमेनमिद्राह्व इति प्रगाथात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा। 'वयं' यजमानाः 'एनम्' इन्द्रं 'वज्रिणं' "इदा" इदानीं "ह्यः" अतीतेऽह्नि 'इह' अत्र यज्ञगृहे 'अपीपेम' आप्याययाम सोमेन 'तस्माउ' तस्मै एव 'अद्य' अत्र सवने सङ्ग्रामार्थं सुपां सुलुगित्यादिना शे आदेशः 'सुतम्' अभिषुतं सोमं 'भर' आहर 'नूनम्' इदानीं 'श्रुते' स्तोत्रे श्रुते सति 'आ भूषत' आभवतु अध्वर्य्यादीनागच्छतु ॥ १ ॥

११ २११२
वृकश्चिदस्य वारण उरा-
२ १२ ११२
मथिरा वयुनेषु भूषति।
१उ २ १ २ २ १उ
सेमं न स्तोमं जुजुषाण आ
१२ २ २ २१२ २२
गहीन्द्र प्र चित्रया धिया ॥ * २ * ॥ [१३]

अथ द्वितीया। 'वृकश्चित्' स्तेनोऽपि 'वारणः' वारयिता सर्वस्य सन्नपि "उरामथिः" मधूनां मार्गं गच्छतां मथिता सन्नपि 'अस्य' इन्द्रस्य 'वयुनेषु' मार्गेषु प्रज्ञानेषु वा 'आ भूषति' आनुकूल्यमेव भजते अतीव हिंस्रोऽपि इन्द्रस्यानुकूलो भवतीत्यर्थः। यद्वा, षष्ठेति कर्मणि षष्ठी (२, १, ८५) अमुमिन्द्रम् उक्तरूपः वृकोऽपि वयुनेषु स्तोत्रेष्वाभूषति। हे इन्द्र !

स त्वमिमं "नः" अस्मदीयं सोमं स्तोत्रं च 'जुजुषाणः' सेवमानः सन् 'चित्रया' चायनीयया नानाविधफलरूपया 'धिया' युक्तः सन् 'प्रागहि' आगच्छ ॥२॥ [१३]

१ २ २ १ १ २ ३ २ १ २
इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः ।

१ २ १ २ ३ क २ र
तद्वां चेति प्र वीर्य्यम् ॥ * १ * ॥

ऋ० विश्वामित्रः । छ० गायत्री । दे० इन्द्राग्नी । अथे-न्द्राग्नीरोचनेति त्र्यचात्मकं पञ्चमं सूक्तम्, तत्र प्रथमा । हे 'इन्द्राग्नी । 'दिवः रोचना' स्वर्गस्य रोचकौ प्रकाशकौ युवां 'वाजेषु' सङ्ग्रामेषु 'परि भूषथः' परितः सर्वतः अलङ्कृतौ भवथः । शत्रून् पराजित्य सर्वतो विजयमानौ वर्त्तेथे । 'वां' युवयोः 'वीर्य्यं' सामर्थ्यमेव 'तत्' तादृशं सङ्ग्रामविजयं "प्रचेति" प्रकर्षेण ज्ञापयति यद्वा, युवां "वाजेषु' सङ्ग्रामेषु परिभूषथः शत्रून् परिभवथः । शेषं पूर्ववत् ॥ १ ॥

१ २ १ १ २ २ १ २
इन्द्राग्नी अपसस्परि० ॥ * २ * ॥

१ २ २ १ २
इन्द्राग्नी तविषाणि वां० ॥ * ३ * ॥ [१४]

अथेति द्वितीया, अथेति तृतीया । तयोर्ऋचोः प्रतीके । तयोर्व्याख्यानमन्यत्र द्रष्टव्यम् [८४८पृ० । ८५०पृ० ।२, ३॥[१४]

१ २ ३ १ २ २
क ईं वेद सुते सचा० ॥ * १ * ॥

ऋ० मेधातिथिः मेध्यातिथिः वा । छ० बृहती । दे० इन्द्रः ।

अथ कदूवेदेति द्वचात्मकं षष्ठं सूक्तम्, तत्र प्रथमायाः, इति ऋचः प्रतीकम्। तस्यादितो व्याख्यानमन्यत्र द्रष्टव्यम् १५७ पृ० ॥१॥

१ २ ३ १ ३१ २ ३ १ २ ३ २ ३ १ २

दाना मृगो न वारणः पुरुत्रा चरथं दधे।

१ २ ३ १ २ ३ २ ३ १ २

न किष्ट्वा नि यमदा सुते

३ २ ३ १ २ ३ १ २

गमो महाꣳश्चरस्योजसा ॥ * २ * ॥

अथ द्वितीया। "मृगः" शत्रूणामन्वेषकः 'वारणः' गजः 'दाना' मदजलानीव 'पुरुत्रा' बहुषु यज्ञेषु 'चरथं' चरणशीलं 'मदं' 'दधे' इन्द्रो धारयति। अथ प्रत्यक्षस्तुतिः, हे इन्द्र! "त्वा" त्वां "न किः नियमत्" न कश्चिन्नियच्छति "सुते" अभिषुते सोमे 'आ गमः' आगच्छ। 'महान्' पूज्यः 'नः' त्वम् "ओजसा" बलेन सर्वतः 'चरसि' गच्छसि ॥ २ ॥

३ २ ३ १ २ ३ १ २ ३ २ १ २

य उग्रः सन्ननिष्टृतः स्थिरो रणाय सꣳस्कृतः।

१ २ ३ १ २ ३ १ २ ३ २ ३ १

यदि स्तोतुर्मघवा शृणव-

३ २ ३ २ ३ १ २

द्धवं नेन्द्रो योषत्या गमत् ॥ * ३ * ॥ [१५]

अथ तृतीया। 'यः' "उग्रः" उद्गीर्णबलः ओजस्वी वा 'सन्' भवन् 'अनिष्टृतः' शत्रुभिरविस्तीर्णः 'स्थिरः' अचलः 'रणाय' युद्धाय 'संस्कृतः' शस्त्रैरलङ्कृतः सोमैर्वा संस्कृतः सः 'इन्द्रः' 'मघवा' धनवान् 'यदि' 'स्तोतुः' 'हवम्' आह्वानं 'शृणवत्'

शृणोति तद्वन्व 'न योपति' न गच्छति किन्तु "आ गमत्" तत्रैवागच्छति ॥ ३ ॥ [१५]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टादशाध्यायस्य

तृतीयः खण्डः ॥ ३ ॥

---

१ २      ३ १ २   ३ २ ३ १ २

पवमाना असृक्षत सोमाः शुक्रास इन्दवः ।

३ १   २२ ३ १ २

अभि विश्वानि काव्या ॥ * १ * ॥

ऋ० निध्रुविः । छ० गायत्री । दे० सोमः । अथ चतुर्थ-खण्डे, पवमाना असृक्षतेति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा । "शुक्रासः" उज्ज्वलाः 'इन्दवः' दीप्ताः "पवमानाः" पूयमानाः सोमाः 'विश्वा' विश्वानि "काव्या" काव्यानि स्तोत्राणि 'अभि असृक्षत' ऋत्विग्भिरभितः सृज्यन्ते ॥ १ ॥

१ २    ३ १उ ३ १ २

पवमाना दिवस्पर्यन्तरिक्षादसृक्षत ।

३ १उ ३ १ २

पृथिव्या अधि सानवि ॥ * २ * ॥

अथ द्वितीया । "पवमानाः" पूयमानाः सोमाः "दिवः" द्युलोकादन्तरिक्षाच्च 'पृथिव्याः' भूम्याः 'अधि सानवि' समुच्छ्रिते देशे देवयजने 'पर्यसृक्षत' सृज्यन्ते ॥ २ ॥

१ २    ३ १ २ ३ १   ३ ३ १ २

पवमानास आशवः शुभ्रा असृग्रमिन्दवः ।

२ १ २ १ २ १ २ १ २
घ्नन्तो विश्वा अप द्विषः ॥ * ३ * ॥ [१६]

अथ तृतीया। 'आशवः' शीघ्राः 'शुभ्राः' शोभनाः 'पवमानासः' पवमानाः 'इन्दवः' दीप्ताः सोमाः "विश्वाः" सर्वान् 'द्विषः' द्वेष्टॄन् शत्रून् 'अप घ्नन्तः' मारयन्तः 'असृग्रम्' सृज्यन्ते ॥ ३ ॥ [१६]

१ १ १ २ १ २ २ २ १ २ २
तोशा वृत्रहणा हुवे सजित्वानापराजिता।
२ १ २ २ १ २
इन्द्राग्नी वाजसातमा ॥ * १ * ॥

ऋ० विश्वामित्रः। छ० गायत्री। दे० इन्द्राग्नी। अथ तोशावृत्रहणेति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। 'तोशा' शत्रूणां बाधकौ 'वृत्रहणा' वृत्रस्य पापस्य हन्तारौ "सजित्वाना" समानजेतारौ परस्परापेक्षया जयशीलौ 'अपराजिता' केनाप्यतिरस्कृतौ 'वाजसातमा' अन्नस्य अतिशयेन दातारौ 'इन्द्राग्नी' युवां 'हुवे' इह कर्मणि सोमपानार्थमह्वयामि ॥ १ ॥

१ २ २ १ २
प्र वामर्चन्त्युक्थिनः० ॥ * २ * ॥
१ २ २ १ २८
इन्द्राग्नी नवतिं पुरः० ॥ * ३ * ॥ [१७]

अथ 'प्रवामर्चन्तु', इति द्वितीया। अथ इन्द्राग्नीनवतिम्पुरा इति तृतीया। इत्येतयोऋचोः प्रतीके। तयोरादितो व्याख्यानमन्यत्रापि द्रष्टव्यम् ८४८ पृ० ॥ २ ॥ ३ ॥ [१७]

१ २    २ १ २ २ १ २
उप त्वा रण्वसंदृशं प्रयस्वन्तः सहस्कृत ।
१ २    २ २ २   १ २
अग्ने ससृज्महे गिरः ॥ * १ * ॥

ऋ० भरद्वाजः । छ० गायत्री । दे० वैश्वानरः । अथोप त्वा रण्वसन्दृशमिति तृचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा । हे 'सहस्कृत' । सहसा बलेनोत्पन्न । 'प्रयस्वन्तः' हविर्लक्षणान्नवन्तो वयं 'रण्वसन्दृशं' रमणीयं सन्दर्शनम् स्तोतव्य सन्दर्शनं वा 'त्वा' त्वाम् "उप" प्रति 'गिरः' स्तुतीः 'ससृज्महे' विसृजाम उच्चारयाम इत्यर्थः ॥ १ ॥

१ २ ३   १   २ २   २ ३ १ २ १   १ २    ३ २
उप छायामिव घृणेरगन्म शर्म ते वयम् ।
२ १   १ २
अग्ने हिरण्यसंदृशः ॥ * २ * ॥

अथ द्वितीया । हे 'अग्ने !' 'हिरण्यसन्दृशः' हिरण्यवद्रमणीयतेजसः हिरण्यवद्रोचमानतेजसो वा 'घृणेः' दीप्तस्य 'ते' तव 'शर्म' शरणम् आश्रयणं सुखं वा 'उप अगन्म' उपगच्छामः । तत्र दृष्टान्तः, 'छायामिव' यथा घर्मार्त्ताः सुसन्तप्तश्छायामुपागच्छन्ति तद्वत् ॥ २ ॥

२ ३ १ २    ३ २   २ १ २'२   १    २८
य उग्र इव शर्य्यहा तिग्मशृङ्गो न वंसगः ।
२ ३ १ २   ३ १   २
अग्ने पुरो रुरोजिथ ॥ * ३ * ॥ [१८]

अथ तृतीया । "यः" अग्निः 'उग्र इव' उद्गूर्णबलः 'धन्वीव'

'शर्धिहा' शर्धचर्चाणः शत्रूणां हन्ता 'तिग्मशृङ्गो न वंसगः' तीक्ष्णशृङ्गो वननीयगतिर्वृषभ इव हे ,अग्ने! स त्वं "पुरः" आसुरीस्त्रिस्रः पुरीः 'दरोजिथ' भग्नवानसि 'रुद्रो वा एषः यदग्निः', इति श्रुतेः, रुद्रकृतमपि त्रिपुरदहनमग्निकृतमेवेत्यग्निः स्तूयते। यद्वा, त्रिपुरदहनसाधनभूते वाणे अग्नेरनीकत्वेनावस्थानादग्निः पुराणि भग्नवानित्युच्यते। "देवासुरा वा एषु लोकेषु समयतन्त", इत्यादिकं ब्राह्मणमत्रानुसन्धेयम् ॥३॥ [१८]

१ १ २   १ २ १ २ १   १   २ ३ १ २
ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम्।

१ २   ३ १ २
अजस्रं धर्ममीमहे ॥ * १ * ॥

ऋ० भरद्वाजः। छ० गायत्री। दे० वैश्वानरः। अथ ऋतावानं वैश्वानरमिति तृचात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा। हे अग्ने! 'ऋतावानं' यज्ञवन्तं सत्यवन्तम् 'ऋतस्य' सत्यस्य यज्ञस्य वा सम्बन्धिनं 'वैश्वानरं' विश्वेषां नराणां हितकारिणं 'ज्योतिषस्पतिं' ज्योतिषः तेजसः पतिं पालकम् 'अजस्रम्' अनादित्वादविच्छिन्नं 'घर्मं' दीप्तं वैश्वानराख्यं त्वाम् "ईमहे" अभीष्टं याचामहे ॥१॥

२ ३ १ २   ३ २ ३ २ ३क   २र   ३ २
य इदं प्रतिपप्रथे यज्ञस्य स्वरुत्तिरन्।

३ १   २र   ३ २
ऋतूनुत्सृजते वशी ॥ * २ * ॥

अथ द्वितीया। 'यः' अग्निः 'इदं' जगत् 'यज्ञस्य' अनु-

धीयमानस्य यागस्य 'स्वः' सर्वं विघ्नम् 'उत्तिरन्' उत्तारयन् यद्वा, 'स्वः' स्वर्गफलसम्बन्धि महाफलम् 'उत्तिरन्' प्रयच्छन् 'प्रति पप्रथे' सर्वत्र प्रख्यातो भवति। 'यशो' परमात्मतया जगद् वशीकर्त्ता सोऽग्निः "क्रतून्" वसन्तादीन् "उत्सृजते", अनुष्ठानार्थं सम्यक् सृजति तेषु स्वयमाधीयमानः सन् तदङ्गतया वसन्तान् उत्तमान् कुरुत इत्यभिप्रायः ॥ २ ॥

१ २ १ २ ३ १ २ ३ १ २ १ २ ३ १ २
अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य ।
२ ३उ १ २ २
सम्राडेको वि राजति ॥ * ३ * ॥ [१८]

इति षष्टमप्रपाठकस्य द्वितीयार्धम् ।

---

अथ तृतीया। "भूतस्य" अतीतकालीनस्य भूतजातस्य "भव्यस्य" आगामिनः भविष्यत्कालीनस्य जगतः 'कामः' काम्यमानस्तत् तैः पुरुषैः 'सम्राट्' "एकः" अद्वितीयत्वेन 'प्रियेषु' आहवनीयादिषु 'धामसु' स्थानेषु यद्वा, त्रिषु पृथिव्यादिलोकेषु "विराजति" विशेषेण दीप्यते ॥ ३ ॥ [१८]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टादशाध्यायस्य चतुर्थः खण्डः ॥ * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे अष्टादशोऽध्यायः ॥ १८ ॥

---

## अथैकोनविंशोऽध्याय आरभ्यते।

अष्टमप्रपाठकस्य तृतीयार्द्धम्।

३ २ ३२ ३ १ २ ३ १ २ ३ २ २
अग्निः प्रत्नेन जन्मना शुम्भानस्तन्वा३ꣳस्वाम्।
३ १ २र
कविर्विप्रेण वावृधे ॥ * १ * ॥

ऋ० विरूपः। छ० गायत्री। दे० अग्निः। तत्र, प्रथमे खण्डे, अग्निःप्रत्नेनेति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। 'कविः' क्रान्तकर्मा 'अग्निः' 'प्रत्नेन' पुराणेन 'जन्मना' जननीयेन स्तोत्रेण 'स्वां' स्वकीयां 'तन्वं' तनुमङ्गं 'शुम्भानः' शुम्भयन् 'विप्रेण' मेधाविना स्तोत्रा 'वावृधे' प्रवृद्धो भवति ॥ १ ॥

१ १ २र ३ १ ३ २ ३ १ ३ १ २
ऊर्जो नपातमा हुवेऽग्निं पावकशोचिषम्।
३ २ ३ १ २ ३ २
अस्मिन् यज्ञे स्वध्वरे ॥ * २ * ॥

अथ द्वितीया। 'ऊर्जः' अन्नस्य 'नपातं' पुत्रं 'पावकशोचिषं' शोधकदीप्तिमग्निं 'स्वध्वरे' असुरैरत्यन्तमहिंस्येऽस्मिन् यज्ञे 'आ हुवे' आह्वयामि ॥ २ ॥

१ २ ३ १ २र २ १ २ ३ १ २
स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा।
२ १ २र ३ १ २
देवैरा सत्सि बर्हिषि ॥ * ३ * ॥ [१]

अथ तृतीया। हे 'मित्रमहः'! मित्राणां पूजनीयाग्ने! 'सः' त्वं 'शुक्रेण' ज्वालाता 'शोचिषा' तेजसा 'देवैः' सह 'बर्हिषि' यज्ञे 'आसत्सि' आसीद ॥ ३ ॥ [१]

१ १ १ २ १ १ २ ३ १ २
उत्ते शुष्मासो अस्थू रक्षो भिन्दन्तो अद्रिवः ।

१ २ ३ १ ३ २ १ २
नुदस्व याः परिस्पृधः ॥ * १ * ॥

ऋ० अवत्सारः। छ० गायत्री। दे० सोमः। अयोसेय-साम इति चतुर्ऋचं द्वितीयसूक्तम्, तत्र प्रथमा। हे 'अद्रिवः'! ग्रावचन् सोमः! 'ते' तव 'शुष्मासः' शुष्मा वेगाः 'रक्षः' राक्षसान् 'भिन्दन्तः' विदारयन्तः 'उदस्थुः' उत्तिष्ठन्ति। 'याः' 'स्पृधः' स्पर्धमानाः शत्रुसेना अस्मान् प्रतिबाधन्ते तास्त्वं 'नुदस्व' प्रेरय बाधस्वेत्यर्थः ॥ १ ॥

१ १ २ ३ १ २ ३२ ३ १ ३२ ३ २
अया निजघ्निरोजसा रथसङ्गे धने हिते ।

२ ३ १ २ ३ २
स्तवा अविभ्युषा हृदा ॥ * २ * ॥

अथ द्वितीया। हे सोम! त्वम् 'अया' अनेन कृतेन 'ओजसा' बलेन 'निजघ्निः' शत्रून् हन्तुं शीलवान्। तं त्वाम् 'अविभ्युषा' अभीतेन 'हृदा' मनसा युक्तोऽहं 'रथसङ्गे' अस्मार्कं रथानां सङ्गे 'हिते' शत्रुषु निहिते धने च निमित्ते 'स्तवै' स्तौमि ॥ २ ॥

१ २ ३१ २ ३१ २ ३ १ २ ३ १ २ ३२
अस्य व्रतानि नाधृषे पवमानस्य दूढ्या

२ ३ १ २ ३ १ २
रुज यस्त्वा पृतन्यति ॥ * ३ * ॥

अथ तृतीया। हे सोम! "पवमानस्य" चरतः यस्य "अस्य" तव "व्रतानि" कर्माणि "दूढ्या" दुर्बुद्धिना राक्षसेन 'नाधृषे' आधर्षयितुमशक्यानि स "त्वा" त्वां "यः" दुर्बुद्धिः शत्रुः "पृतन्यति" योद्धुमिच्छति तं 'रुज' बाधस्व ॥ ३ ॥

१ २ १ २ २ १ २ १ २ ३ १ २ १ २
तꣳ हिन्वन्ति मदच्युतꣳ हरिं नदीषु वाजिनम्।
२ १ १ २ १ २
इन्दुमिन्द्राय मत्सरम् ॥ * ४ * ॥ [२]

अथ चतुर्थी। "मदच्युतं" मदस्य च्यावयितारं 'हरिं' हरितवर्णं 'वाजिनं' बलिनं 'मत्सरं' मदकरं "तम्" "इन्दुं" सोमं 'नदीषु' वसतीवरीषु 'इन्द्राय' इन्द्रार्थं 'हिन्वन्ति' ऋत्विजः प्रेरयन्ति ॥ ४ ॥ [२]

२ ३१ २,१ १२ १ २ ३१२
आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः।
१ २ २ ३ १ २३२७
मा त्वा के चिन्नि येमुरिन्न
१ २७ ३ १ २ ३ १ २
पाशिनोऽति धन्वेव ताꣳ इहि ॥ * १ * ॥

ऋ० विश्वामित्रः। छ० बृहती। दे० इन्द्रः। अथामन्द्रैरिति द्व्यात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। विश्वामित्रो यज्ञार्थमिन्द्रमाह्वयति, हे 'इन्द्र!' 'मन्द्रैः' मादयितृभिः मयूर-

रोमभिः मयूररोमसदृशरोमयुक्तैः 'हरिभिः' एतत्संज्ञकैरश्वै रुपेतस्त्वम् 'आ याहि' यज्ञं प्रत्यागच्छ। 'केचित्' अपि जनाः 'त्वा' त्वाम् 'मा नियेमुः' मा नियच्छन्तु गमनप्रतिबन्धं मा कुर्वन्त्वित्यभिप्रायः। प्रतिबन्धे दृष्टान्तः, 'पाशिनो न' पाशहस्ता व्याधा यथा पक्षिणं नियच्छन्ति तद्वत् त्वां मा नियच्छन्त्वेव। किञ्च 'धन्वेव' यथा पान्थाः धन्व मरुदेशं शीघ्रमतिगच्छन्ति, तद्वदागमनप्रतिकारिणः 'तान्' अतीत्य शीघ्रमागच्छ ॥ १ ॥

१ १ २ ३ २ ३ २ ३ १ ३ १ २ ३ २
वृत्रखादो वलंरुजः पुरां दर्मो अपामजः।
२ ३ १ २ ३ १ २
स्थाता रथस्य हर्योरभि-
३ १ २र ३ १ २ ३ १ २
स्वर इन्द्रो दृढा चिदारुजः ॥ * २ * ॥

अथ द्वितीया। सोऽयमिन्द्रः 'वृत्रखादः' 'खाद्र भक्षणे' (भ्वा० प०), इत्यस्मात् 'कर्मण्यण् (३,२,१), तदुत्तरपदप्रकृतिस्वरः (६,२,१३९), वृत्रं खादति हिनस्तीति वृत्रखादः 'वलं रुजः' रुजो भङ्गे (तु० प०), कर्मण्युपपदे मूलविभुजादित्वात् कप्रत्ययः। 'तत्पुरुषे कृति बहुलम् (६,३,१४)' इति द्वितीयाया अलुक्, याथादिस्वरः (६,२,१४४) थाथघञ्क्ताजबित्रकाणामिति, वलो मेघः तस्य भञ्जकः ततः 'अपामजः' अज गतिक्षेपणयोः (भ्वा० प०), इत्यस्मात् पचाद्यच् (३,१,१३४), चित्स्वरः (६,१,१६३) मेघभेदनद्वारा अपां प्रेरकः 'पुरां' शत्रुसम्बन्धिनां 'दर्मः' दारकः, तथा विष्णुः त्रिविक्रमावतारधारी इदं प्रतीयमानं सर्वं जगत् क्रान्त्वा तिष्ठतीति मन्त्रवर्ण-

तथा 'हर्य्योः' अश्वयोः 'अभिस्वरे' अस्मदाभिमुख्येन प्रेरणे निमित्तभूते सति "रथस्य स्थाता" रथमधिष्ठाता, तथा 'दृढ़ाचित्' दृढ़ानामतिबलवतां शत्रूणामपि 'आ रुजः' रुजो भङ्गे (तु० प०) इत्यस्मादिगुपधलक्षणः कः (३,१,१३५). आ समन्तात् भञ्जको भवति॥ २॥

१ १ २ २ १ २ २ १ २ २ १ २

गम्भीराꣳ उदधीꣳरिव क्रतुं पुष्यसि गा इव।

१ २ ३ १ २२ ३ १ २

प्र सुगोपा यवसं धेनवो

१ १ २ १ २

यथा ह्रदं कुल्या इवाशत॥ * ३ *॥ [३]

अथ तृतीया। हे इन्द्र। त्वं "गम्भीरान्" महावकाशान् 'उदधीन्' समुद्रान् उदकैः यथा पोषयसि तद्वत् 'क्रतुं' यज्ञस्य कर्त्तारम् अमुं यजमानमभिमतफलप्रदानेन 'पुष्यसि' पोषयसि। तत्र दृष्टान्तः यथा, "सुगोपाः" समीचीनो गोपालः "यवसेन" 'गाः' पोषयति तद्वत्, यथा "धेनवः" 'यवसं' तृणादिकम् प्राप्नुवन्ति तद्वत् सोमान् प्राप्नोति, ते च सोमाः 'कुल्याः' क्षुद्रसरितः "ह्रदं" महाजलाशयं यथा प्राप्नुवन्ति तद्वत् 'आशत' व्याप्नुवन्ति॥ ३॥ [३]

१ २ ३ १ २ १ २ २उ ३ १ २१

यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम्।

१ १ २ ३ २उ ३ १

आपित्वे नः प्रपित्वे तूयमा

१ २ १ २ ३ १उ २ १ २ १

गहि कण्वेषु सु सचा पिब॥ * १ *॥

ऋ० देवातिथिः। छ० बृहती। दे० इन्द्रः। अथ यथागौरो अपाकृतमिति प्रगाथात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा। 'गौरः' गौरमृगः 'तृष्यन्' पिपासन् 'अपा' अन्निरुदकैः व्यत्ययेनैकवचनम् (३, १, ८५) 'उडिदम् (६, १, १७१)', इत्यादिना विभक्तेरुदात्तत्वं जातम् "इरिणं" निस्तृणं तटाकदेशं 'यथा' येन प्रकारेण "अवैति" अवगच्छति अवशब्दोऽभिशब्दस्यार्थे अभिमुखः सन् शीघ्रं गच्छति। तथा 'आपित्वे' बन्धुत्वे 'प्रपित्वे' प्राप्ते सति हे इन्द्र! त्वं 'नः' अस्मान् 'तूयं' क्षिप्रनामैतत् (निघ० २, १५, ११) शीघ्रम् "आ गहि" आगच्छ। आगत्य च 'काण्वेषु' कण्वपुत्रेषु अस्मासु 'सचा' सह एकयत्नेनैव विद्यमानं सर्वं सोमं सुष्ठु 'पिब' ॥ १ ॥

१ २    ३ १ २    ३ १ २    ३ १
मन्दन्तु त्वा मघवन्निन्द्रेन्दवो राधोदेयाय सुन्वते।
३ २ ३   १ २    ३ २
आमुष्या सोममपिबश्चमू
१ २उ   ३ १र २   ३ १र
सुतं ज्येष्ठं तद्दधिषे सहः ॥ * २ * ॥ [४]

अथ द्वितीया। हे 'मघवन्'! धनवन्निन्द्र! 'इन्दवः' क्लेदनाः सोमाः त्वां 'मन्दन्तु' हर्षयन्तु मन्देर्व्यत्ययेन परस्मैपदम् (३,१,८५) किमर्थम्? 'सुन्वते' सोमाभिषवं कुर्वते यजमानाय 'राधः देयाय' राधसः धनस्य दानार्थं ददातेः 'अचो यत् (३,१,९७)', इति भावे यत्, 'ईद्यति (६, ४, ६५)', इतीकारः, 'यतोऽनावः (६, १, २१३)', इत्याद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् (६, २, १३९)। मतुवसोः (६,१, १०१)', इति सुन्व-

च्छन्दात् परा विभक्तिरुदात्ता। अपिच त्वं 'सोमम्' "आमुष्य" आमोषणं कृत्वा अदत्तमपि बलादाहृत्य 'अपिबः' पीतवानसि 'स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्', इति श्रुतेः। कीदृशं सोमं? 'चमू' चम्वोरधिषवणफलकयोः 'सुतम्' अभिषुतम् यद्वा, चमूभ्यां चमसाभ्यां होतुर्मैत्रावरुणस्य च सम्बन्धिभ्यां संस्कृताभिर्वसतीवरीभिः सुतमभिषुतम् यस्मादेवं तस्मात् कारणात् 'ज्येष्ठं' प्रशस्यतमं वृद्धतमं वा 'सहः' बलं "दधिषे" हे इन्द्र! त्वं धारयसि अतो मदीया अपि सोमास्त्वां मादयन्त्विति प्रार्थ्यते॥ २॥ [४]

२ ३१ २र ३१ २ २ १ २
त्वमङ्ग प्र शᳫसिषो देवः शविष्ठ मर्त्यम्।

२उ ३ १ २
न त्वदन्यो मघवन्नस्ति

१ २ ३ १२ ३ १२
मर्डितेन्द्र ब्रवीमि ते वचः॥ * १ *॥

ऋ० गोतमः। छ० बृहती। दे० इन्द्रः। एव त्वमङ्गप्रशंसिष इति प्रगाथात्मकं पञ्चमं सूक्तम्, तत्र प्रथमा। अङ्ग, इत्यभिमुखीकरणे "अङ्ग" "शविष्ठ"। बलवत्तमेन्द्र! 'देवः' द्योतमानस्त्वं "मर्त्यं" मरणधर्माणं त्वां स्तुवन्तं पुरुषं "प्रशंसिषः" सम्यक् यनेन स्तुतमिति प्रशंसा। हे 'मघवन्'! धनवन्! 'इन्द्र!' "त्वदन्यः" कश्चित् 'मर्डिता' सुखयिता नास्ति, अतः कारणात् 'ते' तुभ्यम् 'इदं स्तुतिलक्षणं 'वचः' 'ब्रवीमि उच्चारयामि' शंसिषः, शंस स्तुतौ (भ्वा० प०), लेटि, सिप्यड़ागमः (३, ४, ८४) "सिब्बहुलं लेटि (३, १, ३४)", इति विकरणः सिप्, तस्यार्द्धधातुकत्वादिड़ागमः (७, २, ३५)॥ १॥

२। २ ३ २ २ ३ २ ३ १ २
मा ते राधाꣳसि मा त ऊतयो

१ २ १२ ३ १ २
वसोऽस्मान् कदा चना दभन् ।

१ २ २ ३ २ १
विश्वा च न उपमिमीहि मानुष

१ २ २ ३ १ २
वसूनि चर्षणिभ्य आ ॥ * २ * ॥ [५]

अथ द्वितीया। हे 'वसो'! वासयितरिन्द्र! 'ते' तव सम्बन्धीनि राध्नोत्येभिरिति 'राधांसि' भूतानि अस्मान् 'कदाचन' कदाचिदपि 'मा दभन्' मा विनाशयन्तु। तथा 'ऊतयः' गन्तारः यद्वा, ऊतय इत्यत्र वर्णलोपः, धूतयः कम्पयितारः 'ते' त्वदीया मारुतय मादभन्। हे 'मानुष'! मनुष्यहितेन्द्र! 'चर्षणिभ्यः' मन्त्रद्रष्टृभ्यः 'नः' अस्मभ्यं 'विश्वा' विश्वानि सर्वाणि 'वसूनि' धनानि च 'आ उपमिमीहि' सर्वत आहृत्य अस्मत्समीपे कुरु, सर्वत्र वर्त्तमानं धनम् अस्मभ्यं प्रयच्छेत्यर्थः कदा, किं शब्दात् 'सर्वैकान्य किं यत्तदः काले दा (५,३,१५)', इति दाप्रत्ययः। 'किमः कः (७,२,१०३)', इति कादेशः, व्यत्ययेनाद्युदात्तत्वम् (३,१,८५)। दभन्, दभु दम्भे, लोडर्थे छान्दसे लङि 'बहुलं छन्दसि (२, ४, ७३)', इति विकरणस्य लुक्, 'न माङ्योगे (६, ४, ७४)', इत्यड़भावः। मिमीहि, माङ्माने शब्दे च (धदा० प०) व्यत्ययेन परस्मैपदम् (३, १, ८५), 'जुहोत्यादिभ्यः श्लुः (२, ४, ७५)', 'भृञामित् (७, ४, ७६)', इत्यभ्यासस्येत्वम्, हेर्ङित्वात् 'घुमास्था (६,४,६६)', इतीत्वम् ॥२॥ [५]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थसैकोनविंशाध्यायस्य
प्रथमः खण्डः ॥ १ ॥

२ ३ २ ३२३ १२ २ ३ २ ३ २ १ २
प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः।
२ १ २ ३२
दिवो अदर्शि दुहिता ॥ * १ * ॥

ऋ० पुरुमीढ़ः अजमीढ़ः वा। छ० गायत्री। दे० उषाः। अथ द्वितीयखण्डे, प्रतिष्यासूनरीति त्वचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। "स्या" सा प्रसूयमाना, "सूनरी" सुष्ठु प्राणिनां नेत्री, "जनी" जनयित्री फलानां, 'स्वसुः' स्वसृस्थानीयाया रात्रेः 'परि' उपरि भागे रात्रिपर्य्यवसानकाले 'व्युच्छन्ती' तमो विवासयन्ती स्वसा, स्वसे ज्यायस्या इत्युक्तम्, 'दिवः' द्योतमानस्यादित्यस्य "दुहिता", उषाः "प्रत्यदर्शि" सर्वैः प्रतिदृश्यते ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३२ ३ १ २
अश्वेव चित्रारुषी माता गवामृतावरी।
३ २ ३ १ २ ३२
सखा भूदश्विनोरुषाः ॥ * २ * ॥

अथ द्वितीया। 'अश्वेव' 'चित्रा' चायनीया 'अरुषी' आरोचमाना 'गवां' रश्मीनां 'माता' निर्मात्री 'ऋतावरी' यज्ञवती उषाः 'अश्विनोः' 'सखा' समानख्याना सह स्तूयमाना 'अभूत्' भवति अश्विनोरुषसा सह स्तूयमानत्वात् सखित्वं परस्परम् ॥ २ ॥

३ १ ३२ ३ २ ३ २ ३ १ ३ २ ३२
उत सखास्यश्विनोरुत माता गवामसि।

२ २ ३ १ २
उतोषो वस्व ईशिषे ॥ * ३ * ॥ [६]

अथ तृतीया। "उत" अपिच 'अश्विनोः' "सखा", "असि", "उत" अपिच 'गवां' रश्मीनां 'माता' निर्माता "असि", 'उत' अपिच हे "उषः!" 'वस्वः' धनस्य 'ईशिषे' ईश्वरी भवसि ॥ ३ ॥ [६]

१ २ १ २ २२ ३क २र ३ २ १ २
एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः ।
२ १ २ ३ २
स्तुषे वामश्विना बृहत् ॥ * १ * ॥

ऋ० प्रस्कण्वः। छ० गायत्री। दे० उषाः। अथैषो उषेति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। 'एषः' एषा अस्माभिः परिदृश्यमाना 'प्रिया' सर्वेषां प्रीतिहेतुः 'अपूर्व्या' पूर्वेषु मध्यरात्रिकालेषु विद्यमाना न भवति किन्त्विदानीन्तनी 'उषाः' उषोदेवता 'दिवः' द्युलोकस्य सकाशादागत्य 'व्युच्छति' तमो वर्जयति। हे 'अश्विना'! अश्विनौ! 'वां' युवां 'बृहत्' महत् प्रभूतं यथा भवति तथा 'स्तुषे' स्तौमि ॥ १ ॥

१ १ २ २र १ ३ २ ३ २
या दस्रा सिन्धुमातरा मनोतरा रयीणाम् ।
१ २ ३ १ २ १ २ ३ १ २
धिया देवा वसुविदा ॥ * २ * ॥

अथ द्वितीया। 'या देवा' यावुभावश्विनौ वक्ष्यमाणगुणयुक्तौ तौ स्तुषे इति पूर्वेणान्वयः। कीदृशौ? 'दस्रा' दर्शनीयौ,

'सिन्धुमातरा' समुद्रमातृकौ यद्यपि सूर्य्याचन्द्रमसावेव समुद्रजौ तथाप्यश्विनोः केषाञ्चिन्मते तद्रूपत्वात् तथात्वम्, 'रयीणां' धनानां 'मनोतरा' मनसा तारयितारौ, 'धिया' कर्म्मणा 'वसुविदा' निवासस्थानस्य लम्भयितारौ मनोतरा मनसा तरत इति मनोतरौ, तरतेरन्तर्भावितण्यर्थात् 'ऋदोरप् (३, ३, ५७)', इत्यप्, पूर्वपदान्तस्य सकारस्य रुत्वे सति छान्दसमुत्वम्। रयीणां, "नामन्यतरस्याम् (६, १, १७७)", इति नाम उदात्तत्वम्। धिया, 'सावेकाच (६, १, १६८)', इति विभक्तेरुदात्तत्वम्। वसुविदा, वसूनि निवासस्थानानि विन्देते इति वसुविदौ 'क्विप् च (३, २, ७६)'; इति क्विप्॥ २॥

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २

वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि।

२ ३ २ ३ २ ३ १ २

यद्वाᳬ रथो विभिष्पतात्॥ * ३ * ॥ [७]

अथ तृतीया। हे अश्विनौ! 'वां' युवयोः सम्बन्धी रथः "जूर्णायां" नानाप्रकारैः स्तुतायाम् 'अधिविष्टपि' स्वर्गलोके 'यद्' यदा 'विभिः' अश्वैः 'पतात्' पतति गच्छति, तदानीं 'वां' युवयोः 'ककुहासः' स्तुतयः "वच्यन्ते" अस्माभिरुच्यन्ते ब्रवीतेर्यकि, 'ब्रुवो वचिः (२,४,५३)', इति वचादेशः, 'वचिस्वपि (६, १, १५)', इत्यादिना सम्प्रसारणम्, 'सम्प्रसारणाच्च (६, १, १०८)', इत्यत्र छन्दसीत्यनुवृत्तेः परपूर्वत्वस्य पाक्षिकत्वात् यणादेशः, प्रत्ययस्वरः। ककुहासः, 'ककुभं शृङ्गे विद्धः प्रधाने च', इत्यभिधानात्, प्राधान्याभिधायिना ककुप्शब्देन तत्प्रतिपादका स्तुतयो लक्ष्यन्ते, हत्वं छान्दसम्, 'आज्जसेरसुक् (७, १, ५०)', इत्यसुक्। जूर्णायां, जृष् वयोहानौ (दि०

प०), अत्र स्तुत्यर्थः, धातूनामनेकार्थत्वात्, निष्ठायां "शुषकः किति (६, २, ११)", इति इट्प्रतिषेधः, "बहुलच्छन्दसि (७, १, १०३)", इति उत्वम्, "रदाभ्यामिति (८, २, ४२) निष्ठानत्वम्, प्रत्ययस्वरः (३, १, ३)। विभिः, वी गत्यादौ (अदा० प०) वियन्ति गच्छन्ति वयः पक्षाः, औणादिको ङि-प्रत्ययः। पतात्, पत्लृ गतौ (भ्वा० प०), लेट्यडागमः, "इतश्च लोपः (३, ४, ९७)", इतीकारलोपः ॥ ३ ॥ [७]

२ ३ २ ३ १ २ ३ १ २
उपस्तचित्रमा भरास्मभ्यं वाजिनीवति ।
१२ ३ २ ३ १२ ३ १ २
येन तोकं च तनयं च धामहे ॥ * १ * ॥

ऋ० गोतमः। छ० उष्णिक्। दे० उषाः। अथो-पस्तचित्रमिति तृचं तृतीयं सूक्तम्, तत्र प्रथमा। हे "वाजिनीवति।" वाजो हविर्लक्षणमन्नः, तद्युक्ता वाजिनी, तया क्रियया युक्ते। "उषः" उषोदेवते। "अस्मभ्यं" "चित्रं" चायनीयं "तत्" धनम् "आ भर" आहर प्रयच्छ। "येन" धनेन "तोकं" पुत्रं "तनयं" तत्पुत्रं "च" धामहे दध्महे धारयामः अत्र निरुक्तम्, "उपस्तचित्रं चायनीयं मंहनीयं धनमाहरास्मभ्यमन्नवती येन पुत्रांश्च पौत्रांश्च दधीमहि. (निरु० दै० ६, ६)", इति। धामहे, दधातेर्लटि 'बहुलच्छन्दसि (२, ४, ७३)', इति शपो लुक्, व्यत्ययेनाद्युदात्तत्वम्, यद्वा, लोटि 'आडुत्तमस्य पिच्च (३, ४, ९२)', इत्याडागमः प्रत्ययस्य पिद्वद्भावश्च, अतः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते, अस्मिन् पक्षे 'एत ऐ (३, ४, ९३)', इत्यैत्वाभावो व्यत्ययेन

द्रष्टव्यः, "यद्वृत्तान्नित्यम् (८, १, ६६)", इति निघातप्रतिषेधः ॥ १ ॥

१ २ ३ १ २र ३ १ २
उषो अद्येह गोमत्यश्वावति विभावरि ।
२ ३ १ २
रेवदस्मे व्युच्छ सूनृतावति ॥ * २ * ॥

अथ द्वितीया । हे "गोमति" ! अस्माभ्यं दातव्यैः गोभिर्युक्ते ! तथा "अश्वावति" अश्वैर्युक्ते ! "विभावरि" विशिष्टप्रकाशोपेते ! "सूनृतावति" प्रियसत्यात्मिका वाक् सूनृता, तादृश्या वाचा युक्ते ! एवम्भूते हे "उषः" ! उषोदेवते ! "अद्य" इदानीं प्रभातसमये "इह" अस्मिन् देशे "अस्मे" अस्माकं 'रेवत्' 'रयेर्मतौ बहुलम् (६, १, ३४ वा०)', इति सम्प्रसारणम्, 'छन्दसीरः (८, २, १५)", इति मतुपो वत्वम्, 'रेशब्दाच्च मतुप उदात्तत्व' वक्तव्यम् (६, १, १७६ वा०)', इति मतुप उदात्तत्वम् धनयुक्तं कर्म यथा भवति तथा 'व्युच्छ' नैशं तमो निवारय उच्छी विवासे (भ्वा० प०) विवासो वर्जनम् ॥ २ ॥

३ १ २र ३ १ २ ३ २ ३१ २
युङ्क्ष्वा हि वाजिनीवत्यश्वाꣳ अद्यारुणाꣳ उषः ।
१ २ ३ २ ३ १ २ ३ १ २
अथा नो विश्वा सौभगान्या वह ॥ * ३ * ॥ [८]

अथ तृतीया । हे 'वाजिनीवति' ! हविर्लक्षणान्नवति ! 'उषः' उषोदेवते ! 'अरुणान्' अरुणवर्णान् 'अश्वान्' अश्वस्थानीयान् गोविशेषान् 'दीर्घादटि समानपदे (८, ३, ९)', इति संहितायां नकारस्य रुत्वम्, 'आतोऽटि नित्यम् (८, ३, ३)',

इति सानुनासिक आकारः एवम्भूतान् 'अद्य' अस्मिन् काले "युङ्क्ष्वा हि" योजयैव° हरिवधारणे 'अथ' अनन्तरं रथमारुह्य 'विश्वा' सर्वाणि 'सौभाग्यानि' 'सुभगान्मन्त्रे' (५, १, १२९ वा०)', इत्युद्गात्रादिषु पाठात् भावकर्मणोरर्थयोः 'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् (५, १, १२९)', इत्यञ् प्रत्ययः, । 'ह्रद्भग सिन्ध्वन्ते पूर्वपदस्य च', इत्युभयपदवृद्धौ प्राप्तायां सर्वविधीनां छन्दसि वैकल्पिकत्वात् अत्रोत्तरपदस्य वृद्धिर्न भवतीत्युक्तम्, 'सौभगानि' सर्वाणि सौभाग्यानि 'नः' अस्मभ्यम् 'आ वह' आनय ॥ २ ॥ [८]

१ २ ३ १ २ १ २र ३ १ २
अश्विना वर्त्तिरस्मदा गोमद्दस्रा हिरण्यवत् ।
३ २उ ३ १ २ ३ १ २
अर्वाग्रथꣳ समनसा नि यच्छतम् ॥ * १ * ॥

ऋ० गोतमः । छ० उष्णिक् । दे० उषाः । अथाश्विनावर्त्तिरिति तृच चतुर्थं सूक्तम्, तत्र प्रथमा । उषसा साहचर्यात् बुद्धिस्थावश्विनाविदमादिकेन तृचेन स्तूयेते हे 'अश्विना' ! अश्ववन्तौ व्यापनशीलौ वा देवौ ! 'दस्रा' शत्रूणामुपक्षपयितारौ 'अस्मत्' अस्माकं 'वर्त्ति' वर्त्तनहेतुभूतं स्थलम् 'आ' समन्तात् 'गोमत्' बहुभिर्गोभिर्युक्तं 'हिरण्यवत्' हितरमणीयधनयुक्तं च यथा भवति तथा 'समनसा', समानमनस्कौ सन्तौ 'युवां' युष्मदीयं 'रथम्' 'अर्वाक्' अर्वाचीनम् अस्मदभिमुखं 'नियच्छतम्' आवर्त्तयतम् अस्मत्, 'सुपां सुलुक् (७,१,३९)', इति षष्ठ्या लुक् ॥ १ ॥

२उ १ २ ३ १ २ ३ १ २ ३ १ २ ३र
एह देवा मयोभुवा दस्रा हिरण्यवर्त्तनी ।

२ १ २ २ १ २
उषर्बुधो वहन्तु सोमपीतये ॥ * २ * ॥

अथ द्वितीया। 'उषर्बुधः' उषसि प्रबुद्धा अश्वाः 'इह' अस्मिन् यागे 'सोमपीतये' सोमपानाय 'दस्रा' शत्रूनामुपचपयितारौ अश्विनौ 'आ वहन्तु' आनयन्तु। कीदृशौ? 'देवा' देवनशीलौ दानादिगुणयुक्तौ वा "मयोभुवा" मयसः आरोग्यप्रदस्य सुखस्य भावयितारौ "अश्विनौ वै देवानां भिषजौ", इति श्रुतेः। "हिरण्यवर्त्तनी" वर्त्ततेऽनेनेति व्युत्पत्त्या वर्त्तनिशब्देन रथ उच्यते सुवर्णमयो वर्त्तनिर्ययोस्तौ देवा, इत्यादिषु त्रिषु 'सुपां सुलुक् (७, १, ३९)', इत्याकारः ॥ २ ॥

२ ३ २उ ३ १ २ ३ २उ ३ १ २ ३ १ २
यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः।

२ ३ १ २ ३ २
आ न ऊर्जं वहतमश्विना युवम् ॥ * ३ * ॥ [९]

अथ तृतीया। हे अश्विनौ! "यौ" युवां "दिवः" लोकात् 'श्लोकम्' उपश्लोकनीयं प्रशंसनीयं "ज्योतिः" तेजः 'इत्था' इत्थमस्माभिरनुभूयमानेन प्रकारेण "चक्रथुः" कृतवन्तौ केषाञ्चिन्मतेन सूर्याचन्द्रमसावश्विनावित्युच्येते। तदुक्तं यास्केन, 'तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके (निरु० दै०६,१,)', इति। तथाच प्रकाशकत्वं तयोरुपपन्नं तौ 'युवं' युवां 'नः' अस्मभ्यम् 'ऊर्जं' बलप्रदमन्नम् 'आ वहतम्' आनयतं प्रयच्छतम्। श्लोकं श्लोक सङ्घाते (भ्वा० आ०), अयं स्तुत्यर्थोऽपि, कर्मणि घञ्, ञित्वादाद्युदात्तत्वम् (६, १, १९७) ॥ ३ ॥ [९]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्यैकोनविंशाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

२ १ ३र २ ३उ २ ३ २ १ ३र २ ३ २

अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।

२ ३ २ ३ २उ २ १ २

अस्तमर्वन्त आशवोऽस्तं नित्यासो

१ २ ३ १ २ ३ २ ३ १ २

वाजिन इषꣳ स्तोतृभ्य आ भर ॥ * १ * ॥

ऋ० वसुश्रुतः। छ० पंक्तिः। दे० अग्निः। अथ तृतीये खण्डे, अग्निन्तम्मन्य इति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। 'तम्' अग्निं 'मन्ये' स्तौमि, "यः" अग्निः 'वसुः' वासकः, 'यम्' 'अस्तं' सर्वेषां गृहवद्आश्रयभूतम् 'धेनवः' गावः 'यन्ति' गच्छन्ति प्रीणयितुम्, "अस्तम्" उक्तलक्षणम् 'अर्वन्तः' अरणवन्तः अश्वाः 'आशवः' शीघ्रगामिनः यन्ति, तथा 'नित्यासः' नित्यप्रवृत्तयो 'वाजिनः' हविर्लक्षणान्नवन्तो यजमानाः यम् 'अस्तं' यन्ति तम् मन्ये, 'इषम्' अन्नं 'स्तोतृभ्यः' अस्मभ्यम् "आ भर" हे अग्ने। आहर ॥ १ ॥

१ २उ २ १ २ ३ १ ३र ३ १ २

अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।

३ १ २ ३ १ २ ३ २ ३ १

अग्नी राये स्वाभुवꣳ स प्रीतो

१ २ २ ३ १ २ २ ३ ३ १ २

याति वार्य्यमिषꣳ स्तोतृभ्य आ भर ॥ * २ * ॥

अथ द्वितीया। 'अग्निः हि' अयमग्निः खलु 'विशे' यजमानाय 'वाजिनम्' अन्नवन्तं पुत्रम् अश्वम् अन्नं वा 'ददाति' प्रयच्छति, 'विश्वचर्षणिः' विश्वे चर्षणयो मनुष्या दर्शनीया

अर्चका वा यस्य स तथोक्तः। यदा, पश्चतिकर्म्मैतत् सर्वस्य द्रष्टा अग्निः 'राये' धनार्थिने अथवा द्वितीयार्थे चतुर्थी (२, १, ८५) धनम् 'स्वाभुवं' सुष्ठु सर्वत्र व्याप्तम् 'वार्य्यं' सर्व्वैर्वरणीयं प्रीतः सन् 'याति' यमयति दातुं वा गच्छति। इषमित्यादि पूर्व्ववत् ॥ २ ॥

२ ३ १ २र ३ २उ ३ १ २ ३ १ २
सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः।
१ २र ३ २ ३ १ ३ ३ १ २
समर्वन्तो रघुद्रुवः स९ सुजातासः
३ २ ३ १ २ ३ २ ३ १ २
सूरय इष९ स्तोटस्य आ भर ॥ * ३ * ॥ [१०]

अथ तृतीया। 'सः अग्निः' स खल्वग्निः 'यः' 'वसुः' वासकः 'गृणे' स्तूयते 'यं' "धेनवः" 'समायन्ति' होमार्थं प्रापयन्ति, 'अर्वन्तः' अश्वाः 'रघुद्रुवः' लघुगमनाः 'सम्' आयन्ति, 'सुजातासः' शोभनप्रादुर्भूताः 'सूरयः' मेधाविनः 'सम्' आयन्ति। स खल्वग्निरिति शेषं पूर्व्ववत् ॥३॥ [१०]

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १२
महे नो अद्य बोधयोषो राये दिवित्मती।
१ २ ३ १ २ ३ १
यथा चिन्नो अबोधयः सत्य-
२ ३ १ २र ३ १ २
श्रवसि वाय्ये सुजाते अश्वसूनृते ॥ * १ * ॥

ऋ० सत्यश्रवा वात्सः वा। छ० पंक्तिः। दे० उषाः। अथ महे-नो अद्येति तृचं द्वितीयं सूक्तम्, तत्र प्रथमा। 'अद्य' अस्मिन्

यागदिने, हे 'उषः' ! उषो देवि ! 'दिवित्मती' दीप्तिमती त्वं 'नः' अस्मान् 'मह्रे' महते 'राये' धनप्राप्तये 'बोधय' प्रज्ञापय प्रकाशयेत्यर्थः सति हि प्रकाशे क्रतुद्वारा द्रव्यस्यार्जयितुं शक्यत्वात्। 'यथा चित्' यथैव पूर्वं 'नः' अस्मान् 'अबोधयः' यतीतेषु दिनेषु यथा बोधितवती, तद्वदद्यापीत्यर्थः। हे 'सुजाते'! शोभनप्रादुर्भूते! 'अश्वसूनृते' अश्वार्थां प्रियसत्यात्मिका स्तुतिवाग् यस्याः सा हे तादृशि देवि! 'वाय्ये' वय्यपुत्रे 'सत्यश्रवसि' मय्यनुग्रहाणेत्यर्थः ॥ १ ॥

१ २ ३ १ २ ३ १ ३२
या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः ।
१ २ ३ १२ ३ १
सा व्युच्छ सहीयसि सत्य-
२ ३ १ ३२३ १ २
श्रवसि वाय्ये सुजाते अश्वसूनृते ॥ * २ * ॥

अथ द्वितीया। हे "दिवः दुहितः" सूर्यस्य पुत्रि उषः! 'या' त्वं सुनीथे एतन्नामके 'शौचद्रथे' शुचद्रथस्यापत्ये पूर्वं 'व्यौच्छः' व्यवासयः तमांसि, "सा" त्वं 'सहीयसि' अतिशयेन बलवति 'वाय्ये' वय्यपुत्रे 'सत्यश्रवसि' मयि "व्युच्छ" तमो विवासय उच्छी विवासे (भ्वा० प०) विवासो वर्जनम्। शिष्टं समानम् ॥ २ ॥

१ २ ३ २ ३ १ २ ३ ३क २र
सा नो अद्याभरद्वसुर्व्युच्छा दुहितर्दिवः ।
२उ ३ १ २ ३ १
यो व्यौच्छः सहीयसि सत्य-

२ १ १ २र ३ १२
अवसि वाय्ये सुजाते अश्वसूनृते॥ *३*॥[११]

अथ तृतीया। हे 'दुहितः! दिवः' उषः! 'आभरद्वसु' आहृतधना 'सा' प्रसिद्धा त्वं 'नः' अस्माकम् 'अद्य' अस्मिन् दिने 'व्युच्छ' तमो विवासय हे 'सद्दीयसि!' 'या उ' उकारोऽनर्थकः या त्वं पूर्वं 'व्यौच्छः' 'सा' अद्यापीति। शिष्टं समानम्॥ ३॥ [११]

१ २ ३ १ २ ३ ३ १ १ २ ३ १ २
प्रति प्रियतमꣳ रथं वृषणं वसुवाहनम्।

२ १ २ २ ३ ३ १ २ ३
स्तोता वामश्विनावृषि स्तोमेभिर्भूषति

१ २ २ ३ १ २ ३ १ २
प्रति माध्वी मम श्रुतꣳ हवम्॥ * १ * ॥

ऋ० अवस्युः। छ० पंक्तिः। दे० अश्विदेवतयः। अथ प्रतिप्रियमिति तृचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे 'अश्विनौ!' एकः प्रतिशब्दोऽनुवादः 'वां' युवयोः 'प्रियतमं' 'रथं' 'स्तोता' ऋषिः 'स्तोमेभिः' स्तोमैः 'प्रति भूषति' अलङ्करोति। कीदृशं रथं? 'वृषणं' वर्षितारं फलानां, 'वसुवाहनं' धनानां वाहकम् ईदृशं रथमागमनाय स्तौतीत्यर्थः। तस्मात् हे "माध्वी"! मधुविद्यावेदितारौ 'मम' 'हवम्' आह्वानं 'श्रुतं' शृणुतम्॥१॥

३ १ २ ३ १ २र ३ १ २र
अत्यायातमश्विना तिरो विश्वा अहꣳ सना।

२ ३ १ २ ३ १ २ ३ १ २
दस्रा हिरण्यवर्त्तनी सुषुम्णा सिन्धु-

२ २ ३ १२ ३ १२
वाहसा माध्वी मम श्रुतᳪ हवम् ॥ * २ * ॥

अथ द्वितीया। हे 'अश्विना'! अश्विनौ! "अत्यायातं" सर्वान् यजमानानतिक्रम्य आगच्छतम् 'अहम्' ऋषिर्यथा 'विश्वाः' सर्वाः अस्मद्विरोधिप्रजाः 'सना' सदा 'तिरः' करोमि अथवा, 'अहं तिरः सना', इति सम्बन्धः। याभ्याः विश्वाः सर्वाः क्रिया युष्मदीया अनुष्ठेया इत्यर्थः, सना सनातनौ 'दस्रा' शत्रूणामुपक्षपयितारौ, 'हिरण्यवर्त्तनी' हिरण्मयरथौ 'सुषुम्णा' सुधनौ "सिन्धुवाहसा' नदीनां प्रवाहयितारौ वृष्टिप्रेरणेन तादृशौ युवामत्यायातम् ॥ २ ॥

२ ३ १२ ३ १२३१ २३ १२ ३२
आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम्।

२ ३ १२ ३ १ २
रुद्रा हिरण्यवर्त्तनी जुषाणा वाजिनी-

३ २ ३ ३१ ३ १२
वसू माध्वी मम श्रुतᳪ हवम् ॥ * ३ * ॥ [१२]

अथ तृतीया। हे 'अश्विना'! अश्विनौ! "युवं" युवां 'नः' अस्मभ्यं 'रत्नानि' रमणीयानि 'बिभ्रता' बिभ्रतौ धारयन्तौ सन्तौ अस्मान् 'आगच्छतम्'। हे 'रुद्रा'! रुद्रपुत्रौ! स्तुत्यौ! वा 'वाजिनीवसू' वाजिनधनौ युवां 'हिरण्यवर्त्तनी' हिरण्यरथौ 'जुषाणा' यज्ञं सेवमानौ सन्तौ आगच्छतमिति। माध्वीत्यादि गतम् ॥ ३ ॥ [१२]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकोनविंशाध्यायस्य

तृतीयः खण्डः ॥ ३ ॥

१ २ ३ २ ३ २ ३ १ २ ३
अबोध्यग्निः समिधा जनानां
१ २ ३ १ २ ३ २ ३ १ २
प्रति धेनुमिवायतीमुषासम्।
३ १ २ ३ २ ३ २ ३ १ २ ३
यह्वा इव प्र वयामुज्जिहानाः
२ ३ १ २ ३ २ ३ १ २
प्र भानवः सस्रते नाकमच्छ ॥ * १ * ॥

ऋ० बुधः गविष्ठिरः वा। छ० त्रिष्टुप्। दे० अग्निः। अथ चतुर्थे खण्डे, अबोध्यग्निः समिधाजनानामिति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। अयम् 'अग्निः' 'जनानाम्' अध्वर्य्यादीनां 'समिधा' समिद्भिः 'अबोधि' प्रबुद्धोऽभूत्। 'धेनुम् इव' अग्निहोत्रार्थं धेनुं प्रति यथा प्रातर्बुध्यते तद्वत्, 'आयतीम्' आगच्छतीम् 'उषसं प्रति' उषःकाल इत्यर्थः। अथ प्रबुद्धस्याग्नेः 'भानवः' रश्मयः ज्वालाः 'यह्वाः' महान्तः 'वयां' शाखां 'प्रोज्जिहानाः' प्रोद्गमयन्तो वृत्ता इव यह्वा, महान्तः प्रोज्जिहानाः स्वाधिष्ठानं त्यजन्तः भानवः 'नाकम्' अन्तरिक्षम् 'अच्छ' आभिमुख्येन 'प्र सस्रते' प्रसरन्ति।

'सस्रते'-सिस्रते', इति पाठौ ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ २
अबोधि होता यजथाय देवा-
१ २ ३ २ ३ १ २ ३ १ २
नूर्ध्वो अग्निः सुमनाः प्रातरस्थात्।
१ २ ३ १ २ ३ १ २
समिद्धस्य रुशददर्शि पाजो

२ २ ३१ ३२३२ ३१
महां देवस्तमसो निरमोचि ॥ * २ * ॥

अथ द्वितीया। अयं 'होता' होमनिष्पादकः 'अग्निः' 'देवान्' यष्टव्यान् 'यजथाय' यष्टुम् 'अबोधि' बुध्यते। सोऽग्निः 'प्रातः' काले 'सुमनाः' शोभनमनस्कः यजमानानुग्रहबुद्धिः सन् 'ऊर्द्ध्वः' 'अस्थात्' उत्तिष्ठति। 'समिद्धस्य' अस्य 'रुशत्' रोचमानं 'पाजः' बलं ज्वालालक्षणम् 'अदर्शि' दृश्यते। अथ तथाभूतः 'महान् देवः' 'तमसः' अन्धकारात् 'निरमोचि' सर्वं जगत् निरमोचयत् ॥ २ ॥

१ २ ३१२ ३१ २३१
यदीं गणस्य रशनामजीगः
१ २ ३ १ २ ३ १ ३२ २
शुचिरङ्क्ते शुचिभिर्गोभिरग्निः।
१ २र ३१२
आद्दक्षिणा युज्यते वाजयन्त्यु-
१ २ ३ १ २ ३१ २
त्तानामूर्ध्वो अधयज्जुहूभिः ॥ * ३ * ॥ [१२]

अथ तृतीया। 'यत्' यदा 'ईम्' अयमग्निः 'गणस्य' सङ्घातात्मकस्य जगतः 'रशनां' रज्जुमिव 'व्यापारप्रतिबन्धकं तमः 'अजीगः' गिरति गृह्णाति, वा समिद्धो भवतीत्यर्थः। तदा 'शुचिः' दीप्तः 'अग्निः' 'शुचिभिः गोभिः' व्यापारप्रतिबन्धकदीप्तैः रश्मिभिः 'अङ्क्ते' व्यनक्ति विश्वं जगत् 'आत्' अनन्तरमेव 'दक्षिणा' प्रवृद्धा 'वाजयन्ती' हविर्लक्षणमन्नं प्रदातुमिच्छन्ती 'जुहूभिः युज्यते' युक्ता भवति अथवा, दक्षिणा प्रवृद्धा-

न्यधारा युञ्जते तां धाराम् 'उत्तानाम्' ऊर्द्ध्वस्थितामुपरि विस्तृताम् 'ऊर्द्धः' उन्नतः सन् 'जुह्वभिः' 'अधयत्' पिबति ॥३॥[१२]

१ २उ   २   १  २ ३   २  ३१ २
इदं श्रेष्ठं ज्योतिषां ज्योतिरागा-
 १ १  २ ३ १   २   ३ १ २
च्चित्रः प्रकेतो अजनिष्ट विभ्वा।
 २ ३  १ २      ३ १  ३ २
यथा प्रसूता सवितुः सवा-
 ३ १उ  ३ २ ३ १ २
यैवा रात्र्युषसे योनिमारैक् ॥ * १ * ॥

ऋ० कुत्सः। छ० त्रिष्टुप्। दे० उषाः। अथेदं श्रेष्ठमिति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। 'ज्योतिषां' ग्रहनक्षत्रादीनां द्योतमानानां मध्ये 'इदम्' उष आख्यं 'ज्योतिः' 'श्रेष्ठं' प्रशस्यतमम् अस्य कोऽतिशयः? इति चेत्, उच्यते, नक्षत्रादिकं ज्योतिस्स्वात्मानमेव प्रकाशयति नान्यत्, चन्द्रस्तु यद्यप्यन्यं प्रकाशयति तथापि न विस्पष्टप्रकाशः, औषसन्तु ज्योतिर्युगपदेव सर्वस्य जगतोऽन्धकारनिराकरणेन विशेषेण प्रकाशकम् अतः प्रशस्यतममित्यर्थः। तादृशं ज्योतिः 'आ अगात्' पूर्वस्यां दिश्यागमत्। आगते चैतस्मिन् "चित्रः" चायनीयः, 'प्रकेतः' अन्धकारावृतस्य सर्वस्य पदार्थस्य प्रज्ञापकः, तथा 'विभ्वा' विभुर्व्याप्तः सन् "अजनिष्ट" प्रादुरभूत्। किञ्च, 'यथा' 'रात्री' रात्रिः स्वयं 'सवितुः' सूर्य्यप्रकाशात् 'प्रसूता' उत्पन्ना सूर्य्यो ह्यस्तं गच्छन् रात्रिं जनयति तस्मिन्नस्तमिते रात्रे-

कृत्यस्याभावात् एवमेव रात्रिरपि "उषसे" "सवाय" उषस उत्पत्तये तदीयां 'योनिं' स्थानं स्वकीयापरभागलक्षणम् "आरैक्" आरेचितवती कल्पितवतीत्यर्थः यद्वा, "प्रसूता" रात्रिसकाशादुत्पन्ना उषाः 'सवितुः' सूर्यस्य 'सवाय' प्रसवाय जन्मने यथा भवति एवं 'रात्रिः' अपि 'उषसे' उषसो यस्मात् तदर्थं 'योनिं' स्वापरभागलक्षणं स्थानं कृतवती। अत्र निरुक्तम्, "इदं श्रेष्ठं ज्योतिषां ज्योतिरागमच्चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमं यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनिमरिचत् स्थानम् (निरु० नै० २, १८)", इति श्रेष्ठम्, प्रशस्यशब्दादातिशायनिक इष्टन् (५, ३, ५५), "प्रशस्यस्य श्रः (५, ३, ६०)", इति श्रादेशः, "प्रकृत्यैकाच् (६, ४, ६२)", इति प्रकृतिभावाट्टिलोपाभावः। अगात् एतेर्लुङि "इणो गा लुङि (२, ४, ४५)", इति गादेशः, "गातिस्था (२, ४, ७७)", इति सिचो लुक्। प्रकेतः, कित ज्ञाने (भ्वा० प०) अन्तर्भावितण्यर्थात् कर्मणि घञ्, "थाथादिना (६, २, १४४) उत्तरपदान्तोदात्तत्वम्। अजनिष्ट, जनी प्रादुर्भावे (दि० आ०) लुङि सिच इडागमः। विभ्वा, "विप्रसम्भ्यो ड्वसञ्ज्ञायाम् (३,२,१८०)", इति डुप्रत्ययः। "सुपां सुलुक् (७, १, ३९)", इत्यादिना सोराकारादेशः, "ओः सुपि (६, ४, ८३)", इति यणादेशस्य "न भूसुधियोः (६, ४, ८५)", इति निषेधे प्राप्ते "छन्दस्युभयथा (६, ४, ८६)", इति यणादेशः। व्यत्ययेनाद्युदात्तत्वम्, यद्वा, विपूर्वात् भवतेरौणादिको डुन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम् (६, १, १९७)। प्रसूता, सुनोतेः कर्मणि निष्ठा, "गतिरनन्तरः (६, २, ४९)", इति गतेः प्रकृतिस्वरत्वम्। सवाय, "छन्दसि जवसवौ वक्तव्यौ (३, ३, ५७ वा०)", इति निपातनात् अच्, चित्स्वरः (६, १,

१६६)। रात्री, "रात्रेश्चाजसौ (४, १, ३१)", इति ङीप्, "यस्येति च (६, ४, १४८)", इतीकारलोपः। आरैक्, रिचिर् विरेचने (रु० उ०), लङि "बहुलञ्छन्दसि (२, ४, ७३), इति विकरणस्य लुक्, लघूपधगुणे (७, ३, ८६), "हल्ङ्याभ्यः (६, १, ६८)", इति तिलोपः, वर्णव्यापत्त्या व्यत्ययेन यकारस्यैकारः (३, १, ८५) ॥ १ ॥

१ २ २ १ २ २ २ ३
रुशद्वत्सा रुशती श्वेत्यागा-

१ २ २ १ १२
दारैगु कृष्णा सदनान्यस्याः।

२ १२ १ १ २ ३ २उ
समानबन्धू अमृते अनूची

२ १२ ३ २
द्यावा वर्णं चरत आमिनाने ॥ * २ * ॥

अथ द्वितीया। श्वेत्या इति उषसो नामधेयम् (निघ० १, ८, १२) "रुशती" दीप्तास्य "श्वेत्या" श्वेतवर्णायाः "रुशद्वत्सा" रुशन् दीप्तः सूर्यो वत्सो यस्याः सा तथोक्ता यथा मातुः समीपे वत्सः सञ्चरति एव सुपसः समीपे सूर्यस्य नित्यमवस्थानात् तद्वत्सत्वम् अथवा यथा वत्सो मातुः स्तन्यं रसं पिबन् चरति एव मुषसोऽवश्यायाख्यं रसं पिबन् वत्स इत्युच्यते तादृशी सती "आगात्" आगतवती। आगताया उषसः 'कृष्णा' कृष्णवर्णा रात्रिः 'सदनानि' स्थानानि स्वकीयानि अन्यदर्शयामलक्षणानि "आरैक्" आरेचितवती कल्पितवतीत्यर्थः उ-दग्वेतत्पूरणः अपिचैतेरात्रयोषसौ "समानबन्धू"समानेन एकेन

सूर्याख्येन बन्धुना सख्या युक्ते यद्वा, सूर्येण सह सम्बद्धे, यथा उषा उदेष्यता सूर्येण सम्बद्धा एवं रात्रिरपि अस्तं गच्छता सूर्येण सम्बद्धा, "अमृते" मरणरहिते कालात्मकतया नित्यत्वात् "अनूची" अनूच्यौ प्रथमं रात्रिः पश्चात् उषा इत्यनेन क्रमेण गच्छन्त्यौ यद्वा, सूर्यगत्यनुसारेण गच्छन्त्यौ एवम्भूते "वर्णं" सर्वेषां प्राणिनां रूपम् "आ मिनाने" जनयन्त्यौ यद्वा, स्वकीयं रूपं हिंसन्त्यौ, उषसा नैशं तमो निवर्त्यते, प्रकाशात्मकमुषसो रूपं रात्र्या एवं.विधे सत्यौ "द्यावा" द्योतमाने 'चरतः' प्रतिदिवसमावर्त्तते यद्वा, द्यावा नभसोऽन्तरिक्षमार्गेण चरतः प्रतिदिवस गच्छतः। अत्र निरुक्तम्, "रुशद्वत्सा सूर्यवत्सा। रुशदिति वर्णनाम, रोचतेर्ज्वलतिकर्मणः। सूर्यमस्या वत्समाह साहचर्याद्रसहरणाद्वा। रुशती श्वेत्यागात्। श्वेत्या श्वेततेररिचत् कृष्णा सदनान्यस्याः कृष्णवर्णा रात्रिः कृष्णं कृष्यतेर्निकृष्टो वर्णः। अथैने संस्तौति समानबन्धू समानबन्धने अमृते अमरणधर्माणावनूची अनूच्याविततरेतरमभिप्रेत्य द्यावावर्णं चरतस्ते एव द्यावौ द्योतनादपि वा द्यावा चरतस्तया सह चरत इति स्यादामिमाने आमिन्वाने अन्योऽन्यस्याध्यात्मं कुर्वाणे (निरु० नै० २,२०)", इति। श्वेत्या, श्विता वर्णे (भ्वा० आ०), अघ्न्यास्रन्तात् "अचो यत् (३, १, ९७)", इति भावे यत्, णिलोपः, अर्श आदित्वान्मत्वर्थीयोऽच् (५, २, १२७)। अमृते अमृतं मरणमनयोर्नास्तीति बहुव्रीहौ "नञो जरमरमित्रमृता (६, २, ११६), इत्युत्तरपदाद्युदात्तत्वम्। अनूची, अनुपूर्वादञ्चतेः "ऋत्विगित्यादिना क्विन् (३,२, ५९), "अनिदिताम् (६, ४, २४)", इति नलोपः, "अञ्चतेश्चोपसंख्यानम् (४, १, ६,वा०)", इति ङीप्, "अचः (६, ४, १३८)", इत्यकारलोपे, "चौ (६, ३, १३८)", इति दीर्घः, "अनुदात्तस्य

च यतोऽनावः (६, १, २१३)" इत्यस्य पर्य्युदासादन्तोदात्तत्वम्। ... 

३ २उ ३ १ २ ३ २उ
समानो अध्वा स्वस्रोरनन्त-
३ १ २ ३ १ २
स्तमन्यान्या चरतो देवशिष्टे ।
१ २ ३ १ २ ३ २ २
न मेथेते न तस्थतुः सुमेके
२ ३ ५ ३ १ २ १ १ २
नक्तोषासा समनसा विरूपे ॥ * ३ * ॥ [१४]

अथ तृतीया। "स्वस्रोः" भगिन्योः रात्र्युषसोः "अध्वा" सञ्चरणसाधनभूतो मार्गः "समानः" एक एव येन आकाशमार्गेण उषा निर्गच्छति तेनैव रात्रिरपि, स च मार्गः "अनन्तः" अवसानरहितः "तं" मार्गं "देवशिष्टे" देवेन द्योतनेन सूर्य्येणानुशिष्टे शिक्षिते सत्यौ "अन्यान्या" एकैका "चरतः" क्रमेण गच्छतः। अपिच "सुमेके" शोभनमेहने सर्वेषामुत्पादकत्वाच्छोभनप्रजनने 'नक्तोषासा' रात्र्युषसौ 'विरूपे' तमःप्रकाशलक्षणाभ्यां विरुद्धरूपाभ्यां युक्ते, अपि 'समनसा' समानमनस्के ऐकमत्यं प्राप्ते सत्यौ 'न मेथेते' परस्परं न हिंस्तः, तथा 'न तस्थतुः' क्वचिदपि न तिष्ठतः सर्वदा लोकानुग्रहार्थं गच्छत इत्यर्थः; अन्यान्या, 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलम् (८, १, १२ वा०)', इत्यनागमस्य

द्विर्भावः, 'तस्य परमाम्रेडितम् (८, १, २)', इत्याम्रेडितसञ्ज्ञायाम् "अनुदात्तञ्च (८, १, ३)", इत्याम्रेडितानुदात्तत्वम्। देवशिष्टे, शासु अनुशिष्टौ (अदा० प०), शास्तेः कर्मणि निष्ठा, 'यस्य विभाषा (७, २, १५)', इतीट्प्रतिषेधः, 'शास इदङ्हलोः (६, ४, ३४)', इति उपधाया इत्वम्, "शासिवसिघसीनाञ्च (८, ३, ६०)", इति षत्वम्, तृतीयाकर्मणि (६,२,४८)", इति पूर्वपदप्रकृतिस्वरत्वम्। मेथेते—मेथतिर्हिंसार्थो भौवादिकोऽनुदात्तेत्। सुमेके, मिह सेचने (भ्वा० प०), भावे घञ्, शोभनो मेहो ययोस्ते व्यत्ययेन ककारः (३, १, ८५), उत्तरपदस्य जित्स्वरेणाद्युदात्तत्वम् "इगन्तकाल... (६, २, ११८)", इत्युत्तरपदाद्युदात्तत्वम्। नक्तोषासा, सुपा सुलुगिति (७, १, ३८) विभक्तेराकारः ॥ २ ॥ [१४]

१ २ २ १ २ २ २ १ २ २
आ भात्यग्निरुषसामनीक-
१ २र २ १ २र
मुद्विप्राणां देवया वाचो अस्थुः ।
१ १ २ १ १ २ २ १ २
अर्वाञ्चा नूनं रथ्येह यातं
२ १ २ २ १ २र
पीपिवांसमश्विना घर्ममच्छ ॥ * १ * ॥

ऋ० अत्रिः। छ० त्रिष्टुप्। दे० अश्विनः। अथाभात्यग्निरिति तृचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। "उषसाम्" "अनीकम्" अनीकभूतम् अनीकं मुखम्, उषसि प्रबुध्यमान इत्यर्थः. तादृशः 'अग्निः' "आ भाति" दीप्यते अथवा, उषसां

मुखमाभाति दीपयति । उषःकाले ह्यग्नयः प्रतिबुध्यन्ते विप्र, 'विप्राणां' मेधाविनां स्तोतृणां 'देवयाः' देवकामाः 'वाचः' स्तोत्राणि 'उदस्थुः' उत्तिष्ठन्ति । यस्मादेवं तस्मात् हे "रथ्या" ! रथस्वामिनावश्विनौ ! 'अर्वाञ्चा' अस्मदभिमुखावश्विनौ 'नूनम्' 'अद्य' अस्मिन् यागदिने 'इह' यागे 'यातम्' आयातम् । कं प्रति ? "पिपीवांसं" स्वाङ्गैः परिवृढं "घर्मं" प्रदीप्तं यज्ञं यद्वा, 'पिपीवांसम्' आप्यायितं घर्मस्वरूपं सोमरसम्, अथवा, घृतादिना "पिपीवांसं" 'घर्मं' प्रवर्ग्यम् 'अच्छ' अभि लक्ष्य आयातम् प्रवर्ग्येऽस्य सूक्तस्य विनियोगो बह्वृचानाम् ॥१॥

१ २  ३ १  २र ३ २ ३
न सꣳस्कृतं प्र मिमीतो गमि-
३ २ ३ १ २ ३ १  २र ३ २
ष्ठान्ति नूनमश्विनोपस्तुतेह ।
१ २  ३ २ ३ १ २  ३
दिवाभिपित्वेऽवसागमिष्ठा
१ २र  ३ २ ३ १ २
प्रत्यवर्त्तिं दाशुषे शम्भविष्ठा ॥ * २ * ॥

अथ द्वितीया । हे अश्विनौ ! "संस्कृतं" घर्मं 'न प्रमिमीतः' न हिंस्तः किन्तु 'अन्ति' अन्तिके घर्मसमीपे 'नूनम्' इदानीम् 'इह' यज्ञे "गमिष्ठा" गन्तृतमौ युवाम् "अश्विना" अश्विनौ 'उपस्तुता' उपस्तुतौ भवतः 'दिवाभिपित्वे' दिवसस्याभिपतने प्रातःकाले 'अवसा' रक्षणनिमित्तेनान्नेन सह 'अवर्त्तिं' वर्त्ति-र्जीवनं तदभावो अवर्त्तिस्तद्रहितं यथा स्यात् 'आगमिष्ठा' आग-न्तृतमौ । आगत्य च 'दाशुषे' हविर्दत्तवते यजमानाय "शम्भ-विष्ठा" सुखस्य भावयितारौ भवतः ॥ २ ॥

१ २   २   १ २   २   १   २२
उता यातᳩ सङ्गवे प्रातरह्नो
२ १   २ २ १ २ २   १ २
मध्यन्दिन उदिता सूर्य्यस्य ।
२   ३   २.२ १ २.२   १ २   २
दिवा नक्तमवसा शन्तमेन
१, २२   २   २ २ १   २२
नेदानीं पीतिरश्विना ततान ॥ * ३ * ॥ [१५]

अथ तृतीया। अह्नो द्वेधा, त्रेधा, पञ्चधा, पञ्चदशधा, इति नानाविधा भागाः सन्ति, इह पञ्चधा विभागा आसाः 'उत' अपिच 'आयातम्' आगच्छतम्। कदा ? 'सङ्गवे' सङ्गव-काले सङ्गच्छन्ते गावो दोहभूमिं यस्मिन् काले स सङ्गवः। रात्रपरभागकाले हि गावो वने हिमतृणानि भक्षयन्ति, भक्षयित्वा पुनर्दोहाय सङ्गवे प्रतिनिवर्त्तन्ते, तथा 'प्रातः'कालेऽपि. तथा 'मध्यन्दिने' अह्नो मध्यकाले, 'सूर्य्यस्य' 'उदिता' उदितौ अभ्युदये अत्यन्तप्रवृद्धसमये अपराह्ने इत्यर्थः एतत्सायाह्नस्याप्युपलक्षणम्। न केवलमुक्तेष्वेव कालेषु, किन्तर्हि ? 'दिवा' 'नक्तं' सर्वदा 'शन्तमेन' सुखतमेन "अवसा" रक्षणेन हविषा वा निमित्तेन आयातम्। किमर्थमागम्यते ? पूर्वमेवान्यैर्देवैः भीतत्वात् ? नेत्याह, इदानीमपि 'पीतिः' इतरदेवानां पानं 'न' 'आ ततान' तनोति। 'अश्विना' अश्विनौ इह आयातमिति शेषः ॥ ३ ॥ [१५]

इति सामवेदार्थप्रकाशे उत्तरग्रन्थस्यैकोनविंशाध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

२ २ २ २ २ १ २ ३ १ २ २
एता उ त्या उपसः केतुमक्रत

१ २ २ १ १ २ २ १ २
पूर्वे अर्द्धे रजसो भानुमञ्जते ।

२ १ २र २ २ ३
निष्कृण्वाना आयुधानीव धृष्णवः

२ ३ १ २र २ १ २
प्रति गावोऽरुषीर्यन्ति मातरः ॥ * १ * ॥

ऋ० गोतमः । छ० जगती । दे० उषाः । अथ पञ्चमे खण्डे—एता उत्या इति द्व्यात्मकं प्रथमं सूक्तम्, तत्र प्रथमा । 'उ', इत्येतत् पादपूरणम् । 'त्याः' ताः 'एताः' उषसः प्रभातकालाभिमानिन्यो देवताः "केतुम्" अन्धकारावृतस्य सर्वस्य जगतः प्रज्ञापकं प्रकाशम् "अक्रत" अकृषत कृतवत्यः यद्वा-देवं तस्मात् उषसः 'रजसः' अन्तरिक्षलोकस्य 'पूर्वे अर्द्धे' प्राचीने दिग्भागे 'भानु' प्रकाशम् 'अञ्जते' व्यक्तीकुर्वन्ति । 'धृष्णवः' धर्षणशीलाः योद्धारः 'आयुधानीव' यथासि-प्रभृतीन्यायुधानि संस्कुर्वन्ति, एवं 'निष्कृण्वानाः' निस्कुर्वाणाः स्वभासा जगत् संस्कुर्वाणाः 'गावः' गमनस्वभावाः 'अरुषीः' आरोचमानाः 'मातरः' सूर्यप्रकाशस्य निर्मात्र्यः जगज्जनन्यो वा 'उषसः' 'प्रति यन्ति' प्रतिदिवसं गच्छन्ति । एवंविधा उषसः अस्मान् रक्षन्त्वित्यर्थः अत्र निरुक्तम्,-'एतास्ता उषसः केतुमकृषत प्रज्ञानमेकस्या एव पूजनार्थे बहुवचनं स्यात् । पूर्वे अर्द्धेऽन्तरिक्षलोकस्य समञ्जते भानुना । निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येत[illegible] स्थाने । समीदेषां निष्कृतं जारिणीवेत्यपि निगमो भवति । प्रतियन्ति गावो गमनादरुषीरारोचनान्मातरो भासो निर[illegible]

(ऐ० ६, ७)', इति। यंजात—यरोतेर्लुङि 'मन्त्रे घस (२, ४, ८०)'—इति च्लेर्लुक्। निष्कृखानाः, क्षवि हिंसाकरणयोश्च (भ्वा० प०), अस्मात्ताच्छिलिकश्चानश् (३, २, १२९), धिन्वि-कृण्व्योर च (३, १, ८०)', इति उप्रत्ययः। 'इदुपधस्य चाप्रत्ययस्य (८, ३, ४१)'—इति विसर्जनीयस्य सत्वम्, क्षदुत्तरपद-प्रकृतिस्वरत्वम् (६, २, १३९) ॥ १ ॥

१ २    १ २   ३ २ ३ १ २
उदपप्तन्नरुणा भानवो वृथा

१ २ ३   १ २ ३ १   २
स्वायुजो अरुषीर्गा अयुक्षत।

१ २ ३ १ २ ३   ३ १ २    ३ १ २
अक्रन्नुषासो वयुनानि पूर्वथा

१ २   २ १   २२
रुशन्तं भानुमरुषीरशिश्रयुः ॥ * २ * ॥

अथ द्वितीया। 'अरुणाः' आरोचमानाः 'भानवः' औषस्यो दीप्तयः 'वृथा' अनायासेन स्वयमेव 'उदपप्तन्' उदगमन्। तदनन्तरम् उषसः 'स्वायुजः' सुखेन रथे आयोक्तुं शक्याः 'अरुषीः' आरुण्वर्णाः गाः पूर्वमुत्थितान् रश्मीन् ईरुषीः स्वयानभूतायत्तप्पदी गा एव 'अयुक्षत' स्वरथे अयोजयन्। उक्तञ्च, 'अरुण्यो गाव उषसाम् (निघ० १, १५, ७)' इति। एवं गोभिर्युक्त रथमारूढा उषसः 'पूर्वथा' पूर्वंवत्तीतेष्वहःसु 'वयुनानि' सर्वेषां प्राणिनां ज्ञानानि 'अक्रन्' अकार्षुः उषःकाले जाते हि सर्वे प्राणिनो ज्ञानयुक्ता भवन्ति, तदनन्तरम् 'अरुषीः' आरोचमानास्ता उषसः 'रुशन्तं' रुशदिति वर्णनाम, रोचतेर्ज्वलति कर्मणः (निरु० ने ६, १३)' इति

यास्कः शुक्लावर्णे 'भानु' सूर्यम् 'अभिश्रयुः' असेवन्त तेन सद्दीभवन्तीत्यर्थः॥ २॥

१ २ ३ १ २ ३ २ ३ २ ३ १ ३
अर्चन्ति नारीरपसो न विष्टिभिः

२ ३ २ १ २ ३ १ २ ३ १ २
समानेन योजनेना परावतः।

२ १ १ २ ३ १ २ २ १ २ १
इषं वहन्तीः सुकृते सुदानवे

२ ३ २ १ २ ३ २
विश्वेदह यजमानाय सुन्वते॥*३*॥[१६]

अथ तृतीया। "नारीः" नेत्र्यः उषसः "विष्टिभिः" निवेशवोः स्वकीयैस्तेजोभिः 'समानेन योजनेन' एकेनैवोद्योगेन 'आ परावतः' आ दूरदेशात् आ पश्चिमदिग्विभागात् 'अर्चन्ति' नभःप्रदेशं पूजयन्ति कृत्स्नं जगत् युगपदेव व्याप्नुवन्तीत्यर्थः। तत्र दृष्टान्तः, 'अपसो न' युद्धकर्मणोपेताः पुरुषा यथा स्वकीयैरायुधैर्धाटीमुखेन सर्वं देशं व्याप्नुवन्ति तद्वत्। किं कुर्वते? "सुकृते" शोभनस्य कर्मणः कर्त्रे, 'सुन्वते' सोमाभिषवं कुर्वते, 'सुदानवे' कल्याणीदक्षिणा ऋत्विग्भ्यो ददते, 'यजमानाय' 'विश्वे दह' सर्वमेवेषमन्नं वहन्तीरावहन्त्यः प्रयच्छन्त्य इत्यर्थः नारीः—'नृ नये (८, २, १०), ऋदोरप् (३,४,५७) 'नृनरयोर्वृद्धिश्च (४, १, ७३ ग०)'—इति शार्ङ्गरवादिषु पाठात् ङीन्, जसि 'वाच्छन्दसि (६, १, १०६)'—इति पूर्वसवर्णदीर्घत्वम्। अपसः—अपःशब्दात् 'अर्श आदिभ्योऽच् (५, २, १२७)'—इत्यच् 'सुपां सुलुक् (७, १, ३९)'—इति जसः सुः, व्यत्ययेन प्रत्ययात् पूर्वस्योदात्तत्वम्। विष्टिभिः—विश प्रवेशने (तु०प०), विशन्ति प्रविशन्तीति विष्टयः किरणाः 'क्तिच्क्तौ च सञ्ज्ञा-

याम् (३, ३, १७४)'—इति क्तिच्। विश्वा—'सुपां सुलुक् (७, १, ३८)'—इत्यमो डादेशः ॥ ३ ॥ [१६]

१ २ ३ १ १२ ३ १ २
अबोध्यग्निर्ज्म उदेति सूर्य्यो
२ १ ३ २ ३क २र ३ १ २
व्यू३षाश्चन्द्रा मह्यावो अर्चिषा।
१ २ ३ १ ३ १ २३१२
आयुक्षातामश्विना यातवे रथं
१ २ ३ १' २ ३ १२ ३ १ २
प्रासावीद्देवः सविता जगत्पृथक् ॥ * १ * ॥

ऋ० दीर्घतमाः। छ० जगती। दे० अश्विदेवतयः। अथाबोध्यग्निर्ज्म इति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। अयम् 'अग्निः' निहतः सन् 'ज्मः' ज्मायाः पृथिव्याः वेदिलक्षणायाः सम्बन्धी सन् 'अबोधि' प्रबोधितः। किञ्च, 'सूर्यः' 'उदेति'। ततो 'मही' महती 'उषा' 'अर्चिषा' प्रकृष्टेन तेजसा 'चन्द्रा' प्राणिनामाह्लादनी सती 'वि आवः' व्यवृणोत् तमांसि निवारयति वृणोतेर्लुङि 'मन्त्रे घस (२, ४, ८०)'—इति च्लेर्लुक्, 'छन्दस्यपि दृश्यते (६, ४, ७३)'—इत्याडागमः यत एवमुषा उदेति यतश्चायमग्निः प्रबुद्धो भवति अतः कारणात् हे अश्विनौ। युवत्सम्बन्धिनं 'रथं' 'यातवे' देवयजनगमनाय रासभाभ्याम् 'आ युक्षताम्' युञ्जाथाम्। तथा 'सविता' सर्वकर्मणोऽनुज्ञाता 'देवः' 'जगत्' जङ्गमं प्राणिजातं 'पृथक्' स्वस्वकर्मानुरोधेन 'प्रासावीत्' प्रसुवतु अनुजानातु ॥ १ ॥

१ ३ २ ३ १ २ १ २ ३ १ २
यद्युञ्जाथे वृषणमश्विना रथं

२ १२ १ १२ २ १२
घृतेन नो मधुना चत्रमुचतम्।
१ २ १ २१ १२
अस्माकं ब्रह्म पृतनासु जिन्वतं
१२७ १ १२
वयं धना शूरसाता भजेमहि ॥ * २ * ॥

अथ द्वितीया। हे 'अश्विना'! अश्विनौ! 'यद्' यदा 'वृषणं' वृष्ट्यादिवर्षकं 'रथं' 'युञ्जाथे' योजयथः, तदा 'नः चत्रम्' अस्मदीयं बलं चत्रियजातिर्वा 'घृतेन' उदकेन 'मधुना' मधुरेण 'उचतं' सेचयतं प्रवर्द्धयतमित्यर्थः यद्वा, 'घृतेन' चरणरूपेण 'मधुना' मधुरेण अमृतेन 'उचतम्' युवद्वयस्थेनामृतेनास्मदीयं बलं प्रवर्द्धयतमित्यर्थः। अश्विनोः रथस्य मधुपूर्णत्वं "मधुवाहनो रथः"—इत्यादिषु प्रसिद्धम्। किञ्च, अस्माकं "पृतनासु" अस्मदीयासु पुत्रभृत्यादिमनुष्यरूपासु प्रजासु 'ब्रह्म' ब्राह्मं तेजः 'जिन्वतम्' यद्वा, 'पृतनासु' परकीयासु 'ब्रह्म' परिवृढ़मस्मभ्यमस्मांक जिन्वतं प्रीणयतम्। वयञ्च 'शूरसातौ' शूराणां प्रहारादिना युक्ते संग्रामे 'धना' तदीयानि धनानि बहुविधानि 'भजेमहि' लभेमहि ॥२॥

१ १ १ २ १ २ १ १ २ १ १ १ २
अर्वाङ्त्रिचक्रो मधुवाहनो रथो
१ १ १ १ १ २ १ १२
जीराश्वो अश्विनोर्यातु सुष्टुतः।
१ २ १ १ २ १ १ १ १
त्रिवन्धुरो मघवा विश्वसौभगः
१ १ १ २ १ ११ १२
शं न आ वचद्विपदे चतुष्पदे ॥ * ३ * ॥ [१७]

अथ तृतीया। 'अर्वाङ्' अस्मदभिमुखः अश्विनोः 'रथः' 'यातु' गच्छतु। कीदृशः? 'त्रिवृत्' चक्रत्रययुक्तः, 'मधुवाहनः' मधुवोढ़ा, "जीराश्वः" शीघ्रगाम्यश्वोपेतः, 'सुष्टुतः' अतएवास्माभिः स्तूयमानः, "त्रिवन्धुरः" निम्नोन्नतकाष्ठत्रयोपेतः सारथ्याश्रयस्थानं वन्धुरं 'मघवा' धनवान्, 'विश्वसौभगः' सर्वसौभाग्योपेतः। ईदृशोऽश्विनोः रथः "नः" अस्माकं 'द्विपदे' पुत्रादिप्रजायै "चतुष्पदे" पशवे च 'शं' सुखम् 'आ वक्षत्' आवहतु वहेर्लिटि अड़ागमः ॥३॥ [१७]

१ २ १ २ २ १ २ २ १ २ २ १ २
प्र ते धारा असश्चतो दिवो न यन्ति वृष्टयः।
२ २ १ २ २ १ २
अच्छा वाजꣳ सहस्रिणम् ॥ * १ * ॥

ऋ० अवत्सारः। छ० गायत्री। दे० सोमः। अथ प्रते धारा असश्चत इति चतुर्ऋचं तृतीयं सूक्तम्, तत्र प्रथमा। 'हे सोम!' "ते" तव 'असश्चतः' सङ्गरहिताः 'धाराः' सहस्रिणम् अपरिमितसङ्ख्याकं "वाजम्" अन्नं 'अच्छ' अस्मदर्थं 'प्र यन्ति' प्रगच्छन्ति। तत्र दृष्टान्तः, 'दिवो न वृष्टयः' यथा द्युलोकाद् वर्षधारा निःसङ्गाः प्रजानामपरिमितमन्नं प्रयच्छन्ति तद्वदित्यर्थः ॥ १ ॥

१ २ २ २ १ २ २ २ २ १ २
अभि प्रियाणि काव्या विश्वा चचाणो अर्षति।
१ २ २ १ २२
हरिस्तुञ्जान आयुधा ॥ * २ * ॥

अथ द्वितीया। "हरिः" हरितवर्णः सोमः 'विश्वा'

विश्वानि 'प्रियाणि देवानां प्रीतिकराणि "काव्या" काव्यानि कर्माणि 'चचाणः' पश्यन् 'आयुधा' स्वकीयान्यायुधानि 'तुञ्जानः' 'राक्षसान् प्रति प्रेरयन् "अभ्यर्षति" यागं प्रति गच्छति ॥२॥

१ २ ३ २ ३ १ २ ३ २३ १ २ ३ २

स मर्मृजान आयुभिरिभो राजेव सुव्रतः।

२ १ ३२

श्येनो न वंꣳसु षीदति ॥ * ३ * ॥

अथ तृतीया। 'सुव्रतः' सुकर्मा "सः" सोमः 'आयुभिः' मनुष्यैर्ऋत्विग्भिः 'मर्मृजामानः' शोध्यमानः 'इभः' गतभयः "राजा इव" यथा राजा, "श्येनो न" यथा श्येनः, तथा 'वंसु' उदकेषु वसतीवरीषु 'सीदति' ॥ ३ ॥

२ १ १ २ ३ २३ ३ १ २ ३ १ ३२

स नो विश्वा दिवो वसूतो पृथिव्या अधि।

२ १ २३ १ २

पुनान इन्दवा भर ॥ * ४ * ॥ [१८]

इति अष्टमप्रपाठकस्य तृतीयार्द्धम्।

अथ चतुर्थी। हे 'इन्दो'! सोम! 'पुनानः' पूयमानस्त्वं 'दिवः अधि' दिवि स्थितानि उत अपिच 'पृथिव्याः' अधि,पृथिव्यां स्थितानि अधीति सप्तम्यर्थानुवादः। 'विश्वा' विश्वानि "वसु" वसूनि धनानि 'नः' अस्मभ्यम् 'आ भर' आहर ॥ ४ ॥ [१८]

इति सामवेदार्थप्रकाशे उत्तरार्च्चस्यैकोनविंशाध्यायस्य पञ्चमः खण्डः ॥५॥

इति अष्टमः प्रपाठकः।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक श्रीवीरबुक्कभूपालसाम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे ऊनविंशोऽध्यायः

समाप्तः ॥ १८ ॥

# अथ नवमः प्रपाठकः ।

## अथ विंशोऽध्याय आरभ्यते ।

नवमप्रपाठकस्य प्रथमार्द्धम् ।

१ २ १ २ २ १ २ ३ १ २र

प्रास्य धारा अक्षरन् वृष्णः सुतस्यौजसः ।

३ १ २र ३ १ २

देवाꣳ अनु प्रभूषतः ॥ * १ * ॥

ऋ० नृमेधः । छ० गायत्री । दे० सोमः । तत्र, प्रथमे खण्डे—प्रास्यधारेति दृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा । 'अस्य' सोमस्य 'धाराः' 'ओजसः' ओजसा बलेन 'अक्षरन्' असिञ्चन् । कीदृशस्य ? 'वृष्णः' वर्षकस्य 'सुतस्य' अभिषुतस्य 'देवान्' 'अनु' 'प्रभूषतः' प्रभवितुमिच्छतः ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २

सप्तिं मृजन्ति वेधसो गृणन्तः कारवो गिरा ।

१ २ ३ २ ३क २र

ज्योतिर्जज्ञानमुक्थ्यम् ॥ * २ * ॥

अथ द्वितीया । 'सप्तिम्' अश्वस्थानीयं सर्पणस्वभावं वा सोमं 'मृजन्ति' शोधयन्ति । के ? 'गृणन्तः' स्तुवन्तः 'वेधसः' विधातारः 'कारवः' कर्मकर्त्तारोऽध्वर्य्वादयः 'गिरा' स्तुत्या साधनेन । कीदृशं सप्तिम् ? 'ज्योतिः' दीप्यमानं सोमं 'जज्ञानं' जायमानं प्रवृद्धमित्यर्थः अथवा ज्योतिर्जायमानम् 'अयं ज्योतिर्यत्सोमः', इति श्रुतेः । 'उक्थ्यं' स्तुत्यम् ॥ २ ॥

३ १ २ ३ १ २ ३ १ २

सुषहा सोम तानि ते पुनानाय प्रभूवसो ।

१ २   २ १ २
वर्धा समुद्रमुक्थ्य ॥ * ३ * ॥ [१]

अथ तृतीया। हे 'सोम!' 'उक्थ्य' स्तुत्य! 'प्रभूवसो' प्रभूतधन! 'पुनानाय' पूयमानस्य 'ते' तव 'तानि' तेजांसि 'सुषहा' शोभनाभिभावुकानि। यस्मादेवं तस्मात् 'समुद्र' समुद्रसदृशं तं 'वर्द्धः' वर्द्धय रसेन पूरयेत्यर्थः ॥ ३ ॥ [१]

१ २  १ २उ   १  २ १
एष ब्रह्मा य ऋत्विय
२ ३  १ २  ३ २  ३
इन्द्रो नाम श्रुतो गृणे ॥ * १ * ॥

ऋ० नृमेधः वामदेवः वा। छ० द्विपदा पंक्तिः। दे० इन्द्रः। अथैषेति द्विपदं द्वितीयं सूक्तम्, तत्र प्रथमा। 'यः' 'इन्द्रः', इति "नाम" "श्रुतः" देवसमूहैः प्रख्यातः "एषः" "ऋत्वियः" ऋतौ वसन्तादौ काले भवः य एषः "ब्रह्मा" सर्वतः परिवृद्धः, तमहं 'गृणे' स्तौमि ॥ १ ॥

१   २र   २ ३ ३ १ ३ २ ३ १ २
त्वामिच्छवसस्पते यन्ति गिरो न संयतः॥ * २ * ॥

अथ द्वितीया। हे "शवसः!" बलस्य 'पते' पालकेन्द्र! अतिशयेन बलवन्नित्यर्थः। तथा शाखान्तरे बलेनोत्पत्तित्वं श्रूयते, 'उरसो बाहुभ्यां पञ्चदशं निरमिमीत, तमिन्द्रो देवताम् विसृज्यते', इत्यारभ्य "तस्मात्ते वीर्य्यवन्तः", इति श्रुतेः। 'त्वामित्' त्वामेव 'संयतः' न सम्यङ् नियच्छतः पुरुषस्येव वेदस्य सम्बन्धिनः 'गिरः' स्तुतयः 'यन्ति' प्राप्नुवन्ति ॥ २ ॥

१ २  २ २  ३ १  ३२ ३ १ २ ३ १ २
यस्य ते महिना महः परि ज्मायन्तमीयतुः ।
२ ३‌॰ १ २  ३ १ २
हस्ता वज्रꣳ हिरण्ययम् ॥ * ३ * ॥ [३]

अथ तृतीया। 'महः' महतः 'यस्य' 'ते' तव यच्छब्दः प्रक्रान्तपरामर्शी, प्रक्रान्तसूक्तग्रहणं तत्सत्युविकुर्मिन्द्रतीपहमित्यायुक्तलक्षणस्य तवेत्यर्थः 'महिना' महत्त्वेन 'हस्ता' तव हस्तौ 'ज्मायन्त' पृथिव्यां सर्वतो व्याप्नुवन्तं 'हिरण्ययं हिरण्मयं 'वज्रम्' हस्तौ 'ईयतुः' परिगृह्णीतः, सर्वदास्माकं भयनिवारणायेति भावः ॥ ३ ॥ [३]

२उ  ३ १ २ ३ १ २
आ यः पुरं नार्मिणीमदी-
३ १ २  ३ १ २ ३ १ २  १ २
देदत्यः कविर्नभन्यो३ नार्वा ।
३ १  १ २ ३ २  ३ १ २
सूरो न रुरुक्वां छतात्मा ॥ * १ * ॥

ऋ० दीर्घतमाः। छ० विराट्। दे० अग्निः। आयुःपुरमिति तृचात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा। 'यः' अग्निः "नार्मिणीं" नर्मवतां यजमानानां सम्बन्धिनीमुत्तरवेदिं यद्वा नृणां मनसि स्थितां यजमानानां यज्ञार्थं भूमिं प्रत्यन्तागमनमनीया विद्यते ताम् 'पुरं' तत् स्थानं 'अदीदेदत्' दीपयति। कीदृशोऽयम्? 'अत्यः' अपेक्षितदेशं प्रत्यतनशीलः, 'कविः' क्रान्तदर्शी। तत्र दृष्टान्तः, 'अर्वा' अश्वकुशलः, 'नभन्यः न' नभस्याकाशे भवः नभन्यो वायुरिव। किञ्च,

'शतात्मा'। शतं सहस्रमित्यपरिमितवचनः तत्तद् यजमानगृहापेक्षया आहवनीयगार्हपत्याद्यपेक्षया वा अपरिमितरूपत्वम्। अथवा मित्रवरुणादिरूपभेदेन अग्नेर्मित्रादिरूपत्वं 'त्वमग्ने वरुणो जायसे', 'इन्द्रं मित्रं वरुणमग्निमाहुः', इत्यादिश्रुतिषु प्रसिद्धम्, अग्नेरेव इन्द्राद्यात्मकत्वमाहुरिति द्वितीयमन्त्रस्यार्थः तादृशोऽयं "सूरो न" सूर्य इव "रुरुक्वान्" दीप्यमानः रुच् दीप्तौ (भ्वा॰ आ॰), छान्दसस्य लिटः क्वसुः अतस्तादृशोऽग्निरस्ति उत्कृष्टं वर्त्तत इति पूर्वेणान्वयः ॥ १ ॥

अभि द्विजन्मा त्री रोचनानि
विश्वा रजाꣳसि शुशुचानो अस्थात्।
होता यजिष्ठो अपाꣳ सधस्थे ॥ * २ * ॥

अथ द्वितीया। अयमग्निः 'द्विजन्मा' द्वाभ्यामरणिभ्यां जायमानः यद्वा, मथनात् प्रथमं जन्म, उत्पत्त्यनन्तरम् आधानपवमानेष्ट्यादिसंस्काररूपं द्वितीयं जन्म, एवं द्विजन्मत्वम् अथवा, द्यावा पृथिवीभ्यामुत्पन्नत्वात्, तादृशोऽग्निः 'त्री रोचनानि' त्रीणि रोचमानानि चित्यादिस्थानानि गार्हपत्यादीनि वा अभि 'शुशुचानः' अभितः प्रकाशयन् न केवलं त्रीण्येव किन्तु 'विश्वा' 'रजांसि' सर्वाण्यपि रञ्जनात्मकानि चित्यादिलोकान् 'शुशुचानः' दीपयन् 'होता' देवानामाह्वाता 'यजिष्ठः' यष्टृतमः सन् 'अपां' प्रीणयित्र्युदकानां 'सधस्थे' सहस्थाने यागदेशे "अस्थात्" तिष्ठति ॥ २ ॥

२ ३उ २ २ ३ २ २
अयᳲ स होता यो द्विजन्मा
१ २ ३ १ २र ३ २
विश्वा दधे वार्य्याणि श्रवस्या।
२ ३ १ २ ३ १ २ ३ १ २
मर्त्तो यो अस्मै सुतुको ददाश॥ * ३ * ॥ [४]

अथ तृतीया। 'यः' 'द्विजन्मा' 'सः' एव 'होता' होमनिष्पादकः आह्वाता वा देवानाम् अरणीभ्यामुत्पन्नस्यैव गार्हपत्यद्वारा आहवनीयत्वात् सोऽयं 'विश्वा' विश्वानि 'वार्य्याणि' वरणीयानि कर्माणि ईडवन्दवृशंसदुहां ण्यतः (६, १, २१४)', इत्याद्युदात्तत्वम् 'श्रवस्या' श्रवस्यया अन्नेच्छया हविर्लक्षणं यशो वा तदिच्छया श्रवःशब्दात् सुबन्तात् 'अ प्रत्ययात् (३, ३, १०२)' इति भावे अप्रत्ययः अन्नाय यशसे वा 'दधे' धारयति। 'अस्मै' उक्तलक्षणायाग्नये 'यः' 'मर्त्यः' "ददाश" ददाति स 'सुतुकः' शोभनपुत्रो भवति॥ ३॥ [४]

२ ३ २ ३ २ ३ २उ २
अग्ने तमद्याश्वं न स्तोमैः
२ ३ २ ३ १ २ ३ १ २
क्रतुं न भद्रᳲ हृदिस्पृशम्।
३ १ २ ३ १ २
ऋध्यामा त ओहैः॥ * १ *॥

ऋ॰ वामदेवः। छ॰ पदपंक्तिः। दे॰ अग्निः। अथाग्नेतमद्याश्वमिति तृचात्मकं पञ्चमं सूक्तम्, तत्र प्रथमा। हे 'अग्ने!' "अद्य" अस्मिन्दिने वयस्तिगादयः 'ओहैः' इन्द्रादिप्रापकै-

स्माकं स्तोमैः स्तोत्रसमूहैः "तम्" प्रसिद्धं त्वाम् 'ऋध्याम' समर्द्धयामः। कीदृशं त्वाम् ? 'अश्वं न वोढारम्' अश्वमिव हविषो वाहकम्, तथा 'क्रतुं न' कर्त्तारमिव उपकारिणमित्यर्थः। तथा "भद्रं" भजनीयं 'हृदिस्पृशं' हृदयङ्गमम् अतिशयेन प्रियमित्यर्थः॥ १॥

१ ३क २र ३ १ २ ३ २ ३ १ २ ३ २
अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः।
३ २ ३ १ २ ३ २ ३ १ २
रथीर्ऋतस्य बृहतो बभूथ॥ * २ *॥

अथ द्वितीया। 'अधा हि' इदानीमेव हे "अग्ने!" त्वं 'क्रतोः' अस्मदीययागस्य 'रथीः' नेता 'बभूथ' भवसि 'छन्दसि लुङ् लङ् लिटः (३,४,६)', इति भवतेर्वर्त्तमानार्थे लिटि सिपस्थल् 'आर्द्धधातुकस्येड्वलादेः (७, २, ३५)', इतीड़ागमे प्राप्ते "बभूथाततन्थ (७, २, ६४)", इति निपातनादिड़भावः। कीदृशस्य यागस्य ? 'भद्रस्य' भजनीयस्य, "दक्षस्य" प्रवृद्धस्य, "साधोः" अभीष्टफलानां साधकस्य सत्यभूतस्य, "बृहतः" महतः॥ २॥

३ १ २ ३ १ २र ३ २ १ २र
एभिर्नो अर्कैर्भवा नो अर्वाङ्स्वा३र्ण ज्योतिः।
२ ३ १ २ ३ २ ३ १ २
अग्ने विश्वेभिः सुमना अनीकैः॥ * ३ *॥ [५]

अथ तृतीया। हे "अग्ने!" "ज्योतिः" ज्योतिष्मान् "स्वः न" सूर्य्य इव, तथा 'विश्वेभिः' विश्वैः समस्तैः 'अनीकैः' तेजोभिः 'सुमनाः' शोभनमनस्कस्त्वं 'नः' अस्मदीयैः 'एभिः'

एतैः 'अर्कैः' अर्चनीयैः स्तोत्रैः नानाविधैः हविर्लक्षणैः अन्नैर्वा अथवेन्द्रादिदेवैः सह 'नः' अस्माकम् 'अर्वाक्' अभिमुखो भवेति ॥ ३ ॥ [५]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य विंशाध्यायस्य
प्रथमः खण्डः ॥ १ ॥

---

२ ३ १ २ ३ १ २ ३ १ २र
अग्ने विवस्वदुषसश्चित्रꣳ राधो अमर्त्य ।
२ ३ १ २ ३
आ दाशुषे जातवेदो वहा
२ ३ २ ३ १ २ ३ १ २
त्वमद्या देवाꣳ उषर्बुधः ॥ * १ * ॥

ऋ० प्रस्कण्वः। छ० बृहती। दे० अग्निः। अथ द्वितीये खण्डे—अग्नेविवस्वदिति प्रगाथात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। हे "अग्ने!" त्वम् 'उषसः' उषोदेवतायाः सकाशात् 'राधः' धनं 'दाशुषे' 'दाशृ दाने' दत्तः हविर्दत्तवते यजमानाय 'आ वह' आनीय प्रापय। सोऽग्निर्विशिष्यते, 'अमर्त्य' मरणरहित! 'जातवेदः' जातानां वेदितः! तमेतं शब्दं यास्को व्याचष्टे, 'जातवेदाः कस्माज्जातानि वेद जातानि वैनं विदुर्जातेजाते जाते विद्यत इति वा जातवित्तो वा जातधनो वा जातविद्यो वा जातप्रज्ञो वा यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणं तस्मात् सर्वानृतून् पशवोऽग्निमभिसर्पन्तीति च (निरु०दे०१,१८)', इति। कीदृशं राधः? 'विवस्वत्' "विशिष्टनिवासोपेतं, "चित्रं" नानाविधम्। किञ्च,

'अद्य' अस्मिन् दिने 'उषर्बुधः' उषः काले प्रबुद्धान् 'देवान्' आवह विवस्वत्, विवासनं विवः तद्युक्तम्, वस निवासे (भ्वा० प०), विपूर्वादन्तर्भावितण्यर्थात् सम्पदादिलक्षणो भावे क्विप् (३,३,९४वा०), 'तदस्यास्ति (५,२,९४)', इति मतुप्, "मादुपधायाः (८, २, ९)" इति वत्वम्, "तसौ मत्वर्थे (१,४, १९)"; इति भत्वेन पदत्वाभावाद्रुत्वाभावः, वृषादित्वात् (६,१, २०३) आद्युदात्तत्वम्। जातवेदाः—जातानि वेत्तीति जातवेदाः "गतिकारकयोः पूर्वपदप्रकृतिस्वरत्वञ्च (उ० ४, २२६)", इत्यसुन्, यद्वा वेद इति धननाम (निघ० २, १०,'४), जातं धनं यस्य स जातवेदाः, आमन्त्रितनिघातः (८, १, १९)। यद्वा—"ऋचोऽतस्तिङः (६, ३, १३५)"—इति संहितायां दीर्घत्वम्। उषर्बुधः, उषसि बुध्यन्त इत्युषर्बुधः बुधं अवगमने (भ्वा० प०) "क्विप् च (३, २, ७६)", इति क्विप्, रोरुत्वाभावश्छान्दसः कृदुत्तरपदप्रकृतिस्वरत्वम् (६, २, १३९) ॥ १ ॥

२ १ २ ३ १ ३२ ३
जुष्टो हि दूतो असि हव्य-
१ २ ३ २ ३ १ २ ३ १ २
वाहनोऽग्ने रथीरध्वराणाम् ।
१ २ ३ १ २ ३ १ २ ३ १ २
सजूरश्विभ्यामुषसा सुवीर्य-
२ ३ १ २ ३ १ २ ३ १
मस्मे धेहि श्रवो बृहत् ॥ * २ * ॥ [६]

अथ द्वितीया। हे "अग्ने !" त्वं जुष्टत्वादिविशेषणयुक्तोऽसि "जुष्टः" "नित्यं मन्त्रे (६, १, २१०)"—इत्याद्युदात्तत्वम् श्रयितं इत्ययः "असि" सिपि "तासस्त्योर्लोपः (७, ४, ५०)",

इति सलोपः, "हि च (८, १, ३२)", इति निघातप्रतिषेधः। "दूतः" देवानां विशेषवार्त्ताहरः, अतएव "हव्यवाहनः" "हव्येऽनन्तःपादम् (३, २, ६६)", जुट्, योरनादेशः (७, १, १), जित्वादाद्युदात्तत्वे (६, १, १८०), कदुत्तरपदप्रकृतिस्वरत्वम् (६, २, १३८) हविषो वोढ़ा, "अध्वराणां" क्रतूनां 'रथीः' रथस्थानीयः तथा च मन्त्रान्तरं ब्राह्मणेनैवं व्याख्यातम् 'रथीरध्वराणामित्याहैष हि देवरथः' इति, ब्राह्मणान्तरञ्च रथोह वा एष भूतेभ्यो देवेभ्यो हव्यं वहति'। इति तादृशस्त्वम् 'अश्विभ्यां' देवाभ्याम् 'उषसा' देवतया च 'सजूः' सहितो भूत्वा 'सुवीर्यं' शोभनवीर्योपेतं 'बृहत्' प्रभूतं 'श्रवः' अन्नम् 'अस्मे धेहि' अस्मासु प्रक्षिप ॥ २ ॥ [ ६ ]

१ १ २ २ १ ३ २ ३ २र २ १
विधुं दद्राणꣳ समने बहूनां

२र १ १ २ १ १ २
युवानꣳ सन्तं पलितो जगार ।

२ १ २ ३ १ २ १
देवस्य पश्य काव्यं महि-

२उ १ २ ३ १ २र
त्वाद्या ममार स ह्यः समान ॥ * १ * ॥

ऋ० बृहदुक्थः। छ० त्रिष्टुप्। दे० इन्द्रः। अथ विधुन्दद्राणमिति त्र्यृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। अनया कालात्मक इन्द्रः स्तूयते 'विधुं' विधारकं सर्वस्य युद्धादेः कर्त्तारं विपूर्वो दधातिः करोत्यर्थः तथा 'समने' अमनमनः प्राप्तनं सम्यगननोपेते संग्रामे 'बहूनां' शत्रूणां 'दद्राणं'

श्रावकम्, ईदृक्सामर्थ्योपेतं 'युवानं' सन्तं पुरुषं 'पलितः' जरा 'जगार' निगिरतीन्द्राज्ञया। एवमुक्तलक्षणं वक्ष्यमाणलक्षणञ्च देवस्य कालात्मकस्येन्द्रस्य 'महित्वा' महत्त्वेनोपेतं 'काव्यं' सामर्थ्यं 'पश्य' पश्यत हे जनाः। तथा जरसा प्राप्तः यः 'ह्यः' 'समार' म्रियते, 'सः' 'ह्यः' परेद्युः 'समान' सम्यक् चेष्टते पुनर्जन्मान्तरे प्रादुर्भवतीत्यर्थः तदेवं चत्वारि नामानि शारीराण्युक्तानि बह्वङ्क्सन्देषु ॥ १ ॥

१ २ १ १ २ ३ १ २ ३ २उ
शाक्मना शाको अरुणः सुपर्ण

२ १ ३र १ १ २र
आ यो महः शूरः सनादनीडः।

२ ३ १ २ ३ २उ २
यच्चिकेत सत्यमित्तन्न मोघं

१ २ २ ३ १ २उ २ १ २र
वसु स्पार्हमुत जेतोत दाता ॥ * २ * ॥

अथ द्वितीया। "शाक्मना" शक्तेव शाक्म, शाक्मना बलेन 'शाकः' शक्तः शकृशक्तौ स्वशक्त्यैव सर्वं कर्तुं शक्त इत्यर्थः, न त्विन्द्रस्य सहायान्तरापेक्षास्ति इन्द्रत्वादेव, 'अरुणः' अरुणवर्णः "सुपर्णः" कश्चित् शोभनपर्णः पक्षी "आ" गच्छतीत्यध्याहारः उपसर्गश्रुतेर्योग्यक्रियाध्याहारात्। 'यः' 'महः' महान् 'शूरः' विक्रान्तः 'सनात्' पुराणः 'अनीडः' नीडस्याकर्त्ता। न त्विन्द्रोऽग्निवत् क्वचिदपि यस्ते निकेतनं करोति। एवं सुपर्णरूपेणेन्द्रमाह स पक्षीन्द्रो 'यत्' 'चिकेत' कर्त्तव्यत्वेन जानाति तत् 'सत्यम् इत्' सत्यमेव 'न' तु 'मोघं' व्यर्थं भवति। स 'स्पार्हं' स्पृहणीयं 'वसु' धनं 'जेता' जयति

मरुद्भ्यः सकाशात्। 'उत' अपिच 'दाता' स्तोतृभ्यः प्रयच्छति 'न लोकाव्यय (२, ३, ६९)' इत्यादिना षष्ठीप्रतिषेधः ॥ २ ॥

१ २ ३ २ ३ १ २ ३
ऐभिर्ददे वृष्ण्या पौण्स्यानि

२ ३ १ २ ३ १ २ ३ २
येभिरौक्षद्वृत्रहत्याय वज्री।

१ २र ३ १ २ ३ १
ये कर्मणः|क्रियमाणस्य मह्न

२ ३ २ ३ १ २ २ ३
ऋतेकर्ममुदजायन्त देवाः ॥ * ३ * ॥ [७]

अथ तृतीया। इन्द्रः 'एभिः' मरुद्भिः सह 'वृष्ण्या' वृष्ण्यानि वर्षकाणि 'पौंस्यानि' बलानि 'आ ददे' आदत्ते। 'येभिः' यैः मरुद्भिः सहितः "वृत्रहत्याय" प्राण्युपकारकवृष्ट्या आवरकात्वात् वृत्रः पापम्, तस्य हत्यायै मनुष्याणामुपद्रवप्रमनायेत्यर्थः। तथाच "वज्री" वज्रवान् इन्द्रः "औक्षत्" वर्षति। 'ये' च मरुतः 'देवाः' "मह्ना" महता इन्द्रेण क्रियमाणस्य वृष्टिप्रदानलक्षणस्य कर्मणः साहाय्यार्थम् 'ऋतेकर्म' ऋतकर्म वृष्टिप्रदानकर्म प्रति "उदजायन्त" उत्कर्षेण जायन्ते। स्वयमेव तैरेभिर्ददे इति समन्वयः ॥ ३ ॥ [७]

२ ३ १ २ ३ २ ३ १ ३र ३ १ २
अस्ति सोमो अयण् सुतः पिबन्त्यस्य मरुतः।

३ १ ३ १ २ ३ १ २
उत स्वराजो अश्विना ॥ * १ * ॥

ऋ० विन्दुः पूतदक्षः वा। छ० गायत्री। दे० सोमः। अथास्तिसोम इति त्र्यचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। 'अयं' पुरोवर्त्ती सोमः 'सुतः' मरुदर्थमस्माभिरभिषुतः 'अस्ति' विद्यते। तस्माद् 'अस्य' अन्वादेशे एनं सुतं सोमं 'स्वराजः' स्वयं दीप्यमानाः स्वतेजसा नान्यदीयेनेत्यर्थः। तादृशाः 'मरुतः' "पिबन्ति"। "उत" अपिच 'अश्विना' अश्विनौ च सोमं पिबतः॥ १॥

१ २ २ १ २ ३ १ २र ३ २ ३ १ २
पिबन्ति मित्रो अर्य्यमा तना पूतस्य वरुणः।
१ २ ३ १ २
त्रिषधस्थस्य जावतः॥ * २ *॥

अथ द्वितीया। न केवलं मरुत एव सोमपातारः किन्तु एतेऽपि इत्याह, 'मित्रः' सर्वेषां स्वस्वकर्मणि प्रवर्त्तकत्वात् सखिभूतः यद्वा, यज्ञसम्बन्धिनः एतन्नामको देवः, 'अर्यमा' च, "वरुणः" दुःखादीनां शत्रूणां वा वरिता निवारकः, एतन्नामकास्त्रयो देवाः "तना" ततम् उर्ध्वास्तुवेनेति तनं दशापवित्रम् सुपां सुलुक् (१, १, ३९)', इति आकारादेशः, तनाद्युदात्तः, तना "पूतस्य" परिशोधितस्य 'त्रिषधस्थस्य' सह तिष्ठन्त्यत्रेति सधस्थं स्थानं, "सधमादस्थयोश्छन्दसि (६, ३, ९६)", इति सहशब्दस्य सधादेशः, द्रोणकलशाधवनीयपूतभृदात्मकानि त्रीणि स्थानानि तत्तयोक्तम् तादृशम्, "जावतः" सुत्या जननवन्तम् इमं सोमं पिबन्ति द्वितीयार्थे षष्ठ्यः (१, १, ८५)॥ २॥

३ १ ३ २ २ ३ १ २र ३ २ ३ १ २
उतो न्वस्य जोषमा इन्द्रः सुतस्य गोमतः।

१ १ २र
प्रातर्होतेव मत्सति ॥ * ३ * ॥ [८]

अथ तृतीया । "उतो" अपिच "इन्द्रः" "सुतस्य" अभिषुतस्य 'गोमतः' गव्यैर्मिश्रणवतः "अस्य" अन्वादेशः पूर्ववत् दशापवित्रेण पूतस्य सोमस्य 'जोषम्' पानरूपां सेवां 'प्रातः' प्रातः सवने "नु" क्षिप्रम् "आ मत्सति" मदि स्तुत्यादिषु (भ्वा० आ०) आभिमुख्येन स्तौति यद्वा सोममेव कामयते। तत्र दृष्टान्तः, 'होता इव' यथा होता प्रातःसवने देवानभिष्टौति देवान् स्तोतुं वाभिवाञ्छति तद्वत् ॥ ३ ॥ [८]

२ २ १ ३ २
बण्महाᳫं असि सूर्य्य
१ २ २ १ २
वडादित्य महाᳫं असि ।
१ १२ ३ १ २ ३ १ २
महस्ते सतो महिमा पनि-
३ १ २ ३ १ २
ष्टम मह्ना देव महाᳫं असि ॥ * १ * ॥

ऋ० जमदग्निः । छ० बृहती । दे० सूर्य्यः । अथ बण्महाँ असीति प्रगाथात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा । हे "सूर्य्य !" त्वं 'महान्' तेजसा अधिकः 'असि' "बट्" सत्यम् नैतन्मिथ्येत्यर्थः । हे "आदित्य !" अदितेः पुत्र ! त्वं 'महान्' बलेनाप्यधिकः 'असि' 'बट्' सत्यमेव। हे 'पनिष्टम !' अतिशयेन स्तोत्रैः स्तुत्य ! यद्वा, अतिशयेन व्यवहारकुशल! "महः" महतः 'सतः' भवतः 'ते' तव महत्त्वं 'महिमा' स्तोतृभिः स्तूयत इति शेषः

'पनिष्टम' स्तोत्वभिरस्माभिः स्तूयत इति वा। हे 'देव'! द्योतनादि गुणयुक्त! सूर्य! त्वं 'मह्ना' महत्त्वेन 'महान्' सर्वैः पूजनीयः 'असि' भवसि॥ १॥

१ २ १ १ २ ३ १
बट् सूर्य्य श्रवसा महाँ३
२ ३ १ २ ३ १ २
असि सत्रा देव महाँ३ असि।
१ २ ३ १ २ ३क २र ३ १
मह्ना देवानामसुर्य्यः पुरो-
२ ३ २उ ३ १ २
हितो विभु ज्योतिरदाभ्यम्॥ * २ *॥ [६]

अथ द्वितीया। हे 'सूर्य!' त्वं "श्रवसा" श्रवणेन 'महान्' सर्वाधिकः 'असि' यद्वा, "श्रवसा" अन्नेन 'महान्' दाता 'असि' स्तोतृभ्यो दातासि 'बट्' सत्यम्। हे 'देव!' द्योतमान! सूर्य्य! त्वं "देवानां" मध्ये 'मह्ना' महत्त्वेन सर्वानधिकः 'असि' 'सत्रा' सत्यमेव। 'असुर्य्यः' असुराणां हन्ता चासि। किञ्च, 'देवानां' त्वं कामयमानानां स्तोतॄणां वा 'पुरोहितः' हितोपदेष्टासि बहुहितकार्य्यसि अथवा 'पुरोहितः' पुरतो निहितोऽसि। किञ्च तव 'ज्योतिः' तेजः 'विभु' व्याप्तं सर्वतः 'अदाभ्यं' केनाप्यहिंस्यञ्च॥ २॥ [६]

इति सामवेदार्थप्रकाशे उत्तराख्यस्य विंशाध्यायस्य
द्वितीयः खण्डः॥ २॥

१२ ३ १ २ ३२ ३ १ २
उप नो हरिभिः सुतं याहि मदानां पते।
१२ ३ १ २ १ २
उप नो हरिभिः सुतम् ॥ * १ * ॥

ऋ० सुकक्षः। छ० गायत्री। दे० सोमः। अथ तृतीये खण्डे—उपनोहरिभिरिति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। हे 'मदानाम्पते!' माद्यन्त्यनेनेति मदाः सोमाः। 'मदोऽनुपसर्गे (३, ३, ६७)' इति करणे अप् प्रत्ययः। सोमानां स्वामिन्! इन्द्र! 'हरिभिः' अश्वैः युतेन हरिभिः इत्यादिषु बहूनामश्वानां श्रुतेरत्रापि शतसहस्रसङ्ख्याकैः सह 'नः' अस्माकं यज्ञे 'सुतम्' अभिषुतं सोमम् 'उप याहि' तत्पानार्थं शीघ्रमागच्छ। पुनरुपन इत्यादिरादरार्थो॥ १॥

१ १ १२३१२ ३ १ १२ ३ १२
द्विता यो वृत्रहन्तमो विद इन्द्रः शतक्रतुः।
१ १ २ १ २ ३ २
उप नो हरिभिः सुतम् ॥ * २ * *

अथ द्वितीया। 'वृत्रहन्तमः' अतिशयेन वृत्रस्य हन्ता 'शतक्रतुः' नानाविधकर्मा 'यः इन्द्रः' 'द्विता' द्विधा 'विदे' वृत्रवधादौ उग्रकर्मा, जगद्रक्षणकाले शान्तकर्मेति द्विप्रकारेण विदे सर्वैर्ज्ञायते विदज्ञाने ( अदा०प० ), कर्मणि विहितस्य तप्रत्ययस्य 'लोपस्त आत्मनेपदेषु ( ७,१,४१ )' इति लोपः। स त्वं 'हरिभिः' सह 'सुतं' सोमम् "नः" अस्माकम् 'उप' याहि॥ २॥

२ १२ ३ १ १२ ३ १ २
त्वꣳ हि वृत्रहन्नेषां पाता सोमानामसि।

१ २ २ १ २ २ २
उप नो हरिभिः सुतम् ॥ * ३ * ॥ [१०]

अथ तृतीया। हे 'वृत्रहन्!' वृत्रस्य पापस्य वा हन्तः! इन्द्र! 'हि' शब्दो हेत्वर्थे यस्मात् त्वम् 'एषाम्' अस्मदीयानां 'पाता' पानकर्त्ता 'असि' भवसि एषामिति इदमोऽन्वादेशे अशादेशोऽनुदात्तश्च (२,४,३२) अतस्त्वमश्वैः सह सोमं पातुमुपयाहि आगच्छ ॥ ३ ॥ [१०]

१ २ २ २ २ ३ १ २ २
प्र वो महे महेवृधे भरध्वं

१ २ २ १ २ २ १ २
प्रचेतसे प्र सुमतिं कृणुध्वम्।

१ २ २ १ २ २
विशः पूर्वीः प्र चर चर्षणिप्राः ॥ * १ * ॥

ऋ० वसिष्ठः। छ० विराट्। दे० इन्द्रः। अथ प्रवोमह इति त्र्यचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। हे मदीया जनाः! 'वः' यूयं 'महे वृधे' महतां धनानां वर्द्धयित्रे अतएव 'महे' महते इन्द्राय 'प्रभरध्वम्' सोमान् प्रणयत। 'प्रचेतसे' प्रकृष्टमतये इन्द्राय सुमतिं सुष्ठु मननीयं स्तोत्रं 'प्र कृणुध्वम्' प्रकुरुत। अथ प्रत्यक्षस्तुतिः हे इन्द्र! 'चर्षणिप्राः' चर्षणयो मनुष्याः कामैः प्रजानां पूरयिता त्वं 'पूर्वीः' पूरयित्रीः 'विशः' प्रजाः 'प्रचर' अभिगच्छ ॥ १ ॥

२ १ २ २ १ २ २ १
उरुव्यचसे महिने सुवृक्ति-

२२ ३ १ २ २ १ २
मिन्द्राय ब्रह्म जनयन्त विप्राः।

१ २ १२ २ १ २ २ १ २
तस्य व्रतानि न मिनन्ति धीराः ॥ * २ * ॥

अथ द्वितीया। 'उरुव्यचसे' पृथुव्याप्तये 'महिने' महते यस्मै 'इन्द्राय' 'सुवृक्तिं' शोभनां स्तुतिं 'ब्रह्म' अन्नं हविश्च 'विप्राः' प्राज्ञाः जनयन्त' जनयन्ति। 'तस्य' इन्द्रस्य 'व्रतानि' दक्षिणादीनि कर्माणि 'धीराः' प्राज्ञाः देवा अपि 'न' 'मिनन्ति' हिंसन्ति ॥ २ ॥

२ १ २ ३ १२ १२
इन्द्रं वाणीरनुत्तमन्युमेव

२ १ २२ २ १ २
सत्रा राजानं दधिरे सहध्यै।

१ २ २ २ १ १
हर्य्यश्वाय वर्हया समापीन् ॥ * ३ * ॥ [११]

अथ तृतीया। 'सत्रा राजानं' सर्वस्य जगत ईश्वरम्, 'अनुत्तमन्युं' केनाप्यनुत्तोऽबाधितो मन्युः क्रोधो यस्य सः त्वमेव, 'इन्द्रं' 'वाणीः' स्तुतयः 'सहध्यै' स्तोतृणां अबूनभिभवितुं "दधिरे" पुरो दधिरे। अतः हे स्तोतः! त्वमपि 'हर्य्यश्वाय' इन्द्राय हर्य्यश्वमिन्द्रं स्तोतुमित्यर्थः 'आपीन्' बन्धून् 'सम् वर्हय' प्रवर्द्धय ॥ ३ ॥ [११]

१ २ २ १ २२ २ १ १ २३१ १ २२
यदिन्द्र यावतस्त्वमेतावदहमीशीय।

२ १ २ १२ २
स्तोतारमिद्दधिषे रदावसो

१ २ १२ २
न पापत्वाय रंसिषम् ॥ * १ * ॥

ऋ० वसिष्ठः। छ० बृहती। दे० इन्द्रः। अथ यदिन्द्रेति प्रगाथात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे 'इन्द्र!' 'यत्' यतः 'यावतः' धनस्य ईशिषे 'एतावत्' षष्ठ्या लुक् (७,१,३८) एतावतो धनस्य "अहम्" 'ईशीय' ईश्वरो भवेयम्। हे 'रदावसो!' रदति ददाति वसूनीति रदद्वसुः ततोऽहम् अस्मदीयम् 'स्तोतारम्' 'इत् दधिषे' धनप्रदानेन धारयेमेव। किञ्च, 'पापत्वाय' क्षीणत्वाय 'न रंसिषम्' न दद्याम् ॥ १ ॥

१ २ १ १ २ ३२ १ २
शिक्षेयमिन्महयते दिवे-
२ ३ १ ३२ ३ १ २
दिवे राय आ कुहचिद्विदे।
२उ ३ १ २ ३ २ ३
न हि त्वदन्यन्मघवन्न आप्यं
२ ३ १ २ ३ १ ३ २
वस्यो अस्ति पिता च न ॥ * २ * ॥ [१२]

अथ द्वितीया। 'कुहचिद्विदे' कुत्रचित् विद्यमानः कुहचिद्वित् तस्मै यत्र क्वापि विद्यमानायेत्यर्थः। 'महयते' पूजयते जनाय 'दिवे दिवे' प्रतिदिनं 'रायः' धनानि 'शिक्षेयम् इत्' दद्यामेव 'आ' कारः पादपूरणः। एवमिन्द्रस्य वाक्यं श्रुत्वा ऋषिर्वदति, हे 'मघवन्!' इन्द्र! "त्वदन्यत्" अस्माकम् 'आप्यं' बन्धुं 'न हि अस्ति' 'वस्यः' प्रशस्यः 'पिता च न' पालयिता च त्वदन्यो नास्तीत्यर्थः ॥ २ ॥ [१२]

१ १ ३२ ३ २उ ३
श्रुधी हवं विपिपानस्याद्रे-

२ २ २ २१ २ २ २
बोधा विप्रस्यार्चतो मनीषाम्।
२ २उ २ १ २ २ २ २ २
कृष्वा दुवाᳬ्स्यन्तमा सचेमा ॥ * १ * ॥

ऋ० वसिष्ठः। छ० विराट्। दे० इन्द्रः। अथ श्रुधीहव-मिति त्र्यृचात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा। हे इन्द्र! 'पिपि-पानस्य' पिपीतवतो पिपितवतो वा ममाद्रेर्ग्राव्णः 'हवम्' आह्वानं 'श्रुधि' शृणु 'ग्रावभ्यो वाचं वदता वदद्भ्यः', इति हि निगमान्तरम्। 'विप्रस्य' प्राज्ञस्य वसिष्ठस्य "अर्चतः" स्तुवतः 'मनीषा' स्तुतिः 'बोध' बुध्यस्व च। 'इमा' इमानि क्रियमा-णानि 'दुवांसि' परिचरणानि 'अन्तमा' अन्तिकतमानि बुद्धि-स्थानि वा 'सचा' सहायभूतः सन् 'कृष्वा' कुरु च ॥१॥

२ १ २ २ १ २ २ २ २
न ते गिरो अपि मृष्ये तुरस्य
१ २ २ १ १ २क २र १ २
न सुष्टुतिमसुर्यस्य विद्वान्।
१२ १ १ २
सदा ते नाम स्वयशो विवक्मि ॥ * २ * ॥

अथ द्वितीया। हे इन्द्र! 'तुरस्य' शत्रूणां हिंसकस्य 'ते' तव 'गिरः' स्तुतीः 'असुर्यस्य' द्वितीयार्थे षष्ठी (३, १, ८५) त्वदीयं असुर्यं बलं 'विद्वान्' जानन् अहं 'न अपि मृष्ये' मृषि-र्मर्जिनकर्मा (स्वा० प०) न मार्जयामि न परित्यजामीत्यर्थः। 'सुष्टुतिं' शोभनां स्तुतिञ्च 'न' अपि मृष्ये मृषेर्मार्जनकर्मत्व-मन्यत्रापि दृश्यते। तद्यथा, 'मा नो अग्ने सख्या पित्र्याणि

प्रमर्षिष्टा', इति किन्तु हे "स्वयशः !" असाधारणयशः ! 'ते' तव 'नाम' स्तोत्रं 'सदा' एव "विवक्मि" ब्रवीमि ॥२॥

२ ३ २ ३ १ २ ३ १ ३ १ २ २
भूरि हि ते सवना मानुषेषु
१ २ ३ १ २ ३ २ २
भूरि मनीषी हवते त्वामित् ।
२उ ३ १ २ ३ २ ३ १ २
मारे अस्मन् मघवं ज्योक्कः ॥ * ३ * ॥ [१३]

अथ तृतीया । हे 'मघवन् !' 'ते' तव 'सवना' सवनानि सोमाभिषवणानि 'भूरि' भूरीणि 'मानुषेषु' अस्मासु वर्त्तन्त इति शेषः । 'मनीषी' स्तोता 'त्वामित्' त्वामेव 'भूरि हवते' नितरां स्तौति ह्वयति वा । अतः 'अस्मात्' अस्मत्तः 'आरे' दूरे 'ज्योक्' चिरकालं 'मा कः' आत्मानं मा कार्षीः क्षिप्रमात्मानमस्मदासन्नं कुर्वित्यर्थः ॥ ३ ॥ [१३]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य विंशाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

१ २ ३ १ २ ३ २उ ३ १ २
प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
३ १ २ ३ २ ३ २ ३ १ २ ३ २
अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहा ।
३ १ २ ३ १ २ ३
अस्माकं बोधि चोदिता नभन्ता-

२ १ २ २ १ २ ३ १ २
मन्यकेषां ज्याका अधि धन्वसु ॥ * १ * ॥

ऋ० सुदामः। छ० महापंक्तिः। दे० इन्द्रः। अथ चतुर्थे खण्डे—प्रोष्वस्मा इति त्र्यृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। "अस्मै" इन्द्राय षष्ठ्यर्थे चतुर्थी अस्येन्द्रस्य 'पुरः रथं' रथस्य पुरस्तात् 'पुरोऽव्ययम् (१,४,६७)' इति गतित्वाद् गतिसमासः (२,१,१८) रथस्य अग्रे वर्त्तमानं "शूर्पं" बलं "सुप्रोर्चत" हे स्तोतारः! सुष्ठु प्रपूजयत ("प्र" "उ" इति निपातसमुदायः। प्रो इति 'ओत् (१,१,१५)' इति प्रगृह्यसञ्ज्ञा इन्द्रो विशिष्यते 'समत्सु' समानं माद्यन्त्यत्रेति समदः संग्रामाः औणादिकोऽधिकरणे क्विप् (३,१,७६), "समानस्य छन्दसि (६,३,८४)' इति स भावः, समत्सु संग्रामेषु "सङ्गे" सङ्गमनीये, यत्र वले "डोऽन्यत्रापि दृश्यते (३,२,४८ वा०)' गमेर्डः। 'अभीके चित्' अभ्यर्णेऽपि निकटे प्राप्तेऽपि "लोककृत्" स्थितिकृत् पालयिता। स्थित्वा च 'वृत्रहा' वृत्राणामावरकाणां शत्रूणां हन्ता, एवंविधः स इन्द्रः 'अस्माकं' स्तोतॄणां 'चोदिता' धनानां प्रेरयिता सन् 'बोधि' अस्माभिः कृतानि परिचरणानि बुध्यतां बुधेश्छान्दसे लुङि 'दीपजनबुध (३,१,६१)' इत्यादिना कर्त्तरि चिणादेशः, 'बहुलञ्छन्दस्यमाङ्योगेऽपि' इत्यडभावः। अपिच 'मन्यकेषां' कुत्सिता अन्ये अन्यके 'अव्ययसर्वनाम्नाम् (५,३,७१)' इति कुत्सनार्थे प्राक् टेरकच्, तन्मध्यपतितस्तद्ग्रहणेन गृह्यन्त इति सर्वनामसञ्ज्ञायामामः सुडागमः, मन्यकेषाम् कुत्सितानामन्येषां शत्रूणां "धन्वसु" धनुषु अधिरोपिता 'ज्याकाः' कुत्सिताः ज्याः 'नमन्तां' नश्यन्तु। ज्याशब्दात् कुत्सायां "प्रागिवात् कः (५,३,७०),

प्रमर्पिष्टा', इति किन्तु हे "स्वयशः !" असाधारणयशः ! 'ते' तव 'नाम' स्तोत्रं 'सदा' एव "विवक्मि" ब्रवीमि ॥२॥

२ ३ २ ३ १२ ३ १ २ ३
भूरि हि ते सवना मानुषेषु
१ २ ३ १ ३ २ ३
भूरि मनीषी हवते त्वामित् ।
३क २ ३ १ २ ३ १ २
मारे अस्मन् मघवं ज्योकः ॥ * ३ * ॥ [१२]

अथ तृतीया। हे 'मघवन् !' 'ते' तव 'सवना' सवनानि सोमाभिषवणानि 'भूरि' भूरीणि 'मानुषेषु' अस्मासु वर्त्तन्त इति शेषः। 'मनीषी' स्तोता 'त्वामित्' त्वामेव 'भूरि हवते' नितरां स्तौति ह्वयति वा। अतः 'अस्मात्' अस्मत्तः 'आरे' दूरे 'ज्योक्' चिरकालं 'मा कः' आत्मानं मा कार्षीः क्षिप्रमात्मानमस्मदासन्नं कुर्वित्यर्थः ॥ ३ ॥ [१२]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य विंशाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

१ २ ३ १ ३२ ३ १ २
प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
३ १ २ ३ २ ३ २ ३ १ २ ३२
अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहा ।
३ १ २ ३ १ ३२
अस्माकं बोधि चोदिता नभन्ता-

२ १ २ २ १उ २ १ २
**मन्यकेषां ज्याका अधि धन्वसु ॥ * १ * ॥**

ऋ० सुदासः। छ० महापंक्तिः। दे० इन्द्रः। अथ चतुर्थे खण्डे—प्रोष्वस्मा इति ऋचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। "अस्मै" इन्द्राय षष्ठ्यर्थे चतुर्थी अस्येन्द्रस्य 'पुरः रथं' रथस्य पुरस्तात् 'पुरोऽव्ययम् (१,४,६७)' इति गतित्वाद् गतिसमासः (२,१,१८) रथस्य अग्रे वर्त्तमानं "शूषं" बलं "सुमोर्चत" हे स्तोतारः। सुष्ठु प्रपूजयत ("प्र" "उ" इति निपातसमुदायः। प्रो इति 'ओत् (१,१,१५)' इति प्रगृह्यसञ्ज्ञा इन्द्रो विशिष्यते 'समत्सु' समानं माद्यन्त्यत्रेति समदः संग्रामाः औणादिकोऽधिकरणे क्विप् (३,१,७६), "समानस्य छन्दसि (६,३,८४)' इति स भावः, समत्सु संग्रामेषु "सङ्गे" सङ्गमनीये, शत्रुबले "डोऽन्यत्रापि दृश्यते ( ३,२,४८ वा० )' गमेर्डः। 'अभीके चित्' अभ्यर्णेऽपि निकटं प्राप्तेऽपि "लोककृत्" स्थितिकृत् पालयिता। स्थित्वा च 'वृत्रहा' वृत्राणामावरकाणां शत्रूणां हन्ता, एवंविधः स इन्द्रः 'अस्माकं' स्तोतॄणां 'चोदिता' धनानां प्रेरयिता सन् 'बोधि' अस्माभिः कृतानि परिचरणानि बुध्यतां बुधेश्छान्दसे लुङि 'दीपजनबुध (३,१,६१)' इत्यादिना कर्त्तरि च्लेश्चिणादेशः, 'बहुलञ्छन्दस्यमाङ्योगेऽपीत्यडभावः। अपिच 'मन्यकेषां' कुत्सिता अन्ये अन्यके 'अव्ययसर्वनाम्नाम् ( ५,३,७१ )' इति कुत्सनार्थे प्राक् टेरकच्, तन्मध्यपतितस्तद्ग्रहणेन गृह्यन्त इति सर्वनामसञ्ज्ञायामामः सुडागमः, अन्यकेषाम् कुत्सितानामन्येषां शत्रूणां "धन्वसु" अधिरोपिता 'ज्याकाः' कुत्सिताज्याः 'नभन्तां' नश्यन्तु। ज्याशब्दात् कुत्सायां "प्रागिवात् कः ( ५,३,७० ),

नभ हिंसायां क्रैयादिकः (धा०), व्यत्ययेन शप् (३, १, ८५) ॥ १ ॥

२उ १ १२ ३१२ ३२३१२
त्वᳪ सिन्धूᳪरवासृजोऽधराचो अहन्नहिम्।
३ १ २ ३ १ २ ३ १ २
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यम्।
२ ३ १२ ३ १२
तं त्वा परि ष्वजामहे नभन्ता-
३१२ ३ २उ ३ १ २
मन्यकेषां ज्याका अधि धन्वसु ॥ * २ * ॥

अथ द्वितीया। हे इन्द्र! त्वं 'सिन्धून्' स्यन्दनशीलान् जलपूरान् 'अधराचः' अधरमधोमुखमञ्चतो गन्तॄन् "अवासृजः" मेघान्निरगमयः। यतः त्वम् "अहिम्" अन्तरिक्षे गच्छन्तं मेघम् 'अहन्' हतवानसि यद्वा, अहिमन्धकारं सर्वस्य जगतः आवरकं वृत्रमसुरम् 'अहन्' हतवानसि। अतो हे इन्द्र! त्वम् "अशत्रुः" शत्रुरहितः 'जज्ञिषे' जायसे न सन्ति शत्रवोऽस्येति बहुव्रीहौ "नञ्सुभ्याम् (६, २,१७२)" इत्युत्तरपदान्तोदात्तत्वम्। तादृशं त्वां "परिष्वजामहे" ऋत्विग्भिः स्तुतिभिरालिङ्गनं कुर्मः वशीकुर्मः ष्वञ्ज परिष्वङ्गे (भ्वा० आ०), "दंशसञ्जस्वञ्जां शपि (६,४,२५)" इत्यनुनासिकलोपः। सिद्धमन्यत् ॥ २ ॥

१उ ३ १२ ३ १ २ ३ १२
वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः।
१ २ ३ १ २ ३२ ३२ ३ १ २
अस्तासि शत्रवे वधं यो न इन्द्र जिघाᳪसति।

१ २ ३ १ २ ३ २उ ३ १ २
या ते रातिर्ददिर्वसु नभन्ता-
३ १ २ ३ २उ ३ १ २
मन्यकेषां ज्याका अधि धन्वसु ॥ * ३ * ॥ [१४]

अथ तृतीया। 'विश्वाः' सर्वाः अरातयः अदातारः 'अर्यः' अभिगन्तारः 'नः' अस्माकं प्रभुभूताः प्रजाः 'सु' सुष्ठु 'विनशन्त' विनश्यन्तु, हे इन्द्र! त्वदर्थं 'धियः' कर्माणि स्तुतयो वा प्रवर्त्तताम्। हे 'इन्द्र!' 'यः' 'नः' अस्मान् 'जिघांसति' हन्तुमिच्छति हन्तेः सन् 'अज्झनगमां सनि (६,४,१६)' इति वा दीर्घः 'अभ्यासाच्च (७,३,५५) इति कुत्वम्, तस्मै "शत्रवे" "वधं" हननसाधनमायुधम् 'अस्ता असि' क्षेप्ता भवसि असु क्षेपणे (दि० प०), ताच्छिलिकस्तृन् (३,४,१६), 'ते' तव "या" "रातिः" धनप्रदानहेतुर्हस्तः रा दाने (अदा० प०), करणे क्तिन्, (३,३,९४), 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः (३,३,९६)' इतिक्तिन उदात्तत्वम् सा रातिः "वसु" धनं "ददिः" अस्मभ्यं दाता भवतु 'आदृगमहन (३,२,१७१)' इति ददतेः कि प्रत्ययः, "न लोकाव्यय: (२,३,६९)" इति वसुशब्दात् षष्ठ्यभावः। सिद्धमन्यत् ॥ ३ ॥ [१४]

१ २उ ३ १ २ ३ १ ३ २र ३ १ २
रेवाꣳ इद्रेवत स्तोता स्यात्त्वावतो मघोनः।
१ २ ३ १ २
प्रेदु हरिवः सुतस्य ॥ * १ * ॥

ऋ० मेधातिथिः प्रियमेधाः वा। छ० गायत्री। दे० इन्द्रः। अथ रेवां इद्रेवत इति तृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। हे "हरिवः" हरिवन्! "मतुवसोः

(८,३,१) नकारस्यौत्वं छान्दसत्वादिन्द्र! "रेवतः" रयिमतः बहुधनोपेतस्य तव "स्तोता" 'रेवान् स्यात्' रयिमान् भवेत् "इत्" शब्दोऽवधारणे। रयिमान् भवेदेव न तु दारिद्र्यं प्राप्नोति। उक्तमेवार्थं कैमुतिकन्यायेन दृढयति 'त्वावतः' त्वत्सदृशस्य "युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम् (५,१,६१ वा०)" इति मतुप् 'मघोनः' मघवतः धनाढ्यस्य 'सुतस्य' षु प्रसवैश्वर्ययोः (भ्वा० प०) स्तोतव्यस्य ऐश्वर्योपेतस्य अन्यस्यापि स्तोता 'मेदुः' "स्यात्", इत्यनुषज्यते यस्मात् प्रभवेदेव न तु निहीयते किमु वक्तव्यं तव स्तोता धनवान् भवेदेवेति॥ १०॥

१ २ ३ २ ३१ २ ३ १ २ ३१ २र
उक्थं च न शस्यमानं नागो रयिरा चिकेत।
१ २ ३१ २ ३१२
न गायत्रं गीयमानम्॥ * २ *॥

अथ द्वितीया। गायते गौः 'अगोः' अस्तोतुः 'रयिः', "शस्यमानं" स्तोत्रं पठ्यमानम् 'उक्थं च' निमस्त्रमपि "आ चिकेत" अभिजानाति कित ज्ञाने (भ्वा० प०) छान्दसो लिट्। (३, २, १०५)। नेति सम्प्रत्यर्थे 'न' सम्प्रति प्रस्तोत्रादिभिः 'गीयमानं' 'गायत्रं' गातव्यं साम यद्वा, गायत्राख्यमपि आचिकेतेत्येव। अतः कारणाद् वयमपि तमिन्द्रं स्तुम इत्यर्थः॥ २॥

२ ३ ३१२ १ २र३ १२
मा न इन्द्र पीयत्नवे मा शर्धते परा दाः।
१ २ ३ १ २
शिक्षा शचीवः शचीभिः॥ * ३ *॥ [१५]

अथ तृतीया। हे इन्द्र! त्वं 'पीयत्नवे' पीयतिर्वधकर्मा (निरु० ४, २५) वधशीलाय हिंसाकारिणे शत्रवे 'नः' अस्मान् 'मा परादाः' मा परित्याक्षीः, "मा" च 'शर्द्धते' अभिभवित्रे अस्मान् मा परादाः शृधु प्रहसने (भ्वा० आ०), इति धातुः। अपितु 'शचीवः' शक्तिवन्निन्द्र! 'शचीभिः' आत्मीयैः कर्मभिः 'शिक्ष' अस्माननुशाधि यद्वा, शिक्षतिर्दानकर्मा (३, २०, ८), अभीष्टं धनमस्मभ्यं देहि, यद्वा, शत्रून् जेतुं शिक्ष, शक्तान् कर्त्तुमिच्छ, शकेः सन्नन्तस्य "सनि मीमा (७, ४, ५४), इति इसादेशः, अभ्यासलोपे च कृते लोटि रूपमेतत् ॥ ३ ॥ [१५]

१२  १ १ २ ३ १ २  १ २  १ २
एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम्।
१ २  ३ १ २  १ २ ३
दिवो अमुष्य शासतो
१ २  ३ १ २
दिवं यय दिवावसो ॥ * १ * ॥

ऋ० तिरश्चीः। छ० अनुष्टुप्। दे० इन्द्रः। अथैन्द्रयाहि-हरिभिरिति द्व्यात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। हे 'इन्द्र!' 'कण्वस्य' 'सुष्टुतिं' शोभनां स्तुतिं 'हरिभिः' अश्वैः 'उप याहि' आगच्छ। 'दिवः' द्युलोकं द्वितीयार्थे षष्ठी (२,१,८५) 'अमुष्य' अमुष्मिन्निन्द्रे 'शासतः' शासति सति विभक्तिव्यत्ययः (३, १, ८५) तत्र वयं सुखमास्महे। हे 'दिवावसो'। दीप्तहविष्केन्द्र! 'दिवं' स्वर्गं 'यय' यूयं गच्छत बहुवचनं पूजार्थम्। यद्वा, हे 'दिवावसो!' दिवो द्युनामकमसुं लोकं 'शासतः' शासनं कुर्वन्तः यूयं 'दिवं' स्वर्गं 'यय' गच्छत ॥ १ ॥

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अचा वि नेमिरेषामुरां न धूनुते वृकः ।
३ २ ३ २ ३ १ ३ २ ३
दिवो अमुष्य शासतो
१ २ ३ १ २
दिवं यय दिवावसो ॥ * २ * ॥

अथ द्वितीया । 'यत्र' यस्मिन् यज्ञे 'एषाम्' अभिषव-ग्राव्णां 'नेमिः' सोमलतां 'वि धूनुते' विशेषेण कम्पयति । तत्र दृष्टान्तः, 'उरां' मेषीं "वृकः न" वृक इव यथा वृकः तद्वत् सिद्धमन्यत् ॥ २ ॥

१ २ ३ २ १२ ३१ ३ १ ३२
आ त्वा ग्रावा वदन्निह सोमी घोषेण वक्षतु ।
३ २ ३ २ ३ १ २ ३
दिवो अमुष्य शासतो
१२ ३ १ २
दिवं यय दिवावसो ॥ * ३ * ॥ [१६]

अथ तृतीया । हे इन्द्र ! 'त्वा' त्वाम् 'इह' यज्ञे 'ग्रावा' सोमाभिषवपाषाणः 'सोमी' सोमवान् 'वदन्' शब्दं कुर्वन् 'घोषेण' ध्वनिना सह 'आ वक्षतु' त्वां प्रापयतु ॥३॥ [१६]

१ २ ३ २ ३ १ २ ३ १ २
पवस्व सोम मन्दयन्निन्द्राय मधुमत्तमः ॥ * १ * ॥

ऋ० जमदग्निः । छ० नित्यद्विपदा गायत्री । दे० वितानः पुपाः वा । अथ पवस्वसोममन्दयचिति त्र्यचात्मकं द्विपदं चतुर्थं सूक्तम्, तत्र प्रथमा । हे 'सोम !' 'मधुमत्तमः' अतिशयेन

मधुररसवान् त्वं मन्दयन् मादयिता भवन् 'इन्द्राय' 'क्रिया-ग्रहणं कर्त्तव्यम् (१, ४, ३२ वा०)', इतीन्द्रस्य सम्प्रदानसञ्ज्ञा इन्द्रं मोदमानः सन् "पवस्व" इन्द्रार्थमागच्छ ॥ १ ॥

२ ३१ २ ३ १ २ ३ २ ३ १२ ३
ते सुतासो विपश्चितः शुक्रा वायुमसृक्षत ॥*२*॥

अथ द्वितीया। "विपश्चितः" मेधाविनः 'सुतासः' अभिषुताः 'शुक्राः' शुक्लवर्णाः अभिषवेण निर्मलत्वात् दीप्यमाना इत्यर्थः। 'ते' सोमाः 'वायुं' शब्दम् 'असृक्षत' असृजन् अकार्षुः अथवा वायुमेव सोमपानार्थमसृजन् सोमेषु सुतेषु खलु वायुस्तत्पानार्थमागच्छति खलु ॥ २ ॥

१ २ ३ १ २ ३ २ ३ १ २
असृग्रं देववीतये वाजयन्तो रथा इव ॥*३*॥ [१७]

अथ तृतीया। एते अभिषुताः सोमाः 'वाजयन्तः' यजमानानामन्नमिच्छन्तः सन्तः 'देववीतये' देवानां पानाय 'असृग्रन्' विसृज्यन्ते ऋत्विग्भिः प्रदीयन्ते। तत्र दृष्टान्तः, 'रथा इव वाजयन्तः' यथाऽन्नानि बलानि वा स्वामिन इच्छन्तो रथा 'देववीतये' देवानां गमनाय यथा विसृज्यन्ते तद्वत् ॥ ३ ॥ [१७]

इति सामवेदार्थप्रकाशे छन्दआर्च्चिकस्य विंशाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

२ १ ३र ३ १ २ ३ १ २ ३ १
अग्निं होतारं मन्ये दास्वन्तं वसोः सूनुं

३र ३ १ २ ३ ३ १ २ ३ १ २
सहसो जातवेदसं विप्रं न जातवेदसम्।

२ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अत्रा वि नेमिरेषामुरां न धूनुते वृकः ।

२ ३ २ ३ १ १ ३ २
दिवो अमुष्य शासतो

१ २ ३ १ २
दिवं यय दिवावसो ॥ * २ * ॥

अथ द्वितीया। 'अत्र' अस्मिन् यज्ञे 'एषाम्' अभिषव-ग्राव्णां 'नेमिः' सोमलतां 'वि धूनुते' विशेषेण कम्पयति। तत्र दृष्टान्तः, 'उरां' मेषीं "वृकः न" वृक इव यथा वृकः तद्वत् सिद्धमन्यत् ॥ २ ॥

२ ३ २ ३ १ २ ३ ३ ३ १ ३ २
आ त्वा ग्रावा वदन्निह सोमी घोषेण यच्छतु ।

२ ३ ३ २ ३ १ २ ३
दिवो अमुष्य शासतो

१ २ ३ १ २
दिवं यय दिवावसो ॥ * ३ * ॥ [१६]

अथ तृतीया। हे इन्द्र! 'त्वा' त्वाम् 'इह' यज्ञे 'ग्रावा' सोमाभिषवपाषाणः 'सोमी' सोमवान् 'वदन्' शब्दं कुर्वन् 'घोषेण' ध्वनिना सह 'आ यच्छतु' त्वां प्रापयतु ॥३॥ [१६]

१ २ ३ ३ ३ १ २ ३ १ २
पवस्व सोम मन्दयन्निन्द्राय मधुमत्तमः ॥ * १ * ॥

ऋ० जमदग्निः। छ० नित्यद्विपदा गायत्री। दे० वितानः पुषाः वा। अथ पवस्वसोममन्दयन्निति दृचात्मकं द्वैपदं चतुर्थं सूक्तम्, तत्र प्रथमा। हे 'सोम!' 'मधुमत्तमः' अतिशयेन

मधुररसवान् त्वं मन्दयन् मादयिता भवन् 'इन्द्राय' 'क्रियाग्रहणं कर्त्तव्यम् (१, ४, ३२ वा०)', इतीन्द्रस्य सम्प्रदानसञ्ज्ञा इन्द्रं मोदमानः सन् "पवस्व" इन्द्रार्थमागच्छ ॥ १ ॥

२ ३१ २   ३ १ २ ३ २ ३ १२ ३

ते सुतासो विपश्चितः शुक्रा वायुमसृक्षत ॥*२*॥

अथ द्वितीया। "विपश्चितः" मेधाविनः 'सुतासः' अभिषुताः 'शुक्राः' शुक्लवर्णाः अभिषवेण निर्मलत्वात् दीप्यमाना इत्यर्थः। 'ते' सोमाः 'वायुं' शब्दम् 'असृक्षत' असृजन् अकार्षुः अथवा वायुमेव सोमपानार्थमसृजन् सोमेषु सुतेषु सत्सु वायुस्तत्पानार्थमागच्छति खलु ॥ २ ॥

१ २   ३ १ २   २ ३ ३ १२

असृग्रं देववीतये वाजयन्तो रथा इव ॥*३*॥[१७]

अथ तृतीया। एते अभिषुताः सोमाः 'वाजयन्तः' यजमानानामन्नमिच्छन्तः सन्तः 'देववीतये' देवानां पानाय 'असृग्रन्' विसृज्यन्ते ऋत्विग्भिः प्रदीयन्ते। तत्र दृष्टान्तः, 'रथा इव वाजयन्तः' ग्रत्नोर्धनानि बलानि वा स्वामिन इच्छन्तो रथा 'देववीतये' देवानां गमनाय यथा विसृज्यन्ते तद्वत् ॥ ३ ॥ [१७]

इति सामवेदार्थप्रकाशे उत्तरायणस्य विंशाध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

---

२ १   २र   ३ १ २ ३ १ २   ३ १

अग्निं होतारं मन्ये दास्वन्तं वसोः सूनुं

२र   ३ १ २ ३ २ ३ २ ३ १२

सहसो जातवेदसं विप्रं न जातवेदसम्।

२ ३ १ २ ३२ ३ २ ३१ २ ३२
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
२ ३ १ २ ३ २ ३ १ २ ३ १
घृतस्य विभ्राष्टिमनु शुक्र-
२ ३ १ २ ३ १ २
शोचिष आजुह्वानस्य सर्पिषः ॥ * १ * ॥

ऋ० परुच्छेपः । छ० अत्यष्टिः । दे० अग्निः । अथ पञ्चमे खण्डे, अग्निं होतारमिति त्र्यचात्मकं प्रथम सूक्तम्, तत्र प्रथमा । 'अग्नि' सर्वासां देवसेनानामग्रस्थं यज्ञेष्वग्रं नीयमानं वा "होतारं" अस्मद्यागं प्रति देवानामाह्वातारं यद्वा, होमनिष्पादकं होतारं आह्वातारं 'जुहोतेर्होतेत्यौर्णवाभः (निरु० दै०१,१५)', इति यास्कः । 'अग्निमग्रहोतारमवृणीत', इति श्रुतेः। 'अग्निमग्न आवह', इति च, अग्नेराह्वातृत्वं प्रसिद्धम्। 'अग्निं होतारं मन्ये', इत्येवं प्रतिविशेषण मन्य इति सम्बन्धः । यद्वा, यागनिष्पत्तेरेवोपलक्षितत्वात् एतदेव विधेयविशेषणम्, इतराणि वक्ष्यमाणविशेषणानि स्तुतिपराणि, 'दास्वन्तम्' अतिशयेन दानवन्तम्, "वसोः" वसुं निवासहेतुं, "सहसः सूनुं" बलस्य पुत्रमग्निम् मन्थनकाले बलेन मथ्यमान उत्पद्यते इति पुत्रत्वमुपचर्यते "जातवेदसं" जातानां वेदितारं जातप्रज्ञं जातधनं वा जातवेदःशब्दो यास्केन बहुधा निरुक्तः। अग्नेर्जातवेदस्त्वे दृष्टान्तः, 'विप्रं न' जातविद्यं मेधाविनं ब्राह्मणमिव, तं यथा बहु मन्यते तथा त्वामपि स्तौमीत्यर्थः । उक्तगुणविशिष्टो 'यो देवः' 'स्वध्वरः' शोभनयज्ञवान् यज्ञं सम्यग् निर्वहन् 'ऊर्ध्वया' उन्नतया उत्कृष्टया 'देवाच्या' देवान् पूजयन्त्या देवान् प्रत्युन्नया वा "कृपा" कृपया सामर्थ्य-

लक्षणया 'देवान् प्रत्यञ्चया कृपया', इति (निरु० नै० ६, ८) यास्कः। तेभ्यो हविर्वहनबुद्ध्या युक्तः सन् 'शुक्रशोचिषः' दीप्त-तेजस्कस्य 'आजुह्वानस्य' आ समन्तात् हूयमानस्य 'सर्पिषः' सरणशीलस्य 'घृतस्य' विलेपनेन दीप्तस्याज्यस्य 'विभ्राष्टिं' विशेषेण भ्राजम् 'अनु' स्वयमपि तत् आज्यं 'वष्टि' काम-यते स्वीकरोतीति शेषः॥ १॥

१ २ ३ १ २ ३ २ ३ १ २
यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमङ्गि-

३ १ २ ३ १ २ ३ १ २
रसां विप्र मन्मभिर्विप्रेभिः शुक्र मन्मभिः।

१ २ ३ १ ३२ ३ २
परिज्मानमिव द्याᳯ होतारं चर्षणीनाम्।

३ १ २ ३ १२३ २ ३ २उ
शोचिष्केशं वृषणं यमिमा

३ १ २ ३ १ २ ३ १,२
विशः प्रावन्तु जूतये विशः॥ * २ *॥

अथ द्वितीया। हे 'विप्र!' मेधाविन्! 'शुक्र' दीप्तज्वा-लाग्ने! 'यजिष्ठम्' अतिशयेन यष्टृतमं 'त्वा' त्वां 'यजमानाः' वयं 'हुवेम' आह्वयामः यतो वयं यजमाना अतस्त्वां यजिष्ठ-माह्वयाम इत्यभिप्रायः। कीदृशं त्वाम्? 'अङ्गिरसां' अङ्गिरो गोत्रोत्पन्नानां मध्ये "ज्येष्ठम्" अतिशयेन प्रशस्यं यद्वा, अङ्गि-रसामङ्गाराणां मध्ये ज्येष्ठं ज्वालायुक्तत्वात्। 'अङ्गिरा अङ्गाराः (निरु० न० ३, १७)' इति यास्कः। 'येऽङ्गारा आसं-स्तेऽङ्गिरसोऽभवन्' इति श्रुतम्। केन साधनेन इत्युच्यते 'मन्मभिः' मननसाधनैः "विप्रेभिः" विप्रैः विशेषेण प्रीणयि-

त्वभिः "मन्मभिः" मन्त्रैः यद्वा, विप्रेभिः मेधाविभिस्त्विग्भिर्मन्मभिर्मन्त्रैश्च सहिता वयमिति सम्बन्धः। यथाह्वानानन्तरं 'परिज्मानं' परितो गच्छन्तं "द्याम् इव" सूर्य्यमिव 'होतारं' देवानामाह्वातारम्। केषामर्थे ? 'चर्षणीनां' मनुष्याणां यजमानानाम् अर्थे यद्वा 'चर्षणीनां' पूर्वं मनुष्याणामेव सत्वं पश्चाद्यागादिसाधनेन देवत्वमापन्नानां देवानामाह्वातारं तथा 'शोचिष्केशं' केशवदत्यन्तज्वालोपेतं, "वृषणं" कामानां वर्षितारम्, एवं रूपं त्वां 'विशः' त्वामेव निविशमानाः इमा 'विशः' प्रजाः 'जूतये' स्वर्गाद्यभिमतफलप्राप्तये 'प्र अवन्तु' प्रकर्षेण प्रीणयन्तु। तादृशं त्वां स्तुवेमेति सम्बन्धः ॥ २ ॥

२उ   २ २   १ १ २   १ १ २ २ १ २ १
स हि पुरु चिदोजसा विरुक्मता दीद्यानो
१ २   २ १   २ १ १   २ २   १ २
भवति द्रुहन्तरः परशुर्न द्रुहन्तरः।
१ २   १ २ २   १ २ १   २ २ १ १ २ | २ १ २
वीडु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरम्।
२ १ २   २ १ २
निष्षहमाणो यमते नायते
२ २२ १ २
धन्वासहा नायते ॥ * ३ * ॥ [१८]

इति नवमप्रपाठकस्य प्रथमार्द्धम्।

---

अथ तृतीया। 'स हि' स एव पूर्वं स्तुत एवाग्निः 'विरुक्मता' विशेषेण रोचनवता 'ओजसा' ज्वालारूपेण बलेन 'पुरुचित्' अत्यधिकमेव 'दीद्यानः' दीप्यमानः 'द्रुहन्तरः'

द्रोग्धृणां तरिता-निस्तारयिता भवति अस्मासु द्रोहं कुर्वतां शत्रूणां हिंसको भवतीत्यर्थः। तत्र दृष्टान्तः 'द्रुहन्तरः' द्रोग्धृणां छेदनाय प्रयुक्तः "परशुः न" परशुरिव छिनत्ति तथायमपि किञ्च, यस्याग्नेः "सम्रुतौ" सङ्गतौ संयोगे 'वीडु चित्' दृढमपि पाषाणादिकं 'श्रुवत्' गच्छेत् शीर्य्येत। तथा 'यत् स्थिरं' यच्च पर्वतादि स्थिरमविचलितं तदपि श्रुवत्। तत्र दृष्टान्तः 'वनेव' उदकमिव, उदकं यथाग्निसंयोगे शुष्यति तथेत्यर्थः अत्यन्तदृढं स्थिरमपि छिनत्ति अस्मद्द्रोग्धारं शत्रुं छिनत्तीति किमु वक्तव्यमित्यभिप्रायः। किञ्चायमग्निः 'निःषहमाणः' शत्रून् निःशेषेणाभिभवन् 'यमते' उपरमते शत्रुषु मध्ये क्रीड़ति तानेव नाशयति। तथा कुर्वन् 'न यमते' न गच्छति शत्रोः सकाशात् पलायते। तत्र दृष्टान्तः 'धन्वसहा न यमते' धनुषा शत्रूनभिभवतीति धन्वसहाः धातुभ्यः सहतेरसुन्, छान्दसोऽन्त्यलोपः स यथा शत्रोरभिमुखं विध्यति न पलायते तद्वदित्यर्थः यद्वा, दृढधनुर्वन्धनसमो धन्वसहाः, अस्मिन् पक्षे पचाद्यच् (३, १, १३४), 'सुपां सुलुक् (७, २, ३८),' इत्याकारः दृढधन्वा सन् न श्रयते न चलति ॥ ३ ॥ [१८]

---

सप्तमप्रपाठकस्य द्वितीयार्द्धम्।

१ २ ३१ ३ २ ३१ १ २
अग्ने तव श्रवो वयो महि

३ १ २
भ्राजन्ते अर्चयो विभावसो।

१२ २ १२ ३ १ २
वृहद्भानो शवसा वाज-
३ २ १२ २ १
मुक्थ्या३ं दधासि दाशुषे कवे ॥ * १ * ॥

ऋ० पत्रिः। छ० विस्तारपंक्तिः। दे० अग्निः। अथ अग्नेतवश्रव इति पञ्चात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा। हे "अग्ने!" 'तव' 'वयः' अन्नं 'श्रवः' श्रवणीयं प्रशस्यं हविरात्मकस्य तस्य मन्त्रसंस्कृतत्वेन प्रशस्तत्वात् अग्नेषु तवैवान्नेष्ठमित्यर्थः। हे 'विभावसो!' विशिष्टा दीप्तिर्विभा सैव वसुः धनं यस्य तादृशाग्ने। 'अर्चयः' दीप्तयः 'महि' महत् बहुलं 'भ्राजन्ते' दीप्यन्ते भ्राजृ दीप्तौ, अनुदात्तो भौवादिकः। हे 'वृहद्भानो!' प्रौढ़दीप्ते! 'कवे' क्रान्तदर्शिन्नग्ने! एवम्भूतानुभावस्त्वं 'शवसा' बलेनोपेतम् 'उक्थ्यम्' प्रशस्यं यद्वा, उक्थो यज्ञस्तद्योग्यं 'वाजम्' अन्नं 'दाशुषे' हवींषि दत्तवते यजमानाय 'दधासि' प्रयच्छसि ॥ १ ॥

३ १२ ३१२३
पावकवर्चाः शुक्रवर्चा
१२ ३ १२ ३ १२
अनूनवर्चा उदियर्षि भानुना।
२२ ३१२ ३२३१२
पुत्रो मातरा विचरन्नुपा-
३२ ३ १२ १२
वसि पृणक्षि रोदसी उभे ॥ * २ * ॥

अथ द्वितीया। छ० विस्तारपंक्तिः। 'पावकवर्चाः' शोधक-

दीप्तिः 'शुक्रवर्चाः' निर्मलतेजस्कः, 'अनूनवर्चाः' सम्पूर्णतेजस्कः, हे अग्ने! ईदृशस्त्वं 'भानुना' तेजसा "उदियर्षि" उद्गच्छसि-ऋ स्तृ गतौ, जौहोत्यादिकः (प०) 'अर्त्तिपिपर्त्त्योश्च (७,४,७७)' इत्यभ्यासस्येत्वम् स त्वं 'पुत्रः' सन् 'मातरा' मातृभूतयोररण्योः 'विचरन्' यागावसाने विशेषेण प्राप्नुवन् 'उपावसि' उपगतान् यजमानान् रक्षसि। तथा 'उभे' 'रोदसी' द्यावापृथिव्यौ 'पृणक्षि' संयोजयसि हविषा द्युलोकं वृष्ट्या इमं लोकञ्च पूरयसीत्यर्थः पृची सम्पर्के रौधादिकः (प०) ॥ २ ॥

१ २ २ १
ऊर्जो नपाज्जातवेदः सुशस्ति-

१ १ २ १ १ २ १२
भिर्मन्दस्व धीतिभिर्हितः ।

२उ २ १ २ ३ १ २
त्वे इषः सं दधुर्भूरिवर्पस-

१ १ २ ३ १२
श्चित्रोतयो वामजाताः ॥ * ३ * ॥

छ० सतोबृहती। अथ तृतीया। हे 'ऊर्जोनपात्' ऊर्जः अन्नस्य पार्थिवस्य शरण्यादेः पुत्र। हे 'जातवेदः' जातानां वेदितरग्ने! 'सुप्रशस्तिभिः' सुशंसनैः अस्माभि. क्रियमाणैः 'मदस्व' मोदस्व। तथा "धीतिभिः" अस्माभिः क्रियमाणैरग्निष्टोमादिभिः कर्मभिः "हितः" सुहितः तृप्तो भव। अपि च "भूरिवर्पसः" वर्प इति रूपनाम (निघ०३,७,२) बहुविधरूपाः, 'चित्रोतयः' चित्रा ऊतिस्तृप्तिर्याभिः इडुभिस्तथोक्ताः, 'वामजाताः' वामं वननीयं जातं जन्म यासां ता ईदृश्यः 'इषः' अन्नानि हविर्लक्षणानि 'त्वे' त्वय्येव 'सन्दधुः'

सन्दधति सम्यक् जुह्वति यजमानाः यद्वा, भूरिवर्पस इत्यादिकं कर्त्तृविशेषणम्, तदानीं चित्रीतय इत्यस्य विचित्ररचा इति योज्यम् ॥ ३ ॥

२ १ २ ३ १
इरज्यन्नग्ने प्रथयस्व जन्तु-
२ ३ १ ३र
भिरस्मे रायो अमर्त्य ।
१ २३ १२ १ २ ३ १ २
स दर्शतस्य वपुषो वि राजसि
३ १ २ ३ १ ३र
पृणक्षि दर्शतं क्रतुम् ॥ * ४ * ॥

अथ चतुर्थी। क० सतोबृहती। हे 'अग्ने !' 'जन्तुभिः' जातैः प्रजुभिः सह 'इरज्यन्' ईर्ष्यन् स्पर्द्धां कुर्वन् ईर् ईर्ष्यायां कण्ड्वादिः। यद्वा, इरज्यतिरैश्वर्य्यकर्मा (निघ०२,२१,१), जन्तुभिर्जायमानैरात्मीयैस्तेजोभिरिरज्यन् ईश्वरो भवन्। हे 'अमर्त्य!' मरणरहिताग्ने ! 'अस्मे' अस्माकं 'सुपां सुलुक् (७,१,३९)', इति षष्ठ्याः शे-आदेशः "रायः" धनानि 'प्रथयस्व' विस्तारय रै-शब्दाच्छसः स्थाने व्यत्ययेन जस्, शसो वा व्यत्ययेन "उड़िदम् (६, १. १७१)", इत्यादिना विभक्त्युदात्तत्वं न क्रियते स त्वं "दर्शतस्य' दर्शनीयस्य च 'वपुषः' तेजोमयस्य शरीरस्य 'वि राजसि' वा तृतीयार्थे षष्ठी (२,१,८५) ईदृशेन शरीरेण विशेषेण दीप्यसे यद्वा, राजतिरैश्वर्य्यकर्मा (निघ० २, २१, ४), वपुरिति च रूपनाम (निघ० ३, ७, ४), दर्शनीयेन रूपेण विराजसि विशेषेण ईशिषे। अतएव 'दर्शतं'

दर्शनीयं “क्रतुं” कर्म “पृणक्षि” अस्माभिः सह सम्पर्चयसि फलेन वा संयोजयसि ॥ ४ ॥

३ १ २ ३ २ ३ १ २
दुष्कर्त्तारमध्वरस्य प्रचे-
३ १ २ ३ १ २ ३ २
तसं चयन्तꣳ राधसो महः ।
३ २ ३ १ २ ३ १ २ ३ २उ
रातिं वामस्य सुभगां मही-
२ १२ ३ २ ३ २
मिषं दधासि सानसिꣳ रयिम् ॥ * ५ * ॥

अथ पञ्चमी । ऋ० सतोबृहती । “दुष्कर्त्तारं” [illegible]कर्त्तारं छान्दसो वर्णलोपः (३,१,८५) ‘अध्वरस्य’ यज्ञस्य निष्कर्त्तारं संस्कर्त्तारं, ‘प्रचेतसं’ प्रकृष्टज्ञानं, ‘महः’ महतः ‘राधसः’ धनस्य चयन्तम् ईश्वरम् चयतिरैश्वर्य्यकर्मा (निघ०२,२१,३) ‘वामस्य’ वननीयस्य धनस्य ‘रातिं’ दातारं रातेः कर्त्तरि क्तिन् (३,३,६८) ईदृशं त्वां स्तुम इति शेषः । स त्वं ‘सुभगां’ सौभाग्योपेतां ‘महीं’ महतीम् ‘ईषम्’ अन्नं “सानसिं” सम्भजनरूपम् ‘रयिं’ धनं च ‘दधासि’ स्तोतृभ्यो ददासि ॥ ५ ॥

३ १ ३ ३ २ ३ १ २
ऋतावानं महिषं विश्वदर्शत-
३ २ ३ १ ३ ३ १ २र
मग्निꣳ सुम्नाय दधिरे पुरो जनाः ।
१ २ ३ १ २
श्रुत्कर्णꣳ सप्रथस्तमं त्वा

३ २उ २ १ २ ३ २
गिरा दैव्यं मानुषा युगा ॥ * ६ * ॥ [१]

छ० उपरिष्टाज्ज्योतिः। अथ षष्ठी। 'ऋतावानं' सत्यवानं सत्यवन्तं यज्ञवन्तं 'छन्दसि वनिपौ (५, २, १२२ वा०)', इति मत्वर्थीयो वनिप्। 'महिषं' महान्तं पूज्यं वा 'विश्वदर्शनं' विश्वैः सर्वैर्दर्शनीयं यद्वा, विश्वं दर्शनं यस्य "बहुव्रीहौ विश्वं सञ्ज्ञायाम् (६, २, ११६)" इति पूर्वपदान्तोदात्तत्वम् ईदृशम् 'अग्नि' 'सुम्नाय' सुखाय सुखार्थं 'जनाः' ऋत्विग्यजमानरूपाः 'पुरो दधिरे' पुरो दधते सर्वकर्मभ्यः पुरस्तात् पूर्वस्यां दिशि आहवनीयरूपेण धारयन्ति। परोऽर्द्धर्चः प्रत्यक्षकृतः। अपिच हे अग्ने! 'श्रुत्कर्णं' श्रुत् स्तुतीः सम्यक् शृण्वन् कर्णः श्रोत्रेन्द्रियं यस्य तादृशं, "सप्रथस्तमम्" अतिशयेन प्रख्यातं यद्वा, सर्वतो विस्तार्यमाणं "दैव्यं" देवानां हविर्वोढृत्वेन सम्बन्धिनम् ईदृशं 'त्वा' त्वाम् 'मानुषा' मानुषाणि मनोरपत्यानि 'युगा' 'युगानि' युगलानि पत्नीयजमानरूपाणि 'गिरा' स्तुत्या स्तुवन्तीति शेषः ॥ ६ ॥ [१८] (१)

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य विंशाध्यायस्य
पञ्चमः खण्डः ॥५॥

---

१ २३१ २ २ १ २ ३१
प्र सो अग्ने तवोतिभिः सुवी-
२ ३ १ २
राभिस्तरति वाजकर्मभिः।
१ २ २ ३ १ २र
यस्य त्वꣳ सख्यमाविथ ॥ * १ * ॥

ऋ० सोभरिः । छ० ककुप् । दे० अग्निः । अथ षष्ठे खण्डे प्रसो अग्ने इति प्रगाथात्मकं प्रथमं सूक्तम्, तत्र प्रथमा । हे "अग्ने !" 'तव' 'ऊतिभिः' 'सः' यजमानः 'प्र तरति' प्रवर्द्धते ऊतयो विशिष्यन्ते, 'सुवीराभिः' शोभनाः वीराः पुत्रादयो यासु तास्तथोक्ताभिः, 'वाजकर्मभिः' वाजानामन्नानां बलानां वा कर्म करणं यासु तादृशीभिः, हे अग्ने ! 'त्वं' 'यस्य' यजमानस्य 'सख्यं' सखित्व' मित्रत्वम् 'आविथ' प्राप्नोषि स तरतीत्यन्वयः ॥ १ ॥

१ २ ३ १   ३२   ३ २
तव द्रप्सो नीलवान्वाश

३  ३२ ३ २      ३ १  २
ऋत्विय इन्धानः सिष्णवा ददे ।

२  ३१ २ ३१ २
त्वं महीनामुषसामसि

३ २  ३ १   ३२
प्रियः क्षपो वस्तुषु राजसि ॥ * २ * ॥ [२]

अथ द्वितीया । हे "सिष्णो !" सिषिः सेचनार्थः सोमेनासिच्यमानाग्ने ! 'द्रप्सः' द्रवणशीलः, 'नीलवान्' शकटगौडेऽवस्थानात् तद्वान्, "वाश्रः" कान्तः शब्दायमानो वा, 'ऋत्वियः' ऋतौ वसन्तादिकालविशेषे भवः, 'इन्धानः' सन्दीपयन्, एवम्भूतस्तव सोमः "आ ददे" तुभ्यं होमायाध्वर्युणा आदीयते । अपिच त्वं 'महीनां' महतीनाम् 'उषसां' 'प्रियः' मित्रभूतः "असि" उषसि हि अग्नयो होमाय प्रज्वाल्यन्ते । तथा "क्षपः" क्षपाया रात्रेः सम्बन्धिषु 'वस्तुषु' आच्छादकेषु

तमस्सु सत्सु त्वं 'राजसि प्रकाशसे यदा, रात्रिसम्बन्धीनि वस्तूनि पदार्थजातानि त्वं प्रकाशयसि ॥ २ ॥ [२०] (२)

१ २र २ १२ ३ २३
तमोषधीर्दधिरे गर्भमृत्वियं

१ २र १ १ २ ३ १२
तमापो अग्निं जनयन्त मातरः।

१ २र३ २ १ २ १ २ ३ १
तमित्समानं वनिनश्च वीरुधो-

१ २ १ १२ ३ १ २
ऽन्तर्वतीश्च सुवते च विश्वहा ॥ * १ * ॥ [३]

ऋ० वरुणः। छ० त्रिष्टुप्। दे० अग्निः। अथ तमोषधीर्दधिरे इति एकर्चं द्वितीयं सूक्तम्, तत्र प्रथमा। "ऋत्वियम्" ऋतौ प्राप्तं 'गर्भं' गर्भभूतं "तं" प्रकृतम् "अग्निम्" 'ओषधीः' ओषध्यः 'दधिरे' धारयन्ति। "तम्" एव अग्निं "मातरः" धारकत्वेन मातृस्थानीयाः 'आपः' च 'जनयन्त' जनयन्ति। किञ्च, "वनिनः" वनस्पतयः "च" 'समानं' गर्भभावेन प्रवेशात् स्वतुल्यम् 'तमित्' तमेवाग्निं जनयन्ति, किञ्च तमेवाग्निम् 'अन्तर्वतीः' गर्भवत्यः 'वीरुधः' ओषधयश्च 'विश्वहा' सर्वदा 'सुवते' जनयन्ति ॥ १ ॥ [२१] (३)

२ १ २र ३ २ ३ १ ३र
अग्निरिन्द्राय पवते दिवि शुक्रो वि राजति।

१ १ ३ १ २
सहिषीव वि जायते ॥ * २ * ॥ [४]

ऋ० अग्निः प्रजापतिः वा। छ० गायत्री। दे०

द्रष्टः। अग्निरिन्द्रायेति एकर्चं तृतीयं सूक्तम्, सा ऋगेषा। 'अग्निः' यज्ञेषु प्रथमं प्रणेता अग्निः 'इन्द्राय' इन्द्रार्थं 'पवते' अस्माभिर्दत्तेन चर्वन्नेन पुरोडाशेन देवानामधिकः चरति। अग्निः 'शुक्रः' दीप्तः सन् 'दिवि' स्वर्गे 'विराजति' विशेषेण प्रकाशयति यद्वा, "दिवि" अन्तरिक्षादिलोकेषु स्थितेषु देवेषु मध्येषु 'शुक्रः' दीप्तः सन् "विराजति"। तत्र दृष्टान्तः, 'महिषीव' यथा महिषो तृणादिना विविधानि पयोघृतादीनि जनयति तथा 'वि जायते' देवानामुपभोगार्थं विविधान्नानि जनयति॥ १॥ [२२] (४)

२　३　२　२　१　२र
यो जागार तमृचः कामयन्ते
१　२　२ २　१ २　१　२
यो जागार तमु सामानि यन्ति।
२　१　२　२　१ २ १　　२र　　२
यो जागार तमयꣳ सोम आह
२ १ १ २　　२ १ २
तवाहमस्मि सख्ये न्योकाः॥ * १ *॥ [५]

ऋ० अवत्सारः। छ० त्रिष्टुप्। दे० अग्निः। अथ योजागारेति एकर्चं चतुर्थं सूक्तम्, सा ऋगेषा। "यः" देवः 'जागार' सर्वदा विनिद्रो जागरूको श्रेष्ठे वर्त्तते 'तम्' 'ऋचः' सर्वशस्त्रात्मिकाः 'कामयन्ते'। 'यः' 'जागार' 'त्वम् उ' तमेव "सामानि" स्तोत्ररूपाणि 'यन्ति' प्राप्नुवन्ति। "यः" 'जागार' 'तम्' 'अयम्' अभिषुतः 'सोमः' "आह" वक्ति स्वीकुर्विति। 'तव' 'सख्ये' समानख्याने हितकरणे हे अग्ने! तादृशस्य 'तव' 'सख्ये' 'न्योकाः' नियतस्थानः 'अहम्' 'अस्मि' भवामि॥१॥ [२३](५)

२ १ २ २ १ २र २
अग्निर्जागार तमृचः कामयन्ते

१ २ २ २ २ १ २
ऽग्निर्जागार तमु सामानि यन्ति ।

१ १ २ २ २ ३ १ ३र
अग्निर्जागार तमयꣳ सोम

२ २३ १२ ३ १ २
आह तवाहमस्मि सख्ये न्योकाः ॥ * १ * ॥ [६]

ऋ० अवत्सारः। छ० त्रिष्टुप्। दे० अग्निः। अथाग्निर्जागारेत्येकर्चं पञ्चमं सूक्तम्, सा ऋगेषा। सा निगदव्याख्याता ८८८पृ० (२३) ॥ १ ॥ [२४] (६)

१२ १ १ २ ३२ ३ १२ १ २ १
नमः सखिभ्यः पूर्वसद्भ्यो नमः साकन्निषेभ्यः ।

२ १ २र ३१२
युञ्जे वाचꣳ शतपदीम् ॥ * १ * ॥

ऋ० सुगः। छ० गायत्री। दे० अग्निः। अथ नमःसखिभ्य इति तृचात्मकं षष्ठं सूक्तम्, तत्र प्रथमा। 'पूर्वसद्भ्यः' ये यज्ञमारम्भात् पूर्वं सीदन्ति तिष्ठन्तीति पूर्वसदस्तेभ्यः 'सखिभ्यः' समानख्यानेभ्यः सखिवन्मित्रभूतेभ्यो देवेभ्यो 'नमः' वयं नमस्कारं कुर्मः। किञ्च, 'साकन्निषेभ्यः' यस्मिन् यज्ञे सह निषण्णेभ्यः 'नमः'। किञ्च 'शतपदीम्' अस्मभ्यं फलप्रदानाय अपरिमितमार्गां 'वाचं' स्तुतिरूपाम् ऋचं 'युञ्जे' योजयामि ॥ १ ॥

२ १ २र ३ १ २ ३ १ २ २ १ २
युञ्जे वाचꣳ शतपदीं गाये सहस्रवर्तनि ।

३ १ २र ३ १ २
गायत्रं त्रैष्टुभं जगत् ॥ * २ * ॥

अथ द्वितीया। 'शतपदीम्' अपरिमितसङ्ख्यकमार्गां 'वाचं' स्तोत्रं "युञ्जे" तेभ्यः प्रश्नवेभ्यो वक्ष्यमाणेभ्योऽहं योजये। 'गायत्र' गायत्राख्यं 'त्रैष्टुभ' त्रैष्टुभाख्यञ्च 'जगत्' जागतञ्च सामरूपां तामृचं साम वा 'सहस्रवर्त्तनि' अपरिमितमार्गं यथा भवति तथा "गाये" अहं गानं करोमि ॥ २ ॥

३ १ २र ३ २१ १ २ ३ २ ३ १ २
गायत्रं त्रैष्टुभं जगद्विश्वा रूपाणि सम्भृता।
२१ २र १ २
देवा ओकाꣳसि चक्रिरे ॥ * ३ * ॥ [७]

अथ तृतीया। 'गायत्र', 'त्रैष्टुभं', 'जागतम्', 'ऋक्समूहं' 'विश्वा' विश्वानि 'रूपाणि' उद्गाता 'सम्भृता' सम्भृतानि नाना-रूपाणि ज्ञातानि 'देवाः' अग्न्यादयश्च 'ओकांसि' आश्रितानि स्थानानि 'चक्रिरे' कुर्वन्ति ॥ ३ ॥ [२५] (७)

१ २उ १ १ २ १ २उ ३ २ ३ २ ३ १ २
अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः।
१ ३ २ ३ २ ३ १ २
सूर्यो ज्योतिर्ज्योतिः सूर्यः ॥ * १ * ॥

ऋ० अवत्सारः। छ० त्रिष्टुप्। दे० अग्निः। अथाग्नि-ज्योतिरिति तृचात्मकं सप्तमं सूक्तम्, तत्र प्रथमा। एषा स्पष्टा ॥ १ ॥

१ २ ३ १ २र ३ १ २ ३ १ २
पुनरूर्जा नि वर्त्तस्व पुनरग्न इषायुषा।

१२ २ १ २
पुनर्नः पाह्यंहसः ॥ * २ * ॥

अथ द्वितीया। हे 'अग्ने !' 'ऊर्जा' बलेन 'इषा' अन्नेन 'आयुषा' जीवनेन च 'पुनः' अस्मान् 'निवर्त्तस्व' अस्मान् प्रत्यागच्छ। किञ्च त्वं 'नः' अस्मान् 'अंहसः' पापात् 'पाहि' पालय। पुनः शब्दस्यावृत्तिरादरार्था ॥ २ ॥

१२ ३१ २२२ २ १ १ २ ३ १ २
सह रय्या नि वर्त्तस्वाग्ने पिन्वस्व धारया।
२ १ २ २ ३ १ २
विश्वप्स्न्या विश्वतस्परि ॥ * ३ * ॥ [८]

अथ तृतीया। हे 'अग्ने !' त्वं 'रय्या' रमणीयेन धनेन 'सह' 'निवर्त्तस्व' तत् अस्मान् प्रापयेत्यर्थः। किञ्च, "विश्वतः" सर्वतः "परि" उपरि परीति समस्यर्थानुवादकः "विश्वप्स्न्या" प्सा भक्षणे (अदा० प०), विश्वस्य उपभोज्या "धारया" "पिन्वस्व" अस्मान् सिञ्च ॥ ३ ॥ [२६] (८)

इति सामवेदार्थप्रकाशे उत्तरार्चिकस्य विंशाध्यायस्य
षष्ठः खण्डः ॥ ६ ॥

---

१ २ ३ २उ २ १ २२ ३ १ १ २ २ २
यदिन्द्राहं यथा त्वमीशीय वस्व एक इत्।
१ २ २ १ २
स्तोता मे गोसखा स्यात् ॥ * १ * ॥

ऋ० गोसूक्तिः अश्वसूक्तिः वा। छ० गायत्री। दे० विश्वेदेवाः। अथ सप्तमे खण्डे—यदिन्द्राहं यथात्वमिति तृचात्मकं प्रथमं सूक्तम्, तत्र प्रथमा। हे "इन्द्र!" "यथा" "त्वम्" "एकः इत्" एक एव केवलं "वस्वः" वसुनः धनस्य "ईशिषे" ईश्वरो भवसि, एवमहमपि 'यद्' यदि 'ईशीय' ऐश्वर्ययुक्तः स्यामिति तदानीं "मे" मम "स्तोता" "गोसखा स्यात्" गोभिः सहितो भवेत्। ईश्वरस्य तव स्तोता कुतो हेतोर्गोसहितो न भवेत् अपितु भवेदेवेत्यभिप्रायः ॥ १ ॥

१ २ १ २ १ २ १ १ २ १ १ २
शिक्षेयमस्मै दित्सेयꣳ शचीपते मनीषिणे।
१ २ ३ २र २ २
यदहं गोपतिः स्याम् ॥ * २ * ॥

अथ द्वितीया। हे 'शचीपते!' शक्तिमन्निन्द्र! 'अस्मै' 'मनीषिणे' मनस ईशित्रे स्तोत्रे 'दित्सेय' दातुमिच्छेयम्, तदनन्तरं 'शिक्षेयं' प्रार्थितं धनं दद्याञ्च 'यद्' यदि 'अहं' 'गोपतिः' गवामधिपतिः 'स्याम्' भवेयम् त्वत्प्रसादादिति शेषः ॥ २ ॥

२ १ २ १ २ १ १ २ ३१र २
धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते।
१ २र १ २ २
गामश्वं पिप्युषी दुहे ॥ * ३ * ॥ [६].

अथ तृतीया। हे इन्द्र! 'ते' तव 'सूनृता' स्तुतिरूपा वाक् 'धेनुः' दोग्ध्री गौर्भूत्वा 'सुन्वते' सोमाभिषवं कुर्वते 'यजमानाय' 'गाम्' 'अश्वं' च उपलक्षणमेतत् गवाश्वादिकं सर्वमभिलषितं 'दुहे' दुग्धे। किं कुर्वती? 'पिप्युषी' तमेव यजमानं प्रवर्द्धयित्री ॥ ३ ॥ [२०] (८)

२ ३ १ . १२ ३ १ २ १ २ २ १ २
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
३ १ २२ ३ १ २
महे रणाय चक्षसे ॥ * १ * ॥

ऋ० त्रिशिराः सिन्धुद्वीपः वा । छ० गायत्री । दे० आपः । आपोहिष्ठेति त्र्यृचात्मकं द्वितीयं सूक्तम्, तत्र प्रथमा । 'हि' यस्मात् कारणात् 'आपः' या यूयं 'मयोभुवः' मयसः सुखस्य भावयित्र्यः 'स्थ' भवथ, 'ताः' तादृश्यो यूयं 'नः' अस्मान् 'ऊर्जे' अन्नाय 'दधातन' धत्त अन्नप्राप्तियोग्यान् अस्मान् कुरुत अन्नमस्मभ्यं दत्तेत्यर्थः 'महे' महते 'रणाय' रमणीयाय 'चक्षसे' दर्शनाय सम्यक् ज्ञानाय च धत्त अस्मान् सम्यक् ज्ञानं प्रति योग्यान् कुरुतेत्यर्थः ॥ १ ॥

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
३ १ २ ३ १ २
उशतीरिव मातरः ॥ * २ * ॥

अथ द्वितीया । हे आपः ! "वः" युष्माकं स्वभूतः 'यः' 'रसः' 'शिवतमः' सुखतमः 'इह' अस्मिन् लोके 'तस्य' तं रसं 'नः' अस्मान् 'भाजयत' सेवयत उपयोजयतेत्यर्थः । तत्र दृष्टान्तः, 'उशतीरिव' उशत्य इव पुत्रसमृद्धिं कामयमानाः 'मातरः' स्तन्यं रसं यथा भाजयन्ति प्रापयन्ति तद्वत् ॥ २ ॥

२ ३ १ २ ३ २ ३ १ २ ३ १ २
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
१ २ ३ १ २
आपो जनयथा च नः ॥ * ३ * ॥ [१०]

अथ तृतीया। हे 'आपः!' यूयं 'यस्य' पापस्य 'क्षयाय' विनाशाय अस्मान् 'जिन्वथ' प्रीणयथ, 'तस्मै' तादृशाय पापक्षयाय 'अरं' क्षिप्रं "वः" युष्मान् 'गमाम' गमयाम वयं शिरसि प्रक्षिपामेत्यर्थः यद्वा, यस्यान्नस्य क्षयाय निवासार्थं यूयमोषधीर्जिन्वथ तर्पयथ, तस्मै तदन्नमुद्दिश्य वयमरमलं पर्य्याप्तं यथा भवति तथा वो युष्मान् गमाम गच्छाम। किञ्च, हे आपः! "नः" अस्मान् 'जनयथ' च पुत्रपौत्रादिजनने प्रयोजयतत्यर्थः॥ ३॥ [२८] (१०)

२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २

वात आ वातु भेषजꣳ शम्भु मयोभु नो हृदे।

२ ३ १ २

प्र न आयूꣳषि तारिषत्॥ * १ * ॥

ऋ० उल्वः। छ० गायत्री। दे० वायुः। अथ वात आवात्विति तृचात्मकं तृतीयं सूक्तम्, तत्र प्रथमा। 'वातः' वायुः 'नः' अस्माकं "हृदे" हृदयाय "भेषजम्" औषधम् उदकं वा "आ वातु" आगमयतु। कीदृग्भूतम्? 'शम्भु' रोगशमनस्य भावयितृ, 'मयोभु' मयसः सुखस्य च भावयितृ। अपिच "नः" अस्माकम् 'आयूंषि' अन्नानि वा 'प्र तारिषत्' प्रवर्द्धयतु॥१॥

३१ २ ३ १ २ ३ २उ ३ २ . ३ १ २

उत वात पितासि न उत भ्रातोत नः सखा

१ २ ३ १२

स नो जीवातवे कृधि॥ * २ * ॥

अथ द्वितीया। 'उत' अपिच हे 'वात!' त्वं 'नः' अस्माकं "पिता असि" उत्पादकोऽसि पालयिता वा। 'उत' अपिच

'भ्राता' असि। "उत" अपिच 'नः' अस्माकं "सखा" समानख्यानश्च असि। 'सः' त्वं 'नः' अस्मान् 'जीवातवे' जीवनहेतवे यागाय 'कृधि' कुरु करोतेश्छान्दसो विकरणस्य लुक् (२, ४, ७३), 'श्रुशृणुपृकृवृभ्यश्छन्दसि (६, ४, १०२), इति हेर्धिरादेशः ॥ २ ॥

१ २ १ २   १ २   १ २ १ २ २ १ २
यददो वात ते गृहे३ऽमृतं निहितं गुहा ।
१ २   २ १ २
तस्य नो धेहि जीवसे ॥ * ३ * ॥ [११]

अथ तृतीया। हे "वात"! वायो! "ते" तव "गृहे" स्थाने "यदद:" यदिदम् 'अमृतम्' अविनाशि 'गुहा' गुहायां गह्वरे "निहितं" स्थापितं वर्त्तते। हे "विभावसो"! विशिष्टप्रकाशधनवन्! वायो! 'तस्य' तदनं कर्मणि षष्ठी (२, १, ८५) "नः" अस्माकं "धेहि" देहि प्रयच्छेत्यर्थः ॥ ३ ॥ [२८] (११)

१ २ १ २ २ १ -२   १ १ २
अभि वाजी विश्वरूपो जनित्रं
१ २ २ २ २ १ २   २ ०
हिरण्ययं बिभ्रदत्कं सुपर्णः ।
१ २   २ १ २ ३ १   २र २
सूर्य्यस्य भानुमृतुथा वसानः
१ २ ३ १   २र २ १   २
परि स्वयं मेधमृज्रो जजान ॥ * १ * ॥

ऋ० सुपर्णः। छ० त्रिष्टुप्। दे० सूर्यः। अथ अभिवाजीति द्व्यात्मकं चतुर्थं सूक्तम्, तत्र प्रथमा। 'सुपर्णः'

सुपतनः शोभनपतनो गरुत्मान् इव, 'वाजी' वेगवान् बलवानन्नवान् वा, 'विश्वरूपः' नानाविधप्रकाशः, स हि चित्रभानुः 'ऋज्वः' ऋजी भर्जने (भ्वा० आ०), भ्रस्जपाके (तु० उभ०), ऋजति भृज्जति पचतीति ऋज्वः अग्निः सः स्वकीय "जनित्रं" जननस्थानम् अरणिविलम् "अत्कम्" स्वतेजसा व्याप्तम् अतएव 'हिरण्ययं' हिरण्मयमिव स्थितम् 'अभि' अभितः साकल्येन 'विभ्रत्' पुष्णन् 'सूर्यस्य भानुम्' सवितुः प्रकाशम् 'ऋतुथा' कालेकाले रात्री "वसानः" वस्त्रवदाच्छादयन् 'अग्निंवादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे' इति श्रुतेः। 'मेधं परि' यज्ञं लक्षीकृत्य स्वयं 'जजान' उदपद्यत ॥ १ ॥

१ १ २र १ २ १ २ १
अप्सु रेतः शिश्रिये विश्वरूपं
१ २ १ २उ १ १ २ २ १ २
तेजः पृथिव्यामधि यत्सम्बभूव।
१ १ २ ३ १ २ ३ २ ३ १ २ २
अन्तरिक्षे स्वं महिमानं मिमानः
१ २ २ २ २ १ २ ३ १ २
कनिक्रन्ति वृष्णो अश्वस्य रेतः ॥ * २ * ॥

अथ द्वितीया। 'रेतः' सारभूतं 'विश्वरूपं' नानारूपं 'यत्' अन्नात्मकं 'तेजः' 'अप्सु' 'शिश्रिये' आश्रयते 'स निलीयते सोऽपः प्राविशत्' इति श्रुतेः। यच्च 'पृथिव्यामधि' भूमौ 'सम्बभूव' तिष्ठति 'अग्निः पृथिवीस्थानः (निरु० दै० १, १४)' इति हि निरुक्तम्। सः 'अन्तरिक्षे' आकाशे 'स्वं महिमानं' किरणजालं 'मिमानः' व्यापारयन् 'वृष्णः अश्वस्य

रेतः' सोमाहुतिं प्रति 'सोमो वैष्णो अश्वस्य रेतः', इति श्रुतेः। 'कनिक्रन्ति' याचमान इव पुनःपुनः क्रन्दते शब्दं करोति, यद्वा आह्वयन्निव भृशं शब्दायते ॥ २ ॥

१ २ २ २-३ १ २ ३ १ २८
अयᳬ सहस्रा परि युक्ता वसानः
१ २ २ २ २ १ २
सूर्य्यस्य भानु' यज्ञो दधार ।
१ १ २ ३ १ २ ३ १ २
सहस्रदाः शतदा भूरिदावा
३ २ ३ १ २८ २ १ २
धर्त्ता दिवो भुवनस्य विश्पतिः ॥ * ३ * ॥ [१२]

अथ तृतीया। "दिवः" स्वर्गस्य अथ 'भुवनस्य' भूतजातस्य लोकस्य 'धर्त्ता' धारयिता, 'विश्पतिः' विशां प्रजानां पालयिता, "सहस्रदाः शतदाः भूरिदा वा" यो यावत् प्रार्थयते सहस्रं शतं भूरि अपरिमितं वा तस्मै तस्मै तावद्दाता 'यज्ञः' यजति यः 'अयम्' अग्निः 'युक्ता' युक्तानि स्वात्मना सम्बद्धानि "सहस्रा" सहस्राणि स्वकीयकिरणजालानि 'परिवसानः' परितः आच्छादयन् "सूर्य्यस्य भानु'" रात्रौ सूर्य्यस्यापि प्रकाशं "दधार" स्वयमेव धारयति ॥ ३ ॥ [३०] (१२)

१ २ ३ २उ ३ १ २८
नाके सुपर्णमुप यत्पतन्तᳬ
३ १ २८ ३ १ २
हृदा वेनन्तो अभ्यचक्षत त्वा ।
१ २ ३ १ २ ३ २
हिरण्यपक्षं वरुणस्य दूतं

अन्तरिक्षे 'अस्थात्' तिष्ठति। किंकुर्वन्? 'अस्य' आत्मनः स्वभूतानि 'चित्रा' चित्राणि चायनीयानि आश्चर्यभूतानि वा 'आयुधानि' 'बिभ्रत्' धारयन् बिभर्त्तेः शतरि 'भृञामित् (७,४, ७६)', इत्यभ्यासस्येत्वम्, 'नाभ्यस्ताच्छतुः (७,१,७८)', इति नुम्प्रतिषेधः, । "अभ्यस्तानामादिः (६,१,१८९)", इत्यादि रुदात्तः तथा 'सुरभि' शोभनम् 'अत्कम्' आत्मीयं व्याप्तं रूपं 'वसानः' सर्वत्राच्छादयन्। किमर्थम्? 'दृशे' दर्शनार्थम् 'दृशे विख्ये च (३,४,११)'; इति केप्रत्ययान्तो निपात्यते। 'कम्', इति पूरकम्। तत्र दृष्टान्तः, 'स्वर्णः' शोभनारण आदित्यः स यथा आत्मीयं रूपं दर्शनाय सर्वत्राच्छादयति तद्वत्। तदनन्तरं 'नाम' नामानि नमनशीलान्युदकानि 'प्रियाणि' सर्वेषामनुकूलानि 'जनत' जनयति वृष्टिमुत्पादयतीत्यर्थः ॥ २ ॥

२१ २ ३ १ २ ३ १ ३२ ३
द्रप्सः समुद्रमभि यज्जिगाति
२ ३ १ २ ३ १ २ ३ १ २
पश्यन् गृध्रस्य चक्षसा विधर्मन्।
३ २ ३ १ २ ३ १ २ ३ २
भानुः शुक्रेण शोचिषा चकान-
३ १ २ ३ १ २ ३ १ २
स्तृतीये चक्रे रजसि प्रियाणि ॥ * ३ * ॥ [१३]

इति नवमप्रपाठकस्य द्वितीयार्द्धम्।

---

अथ तृतीया। 'विधर्मन्' विधर्मणि विधारकेऽन्तरिक्षे स्थितः 'द्रप्सः' द्रवणशीलः यद्वा, द्रप्सा उदकबिन्दवः तद्वान्, 'भर्ग

षादित्वादच् (५, २, १२७) 'स्तभस्य' रसानभिकाङ्क्षतः सूर्यस्य 'वचसा' तेजसा 'पश्यन्' प्रकाशमानो येनः 'यद्' यदा 'समुद्र' समुन्दनशील मेघम् 'अभि जिगाति' अभिगच्छति तदानीं 'भानुः' सूर्यः शुक्रेन शुक्रेण 'शोचिषा' तेजसा 'तृतीये' 'रजसि' लोके 'चकानः' दीप्यमानः "प्रियाणि" सर्वेषामभीष्टानि उदकानि 'चक्रे' करोति ॥ ३ ॥ [२१] (१३)

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य विंशाध्यायस्य

सप्तम. खण्डः ॥ ७ ॥

इति नवमस्य द्वितीयोऽर्द्धमपाठकः।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक श्रीवीरबुक्कभूपालसाम्राज्य धुरन्धरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे विंशोऽध्याय

समाप्त. ॥ २० ॥

---

## अथैकविंशोऽध्याय आरभ्यते।

नवमप्रपाठकस्य तृतीयार्द्धम्।

२ १ २र १ २उ २ १
आशुः शिशानो वृषभो न भीमो
२ ३ १ २र २ २
घनाघनः क्षोभणश्चर्षणीनाम्।
३ १ २ ३ १ २ ३ २
संक्रन्दनोऽनिमिष एकवीरः
३ १ २र २ १ २र ५ ५
शतꣳ सेना अजयत्साकमिन्द्रः॥ * १ * ॥

ऋ० प्रजापतिः। छ० त्रिष्टुप्। दे० इन्द्रः। तत्र, आशुः शिशान इत्यारभ्य नवसूक्तात्मक एक एव खण्डः। तत्र प्रथमे सूक्ते प्रथमा। ऐन्द्रोऽप्रतिरथ ऋषिः, त्रिष्टुप् छन्दः, इन्द्रो, देवता साग्निचित्ये क्रतौ अग्नौ प्रणीयमानेऽयमध्यायो ब्रह्मणा जाप्यम्। अयमिन्द्रः 'आशुः' शीघ्रकारी व्यापको वा 'शिशानः' निशितः शत्रूणां भयजनक इत्यर्थः। क इव? "वृषभो न भीमः" बिभेत्यस्मादिति, भीमः तादृशो वृषभ इव स यथा तीक्ष्णाभ्यां शृङ्गाभ्यां भीमो भवति तद्वत् अथवा शिशानस्तीक्ष्णमतिः व्यत्ययेनात्मनेपदम् 'घना-घनः' घातकः शत्रूणां हन्ता पचाद्यचि हन्तेर्घत्वञ्चेति द्विर्वचनम् अभ्यासस्याडागमः घत्वञ्च धात्वभ्यासयोः 'चर्षणीनां' चर्षणयो मनुष्याः मनुष्याणां द्वेष्याणां 'क्षोभणः' क्षोभयिता, 'संक्रन्दनः' सम्यक् क्रन्दयिता प्राणिनाम् आकर्षणेन प्रहारेण वा, 'अनिमिषः' चक्षुर्निमेषरहितः सर्वदा स्वयञ्जागमनयुद्धादि-कार्य्येष्वनलस इत्यर्थः, 'एक वीरः' वीरयत्यमित्रान् इति वीरः, एकश्चासौ वीरश्च, अथवा, एकएव विक्रान्तः असहाय्येन कार्य्य-क्षम इत्यर्थः। ईदृशोऽयमिन्द्रः 'शतं सेनाः' 'साकं' सह एको-द्योगेनैव "अजयत्" जयति ॥ १ ॥

१ २ ३    १ २ ३ २ ३ २
संक्रन्दनेनानिमिषेण जिष्णुना

३ २ ३    ३ १ २ ३१ २
युत्कारेण दुश्च्यवनेन धृष्णुना।

१ २र    ३ १ २ ३ १ २
तदिन्द्रेण जयत तत्सहध्वं युधो

३ १ २    ३ १ २
नर इषुहस्तेन वृष्णा ॥ * २ * ॥

अथ प्रथमे सूक्ते द्वितीया। अप्रतिरथः, त्रिष्टुप्, इन्द्रः। अस्तु नामेन्द्र उक्तविधः, तथाप्यस्माकं किमिति चेत् तत्राह 'संक्रन्दनेन' 'अनिमिषेण' चोतालचक्षेण, 'जिष्णुना' जयशीलेन, 'युत्कारेण' योधनं युत् युद्धकारिणा कर्मण्यण् (२. ३, १), "दुश्चवनेन" अन्यैरविचाल्येन च्युङ् प्लङ् गतौ (भ्वा० आ०), "छन्दसि गत्यर्थेभ्यः (३, ३, १२८)" इति युच्, "धृष्णुना" धर्षकेण। ईदृशेन 'इन्द्रेण' 'तत्' युद्धं "जयत" 'तत्' शत्रुबलं "सहध्वम्" अभिभवत। हे 'युधः'! योद्धारः! हे 'नरः'! नेतारः! सामान्यवचनं विभाषितं विशेषवचने बहुवचनम् (८, १, ७४)' इति पूर्वस्याविद्यमानवत्त्वनिषेधादुत्तरं निहन्यते। पुनः कीदृशेनेन्द्रेण? 'इषुहस्तेन' 'वृष्णा' वर्षकर्त्रा च ॥ २ ॥

१ २ ३ १ २ ३ १ २ ३ १

स इषुहस्तैः स निषङ्गिभिर्वशी

३१२ ३२ ३ १ २ ३ १ २

सꣳस्रष्टा स युध इन्द्रो गणेन ।

२ १ २ ३ १ २ ३ २

सꣳसृष्टजित्सोमपा बाहुशर्ध्यू३-

१ २ ३ १ २ ३ १ २

ग्रधन्वा प्रतिहिताभिरस्ता ॥ * ३ * ॥ [१]

अथ प्रथमे सूक्ते तृतीया। अप्रतिरथः, त्रिष्टुप्, इन्द्रः। पूर्वमन्त्रे इन्द्रेण जयतेत्युक्तम् अथेन्द्रस्य जयसाधनसामर्थ्यं प्रतिपादयति। "सः" इन्द्रः "इषुहस्तैः" भटैः मरुदादिभिः 'वशी' वश्यैस्तद्वान्, तथा 'निषङ्गिभिः' युक्तः निषङ्गः खड्गः, तद्वद्भिः वशी, स चेन्द्रो 'युधः' युध्यमानः सन् दुर्गपथलक्षणः

कः (३,१,१३५), अथवा 'युधः' युद्धहेतोः 'गणेन' शत्रुसङ्घेन सह संसृष्टा एकीभवनशीलः। यत एवंविधः अतः 'संसृष्टजित्' ये परस्परैकमत्येन युद्धाय संसृष्टा भवन्ति, तेषां जेता तथा 'सोमपाः' सोमस्य पाता, 'बाहुशर्द्धी' शर्द्धो बलं बाह्वोः बलं, तद्वान् मत्वर्थीय इनिः (५,२,११५)। यद्वा, शृधु प्रहसने (भ्वा० आ०), बाहुभ्यां शर्द्धयत्यभिभवतीति बाहुशर्द्धी "सुप्यजातौ णिनिस्ताच्छील्ये (३, २, ७८)" इति णिनिः, "उग्रधन्वा" उद्यतधन्वा, "प्रतिहिताभिः" शत्रुषु प्रेरिताभिरिषुभिः "अस्ता" मारयिता, यत्रेषून् सुञ्चति तत्र वृथा न भवतीत्यर्थः। ईदृशेनेन्द्रेण जयतेति सम्बन्धः॥ ३॥ [१]

१ २ २ १ २ १ १२
बृहस्पते परि दीया रथेन

२ १ २र २ १ २
रक्षोहामित्राꣳ अपबाधमानः।

२ १ २र १ २ २ १ २र
प्रभञ्जन्त्सेना प्रमृणो युधा जय-

२ १ २ २ १ २र
न्नस्माकमेध्यविता रथानाम्॥ * १ *॥

अथ द्वितीये सूक्ते प्रथमा। अप्रतिरथः, त्रिष्टुप्, बृहस्पतिः। हे "बृहस्पते"! बृहतां पते! पालयितः! देव! 'रथेन' "परिदीय" परिगच्छ दीयतिर्गतिकर्मा (निघ०२,१४,६८)। आगत्य च "रक्षोहाः" रक्षसां हन्ता 'अमित्रान्' शत्रून् 'अपबाधमानः' सर्वतो नाशयन् तथा 'सेनाः' शत्रुसम्बन्धिनीः 'प्रभञ्जन्, प्रकर्षेण नाशयन् "प्रमृणः" प्रकर्षेण हिंसन् मृण हिंसायाम् (तु० प०), इगुपधज्ञाप्रीकिरः कः (३,१,१३५)। केन

हिंनन् 'युधा' युद्धेन 'सावेकाच (६,१,१६८)' इति विभक्ते-रुदात्तत्वम् 'जयन्' एवं सर्वत्र जयं प्रतिपद्यमानः। ईदृशस्त्वम् अस्माकं रथानाम् "अविता" रक्षिता "एधि" भव ॥ १ ॥

२ १ २र २ १ २ २
बलविज्ञायः स्थविरः प्रवीरः

१ २ २ १ २र २ २
सहस्वान् वाजी सहमान उग्रः ।

२ १ २ २ १ २ २ १
अभिवीरो अभिसत्वा सहोजा

२र २ ३ २ १ १ २ १ २
जैत्रमिन्द्र रथमा तिष्ठ गोवित् ॥ * २ * ॥

अथ द्वितीये सूक्ते द्वितीया। अप्रतिरथः, त्रिष्टुप्, इन्द्रः। सर्वस्य भूतस्य बलं विजानातीति 'बलविज्ञायः' यद्वा, ममाय-मिति सर्वैर्बलत्वेन विज्ञायत इति बलविज्ञायः सर्वस्य बलभूत इत्यर्थः, "स्थविरः" महान् 'प्रवीरः' प्रकर्षेण वीरः, "सह-स्वान्" पराभिभवसामर्थ्यवान्, 'वाजी' वेजनवान् अन्नवान् वा "सहमानः" शत्रूणामभिभविता, "उग्रः" उद्गूर्णबलः, 'अभि-वीरः' अभिगता वीरा वीर्यवन्तोऽनुचरा यस्य स तथोक्तः, "अभिसत्वा" अभिगतसत्वा, 'सहोजाः' सहसो बलाज्जातः। एवं महानुभावस्त्वं हे इन्द्र! 'जैत्र' जयशीलं 'रथम्' 'आ तिष्ठ' अस्मत्सहायार्थम् आरोढुमर्हसि। त्वञ्च 'गोवित्'-उदकस्य स्तुतेर्वा लब्धा वेदिता वा ॥ २ ॥

२ १ २ २ २ २ १ २ १
गोत्रभिदं गोविदं वज्रबाहुं

१ २ ३ १ २ ३ २ ३ १ २
जयन्तमज्म प्रमृणन्तमोजसा ।
३ १ २ ३ १ २ २
इमꣳ सजाता अनु वीरयध्व-
१ २ ३ २ ३ १ २
मिन्द्रꣳ सखायो अनु सꣳ रभध्वम् ॥ * ३ * ॥ [२]

अथ द्वितीये सूक्ते तृतीया। अप्रतिरथः, त्रिष्टुप्, इन्द्रः। 'गोत्रभिदं' गा उदकानि त्रायन्त इति गोत्रा मेघाः यद्वा, गोभूभिः तां त्रायन्त इति गोत्राः पर्वताः, तेषां भेत्तारम् 'गोविदम्' उदकस्य लब्धारं, "वज्रबाहुं" वज्रहस्त "प्रहरणार्थेभ्यः (२,२,३७वा०)" इति सप्तम्याः परनिपातः, 'जयन्त' जयनशीलम्, "अज्म" गमनशीलं प्रवृद्धम् 'ओजसा' बलेन जयन्त यद्वा, 'अज्म' आजिं 'जयन्त' 'ओजसा' बलेन 'प्रमृणन्त' शत्रूनभिभवन्तम्। ईदृशं महानुभावम् इन्द्रम् हे 'सजाताः'। सहोत्पन्ना योद्धारो यूयम् 'अनुवीरयध्वम्' एनमग्रतः कृत्वा "अनु" पश्चात् 'वीरयध्वं' वीरकर्म युद्धं कुरुध्वम् शूर वीर 'विक्रान्तौ' वीरशब्दात् 'तत् करोति तदाचष्टे (सि० कौ० ति० सु०)' इति णिच्। हे 'सखायः'। परस्पर सखिभूता यूयम् 'इमम् इन्द्रम्' 'संरभमाणम्' अनुसरभध्वम् ॥ ३ ॥ [२]

१ २ ३ २ ३ १ २ ३ १ २
अभि गोत्राणि सहसा गाह-
३ २ ३ २ ३ १ २ ३ १ २
मानोऽदयो वीरः शतमन्युरिन्द्रः

१ १ २ ३ १ ३३ २
दुश्चवनः पृतनाषाडयुध्यो३-
२ ३ १२ ३ २ ३ २
ऽस्माकंꣳ सेना अवतु प्र युत्सु ॥ * १ * ॥

अथ तृतीये सूक्ते प्रथमा। अप्रतिरथः त्रिष्टुप् इन्द्रः। अयम् 'इन्द्रः' 'गोत्राणि' अभ्राणि मेघान् 'सहसा' बलेन 'अभि गाहमानः', प्रविशन्, 'अदयः' निर्दयः, वीरः, विक्रान्तः, 'शतमन्युः' बहुयज्ञः बहुक्रोधो वा, 'दुश्च्यवनः' अन्यैरचाल्यः, 'पृतनाषाट्' शत्रुसेनानामभिभविता 'छन्दसि सहः (३,२,६३)' इति ण्विः, 'सहेः साडः सः (८,३,५६)' इति मूर्द्धन्यादेशः, "अयुध्यः" सम्प्रहर्त्तुमशक्यः युध सम्प्रहारे, छान्दसः क्यप् (३, १, ८५)। ईदृगिन्द्रः अस्माकं सेना "युत्सु" संग्रामेषु 'प्रावतु' प्रकर्षेण रक्षतु ॥ १ ॥

१ २ ३ १उ ३ २ ३
इन्द्र आसां नेता बृहस्पति-
१ ३ ३ २ ३१ ३१ १ २
र्दक्षिणा यज्ञः पुर एतु सोमः।
१ २ ३ ३ १ २र
देवसेनानामभिभञ्जतीनां जय-
२ १ २ ३ २ ३
न्तीनां मरुतो यन्त्वग्रम् ॥ * २ * ॥

अथ तृतीये सूक्ते द्वितीया। अप्रतिरथः, त्रिष्टुप्, इन्द्रः। "आसाम्" अस्मत्साहाय्यार्थमागतानां देवसेनानाम् अयम् 'इन्द्रः' 'नेता' नायकः अस्तु। तथा तस्य 'बृहस्पतिः' 'पुरः एतु' एवं 'दक्षिणा यज्ञः सोमः' च पुर एत्विति प्रत्येकं

सम्बन्धः। तथा 'देवसेनानाम्' अभिभञ्जतीनाम्' अस्मदमित्राणामाभिमुख्येन मर्दयन्तीनां 'भञ्जतीनां' "छान्दसि (६, १, १७८)" इति नाम उदात्तत्वम् 'जयन्तीनाम्' इत्यत्र बहुल वचनान्न भवति। तासाम् 'अग्रम्' "मरुतः" "यन्तु" गच्छन्तु ॥ २ ॥

१ २ ३ २ ३ १२ ३ १ २

इन्द्रस्य वृष्णो वरुणस्य राज्ञ

१ १ २ ३ २ ३ १ २ ३ २

आदित्यानां मरुताᳬ शर्द्ध उग्रम्।

३ १ २ ३ २ ३ १ २

महामनसां भुवनच्यवानां घोषो

३ १ ३ १२ ३ १ २

देवानां जयतामुदस्थात् ॥ * ३ * ॥ [३]

अथ तृतीये सूक्ते तृतीया। अप्रतिरथस्त्रिष्टुबिन्द्रः। "वृष्णः" वर्षकस्य 'इन्द्रस्य' 'राज्ञः वरुणस्य', 'आदित्यानां' 'मरुतां' च 'उग्रम्' उद्गूर्णं "शर्द्धः" बलम् अस्माकं भवत्विति शेषः। किञ्च 'महामनसाम्' उदारमनसां 'भुवनच्यवानां' भुवनानां च्यावयितॄणां 'देवाना' 'घोषः' जयशब्दः 'उदस्थात्' उत्तिष्ठति अनूर्द्धकर्मत्वादात्मनेपदाभावः ( १,३,२४) ॥ ३ ॥ [३]

१ २ ३ १ २ ३ १

उद्धर्षय मघवन्नायुधान्युत्स-

३१ ३ २ ३ १ २

त्वनां मामकानां मनाᳬसि।

१ २ ३ २ ३ १ २ ३

उद्वृत्रहन् वाजिनां वाजिनान्यु-

२र २ १ २ २ १ २
द्रथानां जयतां यन्तु घोषाः ॥ * १ * ॥

अथ चतुर्थे सूक्ते प्रथमा। अप्रतिरथस्त्रिष्टुबिन्द्रः। हे 'मघवन्'! इन्द्र! अस्मदीयानि 'आयुधानि' 'उद्धर्षय' उत्कृष्टहर्षय प्रहरणेषूद्युक्तानि भवन्तीत्यर्थः। 'मामकानाम्' अस्मदीयानां 'सत्वनां' प्राणिनां सैनिकानां 'मनांसि' च उद्धर्षय। हे "वृत्रहन्"! इन्द्र! "वाजिनाम्" अश्वानां 'वाजिनानि' वेगाः 'उद्यन्तु'। तथा 'जयतां रथानां' "घोषाः" 'उत्' यन्तु ॥ १॥

२ २ २ २ १ १ २ २ २ १
अस्माकमिन्द्रः समृतेषु ध्वजेष्व-
२ ३ १ २र२ १ २
स्माकं या इषवस्ता जयन्तु।
२ १ २ ३ १ २र २ १
अस्माकं वीरा उत्तरे भवन्त्वस्माꣳ
२ २ १२
उ देवा अवता हवेषु ॥ * २ * ॥

अथ चतुर्थे सूक्ते द्वितीया। अप्रतिरथस्त्रिष्टुबिन्द्रः। 'अस्माकं' सम्बन्धिष्वेव 'समृतेषु' परसेनां सम्प्राप्तेषु "ध्वजेषु" ध्वजवत्सु सैनिकेषु 'इन्द्रः' अविता भवतु। तथा 'अस्माकं' "या इषवः" सन्ति 'ताः' एव "जयन्तु" शत्रून्। तथा 'अस्माकं' 'वीराः' भटाः 'उत्तरे' उपरि 'भवन्तु'। हे 'देवाः'! 'अस्मान् उ' अस्मानेव 'अवत' रक्षत 'हवेषु' संग्रामेषु ॥ २ ॥

२ १ २र ३ १२
असौ या सेना मरुतः परेषा-

२ १ २ २ १ २ २ १ २
मभ्येति न ओजसा स्पर्द्धमाना ।
१ २ २ १ २ १ २ २ १ २
तां गूहत तमसापव्रतेन यथै-
१ २ २ २ २ २उ २ २
तेषामन्यो अन्यं न जानात् ॥ * ३ * ॥ [8]

अथ चतुर्थे सूक्ते तृतीया। अप्रतिरथस्त्रिष्टुप् मरुतः। 'असौ या सेना' हे "मरुतः" ! परेषां शत्रूणाम् 'अभ्येति' अभिमुखा एति 'नः' अस्मान् प्रति 'ओजसा' बलेन 'स्पर्द्धमाना', 'तां' सेनां 'गूहत' आवृत 'तमसा' 'अपव्रतेन' व्रतमिति कर्मनाम (निघ० २,१,७) अपगतकर्मणा येन तमसा व्याप्ता नश्यन्ति कर्माणि तदपव्रतं तमः, तेनापव्रतेन तमसा तथा गूहत "यथा एतेषां" योधा "अन्यो अन्यं न जानात्" परस्परं न जानातीत्यर्थः ॥ ३ ॥ [8]

२ १ २ २ १ २ २ १२
अमीषां चित्तं प्रतिलोभयन्ती
१ २ २ २ १ २
गृहाणाङ्गान्यप्वे परेहि ।
१ २उ २ १ २ २ १ १२
अभि प्रेहि निर्दह हृत्सु शोकै-
२ १ २ २ २ १ २
रन्धेनामित्रास्तमसा सचन्ताम् ॥ * १ * ॥

अथ पञ्चमे सूक्ते प्रथमा। अप्रतिरथः त्रिष्टुप्वायुः। हे 'अप्वे' ! पापाभिमानि ! देवते ! 'परेहि' परागच्छ 'अमीषां' योद्धृणां शत्रुणां 'चित्तं' 'प्रतिलोभयन्ती' विमोहयन्ती सती 'अङ्गानि'

तेषामवयवान् शिर आदिकान् 'गृहाण' स्वीकुरु। 'अभिप्रेहि,' अभिगच्छ। तेषां समीपं गत्वाच 'हृत्सु' हृदयेषु 'शोकैः' 'निर्दह' नितरां भस्मीकुरु। ते 'अमित्राः' अस्मच्छत्रवः 'अन्धेन तमसा' 'सचन्तां' सङ्गच्छन्ताम्॥ १॥

२ ३ १ २ २ ३ २ ३ १ २
प्रेता जयता नर इन्द्रो वः शर्म यच्छतु।

३ १ २ ३ १ २
उग्रा वः सन्तु बाहवो-

२ १ २र
ऽनाधृष्या यथासथ॥ * २ *॥

छ० अनुष्टुप्। अथ पञ्चमसूक्ते द्वितीया। अप्रतिरथोऽनुष्टुबिन्द्रो मरुतो वा। हे 'नरः'! नेतारः! संग्रामस्य निर्वोढारो योद्धारः! 'प्रेत' प्रकर्षेण गच्छत। गत्वा च 'जयत' तान् प्रतिभटान् तिङः परत्वात् 'तिङ् तिङः (८,१,२८)' इति निघाताभावः 'वः' युष्माकम् 'इन्द्रः' 'शर्म' सुखं 'यच्छतु' "वः" बाहवः "उग्राः" उद्गूर्णबलाः 'सन्तु' भवन्तु। 'अनाधृष्याः' अन्यैः अनभिभाव्याः 'यथा' यूयम् 'असथ' भविष्यथ तथा उग्राः सन्तु वो बाहवः॥ २॥

१२ ३ १ २ ३ १२३ १ २
अवसृष्टा परा पत शरव्ये ब्रह्मसꣳशिते।

२ ३ २ ३ १ २ ३
गच्छामित्रान् प्र पद्यस्व

२उ ३ २ ३ १ २
मामीषां कं च नोच्छिषः॥ * ३ *॥ [५]

छ० अनुष्टुप्। अथ पञ्चमसूक्ते तृतीया। अप्रतिरथ ऋषिः पायुर्वा भारद्वाजः अनुष्टुप् छन्दः इषुर्देवता। 'ब्रह्म-

संशिते' मन्त्रेण तीक्ष्णीकृते, हे 'शरव्ये'! हिंसाकुशले! इषो! त्वम् "अवसृष्टा" क्षिप्ता "परा पत" परागच्छ। इतो देशात् गत्वा च "अमित्रान्" हिंसकान् 'प्रपद्यस्व' प्राप्नुहि च। "अमीषाम्" अमित्राणां मध्ये 'कञ्चन' कञ्चिदपि 'मा उच्छिषः' अवशिष्टं मा कुरु ॥ ३ ॥ [५]

२ १ २ ३ १ २र २
कङ्काः सुपर्णा अनु यन्त्वेनान्
१ २ ३ १ २ ३ १ २ ३ १ २
गृध्राणामन्नमसावस्तु सेना।
१ २ ३ २ ३ २ ३
मैषां मोच्यघहारश्च नेन्द्र
१ २ ३ १ २ ३ १ २
वयाꣳस्येनाननुसंयन्तु सर्वान् ॥ * १ * ॥

ऋ० प्रजापतिः। छ० त्रिष्टुप् अनुष्टुप् वा, पंक्तिः। दे० इन्द्रः। अथ षष्ठे सूक्ते प्रथमा। अप्रतिरथ ऋषिः पायुर्वा भारद्वाजः, त्रिष्टुप्छन्दः, इन्द्रो देवता। 'कङ्काः' नाम पक्षिणः क्रव्यादाः "सुपर्णाः" शोभनपतनाः "अनु यन्तु" 'एतान्' शत्रून्। 'गृध्राणाम् अन्नं' पक्षिणां भक्ष्यभूता 'असौ' सेना 'अस्तु'। 'मा एषां मोचि' एतेषां मा कश्चित् मुच्यताम्। "अघहारश्च नेन्द्र" हे इन्द्र! योऽपि न नितरां पापीयान् अतिप्रत्यवायः सोऽपि न मुच्यतां मृत्योः। "वयांस्येनान्" वयांसि पक्षिरूपाणि क्रव्यादादीनि 'अनु संयन्तु सर्वान्' अनु पश्चात् यन्तु सर्वान् शत्रून् ॥ १ ॥

३ १ २ ३ १ २ ३ २३ १ २
अमित्रसेनां मघवन्नस्मां छत्रुयतीमभि।

२ १   २र   ३
उभौ तामिन्द्र वृत्रहन्न-

१ २   २ १ २
ग्निश्च दहतं प्रति॥ * २ *॥

अथ षष्ठे सूक्ते द्वितीया। अप्रतिरथ ऋषिः अग्निर्वा, अनुष्टुप् छन्दः, इन्द्राग्नीदेवते। 'अमित्रसेनां' हे 'मघवन्'! 'अस्मान्' 'शत्रुयतीमभि' शत्रुभिः परिवारिताम् 'उभौ' 'तां' सेनां हे 'इन्द्र'! 'वृत्रहन्'! त्वञ्च 'अग्निश्च' 'प्रति दहतम्' भस्मीकुरुतमित्यर्थः॥ २॥

१ २ ३ २   ३ १ २   ३ १ २ ३ १ २
यत्र वाणाः सम्पतन्ति कुमारा विशिखा इव।

१ २ ३   १ २ ३ २ ३ १ २ ३   १ २
तत्र नो ब्रह्मणस्पतिरदितिः शर्म

३ २ ३   १ २
यच्छतु विश्वाहा शर्म यच्छतु॥ * ३ *॥ [६]

अथ षष्ठे सूक्ते तृतीया। अप्रतिरथ ऋषिः पायुर्भारद्वाजः, पंक्तिश्छन्दः, ब्रह्मणस्पतिरदितिश्च देवता। 'यत्र' 'वाणाः सम्प-
संग्रामे 'कुमारा विशिखा इव' मुण्डिता इव
तन्ति'। 'तत्र' 'नः' अस्मभ्यं ब्रह्मणस्पतिः' 'शर्म' सुखं 'विश्वाहा' सर्वदा 'यच्छतु'। 'अदितिः' च सर्वदा 'शर्म यच्छतु'। द्विरुक्तिरादरार्था॥ ३॥ [६]

१उ   ३   १   २र   ३   २ ३ १ २ ३ १ २
वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज।

२ ३ १ २   ३ १ २   ३ १ २
वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः॥ * १ *॥

अथ सप्तमे सूक्ते प्रथमा। अप्रतिरथ ऋषिः शासो भारद्वाजो वा, अनुष्टुप् छन्दः, इन्द्रो देवता। हे 'इन्द्र'! 'रक्षः' राक्षसजातं 'विजहि' विनाशय। 'मृधः' संग्रामकारिणः शत्रूंश्च 'वि' जहि। 'वृत्रस्य' आवरकस्यासुरस्य 'हनू' कपोलप्रान्तौ 'विरुज' विशेषेण भग्नौ कुरु। हे 'वृत्रहन् इन्द्र'! 'अभिदासतः' अस्मानुपक्षपयतः 'अमित्रस्य' शत्रोः 'विमन्युं' क्रोधमपि विनाशय ॥ १ ॥

१ २ २ १ २ ३ १ २ ३ २
वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः।
२ ३ १ २ ३ २ ३ १ २ ३ ,१ २
यो अस्माँ अभिदासत्यधरं गमया तमः ॥ * २ * ॥

अथ सप्तमे सूक्ते द्वितीया। अप्रतिरथ ऋषिः, अनुष्टुप् छन्दः, इन्द्रो देवता। हे 'इन्द्र'! 'नः' अस्माकं 'मृधः' संग्रामकारिणः शत्रून् 'वि जहि' विनाशय। तथा 'पृतन्यतः' पृतनाः सेना आत्मन इच्छतः युयुत्समानानपि 'नीचा यच्छ' नीचीनमवाङ्मुखं यच्छ गमय। 'यः' शत्रुः 'अस्मान्' 'अभि दासति' अभितः उपक्षपयति, तम् 'अधरं' निकृष्टं 'तमः' अन्धकारं मरणलक्षणं 'गमय' प्रापय ॥ २ ॥

१ २ ३ १ २ ३२३ १ २
इन्द्रस्य बाहू स्थविरौ युवाना-
३ १ ३ ३ १ २३२
वनाधृष्यौ सुप्रतीकावसह्यौ।
१ २ ३ १उ ३ २ ३ २
तौ युञ्जीत प्रथमौ योग आगते

१ २   १ १   २र   ३   १ २   २ २
याभ्यां जितमसुराणाꣳ सहो महत्॥ * ३ *॥ [७]

अथ सप्तमे सूक्ते तृतीया। अप्रतिरथ ऋषिः, इन्द्रो देवता, विराट् जगतीच्छन्दः 'इन्द्रस्य बाहू' 'स्थविरौ' स्थिररूपौ अथवा स्थविरौ स्थूलौ "युवानौ" जरया न मसितौ, "अनाधृष्यौ" न केनचिद्वृते, 'सुप्रतीकौ' स्वाङ्गतौ हस्तिकराकारौ, 'असह्यौ' न कश्चित् सोढुं शक्तौ, "तौ युञ्जीत, प्रथमे योगे आगते' योगे संग्रामे यत्र नियुज्यन्ते वाहवः, "याभ्यां" 'जितम्' 'असुराणां' स्वभूतं 'सहः' बलं 'महत्' ॥ ३ ॥ [७]

१ २   २ १ २   ३
मर्माणि ते वर्मणा छादयामि

१ २ २   २ १ २ ३ १ २
सोमस्त्वा राजामृतेनानु वस्ताम्।

३ १   २र ३ १ २   ३
उरोर्वरीयो वरुणास्ते कृणोतु

१ २ ३   १ २   ३ १   २
जयन्तं त्वानु देवा मदन्तु॥ * १ *॥

अथ अष्टमे सूक्ते प्रथमा। अप्रतिरथ ऋषिः, पायुर्वा भारद्वाजः, त्रिष्टुप् छन्दः, सोमो देवता वरुणश्च देवता। हे राजन्! 'ते' त्वदीयानि 'मर्माणि' येषु स्थानेषु विद्धः सद्यो म्रियते, तानि मर्माणि 'वर्मणा' कवचेन छादयामि "सोमः' राजा" "त्वा" त्वाम् 'अनु' छादनानन्तरम् 'अमृतेन' 'वस्ताम्' आच्छादयतु। 'वरुणः' अपि 'ते' तुभ्यम् 'उरोर्वरीयः'

उरुलुलं सुख' 'कृणोतु' करोतु। 'जयन्त' 'त्वा' त्वां 'देवा:' सर्वेऽपि 'मसु मदन्तु' अनुहृष्यन्तु ॥ १ ॥

२ १ २ ३ १ २
अन्धा अमित्रा भवताशीर्षाणोऽहय इव ।
१ २ २ १ २ २
तेषां वो अग्निनुन्नाना-
१ २ ३ १२
मिन्द्रो हन्तु वरंवरम् ॥ * २ * ॥

अथ अष्टमे सूक्ते द्वितीया। अप्रतिरथ ऋषिः, अनुष्टुप छन्दः, इन्द्रो देवता। हे 'अमित्राः' शत्रवः! यूयम् 'अन्धा भवत'। कीदृशा अन्धाः? 'अशीर्षाणः अहय इव' यथा सर्पाः शीर्षच्छिन्ना अकिञ्चित्कराः भवन्ति तथा भवत। 'तेषां' 'वः' 'अग्निनुन्नानाम्' अग्निदग्धानां शत्रूणाम् 'इन्द्रः हन्तु वरं वरम्' यो यो वरिष्ठस्तं तं हन्तु नाशयन्तु ॥ २ ॥

२ १ १ २२ २२ २ ३ १२
यो नः स्वोऽरणो यश्च निष्ट्यो जिघाꣳसति ।
३१ ३२ ३ २ ३ १२
देवासꣳ सर्वे धूर्वन्तु ब्रह्म वर्म
१ ३२३ १२ १२ १ ३२
ममान्तरꣳ शर्म वर्म ममान्तरम् ॥ * ३ * ॥ [८]

अथ अष्टमे सूक्ते तृतीया। अप्रतिरथ ऋषिः पङ्क्ति-च्छन्दः, विश्वे देवा देवताः। 'यः' 'स्वः' ज्ञातिः 'अरणः' अरममाणः, "यश्च" 'निष्ट्यः' तिरोभूतः दूरे स्थितः 'नः' अस्मान् 'जिघांसति' हन्तुमिच्छति 'तं' देवाः सर्वे 'धूर्वन्तु' हिंसन्तु।

'यत्' मम्मः 'मम अन्तरम्' शराणां निवारकं 'वर्म' विद्यते 'मर्मवर्म' सन्नहनभूतः 'मम अन्तरम्' अस्तु ॥ २ ॥ [८]

२ १उ २ १ २ २ १ २ २ १
मृगो न भीमः कुचरो गिरिष्ठाः

२ १ २ २ १ २ २ १ २
परावत आ जगन्था परस्याः।

१ २ २ १ २ २ १ २ १ १
सृकᳬं सᳬंशाय पविमिन्द्र तिग्मं

२र २ १ २र
वि शत्रूं ताढि वि मृधो नुदस्व ॥ * १ * ॥

अथ नवमे सूक्ते प्रथमा। अप्रतिरथ ऋषिः, ऐन्द्रोवा जवः, त्रिष्टुप्छन्दः, इन्द्रो देवता। "कुचरः" कुत्सितचरणः 'गिरिष्ठाः' पर्वतनिवासो 'मृगः न' सिंह इव। हे इन्द्र! त्वं "भीमः" भयङ्करः असि। स त्वं परस्याः' परावतः अतिशयेन दूरात् द्युलोकात् 'आ जगन्थ' आगच्छ गमेश्छान्दसि लिटि (३, २, १०५) क्रादिनियमप्राप्तस्येटः (७, २, १३) "उपदेशेऽत्वतः (७, २, ६२)' इति प्रतिषेधः। आगत्य च 'सृकं' सरणशीलं 'तिग्मं' तीक्ष्णं 'पविं' वज्रं संशाय' सम्यक् तीक्ष्णीकृत्य 'शत्रून्' अस्मदीयान् वैरिणः हे इन्द्र! 'ते' तव वज्रेण 'वि ताढि' विशेषेण ताड़य विनाशय इत्यर्थः तड़ आघाते (चु० प०) अस्माण्यन्ताल्लोटि रूपमेतत्। तथा "मृधः" संग्रामोद्युक्तान् युयुत्सून् अन्यानपि "वि नुदस्व" विशेषेण प्रेरय तिरस्कुरु ॥ १ ॥

२ १ २र
भद्रं कर्णेभिः शृणुयाम देवा

उदकुल्यं सुखं 'कृणोतु' करोतु। 'जयन्तं' 'त्वा' त्वां 'दे
सर्वेऽपि 'मदन्तु मदन्तु' अनुहृष्यन्तु ॥ १ ॥

२ १ २ २ १ २
अन्धा अमित्रा भवताशीर्षाणोऽहय इव।

१ २ १ १ २ २
तेषां वो अग्निनुन्नाना-

१ २ ३ १२
मिन्द्रो हन्तु वरंवरम् ॥ * २ * ॥

अथ अष्टमे सूक्ते द्वितीया। अप्रतिरथ ऋषिः, अन
छन्दः, इन्द्रो देवता। हे 'अमित्राः' शत्रवः! यूयम् 'अ
भवत'। कीदृशा अन्धाः? 'अशीर्षाणः अहय इव'
सर्पाः शीर्षच्छिन्ना अकिञ्चित्कराः भवन्ति तथा भव
'तेषां' 'वः' 'अग्निनुन्नानाम्' अग्निदग्धानां शत्रूणाम् 'इ
हन्तु वरं वरम्' यो यो वरिष्ठस्तं तं हन्तु नाशयन्तु ॥ २ ॥

२ १ १ २२ २१ २ १ १२
यो नः स्वोऽरणो यश्च निष्ट्यो जिघाᳲसति।

२१ २८ २ २ ३ २२
देवास्तᳲ सर्वे धूर्वन्तु ब्रह्म वर्म

१ २८१ २१ ११ १ २८
ममान्तरᳲ शर्म वर्म ममान्तरम् ॥ * ३ * ॥

अथ अष्टमे सूक्ते तृतीया। अप्रतिरथ ऋषिः पङ्
क्छन्दः, विश्वे देवा देवताः। 'यः' 'स्वः' ज्ञातिः 'अरणः' अ
मासः, "यश्च" 'निष्ट्यः' तिरोभूतः दूरे स्थितः 'नः' अस
'जिघांसति' हन्तुमिच्छति 'तं' देवाः सर्वे' ... हिंस

२ १ २ २ १ २
भद्रं पश्येमाक्षभिर्यजत्राः ।
२ १ २र २ १ २ २ २क
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभि-
३१ २२ १ १र
र्व्यशेमहि देवहितं यदायुः ॥ * २ * ॥

अथ नवमे सूक्ते द्वितीया। अप्रतिरथ ऋषिः राहुगणो गौतमो वा, त्रिष्टुप् छन्दः, विश्वेदेवा देवताः। हे देवाः! दानादिगुणयुक्ताः सर्वे देवाः! 'कर्णेभिः' अस्मदीयैः श्रोत्रैः 'भद्र' भजनीयं कल्याणं वचनं शृणुयाम युष्मत्प्रसादात् श्रोतुं समर्थाः स्याम, अस्माकं वाधिर्यं कदाचिदपि माभूत्। हे "यजत्राः" यागेषु चरुपुरोडाशादिभिः यष्टव्याः देवाः। "अक्षभिः" अक्षिभिः आत्मीयैश्चक्षुभिः 'भद्र' शोभनं 'पश्येम' द्रष्टुं समर्थाः स्याम, अस्माकं दृष्टिप्रतिघातोऽपि माभूत्। 'स्थिरैः' दृढैः 'अङ्गैः' हस्तपादादिभिः अवयवैः 'तनूभिः' शरीरैश्च युक्ता वयं "तुष्टुवांसः" युष्मांस्तुवन्तः "यदायुः" षोड़शाधिकशतप्रमाण विंशत्यधिकशतप्रमाणं वा "देवहित" देवेन प्रजापतिना स्थापितं तत् व्यशेमहि" प्राप्नुयाम कर्णेभिः बहुलं छन्दसि (७, १, १०) इति भिस ऐस भावः। अक्षभिः 'छन्दस्यपि' दृश्यते (७, १, ७६) इत्यनङ् सचोदात्तः। यजत्रा "अमि नचि (उ० ३, १०५)" इत्यादिना यजेरत्रन् प्रत्ययः। तुष्टुवांसः ष्टुञ् स्तुतौ (अदा० प०), लिटः क्वसुः (३, २, १०७) 'शर्पूर्वाः खयः (७,४,६१) इति तकारः शिष्यते। व्यशेमहि अशूव्याप्तौ (स्वा० आ०) "लिङ्याशिष्यङ् (३, १, ८६) यदित्व परिगणनमन्यथ्याडस्यर्थं तदानीं लिङि व्यत्ययेन शप्